# THE PRAKRIYÂKAUMUDÎ

OF

# RÂMACHANDRA

(*IN TWO PARTS*)

## PART II

*VITH THE COMMENTARY PRASÂDA OF VITTHALA*

AND

WITH A CRITICAL NOTICE OF MANUSCRIPTS AND AN EXHAUSTIVE AND CRITICAL INTRODUCTION

BY RAO BAHADUR

KAMALASHANKAR PRANASHANKAR TRIVEDI, B.A.,
*Honorary Fellow of the University of Bombay,*
*Retired Principal, P. R. Training College, Ahmedabad,*
*(Formerly Professor of Sanskrit, Samaldas College, Bhavnagar,*
*and Acting Professor of Oriental Languages, Elphinstone and Deccan Colleges)*

**FIRST EDITION**

1000 COPIES

Sa4V
Ram/Tri

3232

(*Registered for Copyright under Act XXV of 1867*)

1931

*All Rights Reserved*] [PRICE RS. 10.

**Bombay Sanskrit and Prakrit Series No. LXXXII**

॥ श्रीः ॥

श्रीरामचन्द्राचार्यप्रणीता

# प्रक्रियाकौमुदी

## उत्तरार्धम् ।

श्रीविट्ठलाचार्यकृतया प्रसादाख्यया टीकया समेतं

गुर्जरराजनगरस्थशिक्षकशिक्षणालयस्य मुख्याधिकारिणा सेवानिवृत्तेन
बी. ए. इत्युपाह्वेन मुम्बापुरीस्थविश्वविद्यालयस्याकार्यवाहक-
यशस्करपारिषद्यपदं प्राप्तेन मुम्बापुरीस्थएलफिन्स्टनाख्य-
विद्यामन्दिरस्य पुण्यपत्तनस्थडेक्कनाख्यविद्यामन्दिरस्य
च कादाचित्केन गीर्वाणभाषाध्यापकेन

त्रिवेद्युपपदधारिणा

प्राणशंकरसूनुना कमलाशंकरेण संशोधितं
स्वनिर्मिताङ्ग्लभाषाभूमिकया सनाथीकृतम् ।

तच्च

संस्कृतप्राकृतग्रन्थमालाधिकारिणा शाके १८९३ संवत्सरे
१९३१ खिस्ताब्दे प्राकाश्यं नीतम् ।

प्रथमा आवृत्तिः ।

( ग्रन्थस्यास्य विषये सर्वेऽधिकारा राजकीयग्रन्थमालाधिकारिणामेव )

मूल्यं दश रूपकाः

# CONTENTS

# POSTSCRIPT

Rao Bahadur K. P. Trivedi unfortunately died after seeing about 300 pages of this part through the press. The remainder of Part II was seen through the press by his son, Prof. A. K. Trivedi of Baroda, with the assistance, at first, of Prof. M. P. Dave of Surat College, and later of Mahāmahopādhyāya Vasudeo Shastri Abhyankar, the latter having kindly compiled the rather extensive corrigenda to both the Parts.

ॐ श्रीगणेशाय नमः ।

# अथ प्रक्रियाकौमुदी ।

## उत्तरार्धम् ।

ॐ नमः । श्रीगणेशप्रसादात् । श्रीविट्ठलाय नमः ।

श्रीविट्ठलं सुरवरं प्रणमामि देवं कारुण्यसिन्धुमखिलानतदत्तबुद्धिम् ।
ईषत्सहासमुखपङ्कजमात्मभासमुत्फुल्ललोचनविलोकननाशिताघम् ॥१॥

तिङन्तकाण्डस्य हि कोपि पारं नाज्ञासिषुः शुद्धधियोपि सन्तः ।
तं प्रक्रियाकौमुदमंशमज्ञो व्याख्यानहं स्यामुपहास्य एव ॥२॥

प्रक्षेपकालुष्यनिरासहेतोः
प्रसादमस्या विदधे यथावत् ।
इति प्रतिज्ञातमतः करिष्ये
व्याख्यां स्वतः सज्जनतोषदात्रीम् ॥३॥

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्त इत्यभिप्रेत्य तिङन्तमभिधातुमिच्छन् ग्रन्थकृत् ग्रन्थमध्ये मङ्गलाचरणं करोति ।

१. च शास्त्राणि Bc2, Dc3. २. मङ्गलमाचरति Bc2.

प्रकृतिः सा जयत्याद्या यया धात्वादिरूपया ।
व्यज्यन्ते शब्दरूपाणि परप्रत्ययसंनिधेः ॥

---

प्रकृतिरिति । सा वैयाकरणाभिमता आद्या प्रकृतिः प्रत्ययमवधिं कृत्वा यः पूर्वमुपादीयते शब्दः सा प्रकृतिः प्रकर्षेण नियमेनास्मात् प्रत्ययः क्रियत इति वा प्रकृतिर्भूइत्यादिर्जयति उत्कर्षेण वर्तते । सा का । यया धात्वादिरूपया धातव आदिर्येषां तानि धात्वादीनि धातुप्रातिपदिकङ्यन्तावन्तसुबन्ततिङन्तानि तानि रूपं यस्याः सा तया भूइत्यादिकया शब्दरूपाणि भवतीत्यादीनि व्यज्यन्ते । कस्मात् परप्रत्ययसंनिधेः । परश्चासौ प्रत्ययश्च परप्रत्ययः प्रतीयतेर्थोस्मादिति प्रत्ययस्तिबादिस्तस्य संनिधिस्तस्मात् । यद्यपि श्लेषेण सांख्याभिमत-प्रधानाख्या मूलप्रकृतिर्वक्तुं शक्यते तथापि सेह नोच्यते तस्याः शारीरकमीमांसायाम् 'ईक्षतेर्नाशब्दम्' 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनवकाशदोषप्रसङ्गात्' इत्यादिभिर्महता प्रबन्धेन निराकृतत्वात् । तस्मात् श्लेषेणात्र परमेश्वरशक्तिस्तेनाधिष्ठिता सर्व-जगत्कारणमविद्योच्यते । तस्यां बहुतरप्रमाणानां तत्रैव प्रदर्शनात् । वेदान्तशास्त्रार्थस्यैवाचार्याणामभीप्सितत्वात् । तथोक्तं स्वयमेव ।

---

१. Before this P has ॐ नमः श्रीगणेशाय and C has ॐ नमः श्रीगणेशभारतीभ्यां पाणिनिपतञ्जलिकात्यायनेभ्यः ।; $D_1$ has— ॐ नमः । श्रीरामचन्द्राचार्याय नमः ।; N has ॐ नमो गणेशाय । श्रीमद्विठ्ठलाय नमः ।; $D_3$ has—ॐ नमो गणेशाय । सरस्वत्यै नमः । श्रीरामचन्द्राय नमः ।; $D_1$ has श्रीरस्तु । श्रीः । ॐ नमो गणेशाय ।. २. भिप्रेता $Bc_2$. ३. शब्दः dropped $Bc_2$, $Dc_3$. ४. तानि dropped $Bc_2$. ५. श्लेषेण यद्यपि $Bc_2$, $Dc_3$. ६. °मता प्रधा° $Bc_2$, $Dc_3$. ७. प्रसिद्धत्वान्नोच्यते $Bc_2$. ८. दर्शनात् $Bc_2$. ९. °शास्त्रस्यैवा° $Bc_2$. १०. °मभिप्रेतत्वात् $Dc_3$.

कुले यस्मिन् दैवं सकलफलदं विठ्ठलविभुः
स्मृता यस्मिन् दीक्षा हरिहरमनुष्यागमयुता ।
रतिर्ब्रह्माद्वैते तदमलमनन्तागमपथं
बुधाः संसेवन्तां कथितमसकृद्वामगुरुभिः ॥

सदा यत्र वेदाविरुद्धागमोक्त—
प्रकारेण विष्णोः सपर्याविधानम् ।
मतिर्यत्र वेदान्तसिद्धान्तवर्ये
बुधः संप्रदायं कथं नाश्रयेत् तम् ॥ इति ।

साद्या प्रकृतिर्जयति यया धात्वादिरूपया धातवः पञ्च महाभूतानि तेषामादिकारणभूतं रूपं यस्याः । अथवा पञ्च महाभूतादिकं रूपं यस्याः सा । विकृतिर्हि प्रकृते रूपमेव । तथा च धातुशब्देन पञ्च महाभूतान्याह याज्ञवल्क्यः ।

पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः ।

तथा

ब्रह्म खानिलतेजांसि जलं भूश्चेति धातवः । इति ।

तथा चामरसिंहोपि

श्लेष्मादिरसरक्तादिर्महाभूतानि तद्गुणाः ।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥ इति ।

एवंविधया यया प्रकृत्या परप्रत्ययसंनिधेः परः प्रत्ययो ज्ञानं यस्याः । अथवा परश्चासौ प्रत्ययश्च परप्रत्ययः परज्ञानरूपः । 'प्रत्ययोधीन-शपथज्ञानविश्वासहेतुषु' । इत्यमरसिंहः । एवंविधस्य सर्वज्ञस्य

१. °फलदो Dc3. २. °गमोक्ति—Dc3. ३. °वर्गैः Bc2; °वर्यैः Dc3. ४. °मादिः Dc3. ५. हि Dc3. ६. यद्वा Dc3.

**धातोः ॥३।१।९१॥**

आ तृतीयाध्[1]यायान्तं वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ॥

---

संनिधेः । शब्दरूपाणि शब्दाश्च रूपाणि च शब्दरूपाणि नामरूपाणि घटादिसंज्ञा घटादिरूपाणि च व्यज्यन्ते । अयमर्थो **वैष्णवसिद्धान्तदीपिकायामाचार्यैः** प्रत्यपादि । अस्माभिरपि तट्टीकायां सर्वशास्त्रसाररूपायां **न्याय[2]स्नेहप्रपूरण्यां** प्रत्यपादि ततो ज्ञेयः[3] । अथवा[4] वेदान्त्यभिमतेश्वरमायोच्यते । तत्राप्यनन्तवद्योजना । 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति सूत्रे वर्तमानं धातोरिति पदं स्वरितमुत्तरत्राधिकारार्थं व्याख्याति । संमग्र[5]सूत्रं यङ्प्रकरणे व्याख्यास्यति ।

**आ तृतीयाध्यायान्तमिति** । 'धातोः' इत्यारभ्य आ तृतीयाध्यायपरि[6]समाप्ति इत्यर्थः । धातवो नाम क्रियावाचिनो भ्वादयः । ते च द्विविधाः सकर्मका अकर्मकाश्चेति । तत्र कर्मसापेक्षां क्रियामाहुस्ते सकर्मकाः । यथा कटं करोतीत्यादयः । अकर्मकाः पुनर्ये कर्मनिरपेक्षां क्रियामाहुस्ते आस्ते शेते तिष्ठतीत्यादयः । अथवा ये कर्मकर्तृगतं[7] व्यापारद्वयमाचक्षते ते सकर्मकाः । यथा पचत्यादयः । यथा[8] ओदनादिगतं विक्लेदादि कर्तृगतमधिश्रयणादि । ये तु कर्तृगतमेव ते[9] अकर्मकाः । यथास्ते शेते इत्यादयः । अथवा क्रियार्थो धातुः सकमर्कः । भावार्थो धातुरकर्मकः । तत्र संपरि[10]स्पन्दसाधनसाध्या क्रिया । अपरि[11]स्पन्दसाधनसाध्यो भावः । सर्वथापि[12] प्रमेये विसंवादो नास्ति ।

---

१. °ध्यायान्तात् $D_1$, $B_2$. २. न्यायशास्त्रं स्नेह° $Dc_3$. ३. ज्ञेयम् $Dc_3$. ४. अथवा to °जना dropped $Bc_2$. ५. समग्रं तु सूत्रं $Bc_2$, $Dc_3$. ६. °समाप्तेरित्यर्थः $Dc_3$. ७. °गतव्या° $Dc_3$. ८. यथा dropped $Bc_2$, $Dc_3$. ९. ते तु $Dc_3$. १०. °परिस्पन्दनसाधन° $Bc_2$, सपरिस्पन्दनसाधन° $Dc_3$. ११. अपरिस्पन्दनसाधन° $Dc_3$. १२. सर्वथा प्रमेयेऽपि $Dc_3$.

[1]तेष्वादौ दश लकाराः [2]प्रदर्श्यन्ते । [3]लट् । लिट् । लुट् । लृट् । लेट्[4] । लोट् । लङ् । लिङ् । लुङ् । लृङ् ॥

---

तत्रापि कदाचिदर्थान्तरवृत्त्यादिभिः सकर्मकाणामप्यकर्मकत्वमकर्मकाणामपि सकर्मकत्वम् । यथाहुः ।

' धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मिणोकर्मिका क्रिया ' ॥ इति ।

अर्थान्तरे [5]प्रवर्तमानत्वात् सकर्मकोप्यकर्मकः । यथा भारं वहति । उद्यच्छतीत्यर्थः । नदी [6]वहति । स्रवतीत्यर्थः । कर्मणो धात्वर्थान्तःप्रवेशात् अकर्मको यथा [7]जीव प्राणधारणे जीवति । नृती गात्रविक्षेपे । नृत्यतीति[8] । अत्र प्राणगात्राख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते । कर्मणः प्रसिद्धत्वात् । यथा देवो वर्षति । पार्थो वर्षति । नियतं मेघोम्बु वर्षति पार्थः शरान् वर्षतीति प्रसिद्धम् । [9]प्रयुक्तेरविवक्षितत्वात् कर्मणः सकर्मकादपि भावे लकारः । यथा नेह पच्यते । नेह भुज्यते । अविवक्षा च लोकानुसारिण्येव । सतोप्यविवक्षा दृश्यते । यथानुदरा कन्येति । अकर्मकस्याप्यर्थान्तरवृत्त्या सकर्मकत्वम् । यथा सुखमनुभवति । उत्साहाद्भवते लक्ष्मीम् । प्राप्नोतीत्यर्थः । तेष्विति । तेषु प्रत्ययेषु मध्ये प्रथमं [10]दश लकाराः कथ्यन्ते । ते षट् टितः । चत्वारो ङितः । तांश्चाक्षरसमाम्नाया[11]नुपूर्व्या पठति । लडित्यादि । तत्र सकर्मकेभ्यः कस्मिन्नर्थे लकारा भवन्ति [12]कस्मिन्नर्थे अकर्मकेभ्य इत्य[13]त आह ।

---

१. Before it—इत्यधिकारः C. २. उच्यन्ते $D_3$. ३. लट् । लिङ् । लोट् । लङ् । लुङ् । लिट् । लुट् । लिङ् । लृट् । लृङ् । लेट् । P, $B_1$, C. ४. Dropped $D_3$, $D_4$. ५. वर्तमानः $Bc_2$; वर्तमानत्वात् $Dc_3$. ६. प्रवहति $Bc_2$. ७. जीव प्राणधारणे and नृती गात्रविक्षेपे dropped $Bc_2$. ८. °तीत्यादि । $Dc_3$. ९. प्रयोक्तु° $Bc_2$, $Dc_3$. १०. Dropped $Bc_2$. ११. °यानुपूर्वान् $Dc_3$. १२. अकर्मकेभ्यः कस्मिन्नर्थे $Bc_2$. १३. अतः dropped $Dc_3$.

**लः कर्मणि च भावे चाकर्मकेभ्यः ॥३।४।६९॥**

लकाराः सकर्मकाद् धातोः कर्मणि कर्तरि चाकर्मकाद्भावे कर्तरि च स्युः ॥ 'प्रत्ययः' 'परश्च' इत्यनुवर्तते

**वर्तमाने लट् ॥३।२।१२३॥**

आरब्धापरिसमाप्तक्रियोपलक्षिते काले वाच्ये धातोर्लट् प्रत्ययः[१] स्यात् ॥

---

लः **कर्मणि**। लकारा द्विविधाः तिङ्भाविनोतिङ्भाविनश्च। तत्र तिङ्भाविनां कृत्संज्ञानिषेधात् 'कर्तरि कृत्' इत्यस्यानुपस्थानात् स्वार्थे विधिः स्यात्। अतिङ्भाविनं तु 'कर्तरि कृत्' इति कर्तर्येव स्यादिति वचनमारभ्यते। **लकाराः**। लडादयो दश कर्मणि[२] कर्तुरीप्सिततमे कर्तरि क्रियायां स्वतन्त्रे भावे धात्वर्थे।

**वर्तमाने**। **आरब्धेति**। कर्तुं प्रस्तुता आरब्धा अपरिसमाप्ता च या क्रिया तया उपलक्षित इत्यर्थः। अथेह कुमाराः क्रीडन्तीति प्रवृत्तस्य विरामे तिष्ठन्ति पर्वता इति नित्यप्रवृत्ते च कथं लट् वर्तमानत्वाभावात्। तथा हि पूर्वत्रान्तराले क्रियान्तरसद्भावादुत्तरत्र पर्वतादिस्थितेस्तु[३] सर्वदाभावात् भूतत्वाद्ययोगात् वर्तमानत्वाभावः[४]। नैवम्। क्रीडनस्यानुपरतत्वात्। अन्तरालक्रियास्तु नान्तरीयकत्वादव्यवधायिकास्तदवयवभूता वा यथा भुङ्क्ते इत्यादौ भुक्तसंशयं[५]

---

१. प्रत्ययः dropped $D_1$, $D_3$. २. कर्मणीति $Bc_2$. ३. °स्थितेः सदाभावात् $Bc_2$. ४. °भावात् $Bc_2$. ५. भुक्त° $Bc_2$, $Dc_3$.

अटावितौ । [1]आदेशविधानसामर्थ्यान्न[2] लस्येत्संज्ञा ।

लस्य ॥३।४।७७॥

[3]इत्यधिकृत्य

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्** ॥३।४।७८॥

एतेऽष्टादश लस्यादेशाः स्युः ॥ पटङा इतः ।

---

पानीयपानादि । तदुक्तं हरिणा ।

'व्यवधानमिवोपैति विच्छिन्न इव दृश्यते ।
क्रियासमूहो [4]भज्यादिरन्तरालप्रवृत्तिभिः ॥
न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते ।
सर्वैव हि क्रियान्येन संकीर्णेवोपलभ्यते ॥
[5]तदन्तराले दृष्टा वा सर्वैवावयवक्रिया' ॥ इति ।

पर्वतादिस्थितेस्तु यद्यपि स्वरूपेण [6]भूतत्वादि न स्यात्तथाप्यन्यतो भविष्यति । भेदस्य तथाभूतत्वात् । [7]उक्तं हरिणा ।

'परतो भिद्यते सर्वमात्मा तु न विकल्पते ।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते' ॥ इति ।

भूतभविष्यद्वर्तमानानां पदार्थानां क्रियाप्राप्तिसाहचर्यात् पर्वतादिस्थितेरपि भूतत्वादीति सिद्धं समीहितम् । लटष्टकारः 'टित आत्मनेपदानाम्—' इति विशेषणार्थः । [8]अकारो 'विदो लटो वा' इति विशेषणार्थ इत्यभिप्रेत्याह । **अटावितावि**ति ।

**तिप्तस्** । **पटङा इत** इति । तिप् सिप् मिप् इत्यत्र

---

१. $D_1$, $D_4$ drop आदेश° to इत्यधिकृत्य; $D_3$ drops from आदेश...to संज्ञा. २. लस्येत्संज्ञा न C; लस्य नेत्संज्ञा P, $B_2$, $D_2$, $N_1$. ३. इत्यधिकृत्य dropped $D_3$. ४. भुज्यादि° $Bc_2$, $Dc_3$. ५. तदन्तराल-दृष्टा वा $Bc_2$, $Dc_3$. ६. भूतत्वं नास्ति तथापि $Bc_2$. ७. उक्तं हि $Bc_2$. ८. अकारोऽपि $Bc_2$.

ल इति दश लकारा उच्यन्ते ।

**लः परस्मैपदम्** ॥१।४।९९॥

लादेशाः परस्मैपदसंज्ञाः स्युः ॥

**तङानावात्मनेपदम्** ॥१।४।१००॥

तङिति प्रत्याहारः । तादिर्नवकः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः ।

---

पकारोनुदात्तार्थः पित्कार्यार्थश्च । इट् इति टकारः 'इटोत्' इति विशेषणार्थः । तिबादिभिरादेशविशेषैस्तुल्यत्वान्न देशविध्यर्थः । महिङो ङकारस्तिङिति प्रत्याहारार्थः । एषां 'हलन्त्यम्' इतीत्संज्ञेत्यर्थः । लस्येत्यस्मिन्नधिकारे उत्सृष्टानुबन्ध ल इति सामान्यं गृह्यत इत्याह ।

ल इति ।

**लः परस्मै** । अत्र ल इति प्रथमा स्यात् षष्ठी वा । यदि प्रथमा लकारस्यैव पदसंज्ञा स्यान्नादेशानाम् । स्थानिवद्भावेन तेषामपि स्यादिति चेत्तर्हि 'तङानावात्मनेपदम्' इत्यत्र ल इत्यनेन तङानयोः संबन्धो न स्यात् । न हि तौ लौ भवतः । मैवम् । तत्र तङानभावी लकार एव तङानावुक्तः । एवं व्याख्यानद्वारेणार्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात् प्रथमापक्षे । षष्ठीपक्षे त्वेष दोषो नास्तीति षष्ठीपक्षमाश्रित्याह । लादेशा इति ।

**तङानौ** । लादेशा इत्येव । कतीह निघ्नानाः । निपूर्वाद्धन्तेः 'ताच्छील्यवयोवचनशक्तिषु' इति चानश् प्रत्ययः । न त्वयं लादेशो लः परस्मैपदिनोपि स्यात् ।

---

१. एते आत्मनेपदसंज्ञाः स्युः C; B₂, D₁, D₃. २. °रादेशैस्तुल्य° Bc₂, Dc₃. ३. परस्मैपदम् Bc₂. ४. स्याद्वा Bc₂. ५. स्यान dropped Dc₃. ६. तर्हि Dc₃.

**शेषात् कर्तरि परस्मैपदम् ॥१।३।७८॥**

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥

**अनुदात्तङित आत्मनेपदम् ॥१।३।१२॥**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ॥

---

**शेषात्** । आत्मनेपदनिमित्तमनुदात्तेत्त्वङित्त्वादि । 'अनुदात्तङित—' इत्यादिनात्मनेपदं नियतं परस्मैपदमनियतं तत् सर्वतोपि स्यादित्यारम्भः । अथ पच्यते ओदनः स्वयमित्यत्र कर्मकर्तरि परस्मैपदं किं न स्यात् । उच्यते । 'कर्तरि कर्म—' इत्यतः कर्तृग्रहणं द्वितीयमनुवर्तते । तेन कर्तैव यः कर्ता न कदाचित् कर्म ततः परस्मैपदं न कर्मकर्तरीत्यग्रे स्वयमेव वक्ष्यति ।

**अनुदात्त** । 'धातोः' इति कुतोनुवर्तते । 'भूवादयो धातवः' इत्यतः । तच्च अनुदात्तेत इत्यनेन सामानाधिकरण्यात् पञ्चम्यन्तं स्यात् । अत एव चङङ्भ्यां तङ् न । एवं तर्हि यङन्तादपि न स्यात् । वेविद्यते इति । यङेव ह्यत्र ङित् न समुदायः । यतः अवयवे चरितार्थं लिङ्गं समुदायस्य विशेषकं न भवति । एवं तर्हि प्रायोविवक्षया धातोरित्युक्तं चङङोस्तु परस्मैपदप्रवृत्त्यनन्तरप्रवृत्तित्वेन ङित्त्वेपि तङ् न ।

---

१. भवाति $N_1$. २. अपि dropped $Bc_2$, $Dc_3$. ३. तत्र $Dc_3$. ४. हि dropped $Bc_2$. ५. प्रकृत्य° $Bc_2$.

२ [प्र. कौ.]

**स्वरितञितः कर्त्रभिप्राये क्रियाफले॥१।३।७२॥**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि [1]क्रियाफले॥

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥१।४।१०१॥**

[2]तिङ् प्रत्याहारः तिङ [3]उभयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः॥

---

स्वरित। कर्तृगामिनीति [4]। क्रियायाः फलं प्रधानभूतम्। यदर्थमसौ क्रियारभ्यते तच्चेत् कर्तुर्लकारवाच्यस्य स्यादित्यर्थः। तदुक्तं हरिणा।

'यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लोभादि प्रयोजनम्' ॥ इति।

अतो यजति याजक इत्यत्र यद्यपि [5]दक्षिणाद्यप्रधानं फलं कर्तुर्भवति तथापि प्रधानं स्वर्गादिकं लकारवाच्यस्य न भवति। [6]अतोत्र नात्मनेपदम्।

तिङः। ननु च तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमसंज्ञानि भवन्ति इति सूत्रार्थः। एवं [7]च षट् त्रिकाः संज्ञिनः तिस्रः संज्ञा [8]इति वैषम्यम्। ततो न संख्यातानुदेश इत्याशङ्क्याह। तिङ उभयोरिति। अयमभिसंधिः। अत्रात्मनेपदं परस्मैपदं चानुवर्तते। तदनुवृत्तौ [9]द्वौ राशी भवतः। तत्रात्मनेपदराशौ ये त्रयस्त्रिका ये परस्मैपदराशौ त्रयस्त्रिकास्तैरिदं सूत्रं प्रत्येकमभिसंबध्यते।

---

१. फले N. २. तिङिति C; $D_3$. ३. उभयोः पदयोस्त्रय° $B_1$. ४. इति dropped $Bc_2$. ५. दक्षिणाद्यं फलं प्रधानं $Dc_3$. ६. ततो नात्रात्मने° $Dc_3$. ७. Dropped $Bc_2$. ८. चेति $Bc_2$. ९. Dropped $Bc_2$.

**तान्येकवचनद्विवचनबहुवचनान्येकशः ॥१।४।१०२॥**

तिङस्त्रीणि त्रीणि वचनान्येकैकश एतत्संज्ञानि स्युः ॥

**शेषे प्रथमः ॥१।४।१०८॥**

युष्मदस्मद्विषयादन्यत्र प्रथमपुरुषः स्यात् ॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥१।४।१०५॥**

तिङ्वाच्यकारकवाचिनि युष्मदि स्थिते स्थानिन्यपि मध्यमपुरुषः स्यात् ॥

---

तानि । तानिवचनं संज्ञासमावेशार्थम् । अन्यथैकसंज्ञाधिकारत्वात् पुरुषवचनसंज्ञाः पर्यायेण प्रवर्तेरन् । एवं च 'आडुत्तमस्य–' इत्याडादिकार्यं पाक्षिकं स्यात् । तानीति तु सति संज्ञासमावेशः स्यात् । तच्छब्देन हि लब्धपुरुषसंज्ञानि परामृश्यन्ते । येषां पुरुषसंज्ञाः कृतास्तानि वचनसंज्ञानि स्युः ।

शेषे । युष्मदस्मद्विषयादन्यत्रेति । यत्र युष्मदस्मदी समानाधिकरणे न स्तस्तत्रेत्यर्थः । ततश्च देवदत्तश्च त्वं च पचथः । देवदत्तश्चाहं च पचावः । इत्यत्र प्रथमो न मध्यमोत्तमावेव स्तो[1] युष्मदस्मत्सद्भावात्[2] ।

युष्मदि । तिङ्वाच्यकारकवाचिनीति । तिङा[3] वाच्यं यत् कारकं कर्मादि यस्मिन्नर्थे तिङ् विहित इति यावत् । तद्वाचिनि युष्मदि स्थिते प्रयुज्यमाने स्थानिनि अप्रयुज्यमानेपि मध्यमपुरुषो भवतीत्यर्थः । स्पष्टत्वादुपेक्षितमेकं सूत्रं[4] प्रसङ्गाद्व्याख्यायते । 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच' ॥१।४।१०६॥ परिहासे गम्ये

---

१. Dropped Dc₃. २. °दस्मदोः सद्भावात् Bc₂. ३. तिङ्वाच्यं Bc₂. ४. °क्षितं सूत्रमेकं Bc₂.

**अस्मद्युत्तमः ॥१।४।१०७॥**

अस्मादि तु तथाभूते उत्तमपुरुषः स्यात् ॥ भू सत्तायाम् ।

---

मन्यतावुपपदे धातोः मध्यमः स्यात् मन्यतेश्चोत्तमः स एकवत् स्यात् । एहि मन्ये ओदनं भोक्ष्यसे । भुक्तः सोतिथिः । प्रहासे किम् । एहि मन्यसे अन्नं भोक्ष्ये इति साधुः ।

**अस्मदि तु तथाभूते** इति । तिङ्वाच्यकारकवाचिनि प्रयुज्यमानेप्रयुज्यमाने च सति उत्तमपुरुषो भवतीत्यर्थः । यदा युष्मदस्मदी द्वे अप्युपपदे भवतस्तदा कथं स्यात् । उच्यते । यदा कर्तृशक्ती स्वाधारे नियते तदाख्यातमपि पृथगेव प्रयुज्यते । पचसि पचामि चेति । अविरोधाच्चेच्छक्तिद्वयेपि लकारस्तदा विप्रतिषेधे परत्वादुत्तम एव भवति । त्वं चाहं च पचाव इति । स च त्वं चाहं च पचाम इति द्वन्द्वे त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यत इति वाच्यमिति अस्मदः शेषेपि स्थानिन्यपीति मध्यमे प्राप्ते परत्वादुत्तम एव स्यात् । अस्मच्छब्दस्य युष्मदर्थोपि वाच्यः । अन्यथा द्विवचनं न स्यात् । न ह्यस्मदर्थस्यैव द्विर्वचनमुपपद्यते । भू । भू इदं धातुसूत्रम् । भू इत्यविभक्तिको निर्देशः । छान्दसो वा सुलुक् । छन्दोवत् सूत्राणि भवन्तीति । एवं सर्वत्र । भू इत्ययं धातुः सत्तायां वर्तते । सतो भावः सत्ता अस्तित्वम् । भावो धात्वर्थः सामान्यमिति यावत् । तथोक्तं भर्तृहरिणा ।

'संबन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।
प्राप्तक्रमाविशेषेषु क्रिया सैवाभिधीयते ॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ॥' इति ।

---

१. Dropped $D_3$. २. उत्तमः पुरुषः P, $B_1$, C, N. ३. ओदनं $Bc_2$. ४. चास्मदि $Dc_3$. ५. मध्यमेपि $Bc_2$. ६. द्वित्वमु॰ $Bc_2$, $Dc_3$. ७. इदं सूत्रं $Bc_2$.

कर्तृविवक्षायां भू तिप् इति स्थिते

**तिङ्शित् सार्वधातुकम् ॥३।४।११३॥**

[1]तिङ् शित[2]श्चैतत्संज्ञाः स्युः ॥

---

**[3]कर्तृविवक्षायां भू तिबिति स्थिते** इति । भू इत्यस्य 'भूवादयो धातवः' इति धातुसंज्ञायां धात्वधिकारविहितानेकप्रत्ययप्रसङ्गे वक्तुर्विवक्षापूर्विका शब्दप्रवृत्तिरिति कर्तृविवक्षायां 'लः कर्मणि च—' इति कर्तरि लकारः । तत्रापि 'प्रत्ययः' 'परश्च' इत्यनुवर्तमाने वर्तमानका[4]लविवक्षायां 'वर्तमाने लट्' इति लट् । तस्य 'तिप्तस्-झि-' इति तिबादयः सामान्येन प्राप्नुवन्ति[5] । तत्राप्यस्य धातोः परस्मैपदित्वात् 'शेषात् कर्तरि परस्मैपदम्' इति परस्मैपदम् । तत्रापि युष्मदस्मद्व्यतिरिक्ते उपपदे समानाधिकरणे विवक्षिते 'शेषे प्रथमः' इति प्रथमपुरुषः । तत्राप्येकत्वविवक्षायां 'द्व्येकयोः—' इत्येकवचनं तिप् । 'हलन्त्यम्' इति पकारस्येत्संज्ञायां 'तस्य लोपः' इति लोपः। एवं सति भू ति इति स्थिते वक्ष्यमाणो विधिः कार्य इत्यर्थः ।

**तिङ्शित्** । सार्वधातुकप्रदेशाः 'सार्वधातुके यक्' इत्येवमादयः ।

---

१. तिङः $D_1$, $N_1$; Before it—अथादेशः $D_3$. २. सार्वधातुकसंज्ञाः स्युः $D_1$, $D_3$. ३. Before this—सा जातिरित्यर्थः । यद्वैशेषिके सामान्यं परमपरं परापरं चेति । परं सत्ता महाविषयत्वात् । अपि च धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते । यत्रान्यत् क्रियापदं नास्ति तत्रास्तिभवत्योरध्याहार इत्यलम् ॥ $Bc_2$, $Dc_3$. ४. काल dropped $Bc_2$. ५. After it—एषा च पूर्वनवकस्य । लः परस्मैपदसंज्ञा उत्तरस्य 'तङानावात्मनेपदम्' इत्यात्मनेपदसंज्ञा । एवं सति तत्रापि तस्य धातोः परस्मैपदमिति परस्मैपदं तत्रापि परस्मैपदत्रिकाणां क्रमेण तिङि त्रीणि प्रथममध्यमोत्तमसंज्ञा त्रिष्वपि त्रीणि वचनानि । तान्येकवचनेति एकवचनद्विवचनबहुवचनसंज्ञानि $Dc_3$.

## कर्तरि शप् ॥३।१।६८॥

कर्त्रर्थे सार्वधातुके परे धातोः शप् प्रत्ययः स्यात् ॥ शपावितौ ।

## सार्वधातुकार्धधातुकयोः ॥७।३।८४॥

अनयोः परयोरिगन्तस्याङ्गस्य गुणः स्यात् ॥ भवति । भवतः ।

---

कर्तरि । शपाविताविति । शकारः सार्वधातुकसंज्ञार्थः । तस्य 'लशक्वतद्धिते' इति इत्संज्ञायां लोपः । पकारोऽनुदात्तार्थः पित्कार्यार्थश्च । तस्य 'हलन्त्यम्' इतीत्संज्ञायां लोपः । भू अति इति स्थिते ।

सार्व । सनः सकारमारभ्या महिङो ङकारात् प्रत्याहारे सङीत्यस्मिन्नुच्यमानेऽयमि काम्यतीत्यत्र स्यादतः सार्वधातुकेत्याद्युक्तम् । इगन्तेति । 'इको गुणवृद्धी' इति परिभाषया । भवतीति । 'एचोऽयवायावः' इत्योकारस्यावादेशः । भवत इति । द्वित्वविवक्षायां भू तस् इति स्थिते 'कर्तरि शप्' इति शप् । 'सार्वधातुक—' इति गुणः । अवादेशः । 'ससजुषोः—' इति रुत्वम् । 'खरवसानयोः' इति विसर्गः । बहुत्वविवक्षायां 'बहुषु बहुवचनम्' इति परस्मैपदप्रथमपुरुषबहुवचनं झि । भू झि इति स्थिते ।

---

१. After this—गुणवृद्धी परत्वादियङादिकं बाधेते $B_1$, $D_1$, $D_2$. २. °नुबन्धार्थः $Bc_2$. ३. तस्यापि $Bc_2$. ४. सार्वधातुकार्धधातुकयोः $Bc_2$ ५. अत्र सनः $Dc_3$. ६. After it—पूर्ववच्छादिः $Bc_2$.

**झोऽन्तः ॥७।१।३॥**

प्रत्ययादेर्झस्यान्तादेशः स्यात् ॥ अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ।

**अतो दीर्घो यञि ॥७।३।१०१॥**

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे ॥

---

झोऽन्तः । 'चुटू' इति इत्संज्ञापवादोयम् । **प्रत्ययादेरिति** । ननु च प्रत्ययादेरेव यदि स्यात् तदा शेरते[1] इति न सिध्यति । शीङो लेटि कृते 'लेटोऽडाटौ' इत्याटि च कृते झस्य प्रत्ययादित्वाभावात् अन्तादेशो न स्यात् । तथा[2] चोक्तं **काशिकायाम्** । 'प्रत्ययग्रहणमनुवर्तते । आदिग्रहणं निवृत्तम्' इति । सत्यम् । तथा चाचार्यवर्यैर्निरागमप्रत्ययविवक्षयोक्तम् । सागमप्रत्ययविवक्षायां तु प्रत्ययावयवस्येत्येव । अथवा प्रत्ययादेरिति प्रत्ययावयवस्येत्यर्थः । कुत एतत् उच्यते । प्रत्ययेन आदीयते उपादीयते समवायित्वेनेति[3] प्रत्ययादिः । अवयवा हि अवयविना समवायित्वेनोपादीयन्ते । यथा पटेन तन्तवः[4] । 'उपसर्गे घोः किः' । इत्याङ्पूर्वाद्दातेः कर्मणि किः । पश्चात् कर्तृषष्ठीसमासः । प्रत्ययस्यादिः प्रत्ययादिः प्रत्ययावयव इति यावत् । भवसि । भवथः । भवथ इति । समानाधिकरणे युष्मद्युपपदे विवक्षिते 'युष्मद्युपपदे—' इति मध्यमपुरुषः । पूर्ववच्छबादि[5] ।

अतः । दीर्घग्रहणं किम् । अकृतोऽडागम एव कस्मान्नानुवर्त्येत । विधिसामर्थ्यादतोगुण इति पररूपं नेति[6] चेन्न । अधुक्षावहीत्यत्र 'क्सस्याचि' इति लोपः स्यात् । 'सुपि च' इत्यत्र वानुवृत्तौ[7] अतिजराभ्यामित्यत्र[8] च जरस् स्यात् । एवमपि[9] दीर्घग्रहो व्यर्थः ।

---

१. Dropped $D_1$, $D_3$. २. शयाते $Bc_2$. ३. यथोक्तं $Bc_2$. ४. समवायित्वेन समवयन्ति यथा पटे तन्तवः । $Bc_2$. ५. °च्छबादिः $Bc_2$. ६. न स्यादिति $Bc_2$. ७. इत्यत्रानुवृत्तौ $Bc_2$; इत्यत्रानुवृत्तेः $Dc_3$. ८. Dropped $Bc_2$, $Dc_3$. ९. असिद्धत्वादत एवमपि $Bc_2$.

भवामि। भवावः। भवामः। स भवति। त्वं भवसि। अहं भवामि। इत्यादि ज्ञेयम्।

भू प्राप्तावात्मनेपदी वा।

**टित आत्मनेपदानां टेरे ॥३।४।७९॥**

टितो लस्यात्मनेपदस्य टेरेत्वं स्यात् ॥ भवते।

---

अत आदित्येव विधेयम्। मैवम्। अपाक्षीरोदनं देवदत्त। ननु पचामि भोरित्यत्र 'अनन्त्यस्यापि प्रश्नाख्यानयोः—' इति प्लुतः स्यात्। स मा भूद्दीर्घ एव यथा स्यादिति दीर्घग्रहणम्। **भवामीति**। अस्मदि समानाधिकरणे उपपदे विवक्षिते 'अस्मद्युत्तमः' इत्युत्तमः। तत्राप्येकत्वविवक्षायामेकवचनं मिप्। एवं युष्मदादिष्वप्रयुज्यमानेषूदाहृतम्। इदानीं प्रयुज्यमानेषूदाहरति। **स भवति**। **त्वं भवसि**। **अहं भवामि**। **इत्यादि ज्ञेयमिति**। आदिशब्दात् तौ भवतः। ते भवन्ति। युवां भवथः। यूयं भवथ। आवां भवावः। वयं भवामः। इत्यादि ज्ञेयम्।

**भू प्राप्ताविति**। भू इत्ययं धातुः प्राप्त्यर्थे आत्मनेपदी भवन् वा चुरादिः स्यात्। चुरादौ 'आधृषाद्वा' इत्यधिकारे 'भू प्राप्तावात्मनेपदी' इति पाठादिति भावः। एतच्चात्मनेपदिनोऽस्याचुरादित्वपक्षे प्रक्रियाविशेषकथनायोक्तम्।

**टितः**। ननु च पचमानो यजमान इत्यत्रापि टेरेत्वं प्राप्नोति। शानचोऽपि टितो लकारसंबन्धित्वादात्मनेपदत्वाच्च। नैष दोषः। प्रकृतैस्तिबादिभिरात्मनेपदानां विशेषितत्वात्।

---

१. Before it—युवां भवथः $B_2$. २. Dropped $D_2$. ३. °बाहार्यम्। $Dc_3$.

## सार्वधातुकमपित् ॥१।२।४॥

अपित् सार्वधातुकं ङिद्वत् स्यात् ॥[१]

## आतो ङितः ॥७।२।८१॥

अतः परस्य ङितामाकारस्य इय् स्यात् ॥ 'लोपो व्योर्वलि'। भवेते। [२]भवन्ते।

## थासः से ॥३।४।८०॥

टितो लस्य थासः से स्यात् ॥ [३]भवसे। भवेथे। भवध्वे। [४]अतो गुणे। भवे। भवावहे। भवामहे।

---

सार्वधातु। ङिद्वदिति। ङिता तुल्यं ङिद्वदिति। तृतीयान्ताद्वतिः। अथवा ङितीव ङिद्वदिति। 'तत्र तस्येव' इति सप्तम्यन्ताद्वतिः। कार्यातिदेशोयम्। सार्वधातुकं किम्। कर्ता। अपित् किम्। करोति।

आतः। आतः किम्। भवन्ति। ङितः किम्। भवावहे। अत इति तपरकरणं किम्। मिमाते। असति हि तस्मिन् 'श्नाभ्यस्तयोः—' इति लोपात् परत्वादयमेव विधिः स्यात्।

थासः। स इति वक्तव्ये से[६] इति वचनं ज्ञापनार्थम्। आदेशानामेत्वं न भवतीति। तेन एधितेत्यादि सिद्धम्। भवेथे इति। आथां टेरेत्वम्। ङित्त्वम्। आकारस्येय् यलोपः। भवावहे भवामहे इति वहिमहिङौ। टेरेत्वम्। शबादि। 'अतो दीर्घो यञि' इति दीर्घः।

---

१. After it—'अतो येयः' इत्यधिकृत्य $B_1$. २. Dropped $N_1$. ३. $B_1$ drops it. ४. अतो गुणे dropped $D_3$. ५. तपरः किम्। $Bc_2$. ६. सेवचनं $Bc_2$.

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥३।३।१६१॥**

एष्वर्थेषु धातोर्लिङ् स्यात् ॥

विधि । विधिः प्रेरणम् । आज्ञापनमिति यावत् ।[2] निमन्त्रणं नियोगकरणम् । यत्राकरणे प्रत्यवायः ।[3] आमन्त्रणं कामचारकरणम् ।[4] यत्राकरणेपि प्रत्यवायाभावः । अधीष्टः सत्कारपूर्वको व्यापारः ।[5] संप्रश्नः संप्रधारणम् ।[8] प्रार्थना याच्ञा ।[9] अत्र

'न्यायव्युत्पादनार्थं च प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्' ॥ अन्यथा
'अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया' ॥

इति पदमञ्जरीकारोक्तो विशेषो ज्ञेयः । एष्वर्थेष्विति । विध्यादिविशिष्टेषु कर्त्रादिष्वर्थेष्वित्यर्थः । किमर्थमेवं व्याक्रियते । उच्यते । विध्याद्यर्थः किं प्रकृत्यर्थविशेषणं वा स्यात् प्रत्ययार्थो वा प्रत्ययार्थे विशेषणं वा । तत्र यद्याद्यः कल्पस्तदा यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्र न सिध्येत् । विदध्यात् । निमन्त्रयेतेति । अथ द्वितीयस्तदा

---

१. विधिः कर्तव्यार्थोपदेशः । निमन्त्रणं नियोगकरणम् । आमन्त्रणं कामचारकरणम् । अधीष्टः सत्कारपूर्वको व्यापारः । संप्रश्नः संप्रधारणम् । प्रार्थनं याच्ञा । एष्वर्थेषु &c. $B_1$, $B_2$, C, $D_1$; ( $B_1$ drops from विधिः...to °पदेशः; it has नियोगतः कर्तव्यं निमन्त्रणम् । सत्कारपूर्वको व्यापार इत्यधीष्टशब्दार्थः । संप्रधारणं संप्रश्नः । याच्ञा प्रार्थना ; $D_1$ and $B_2$ have एष्वर्थेषु धातोर्लिङ् स्यात् । लस्य तिबादयः in the beginning and then विधिः कर्तव्या° ). २. After it—यद्वा यस्य करणे प्रत्यवायः स विधिः । $Dc_3$. ३. After it—श्व इह भुञ्जीत भवान् $Dc_3$. ४. After it—इहासीत भवान् $Dc_3$. ५. अधीष्टं $Dc_3$. ६. °पूर्वो $Bc_2$. ७. After it—पुत्रमध्यापयेद्भवान् $Dc_3$. ८. किं वा वेदमधीयीतोत तर्कं वा । $Dc_3$. ९. After it—भो भोजनं लभेय $Dc_3$. १०. प्रत्ययार्थविशेषणं वा $Bc_2$.

लस्य तिबादयः ।

**यासुट् परस्मैपदेषूदात्तो ङिच्च ॥३।४।१०३॥**

लिङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तो ङिच्च[1] ॥ ङित्त्वोक्तेर्ज्ञायते लाश्रयं ङित्त्वं नादेशानामिति ।

**लिङः सलोपोनन्त्यस्य ॥७।२।७९॥**

सा[2]र्वधातुकलिङोनन्त्यस्य स[3]स्य लोपः स्यात् ॥

**इतश्च ॥३।४।१००॥**

[4]ङितो लस्य परस्मैपदेष्वि[5]कारस्य लोपः स्यात् ॥

---

भावकर्मकर्तॄणां प्रत्ययार्थानां विध्यादयो बाधकाः स्युः । अतस्तृतीयः पक्ष एव श्रेयान् ।

यासुट् । टकारः स्थानविध्यर्थः । उकार उच्चारणार्थः । स चेति । स यासुडित्यर्थः । ङिच्चेति । लिङ् ङिच्चेत्यर्थः । तत्रैव ङित्कार्याणां संभवात् । 'सार्वधातुकमपित्' । इति ङित्त्वे सिद्धेपि तदर्थं वचनं ङिच्चेति ज्ञापकार्थमपीत्याह । ङित्त्वोक्तेरिति । तेन अचिनवमसुनवमित्यादौ गुणो न भवति । उदात्तवचनमपि तदर्थमागमादावुदात्तत्वज्ञापनार्थं च ।

लिङः । अनन्त्यस्य किम् । भवेयुः । सार्वधातुके किम् । भूयास्ताम् ।

इतः । अतः 'उस्यपदान्तात्' इति पररूपमयं बाधते । तेन भवेयुरिति सिद्धम् ।

---

१. ङिद्वत् $B_1$. २. सार्वधातुकस्यैव लिङो° $B_2$. ३. सलोपः $B_1$; सस्य dropped $B_2$. ४. ङिल्लकारेकारस्य लोपः स्यात् परस्मैपदे । $D_1$. ५. °ङ्विकार लोपः $D_4$. ६. अपित्वर्थं $Bc_2$, $Dc_3$. ७. °मागमानुदात्तत्व° $Dc_3$. ८. अतः $Bc_2$. ९. अयं dropped $Bc_2$.

### अतो येयः ॥७।२।८०॥

अतः परस्य या इत्यस्य इय्[1] स्यात् सार्वधातुके[2] । गुणः । यलोपः[3] । भवेत् ।

### तस्थस्थमिपां तान्तन्तामः ॥३।४।१०१॥

[4]ङितश्चतुर्णां तामादयः क्रमात्[5] स्युः ॥ भवेताम् ।

### झेर्जुस् ॥३।४।१०८॥

लिङो झेर्जुस् स्यात् ॥ ज इत् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् ।

---

अतः । अतः किम् । चिनुयात् । तपरत्वं किम् । यायात् । सार्वधातुके किम् । चिकीर्ष्यात् । ननु चात्र अतो लोपः स्यात् । एवं तर्हि भवेदित्यत्रापि 'अतो दीर्घो यञि' इति दीर्घः स्यात् । तदनेनावश्यं विध्यन्तरं बाध्यम् । स दीर्घस्येवाल्लोपस्यापि बाधकः । गुण इति । 'आद्गुणः' इत्यनेन । यलोप इति । 'लोपो व्योर्वलि' इत्यनेन ।

तस्थस्थ । ङितश्चतुर्णामिति । ङिल्लकारसंबन्धिनां तसादीनां चतुर्णामित्यर्थः ।

झेः । झोन्तापवादः । ज इदिति । 'चुटू' इत्यनेन । भवेरिति मध्यमपुरुषैकवचनम् । भवेतमित्यादि । थस्थमिपां क्रमेण तं त अम् इत्येते आदेशाः ।[6]

---

१. इय $N_1$. २. After it—परे $D_3$. ३. यलोपश्च $D_4$. ४. ङितां लस्य चतुर्णां $B_2$. ५. आदेशाः क्रमात् $B_2$. ६. After it-भवन्ति $Bc_2$.

नित्यं ङितः ॥३।४।९९॥

ङिल्लकारोत्तमसकारस्य नित्यं लोपः स्यात् ॥ भवेव । भवेम ।

लिङः सीयुट् ॥३।४।१०२॥

लिङ आत्मनेपदस्य सीयुडागमः स्यात् । सेर्लोपः ॥ भवेत । भवेयाताम् ।

झस्य रन् ॥३।४।१०५॥

लिङो झस्य रन् स्यात् ॥ भवेरन् । भवेथाः । भवेयाथाम् । भवेध्वम् ।

इटोत् ॥३।४।१०६॥

लिङादेशस्येटोत् स्यात् ॥ भवेय । भवेवहि । भवेमहि ।

---

नित्यम् । नित्यग्रहणं 'वैतोन्यत्र' इत्यतोनुवर्तमानस्य विकल्पस्य निवृत्त्यर्थम् ।

लिङः । सामान्येन विहितोयं यासुटा विशेषविहितेन परेण बाध्यत इति यासुड्विषयं परस्मैपदं परिहृत्य आत्मनेपद एव वर्तत इत्यभिप्रेत्याह । लिङात्मनेपदस्येति । टो देशविध्यर्थः । उकार उच्चारणार्थः । सलोप इति । 'लिङः सलोपः—' इत्यनेन ।

झस्य । झोन्तापवादः ।

इटोत् । त इत् । ननु तकारस्येत्संज्ञानिषेधः प्राप्नोति । 'न विभक्तौ तु स्माः' इत्यनेन । सत्यम् । किं तु नायमादेशावयवस्तकारः । किं तर्हि । मुखसुखार्थमुच्चार्यते । अथवा 'न विभक्तौ—' इत्यस्यानित्यत्वज्ञापनान्न निषेधः । अत्र इट इति आगमस्येटो ग्रहणं न भवति । अर्थवद्ग्रहणे नानर्थकस्येति परिभाषयेत्यभिप्रेत्योक्तं लिङादेशस्येति ।

---

१. सलोपः $D_1$, $D_2$, $D_3$, Com. २. $B_1$, $D_1$ have after it—तः स्वरार्थः ।. ३. अयं dropped $Bc_2$. ४. °प्रतिसेधः $Bc_2$, $Dc_3$. ५. आगतस्ये° $Bc_2$.

**लोट् च ॥३।३।१६२॥**

विध्यादिष्वर्थेषु धातोर्लोट् स्यात् ॥

**आशिषि लिङ्लोटौ ॥३।३।१७३॥**

[1]धातोर्लिङ्लोटावाशिषि स्तः ॥

**एरुः ॥३।४।८६॥**

लोट इकारस्य उः स्यात् ॥

**तुह्योस्तातङाशिष्यन्यतरस्याम् ॥७।१।३५॥**

आशिषि तुह्योः[2] स्थाने तातङ्[3] स्याद्वा । ङित्त्वं गुणाद्यभावाय [4]नान्त्यादेशाय ।[5] भवताद्वा ॥[6]

---

**लोट्** । विध्यादिष्विति । विधिनिमन्त्रणाधीष्टसंप्रश्नप्रार्थने-ष्वित्यर्थः ।

**आशिषि** । [7]आशंसनमाशीः । इष्टस्यार्थस्याप्राप्तस्य प्राप्तिः ।

**एरुः** । लोट इति । लोडादेशानामित्यर्थः ।

**तुह्योः** । ङित्त्वमित्यादि । आदिशब्देन वृद्धिग्रहणम् । ब्रूतादि-त्यादिषु गुणप्रतिषेधः । मृष्टादित्यत्र वृद्धिप्रतिषेधः । [8]अतो ङित्त्वं गुणाद्यभावाय अतो 'ङिच्च' इत्यन्ततादेशाय न । यदि हि ङित्करण-[9]स्यान्यप्रयोजनं न स्यात् [10]ततो ह्यादिदेशार्थं स्यादित्यर्थः ।

---

१. Before it—अप्राप्तप्रार्थनमाशीः $B_1$. २. तुहिस्थाने N, $D_3$. ३. वा स्यात् P. ४. नान्तादेशाय P. ५. After this—तातङ्ङित्त्वं संक्रमकृत स्यात् । अन्त्यविधिश्चेत् तच्च तथा न । हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह । तातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः । न तद्वचनकार्याणां तेन ते स्वविकारजाः ॥ $B_1$, $B_2$ ; C has on the margin—संक्रमो गुणवृद्धिप्रतिषेध इति पूर्वाचार्याणां संज्ञा ( $B_2$ has तातङि ङित्त्वं after संक्रमकृत् स्यात्-संक्रमो नाम गुणवृद्धिप्रतिषेधः ). ६. वा dropped $B_1$, P, C. ७. आशासन° $Bc_2$. ८. अतो ङित्त्वमन्त्यादेशाय न $Bc_2$. ९. °न्यत् प्र° $Bc_2$. १०. ततोन्त्यादेशार्थं स्यादित्यर्थः $Bc_2$, $Dc_3$.'

लोटो लङ्वत् ॥३।४।८५॥

लोटो लङ्वत्कार्यं स्यात् । तेने तामादयः सलोपश्च ॥ भवताम् । भवन्तु ।

सेर्ह्यपिच्च ॥३।४।८७॥

लोटः सेर्हिः स्यात् सोपिच्च ॥

---

तथोक्तं वार्तिककृता ।

तातङि ङित्त्वं संक्रमकृत् स्यादन्त्यविधिश्चेत्तच्च तथा न ।
हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥
तातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः ।
न तद्वदनङादीनां तेन ते ह्यविकारकाः ॥ इति ।

ङित्त्वाच्चास्य स्थानिवद्भावेन पित्त्वं न भवति । ङिच्च पिन्न भवतीति वचनात् । तेन ब्रूतादित्यत्र 'ब्रुव ईट्' इतीट् न भवति ।

लोटः । तामादयः । तान्तन्तामः । ननु च लङ्वदित्युक्तम् । तत्र 'लुङ्लङ्—' इत्यट् । 'आडजादीनाम्' इत्याट् । 'सिजभ्यस्त-विदिभ्यश्च' । 'लङः शाकटायनस्यैव' इति । 'झेर्जुस्' । एते किमिति न भवन्ति । अत्र ब्रूमः । 'विदो लटो वा' इति वाग्रहणमनुवर्तते । सा च व्यवस्थितविभाषा भविष्यति । तेन तामादय एव भवन्ति अडादयो न भवन्तीति ।

१. Dropped $D_1$, $D_2$, $D_3$, $N_1$. २. Before it—'विदो लटो वा' इत्यनुवृत्तेर्व्यवस्थितविभाषया अट् आट् झेर्जुस् न । $D_3$. ३. °विकारजाः । $Dc_3$. ४. ङिच्चापि $Bc_2$. ५. भवति $Bc_2$.

**अतो हेः ॥६।४।१०५॥**

अतः परस्य हेर्लुक् स्यात् ॥ भव भवताद्वा । भवतम् । भवत ।

**मेर्निः ॥३।४।८९॥**

लोटो मेर्निः स्यात् ॥

**आडुत्तमस्य पिच्च ॥३।४।९२॥**

लोडुत्तमस्याडागमः स्यात् स पिच्च ॥ हिन्योरुत्वनिषेधः[1] । भवानि ।

---

अतः । अतः किम् । युहि । रुहि[2] । तपरकरणं[3] किम् । लुनीहि । असिद्धवदत्राभादितीत्वस्यासिद्धत्वादाकारान्तमेवैतद् भवति । ननु च हेरादेशस्य तातङोपि स्थानिवद्भावेन हित्वाद् भवतादित्यत्रापि लोपेन भाव्यम् । सत्यम् । अत्र 'हुझल्भ्यो हेर्धिः' इत्यतो हेरित्यनुवर्तमानेपि[4] यत् पुनर् 'अतो हेः' इति हिग्रहणं[5] ततोयमर्थः स्यात् । हेरेव हेर्लोपो भवतीति । तेनात्र लोपो न भवति । तातङो हि हित्वं स्थानिवद्भावेन न साक्षात् ।

मेर्निः । उत्वेकारलोपयोरपवादः ।

आडु । स पिच्चेति । स उत्तमः पिद्[6] भवति । अथाट एव पित्त्वं कस्मान्न स्यात् । निरर्थकत्वात् । पित्त्वं ह्यनुदात्तार्थं वा स्यात् गुणवृद्धिप्रवृत्त्यर्थं वा । तत्राटोनुदात्तत्वमागमत्वादेव[7] सिद्धम् । गुणवृद्ध्योस्तु नैवाटो निमित्तत्वम् । अप्रत्ययत्वात्[8] । तस्मादाटं प्रति पित्त्वानर्थक्यादुत्तमस्यैव भवति । हिन्योरुत्वनिषेध इति । हिश्च निश्च हिनी तयोः हिन्योरुत्वनिषेधः । 'एरुः' इति प्राप्तस्येत्यर्थः ।

---

१. °प्रतिषेधः $D_2$, $D_3$. २. तुहि $Dc_3$. ३. तपरः किम् $Bc_2$. ४. अपि dropped $Bc_2$. ५. हेर्ग्रहणं $Bc_2$, $Dc_3$. ६. पिदपि $Bc_2$. ७. °मागमादेव $Bc_2$. ८. अप्रत्ययात् $Bc_2$.

**ते प्राग्धातोः ॥१।४।८०॥**

ते गत्युपसर्गसंज्ञा धातोः पूर्वं प्रयोज्याः ।

**आनि लोट् ॥८।४।१६॥**

उपसर्गस्थान्निमित्तात् परस्य लोडादेशस्य आनीत्यस्य णः स्यात् ॥ प्रभवाणि ॥ अदन्तरोरुपसर्गवद्वृत्तिर्वाच्या ॥* वृत्तिः समासः । अद्भवानि । अन्तर्भवाणि । दुरः परस्य णत्वं नेति केचित् । दुर्भवानि । भवाव । भवाम । टेरेत्वे कृते ।

**आमेतः ॥३।४।९०॥**

लोट एकारस्याम् स्यात् ॥ भवताम् । भवेताम् । भवन्ताम् ।

---

ते प्रा । ननु च क्रियायोगे गत्युपसर्गसंज्ञे विहिते इति धातुग्रहणं विनापि धातोः प्राक् प्रयोगः स्यात् । न हि धातोरन्यस्य क्रियास्ति । तस्माद्धातोरिति व्यर्थम् । न व्यर्थम् । प्रचिकीर्षतीत्यत्रापि धातोः प्राग्यथा स्यात् । तत्र हि प्रशब्दः सन इषिक्रियाया युज्यते इति सनं प्रति गत्युपसर्गसंज्ञे ततः सनः प्राक् स्यात् । धातुग्रहणे हि सति चिकीर्षतेर्धातोः प्राक् प्रयुज्यते न सनः ।

आनि । लोडिति किम् । प्रकृष्टा वपा येषु तानि प्रवपानि मांसानि । अदन्तरोरिति । अच्छब्दस्य 'आतश्चोपसर्गे' इत्यङ्विधौ उपसर्गत्वम् । अद्धा । अन्तःशब्दस्याङ्किविधिणत्वेषु । अन्तर्धा । अन्तर्धिः । दुरः परस्येति । दुरः उपसर्गात् प्राप्तम् । स्वमते तूपसर्गप्रतिरूपकमेतदव्ययं नोपसर्ग इति णत्वं न । तेन दुर्नय इत्यादि सिद्धम् । टेरेत्व इति । 'टित—' इत्यनेन ।

---

१. गत्युपसर्गसंज्ञका P, $B_2$. २. प्राक् C. ३. नस्य णः $D_1$, $D_2$, N, $B_2$. ४. $D_1$ drops वाच्या. ५. वृत्तिः समासः । अङ्गवानि dropped $D_1$, N ; वृत्तिः समासः dropped $D_3$. ६. अन्तर्भवाणि । अङ्गवाणि । $D_4$. ७. अत्र $Dc_3$. ८. °संज्ञा $Dc_3$.

**सवाभ्यां वामौ ॥३।४।९१॥**

लोडेतः सवाभ्यां परस्य क्रमात् वं अम् एतौ स्तः ॥[1] भवस्व । भवेथाम् । भवध्वम् ॥

**एत ऐ ॥३।४।९३॥**

लोडुत्तमस्य एत ऐ स्यात् ॥ आमोपवादः ।[2] आडागमः । वृद्धिः । भवै ।[3] आटोऽङित्त्वादियादेशो न । भवावहै । भवामहै ॥

**अनद्यतने लङ् ॥३।२।१११॥**

[4] नास्त्यद्यतनो यस्मिन् भूते काले तस्मिन् वाच्ये

---

**सवाभ्याम्** । **लोडेत** इत्यादि । सवाभ्यां परस्य लोडेकारस्य क्रमात् व अम् एतौ स्त इत्यर्थः ।

**एत** । पचावेदमित्यत्र[5] आडुणे कृते असिद्धं बहिरङ्गमन्तरङ्गे इति तस्यासिद्धत्वादेत्वं न । **आमोपवाद** इति । 'आमेतः' इति प्राप्तस्य । **आडागम** इति । 'आडुत्तमस्य' इत्यनेन । **वृद्धिरिति** । 'आटश्च' इति 'वृद्धिरेचि' इत्यनेन च । **आट** इति । आट इयादेशो न । कुतः । अङित्त्वात् । ङितां खलु आकारस्येयादेशो विधीयते । अयं च ङिन्न । पित्त्वात् । पिच्च ङिन्न भवतीति ।

**अनद्यतने** । अनद्यतन इति यद्ययं तत्पुरुषः स्यात्तदाद्यतनादन्यस्मिन् भवतीत्यर्थः स्यात् । एवं चाद्य ह्यो वा भुङ्क्ष्महीत्यत्राद्यतनानद्यतनव्यामिश्रणे प्राप्नोति । भवति ह्यद्यतनानद्यतनसमुदायोऽद्यतनादन्यः । तस्मात् तत्पुरुषे दोषं दृष्ट्वा बहुव्रीहिपक्षमाश्रित्याह । **नास्त्यद्यतनो यस्मिन्निति** । अद्यतनो

---

१. व अम् dropped $D_2$. २. आडागमः dropped P, $D_1$, $D_3$, $B_1$, $B_2$. ३. आटो...देशो न after भवामहै $D_1$; before भवै $D_3$, N. ४. Before it—अतीताया रात्रेः पश्चिमयामद्वयमागामिन्याः पूर्वयामद्वयं दिवसश्च एषोऽद्यतनः $B_2$, C (पूर्वं यामं दिवसः सकलः एषो° $B_1$, पश्चिमं यामं पूर्वं दिवसः सकलः एषोऽद्यतनः $D_3$). ५. °मिति $Dc_3$. ६. इत्यसौ $Bc_1$. ७. नञ्तत्पुरुषः $Dc_3$. ८. °तनत्व° $Dc_3$. ९. अस्मि° $Bc_1$.

धातोर्लङ् स्यात् ॥[१]

**लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥६।४।७१॥**

एषु परेष्वङ्गस्याडागमः स्यात् स चोदात्तः । अभवत् । अभवताम् । झोन्ते इलोपे संयोगान्तलोपः । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम । अभवत । अभवेताम् । अभवन्त । अभवथाः । अभवेथाम् । अभवध्वम् । अभवे । अभवावहि । अभवामहि ।

---

नामातीताया रात्रेर्यामद्वयादर्वाक् यावदागामिन्या रात्रेर्यामद्वयमेतावान् काल इत्येके । अन्ये त्वाचक्षते । दिवसः सकलोऽतीतायाश्च रात्रेः पश्चिमो याम आगामिन्याश्च रात्रेः प्रथमो याम एतावान् । ङकारो 'नित्यं ङितः' इति विशेषणार्थः । अकारो 'लङः शाकटायनस्य' इति विशेषणार्थः । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषयेऽर्थे लङ् वाच्यः । अरुणद्यवनः साकेतम् ।

लुङ् । स चोदात्त इति । आगमानुदात्तत्वबाधनार्थम् । अभवदित्यादि । भू अस्माल्लङि कृते पूर्ववत् प्रक्रिया । झोन्ते इत्यादि । भू झि इत्यत्र 'झोन्तः' इत्यनेनान्तादेशे कृते 'इतश्च' इतीकारलोपे कृते संयोगान्तलोपः ।[७]

---

१. After this—अतीतमर्धरात्रमारभ्यागाम्यर्धरात्रपर्यन्तोद्यतनः । तद्व्यतिरिक्ते इत्यर्थः । $D_2$, $B_1$. २. लङ् लुङ्° N. ३. झोन्ते इलोपे च कृते C, $D_2$ ; झोन्त इतश्च लोपे च कृते $B_1$, $B_2$ ; झोन्तः । इतो लोपे कृते $D_1$ ; झोन्त इलोपे च कृते $N_1$ ; इलोपे कृते $D_3$. ४. संयोगान्तस्य लोपः $B_3$, $N_1$, $D_4$. ५. °तीतरात्रिपश्चिमयामः आगामिन्याः प्रथम एतावान् $Bc_2$. ६. अर्थे dropped $Bc_2$, $Dc_3$. ७. After it—अभवन् $Dc_3$.

**लुङ् ॥३।२।११०॥**

भूतेर्थे धातोर्लुङ् स्यात् ॥

**माङि लुङ् ॥३।३।१७५॥**

माङ्योगे लुङ् स्यात् ॥ सर्वलकारापवादः ।

**स्मोत्तरे लङ् च ॥३।३।१७६॥**

स्मोत्तरे माङि लङ् स्यात् लुङ् च ॥

**च्लि लुङि ॥३।१।४३॥**

धातोर्लुङि च्लिप्रत्ययः स्यात् ॥ शबाद्यपवादः ।

---

लुङ् । ङकारो 'नित्यं ङितः' इति विशेषणार्थः । उकारः 'च्लि लुङि' इति विशेषणार्थः । भूतसामान्ये चायं लुङ् वक्तव्यः । भूतविशेषे लङादीनामपवादानां विधानात् । वसतेर्लुङ् रात्रिविशेषे जागरणसंततौ वाच्यः । भवानुषितः । अहमत्रावात्सम् ।

च्लि लुङि । इकार उच्चारणार्थः । चकारोन्तोदात्तार्थः । अथ किमर्थं च्लिमुद्दिश्य सिजादय आदिश्यन्ते । तेन सिचमेवोत्सर्गं विधाय तस्य क्सादयोपवादा विधीयेरन् । मैवम् । 'मन्त्रे घस—' इति सूत्रे लेरिति सामान्यग्रहणार्थं च्लिर्विधीयते । अन्यथा तत्र तङोसिच इति वक्तव्यं स्यात् । अथवा 'शल इगुपधात्—' इत्यत्र 'अनिटः' इति च्लेर्विशेषणं यथा स्यात् । न धातोः । यदि धातोर्विशेषणं स्यात् गुहेर्न सिध्येत् । तस्य वेट्कत्वात् । यदा च्लेर्विशेषणं तत्र यदेट् नास्ति तदा च्लिरनिड् भवत्येव ।

---

१. धातोर्लुङ् $N_1$. २. सर्वलकाराणामपवादः $B_1$, P, C. ३. लुङि परे P, $N_1$, $D_3$, $D_4$. ४. वाच्यः $Bc_2$. ५. शेषे for विशेषे $Bc_3$. ६. सिचात्रय $Bc_2$. ७. चङो $Dc_3$.

च्लेः सिच् ॥३।१।४४॥

च्लेः सिजादेशः स्यात् ॥ इचावितौ ।

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ २।४।७७॥

एभ्यः सिचो लुक् स्यात् परस्मैपदेषु ॥ गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् ।

---

च्लेः । इचावितावविति । इकारस्येत्त्वममंस्तेत्यादौ 'अनिदितान्—' इत्यनुनासिकलोपनिषेधार्थम् । ननु 'हनः सिच्' इति कित्करणात् ज्ञापकात् सिजन्तस्यानुनासिकलोपो न प्राप्नोत्येवं । एवं तर्हि इकार उच्चारणार्थ एव । इता चेन साहचर्यादित्युक्तम् । इत्त्वेपि दोषो नास्तीति कृत्वा । चकारोन्तादात्तार्थः । ननु च स्थानिवद्भावादेव सिचः स्वरो भविष्यति । तत् किमादेशेपि चकारोनुबध्यते । नैवम् । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च द्विश्चकारोनुबध्यते ।

गाति । एभ्य इति । इण् गतौ । अस्यादेशो गा । ष्ठा गतिनिवृत्तौ । घु दारूपा धारूपाश्च धातवः । पा पाने । भू सत्तायामेभ्य इत्यर्थः । गापोर्ग्रहणे इति । इणादेशस्य गा इत्यस्य ग्रहणे तावद् गातीति निर्देशो ज्ञापकः । तथा हि । श्तिपा विकरणशून्यो निर्देशो लुग्विकरणस्यैव ग्रहणं यथा स्यात् इति । यदि गामात्रस्य ग्रहणमिष्टं स्यात् तदा गा इत्येवं ब्रूयात् । पाग्रहणे पिबतेर्ग्रहणं लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति परिभाषया ज्ञायते ।

---

१. °र्ग्रहणेन D₂. २. एव dropped Dc₃. ३. Dropped Bc₂. ४. च इता साह° Bc₂. ५. विज्ञायते Dc₃.

भूसुवोस्तिङि ॥७।३।८८॥

भू सू इत्येतयोः सार्वधातुके तिङि परे गुणो न स्यात् ॥ अभूत् ।

क्ङिति च ॥१।१।५॥

गित्कित्ङिन्निमित्ते गुणवृद्धी न स्तः ॥ अभूताम् ।

---

भूसु । भू सत्तायाम् । षूङ् प्राणिगर्भविमोचने इति लुग्विकरणस्यैव ग्रहणं सुवतिसूयत्योर्न ग्रहणम् । लुग्विकरणत्वेपि तिङो विकरणेन व्यवहितत्वात् । विकरणस्यैव च ङित्त्वात् गुणाभावसिद्धिश्च । अभूदिति । पूर्ववत् तिबादयः । 'इतश्च' इतीकारलोपः । अडागमः ।

क्ङिति । गकारोप्यत्र चर्त्वभूतो निर्दिश्यते । निमित्तसप्तमी चेत्यभिप्रेत्याह । गित्कित्ङिन्निमित्त इति । इक इत्यनुवर्तत एव । तेन कर्मेर्णिङि कामयत इत्यत्र 'अत उपधायाः' इति वृद्धेर्निषेधो न । लैगवायन इत्यत्र नडादित्वात् फकि 'ओर्गुणः' इति गुणनिषेधो न । ननु चात्र प्रतिषेधः स्यादेव । उकारस्येक्त्वात् । न । अत्र चः क्रियते इत्यर्थे सः । तेनेक इतीमं शब्दमुच्चार्य क्रियमाणयोर्गुणवृद्ध्योर्निषेधो न चैवमोर्गुणः लघूपधगुणस्याप्यत्र प्रतिषेधः ।

---

१. किति ङिति च निमित्ते $D_3$, $B_1$, P; C. २. इको न स्तः $D_3$. ३. षूञ् $Dc_3$. ४. °सूयत्योस्तु नेह $Bc_2$; °सुवत्योस्तु नेह ग्रहः $Dc_3$. ५. °सिद्धेश्च $Bc_2$, $Dc_3$. ६. तिबादिः $Dc_3$. ७. फकि कृते $Bc_2$. ८. निषेधः $Bc_2$, $Dc_3$. ९. निषेधः $Dc_3$.

**भुवो वुग्लुङ्लिटोः ॥६।४।८८॥**

भुवो वुगागमः स्याल्लुङ्लिटोरचि[1][2] ॥ अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

**आर्धधातुकं शेषः ॥३।४।११४॥**

तिङ्शिद्भ्योन्यो धात्वधिकारविहितः[3] प्रत्यय एतत्संज्ञः[4] स्यात् ॥

**आर्धधातुकस्येड् वलादेः ॥७।२।३५॥**

वलादेरार्धधातुकस्येडागमः स्यात् ॥

---

भुवः । ककारो देशविध्यर्थः । अत्र[5] ओरित्यनुवर्तत इति न्यासकारपदमञ्जरीकारौ[6] । ततश्च यङ्लुकि बोभाव बोभवीयेत्यत्र[7] परत्वाद्वृद्धौ गुणे च कृते उकारान्तत्वाभावात् वुक् न । अन्यथात्रापि स्यात् । वार्तिककृतस्त्वेतदनभिमतमतो न व्याख्यातवान् ग्रन्थकृत् । एतच्च 'इन्धिभवतिभ्यां च' इति सूत्रे व्यक्तीकरिष्यामः ।

आर्ध । धात्वधिकारविहित इति । धातुग्रहणेन विहित इत्यर्थः । यदि धातोर्यो विहित इति व्याख्यायते तदा लूभ्यामित्यस्याप्यार्ध-धातुकसंज्ञा प्राप्नोति । क्विबन्ताद्धातुत्वं न जहतीति भ्यां धातोरेव विहितः तस्माद्धात्वधिकारविहित इति व्याकृतम् । कुत एषोर्थ[8] उपलभ्यते । 'धातोरेकाच—' इत्यतो धातुग्रहणमनुवर्तते । 'धातोः' इत्यतश्च । तयोरेकेनाधातुप्रत्ययो निवर्त्यते । अपरेण धातुप्रत्ययो विशेष्यते । धातोरित्येव यो विहित इति ।

आर्ध । आर्धधातुकस्य किम् । आस्ते । वलादेः किम् । लव्यम् । इडिति वर्तमाने पुनरिड्ग्रहो निषेधनिवृत्त्यर्थः ।

---

१. लिटोः परयोरचि N. २. °रचि परे $B_2$. ३. धात्वधिकारे विहितः C. ४. Dropped $D_2$, $B_1$, P. ५. अत्र च $Bc_2$, $Dc_3$. ६. °पदमञ्जर्यौः $Bc_2$. ७. बोभवियें° $Dc_3$. ८. °र्थो लभ्यते $Bc_2$.

गुणावादेशौ । षत्वष्टुत्वे । अभविष्ट । अभविषाताम् ।

**आत्मनेपदेष्वनतः ॥७।१।५॥**

अनकारात् परस्यात्मनेपदेषु झस्य अदित्यादेशः[1] स्यात् ॥

अभविषत । अभविष्ठाः । अभविषाथाम् ।

**धि च ॥८।२।२५॥**

धादौ प्रत्यये परे सलोपः[2] स्यात् ॥

---

**गुणावादेशाविति** । गुणः ‘सार्वधातुक—’ इत्यनेन । आवादेशः ‘एचोऽयवायावः’ इत्यनेन । षत्वष्टुत्वे इति । षत्वम् ‘आदेशप्रत्यययोः’ इति । ष्टुत्वं ‘ष्टुना ष्टुः’ इत्यनेन । **अभविष्टेति** । भूते इति स्थिते च्लिः । च्लेः सिच् । तस्यार्धधातुकत्वादिट् ।

**आत्म** । **अनकारादिति** । ‘अङ्गस्य’ इत्यनुवर्तते । तस्य ‘अनकारात्’ इत्यनेन[4] तदन्तविधिः । ततश्चानकारान्तादङ्गात् परस्यात्मनेपदेषु वर्तमानस्य झस्येत्यर्थः । आत्मनेपदेषु किम् । चिन्वन्ति । अनः किम् । च्यवन्ते । नित्यत्वादत्र विकरणे शपि कृतेदादेशो न । अन्तादेश एव स्यात् । अनकारान्तेनाङ्गेन[5] झस्य विशेषणं किम् । इह मा भूत् । शयान्तै[6] । अत्राङ्गस्यानन्तरमात्मनेपदम् । आटस्तदङ्गकस्य तद्ग्रहणेन ग्रहणात् । झस्त्वाटा व्यवहितोदादेशो न । अन्तादेशस्त्वङ्गविशेषानुपादानादत्रापि स्यात् ।

**धि च** । यद्ययं सलोपो न क्रियते[7] तर्हि अभविध्वमित्यत्र सिचः षत्वे जश्त्वे ष्टुत्वे च सति ‘विभाषेटः’ इति मूर्धन्याभावपक्षेपि ढकारः श्रूयते[9] । इह च सिचः सकारलोप इष्यते । सिचा च प्रत्यय आक्षिप्यते तस्य च धकारेण विशेषणात् तदादिविधिः स्यादित्यभिप्रेत्याह । **धादौ प्रत्यये इति** । तेनेह न । चकाद्धीति । तथेहापि न । पयो धावतीति ।

---

१. अत स्यात् C; अदादेशः स्यात् $D_2$; अत इत्यादेशः स्यात् N.
२. सेलोपः $D_1$. ३. P drops it. ४. इत्यनेन विशेषितत्वात् $Dc_3$.
५. अनकारात्मकेनाङ्गेन $Bc_2$. ६. शय्यन्ते $Dc_3$. ७. क्रियेत $Bc_2$.
८. Dropped $Bc_2$. ९. श्रूयेत $Bc_2$.

**विभाषेटः ॥८।३।७९॥**

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां[1] धस्य वा[2] मूर्धन्यः स्यात् ॥ अभविढ्वम् । अभविध्वम् । ध्वे सलोपो वा सस्य द् इति केचित् । अभविड्ढ्वम् । अभविषि । अभविष्वहि । अभविष्महि ॥

**न माङ्योगे ॥६।४।७४॥**

लुँङ्लङ्लृङ्क्ष्वट्[4] माङ्योगे न स्यात् ॥ मा भवान् भूत् । मा[5] स्म भवत् । मा स्म भूत् ॥

---

सग्धिर्बब्ध्वा इत्यत्र तु छान्दसो वर्णलोपो ज्ञेयः । **भाष्यकारस्त्वाह** । त्रकाधीत्येव भवितव्यमिति । तदा पयो धावतीत्यत्र यत्नान्तरमास्थेयम् ।

**विभाषा** । अत्रेण इटो विशेषणम् । सोपि षीध्वमादीनाम् । तेपि धकारस्येति दर्शयन्नाह । **इणः पर** इत्यादि । अप्राप्तविभाषेयं ग्रन्थकृन्मते । प्राप्तविभाषेयमिति तु पदमञ्जरीकारपक्षः[6] । एतच्च 'इणः षीध्वम्—' इत्यत्र कथयिष्यते । इणः किम् । आसिषीध्वम् । **ध्वे सलोप** इति । यदा सलोपो नास्ति तदा 'झलां जश् झशि' इति सस्य दः । तथोक्तं **मुग्धबोधे** । सलोपो वेति ।

**न माङ्** । **लुङ्लङ्लृङ्क्ष्वट्कमिति** । माङ्योगे न स्यात् । अडाटावित्यर्थः । **मा भवान् भूत्** इति । 'माङि लुङ्' इति लुङ् । **मा स्म भवत्** । **मा स्म भूत्** इति । 'स्मोत्तरे लङ् च' इति लङ्लुङौ ।

---

१. सीध्वं N. २. मूर्धन्यादेशः स्याद्वा C; मूर्धन्यो वा स्यात् $D_1$; मूर्धन्यः स्याद्वा । $D_3$. ३. मूर्धन्यादेशः N. ४. लङ्लुङ्° N. ५. मा स्म भूत् । मा स्म भवत् । $B_2$, $D_3$; मा भवत् । मा भूत् । मा स्म भवत् । मा स्म भूत् $D_2$; मा स्म भवत् भूत् $D_4$; भवान् मा स्म भूत् P, C, $B_1$. ६. पदमञ्जरी । $Bc_2$; पदमञ्जरीकारः $Dc_3$.

**परोक्षे लिट् ॥३।२।११५॥**

भूतानद्यतनपरोक्षवृत्तेर्धातोर्लिट्[1] स्यात् ॥ [2]लस्य तिबादयः ।

[3]**लिट् च ॥३।४।११५॥**

लिडादेशस्तिङार्धधातुकसंज्ञः[4] । तेन शबादयो न ।

---

**परोक्षे** । ननु च सर्वेऽपि[5] धात्वर्थाः परोक्षे एव । यतो धात्वर्थो नाम पूर्वापरीभूतावयवसाध्या क्रिया । यच्च साध्यमानं तदसत् । यच्चासत् तदिन्द्रियाणां न विषयः । यच्चेन्द्रियविषयो न तत् परोक्षम् । अतो धात्वर्थः सर्वः परोक्षः । ततः परोक्षग्रहणं[6] व्यर्थम् । व्यवच्छेद्याभावात् । सत्यम् । तथापि यत्र प्रत्यक्षाणि साधनानि तत्रानिष्पन्नेऽपि धात्वर्थे प्रत्यक्षाभिमानो लोकस्य स्यात् । ननु साधनान्यपि न प्रत्यक्षाणि । शक्तिरूपत्वात् । शक्तेश्च कार्यानुमेयत्वात् । मैवम् । द्रव्याश्रिता हि शक्तयः । द्रव्यस्य च प्रत्यक्षत्वात् तदाश्रितेषु शक्त्यात्मसु[7] साधनेषु स्वाश्रयधर्मः प्रत्यक्षत्वमुपचर्यते । अथवा साधनशब्देन द्रव्यमेवोच्यते । शक्तिशक्तिमतोरभेदविवक्षया । उत्तमपुरुषे तु पारोक्ष्यं[8] वैचित्त्यात् ।

**लिट् च** । ननु त्वात्रैकसंज्ञाधिकाराभावात् सार्वधातुकसंज्ञायाः समावेशः स्यात् । मैवम् । 'लङः शाकटायनस्यैव' इत्यतः एवकारोऽनुवर्तते । स नियमं करिष्यति । आर्धधातुकमेवेति इत्यभिप्रेत्याह । **तेन शबादयो नेति** ।

---

१. °लिँट् प्रत्ययः N. २. C drops लस्य तिबादयः ।. ३. $B_1$, $D_2$ have before लिट् च—

कृतस्यास्मरणे कर्तुरत्यन्तापह्नवेऽपि च ।
दर्शनादेरभावे च त्रिषु विद्यात् परोक्षताम् ॥

C has the same verse in the margin. ४. °संज्ञ : स्यात् $B_2$, $D_3$, $D_4$. ५. सर्वोऽपि धात्वर्थः $Dc_3$. ६. परोक्षेति व्यर्थम् $Bc_2$. ७. शक्त्यात्मसाधनेषु $Bc_2$. ८. परोक्षं $Bc_2$, $Dc_3$.

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥३।४।८२॥**

लिटस्तिबादिनवानां णलादयो नवादेशाः स्युः ।

**इन्धिभवतिभ्यां च ॥१।२।६॥**

आभ्यां परो लिट् कित् स्यात् ॥

---

इन्धि । इन्धी दीप्तौ । भू सत्तायाम् । इन्धेः संयोगार्थं भवतेः पिदर्थं वचनम् । समीधिरे । अथात्र 'इजादेः—' इत्याम् किं न स्यात् । उच्यते । मन्त्राविषयत्वात् । तत्र च अमन्त्र इत्याधिकारात् । एवं तर्हि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्वान्नलोपः स्यात् । ततो व्यर्थं कित्त्वम् । उच्यते । ज्ञापकार्थमनित्य आमिति । नित्यत्वामि तेन व्यवधानात् कित्त्वं व्यर्थं स्यात् । तेन भाषायामपि समीधिरे इत्याद्युपपन्नम् । ननु भवतेः पिदर्थमपि न वाच्यम् । तत्र कृताकृतप्रसङ्गित्वेन नित्यत्वात् । वुकि जाते वृद्धिगुणौ न स्त एव । मैवम् । वुगप्यनित्यः । तत्र हि 'ओः' इति वर्तते । तत्र गुणवृद्ध्योः कृतयोर्नैतदुकारान्तमिति वुक् न स्यात् । वार्तिककारस्य तु एतदनभिप्रेतम् । तथा ह्याह । इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात् ताभ्यां लिटः किद्वचनानर्थक्यमिति ।

---

१. क्रमात् स्युः C, $B_2$. २. Before it—परत्वाद् द्वित्वात् पूर्ववृद्धिप्राप्तौ तद्बा कित्त्वविधायकं सूत्रं पठति । अतो यद्यपि क्वचित् पूर्वं द्वित्वमुक्त्वा वृद्धिमाह तत् क्रमाद्विवक्षितत्वात् प्रक्रियामात्रविवक्षितं ज्ञेयम् । $Dc_3$. ३. ञिइन्धि $Bc_2$. ४. सार्वधातुकत्वात् dropped $Dc_2$. ५. न omitted $Dc_1$. ६. अत्र $Dc_1$. ७. Dropped $Bc_1$, $Dc_3$. ८. एतदभिप्रेतम् $Dc_1$ ; तदनभिप्रेतम् $Dc_3$. ९. तथान्वाह $Bc_2$.

**लिटि धातोरनभ्यासस्य ॥६।१।८॥**

लिटि परेऽनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः ॥

**एकाचो द्वे प्रथमस्य ॥६।१।१॥**

लिडादावुक्तं द्वित्वं धात्ववयवस्य प्रथमस्यैकाचः स्यात् ॥

**पूर्वोऽभ्यासः ॥६।१।४॥**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥

---

लिटि ।

एकाचः । लिडादौ यदुक्तं द्वित्वं तद्धातोरवयवस्यैकाचः प्रथमस्य समुदायस्य स्यादित्यर्थः । यदि प्रथमस्यैकाचः समुदायस्येति नोच्यते तदा णिजिर् शौचपोषणयोरित्येतस्माल्लट् । शप् झि इति स्थिते तस्य 'जुहोत्यादिभ्यः श्लुः' । 'श्लौ' इति द्विर्वचनम् । तत्र यदि निशब्दमात्रं द्विरुच्यते तर्हि दोषः । यतो 'निजां त्रयाणाम्' इति गुणे कृते 'अदभ्यस्तात्' इत्यदादेश इष्यते नेनिजतीति रूपं यथा स्यात् । स च न प्राप्नोति । जकारेण व्यवहितत्वात् न जकारस्याभ्यस्तसंज्ञा । किं तर्हि । निशब्दस्य । तस्य द्विरुक्तत्वात् । अतः समुदाय एव द्विर्वक्तव्यः । अथ कथं पपाचेत्यत्र द्विर्वचनम् । यावता प्रथमस्येत्युच्यते । अत्र एक एव एकाच् । अतो न स्यात् । ददरिद्रौ जजागारेत्यादावेव स्यात् । अन्यच्च । इयायेत्यादौ अपि द्विर्वचनं न स्यात् । यत एकाचस्तदुच्यते । न चात्रैकाच्त्वमस्ति । अज्व्यतिरिक्तस्याभावात् । उच्यते । पपाचेत्यत्र व्यपदेशिवद्भावात् प्रथमत्वम् । इयायेत्यत्र एकाच्त्वं च ।

---

१. P, $D_1$, $D_2$, N and C drop एकाचः. २. प्रथमैकाचः $D_1$, N. ३. अत्र प्रकरणे $D_3$. ४. इति dropped $Bc_2$. ५. झि इति स्थिते dropped $Dc_3$. ६. शब्दमात्रं $Bc_2$. ७. अपि for इति $Bc_2$. ८. अत्र च $Dc_3$.

**ह्रस्वः ॥७।४।५९॥**

अभ्यासस्य ह्रस्वः स्यात् ॥

**अभ्यासे चर्च ॥८।४।५४॥**

अभ्यासे झलां चरः स्युर्जशश्च ॥ खयां[1] चरः झशां जश इति विवेकः ।

**भवतेरः ॥७।४।७३॥**

भवतेर[2]भ्यासस्योकारस्य अः स्याल्लिटि ॥ भवतेरिति कर्तृनिर्देशात् भावकर्मणोर्नात्वम् । वेति केचित् ।

---

**अभ्यासे** । खयां चर इत्यादि । अयं च विवेकोन्तरतमपरिभाषया लभ्यते । तथा हि । खयो वर्गाणां द्वितीयाः प्रथमाश्च । ते च विवृतकण्ठाः श्वासानुप्रदाना अघोषाश्च । तेषां सदृशा[3] एव चरस्तुल्यस्थाना जशश्चतुर्थास्तृतीयाश्च ते च संवृतकण्ठा नादानुप्रदाना घोषवन्तस्तेषां तादृशाः एव जशस्तुल्यस्थानाः । तत्र प्रकृतिचरां प्रकृतिचरो जश्त्वबाधार्थम् । जिजनिषते । बुबुधे । एषोर्थः तात्पर्येत उक्तो भवति ।

**भवतेः । अभ्यासोकारस्येति** । एतच्चालोन्त्यपरिभाषया लभ्यते । भवतेरभ्यासस्यान्त्योल् उकार एव । ननु च नानर्थकेलोन्त्यविधिरिति अलोन्त्यविधिर्न । मैवम् । [4]अनभ्यासविकारेष्विति हि सा । अयं चाभ्यासविकारः श्तिपा निर्देशो यङ्लुक्निवृत्तये[5] बौभावः[6] । **कर्तृनिर्देशादिति** । कर्त्रर्थयोः श्तिप्शपोर्निर्देशादित्यर्थः । **वेति केचिदिति** । तथोक्तं **मुग्धबोधे** । 'भुवोङ्[7] ढ्यां ढ्यभावे तु वा' इति ।

---

१. झलां जश खयां चर इति विवेकः $D_1$. २. °रभ्यासोकारस्य P, $B_1$, $B_2$. ३. तादृशा $Dc_3$. ४. अनभ्यासे वि° $Dc_1$. ५. निवृत्त्यर्थः $Bc_2$. ६. बोभाव $Dc_3$. ७. भुवोङ्भावो गुलुवेति $Dc_3$.

अचो ञ्णिति इति वृद्धिप्राप्तौ क्ङिति चेति निषेधः[1]। वुगागमः[2]। बभूव। बभूवतुः। बभूवुः। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

---

अचो ञ्णितीत्यादि। ननु च 'ङ्क्च' इत्यत्र इकोनुवृत्तेरिग्लक्षणैव वृद्धिर्निषिध्यते। न चेयमिग्लक्षणा अच इति निर्दिष्टस्थानित्वात्। इन्धि-भवतीति[3] कित्वविधानसामर्थ्यान्निषेधः स्यादिति चेन्न। थल्युत्तमे णलि च तस्य गुणप्रतिषेधार्थत्वात्। एवं तर्हि इन्धीत्यत्र ङिद्ग्रहणमप्यनुवर्तते। तदनन्यप्रयोजनमनिग्लक्षणाया अपि वृद्धेर्निषेधाय स्यात्। अतः साधूक्तं क्ङिति चेति निषेध इति। बभूवेति। भू अस्माल्लिट्। तस्य तिप्। तस्य णलादेशः। स च सर्वस्य तिपः। अनेकाल्त्वात्। ननु च नानुबन्धकृतमनेकाल्त्वं णकारलकारौ चानुबन्धौ तत् कुतोयं सर्वादेशः। नैतत्। न ह्यकृते सर्वादेशे 'चुटू' इतीत्संज्ञा णकारस्य भवति। अप्रत्ययादित्वात्। इत्संज्ञाभावाच्च नानुबन्धो भवतीति सर्वादेशः।[4] अथवा अकारो द्वितीयोत्र प्रश्लिष्टस्तेन सर्वादेशः। असिद्धवदत्राभादिति वुकोसिद्धत्वादुवङि प्राप्ते वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्याद्वुकः[5] सिद्धत्वादुवङ् न। बभूवतुः। बभूवुरिति। तस् झि तसः अतुस् झेरुस्। बभूविथेति। सिप् थलादेशः। 'आर्धधातुकस्ये°–' इति इडागमः। बभूवथुः इति। थसः अथुस्। बभूवेति। थकारस्याकारादेशः। 'धातोः' इत्यधिकारात् 'तस्मादित्युत्तरस्य' 'आदेः परस्य' इति थकारस्यादेशे द्वयोरकारयोः अतो गुणे पररूपम्। बभूवेति। मिपो णल् पूर्ववत्। बभूविव। बभूविमेति। वस्मसोर्वमौ। 'आर्धधातुकस्ये°–' इतीडागमः।[6]

---

१. प्रतिषेधः B₁. २. भुवो वुग् लुङ्लिटोरिति सूत्रं before it in C. ३. इन्धीति Bc₂. ४. Before it—'आदेः परस्य' इत्यर्थाद्वा चुटू इतीत्संज्ञादेर्वैस्यपरितोषात्। समाध्यन्तरमाह। Dc₃. ५. वक्तव्यत्वा Dc₃. ६ After it—कृते Dc₃.

**लिटस्तझयोरेशिरेच् ॥३।४।८१॥**

लिडादेशयोस्तझयोरेश् इरेच् ईत्येतौ[1] स्तः ॥ बभूवे । बभूवाते । बभूविरे । बभूविषे । बभूवाथे । बभूविढ्वे[2] । बभूविध्वे । बभूवे । बभूविवहे । बभूविमहे ॥

**अनद्यतने लुट् ॥३।३।१५॥**

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् प्रत्ययः स्यात्[3] ॥

**स्यतासी लृलुटोः ॥३।१।३३॥**

लृ इति लृङ्लृटोर्ग्रहणम् । धातोर्[4]लृलुटोः परयोः क्रमात् स्यतासी एतौ[5] प्रत्ययौ स्तः । शबाद्यपवादः ॥

---

लिटस्त । शकारः सर्वादेशार्थः । चकारस्त्वन्तोदात्तार्थः । बभूविषे इति । थासः से । 'आर्धधातुकस्य—' इतीट् । 'आदेशप्रत्यययोः' इति षः । बभूविढ्वे बभूविध्वे इति । टेरेत्वम् । इट् । 'विभाषेटः' इति वा मूर्धन्यादेशः ।

अनद्यतने । अनद्यतने इति पूर्ववद् बहुव्रीहिनिर्देशः । तेन व्यामिश्रणे न स्यात् । अद्य श्वो गमिष्यतीति ।[6] अनद्यतने इति योगविभागः कार्यः[7] । तेनाद्यतने विहितस्य लृटः सत्संज्ञौ स्तः । अत एव ज्ञापकादनद्यतने लृट् । श्वोऽग्नीनाधास्यमानेन श्वः सोमेन यक्ष्यमाणेन । परिदेवने लुडद्यतनेऽपि वाच्यः । इयं तु न कदा गन्ता यैवं पादौ निदधाति ।

स्यतासी । ननु च लृङ्लृट्लुट् इति प्रत्ययानि निमित्तानि त्रीणि निमित्तिनौ स्यतासी द्वौ इति वैषम्याद्यथाक्रमं न स्यातामिति शङ्कापरिहारार्थमाह[9] । लृ[10] इतीति । लृङ्लृटोः सामान्यग्रहणमेवेति[11] यावत् ।

---

१. एतौ $B_2$, $D_2$, $D_4$, N ; एतौ क्रमात् $D_3$. २. Before it—विभाषेटः $D_3$. ३. भवति N. ४. धातोः dropped $D_1$. ५. एतौ स्तः P; इत्येतौ $D_1$, $D_3$, C. ६. After it—भविष्यत्सामान्ये परिदेवने लुङ् वाच्यः । अयं बटुः कदाध्येता य एवं मन्दः । $Dc_3$. ७. कर्तव्यः $Bc_2$, $Dc_3$. ८. °प्रथमाया $Bc_2$. ९. परिहारायाह $Bc_2$. १०. लृट इतीति $Bc_2$. ११. °मेकमेवे° $Dc_3$.

**लुटः प्रथमस्य डारौरसः ॥२।४।८५॥**

लुडादेशप्रथमपुरुषस्य क्रमात् डारौरस् एत आदेशाः स्युः। पदद्वयेपि डित्त्वसामर्थ्याट्टिलोपः। भविता।

**रि च ॥७।४।५१॥**

रेफे परे तासेरस्तेश्च सस्य लोपः स्यात् ॥ भवितारौ। भवितारः।

---

इकारोनुनासिकलोपप्रतिषेधार्थः मन्तेत्यादिषु। ननु च 'असिद्धवदत्राभात्' इत्यनेन टिलोपस्यासिद्धत्वात् मन्तेत्यादिषु अनुनासिकलोपो न प्राप्नोति। सत्यम्। 'असिद्धवदत्राभात्' इत्यस्यानित्यत्वात् प्राप्नोतीत्येव। अथवेकार उच्चारणार्थः।

लुटः। ननु च परस्मैपदे तिप् तस् झीति त्रयाणां प्रत्येकं प्रथमपुरुषसंज्ञा। आत्मनेपदेपि त आतां झ एषाम्। एवं षट् स्थानिनस्त्रय आदेशा इति वैषम्यादेकैकस्य पर्यायेण सर्वे प्राप्नुवन्ति। मैवम्। आन्तर्यतो व्यवस्था भविष्यति। तच्चैतदान्तर्यमर्थतः। एकार्थस्यैकार्थः द्व्यर्थस्य द्व्यर्थः बह्वर्थस्य बह्वर्थः। भवितेति। तासेरिट्। गुणावादेशौ। तिपो डा। सर्वादेशो णल्वत्।

रि च। 'तासस्त्योः' इति संबन्धानुवृत्त्या अस्तेरित्यनुवृत्त्य तस्माद्रेफादेः प्रत्ययस्यासंभवादुदाहरणासंभवः। भविता इति। भूत इति स्थिते तासिः। इट्गुणावादेशौ। तस्य डादेशः। टिलोपः। ननु च 'टित आत्मनेपदानां टेरे' इत्येत्वेन भवितव्यम्। मैवम्। 'थासः से' इत्यत्र सेवचनं ज्ञापकमित्युक्तम्।

---

१. लुडादेशस्य $B_1$, $D_3$, N. २. प्रसंज्ञाभावेपि for पदद्वयेपि $D_2$. ३. डित्त्वस्य $B_1$. ४. तासस्त्योश्च C; तासस्त्योः $D_4$. ५. च dropped $D_1$, $D_2$, N. ६. अथवा dropped $Bc_2$. ७. इत्येषाम् $Bc_2$. ८. °त्यनुवृत्त $Dc_3$. ९. भाव्यम् $Dc_3$.

**तासस्त्योर्लोपः ॥७।४।५०॥**

तासेरस्तेश्च[1] सस्य लोपः स्यात् सादौ प्रत्यये[2] ॥ भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः । भविता । भवितारौ । भवितारः । भवितासे । भवितासाथे । 'धि[3] च' इति सलोपः । भविताध्वे ।

**ह एति ॥७।४।५२॥**

तासस्त्योः सस्य हः स्यादेति परे ॥ भविताहे । भविता-स्वहे । भवितास्महे ।

**लिङाशिषि ॥३।४।११६॥**

आशिषि लिङस्तिङार्धधातुकसंज्ञः[4] स्यात्[5] ॥ तेन न शबादि ।

**किदाशिषि ॥३।४।१०४॥**

आशिषि लिङो यासुट् कित् स्यात् ॥

---

हे[6] । एशि हकारो न । एधामासे इति । उत्तमैकवचनं सार्वधातुकं च । यत् एत् तस्मिन्नेव परे ह इष्यत इति ।

लिङ् । तेन न शबादीति । यतः सार्वधातुकसंज्ञापवाद आर्धधातुकसंज्ञा समावेशनिवारणार्थश्चैवकारोनुवर्तते । तेन सार्व-धातुकत्वाभावाच्छबादिर्नेत्यर्थः ।

किदा । प्रत्ययस्यैवेदं कित्त्वं विधीयते नागमस्य । प्रयोजना-भावात् । यदि प्रत्ययस्य न स्यात् तर्हि गुणवृद्धिप्रतिषेधो न स्यात् । तस्मादेवं वृत्तिर्व्याख्येया । लिङो यासुट् स्यात् स च लिङ् कित् स्यादिति ।

---

१. तासस्त्योश्च C; तासस्त्योः $D_1$, $D_2$, $D_4$, N. २. प्रत्यये परे N, $D_3$, $D_4$. ३. धि चेति सलोपः dropped $D_1$: is after भविताध्वे $D_3$. ४. °र्धधातुकः $B_1$. ५. Dropped $D_1$. ६. हे एति । $Bc_2$, $Dc_3$.

आर्धधातुकत्वात् सलोपो न ॥ 'स्कोः संयोगाद्योः–' इति सलोपः। भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म । सी युटि कृते[1] ।

**सुट् तिथोः ॥३।४।१०७॥**

आशिषि[2] लिङस्तकारथकारयोः सुडागमः स्यात्[3] । यलोपः[4] ।

---

ननु च कित्त्वं व्यर्थं ङित्त्वे प्राप्ते कित्त्वस्य विधीयमानत्वात् किति ङिति च गुणवृद्धिप्रतिषेधस्य तुल्यत्वात् । बाढम् । वच्यादिसूत्रेण संप्रसारणे जागर्तिगुणे च विशेषः इज्यात् जागर्यादित्यादिषु ।

**आर्धधातुकत्वात् सलोपो** नेति । 'लिङः सलोपोऽनन्त्यस्य' इत्यनेन । **भूयादिति** । भू अस्मात् 'आशिषि लिङ्लोटौ' इति आशिषि लिङ् । तस्यतिप् । यासुट् । कित्त्वाद्गुणाभावः । 'इतश्च' इतीकारलोपः । **भूयास्तामिति** । 'तस्थस्थमिपाम्–' इति तसस्ताम् । **भूयासुरिति** । 'झेर्जुस्' जुस् । **भूया** इति । सिप् । इकारलोपः । 'स्कोः संयोग–' इति सलोपः । रुत्वविसर्गौ । भूयास्तम् । भूयास्त । भूयासमिति । थस्थमिप्सु यथाक्रमं तं त अम् । भूयास्व । भूयास्म । वस्मसोः यासुट् । 'नित्यंङितः' इति सलोपः । **सीयुटि कृते** इति । 'लिङः सीयुट्' इत्यनेन ।

**सुट्**[5] । ननु च लिङित्यनुवर्तते । तत्र किं तकारथकारसंबन्धिनो लिङः सुडित्यर्थः स्यात् । अथवा लिङस्तकारथकारयोरिति । तत्र[6] यदि पूर्वपक्षस्तदा परत्वाद्विशेषविहितत्वाच्च सुटा सीयुटो बाधा[7] भवेत् । द्वितीये कल्पे तु भिन्नविषयत्वाद्बाधा[8] न भवतीति तमेव पक्षमाश्रित्याह । **लिङस्तकारथकारयोरिति** । **यलोप** इति । 'लोपो व्योर्वलि' इत्यनेन ।

---

१. सी युटि कृते dropped C. २. आशिषि dropped C. ३. स्यादार्धधातुके $D_1$. ४. यलोपः dropped $D_1$. ५. सुट् । अथवा $Bc_2$. ६. तत्र $Bc_2$. ७. °बाधा $Dc_3$. ८. °द्बाधा $Dc_3$.

भविषीष्ट । भविषीयास्ताम् । भविषीरन् । भविषीष्ठाः । भविषीयास्थाम् । भविषीढ्वम् । भविषीध्वम् । भविषीय । भविषीवहि । भविषीमहि ॥

## लृट् शेषे च ॥३।३।१३॥

क्रियार्थोपपदादन्यत्र शुद्धे भविष्यत्यर्थे धातोर्लृट् प्रत्यय:[1] स्यात् । चात् तत्रापि । 'स्यतासी—' इति स्यः । भविष्यति । भविष्यतीति[2] व्रजति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ।

---

**भविषीष्टेति** । सीयुट् । इट् । गुणः । अवादेशः । 'आदेशप्रत्यययोः' इति सुट्सीयुटोः सस्य मूर्धन्यः । 'ष्टुना ष्टुः' इति तकारस्य ष्टुत्वम् । **भविषीरन्** इति । 'झस्य रन्' इति रन् । यलोपः । **भविषीढ्वम्** । **भविषीध्वमिति** । 'विभाषेटः' इति वा मूर्धन्यः । **भविषीयेति** । 'इटोत्' इत्यत् ।

लृट् । **क्रियार्थोपपदादन्यत्रेति** । क्रिया अर्थः प्रयोजनं यस्याः क्रियायाः सा क्रियार्था सा उपपदं यस्मिन् स तथोक्तः । **चात् तत्रापीति** । क्रियार्थोपपदे इत्यर्थः । शेषग्रहणं चिन्त्यप्रयोजनम् । भविष्यतीति शुद्धे **भविष्यतीत्युदाहरणम्** । **भविष्यतीति व्रजतीति** क्रियार्थोपपदे उदाहरणम् । भविष्यन्तीति । 'झोन्तः' इत्यन्तादेशः । अतो गुणे पररूपम् । **भविष्यावः** । **भविष्यामः** इति । स्य इट् गुण अव्[3] षत्वम् । 'यस्मात् प्रत्यय—' इत्यङ्गसंज्ञा । 'अतो दीर्घो यञि' इतिः दीर्घः ।

---

१. प्रत्ययः dropped $D_2$. २. इति dropped $D_3$. ३. अव् । $Bc_2$.

भविष्यते । भविष्येते । भविष्यन्ते । भविष्यसे । भविष्येथे । भविष्यध्वे । भविष्ये । भविष्यावहे । भविष्यामहे ॥

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥३।३।१३९॥**

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे धातोर्लृङ् स्यात् कुतश्चित् क्रियाया अनिष्पत्तौ गम्यमानायाम्[1] । स्यप्रत्ययः[2] । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । अभविष्यत । अभविष्येताम् । अभविष्यन्त । अभविष्यथाः । अभविष्येथाम् ।[3] अभविष्यध्वम् । अभविष्ये ।

---

**भविष्यत** इति । 'टित आत्मनेपदानां टेरे' इति । **भविष्येते** इति । भू आताम् । 'सार्वधातुकमपित्' इति ङित्त्वम् । 'आतो ङितः' इतीय् । 'आद्गुणः' । 'लोपो व्योर्वलि' । टेरेत्वम् । **भविष्यन्ते** इति । 'झोन्तः' । **भविष्यसे** इति । 'थासः से' । **भविष्ये** इति । इट् । टेरेत्वम् । अतो गुणे पररूपम् ।

**लिङ्निमित्ते** 'हेतुहेतुमतोर्लिङ्' । 'कामप्रवेदनेऽकच्चिति' इत्येवमादि लिङ्निमित्तम् । **कुतश्चिदित्यादि** । कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पत्तौ अनभिनिर्वृत्तौ गम्यायां सत्यामित्यर्थः । **स्यः प्रत्यय** इति । 'स्यतासी लृलुटोः' इति । **अभविष्यदिति** । सस्य इट् । गुणः । अत्र[4] । मूर्धन्यः । 'इतश्च' इतीकारलोपः । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अडागमः । **अभविष्यतामिति** । 'तस्थस्थमिपाम्—' इति तसस्ताम् । **अभविष्यन्निति** । झोन्ते इलोपे च कृते संयोगान्तलोपः । **अभविष्याव** । **अभविष्यामेति** । 'अतो दीर्घः' इति दीर्घः । 'नित्यं ङितः' इति सलोपः[5] । अभविष्यतेत्यादि पूर्ववत् प्रक्रिया ।

---

१. गम्यायाम् $D_3$, $D_4$. २. स्यः प्रत्ययः N. ३. After this $B_1$ has इत्यादि ज्ञेयम् for अभविष्यध्वम्......ज्ञेयम्. ४. अत्रादेशः । $Dc_3$. ५. लोपः $Bc_2$.

अभविष्यावहि । अभविष्यामहि । सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यदित्यादि ज्ञेयम् ।

**शेषे विभाषाकखादावषान्त उपदेशे ॥८।४।१८॥**

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वं वा स्यात् ॥ प्रणिभवति । प्रनिभवति । एवं चेतत्यादयः । चिती संज्ञाने ।

---

सुवृष्टिश्चेदित्यादि । भविष्यत्सुभिक्षस्य सुवृष्टिं हेतुभूतां लिङ्गेन ज्ञात्वा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते । सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यदिति । अत्र हेतुहेतुमतोः सुवृष्टिसुभिक्षयोः भविष्यत्कालयोरतिपत्तिरतो वाक्याद्गम्यते ।

शेषे । उपसर्गस्थान्निमित्तात्परस्येति । उपसर्गे वर्तमानं यन्नि-मित्तं रेफषकारलक्षणं तस्मात् परस्येत्यर्थः । प्रणिभवति । प्रनि-भवतीति । 'ते प्राग्धातोः' इति प्रनी उपसर्गौ प्राक् । अकखादौ किम् । प्रनिकरोति । प्रनिखादति । अषान्ते किम् । प्रनिपिनष्टि । उपदेशग्रहणात् प्रतिचकार । प्रणिवेष्टा । एवं चेतत्यादय इति । एवमेतेन प्रकारेण चेतत्यादयो दश लकारेषु ज्ञेया इत्यर्थः । अतिदेशोऽधिकमपेक्षत इति न्यायमभिप्रेत्य परस्मैपद्यात्मनेपद्युभयपदिधातुविवेकाय दौर्गं धातु-पाठमाश्रित्य प्रतिधातुविशेषप्रक्रियामाह । चिती । संज्ञानं संवित्तिः । ईकारः 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधार्थः । इतः प्रभृति एध वृद्धौ इतीममवधिं कृत्वा परस्मैपदिन एव । तत्र अज गतावित्यन्ताद् द्वाविंशतिः सेट्काः ।

---

१. °नद° $D_3$. २. च परे $B_2$. ३. Before it—उपदेशे किम् । प्रणिचकार $D_2$. ४. संविज्ञाने $D_3$. ५. °सुभिक्षयोरुपपत्तिरितो वाक्याद्गम्यते । $Bc_2$. ६. °रनिष्पत्तिरितो $Dc_3$. ७. ततः पर° $Bc_2$. ८. प्रनिवेष्टा । प्रणिवेष्टा $Bc_2$. ९. एवमनेन $Bc_1$. १०. °मवधीकृत्य $Bc_2$.

## पुगन्तलघूपधस्य च ॥७।३।८६॥

पुगन्तस्य लघूपधस्य चेको गुणः स्यात् सार्वधातुकार्धधातुकयोः[1] ॥ चेतति । चेतेत् । चेततु । अचेतत् । लुङि सिचि इडागमे कृते ।

---

पुगन्त । पुक् आगमः । 'अर्तिह्री –' इत्यादिना विहितः पुकि अन्तः पुगन्तः । लघ्वी उपधा लघूपधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधम् । द्वन्द्वैकवद्भावः । अङ्गस्येत्यनुवर्तमाने अङ्गसंबन्धिनः पुगन्तस्य इको लघूपधस्येको गुणः स्यादित्यर्थः । तेन भिनत्तीत्यादावङ्गस्य लघूपधत्वेपि इको गुणो नेत्यर्थः । छेत्ता भेत्तेत्यादौ प्रत्ययादेरङ्गान्त्यस्य च हलोरानन्तर्येण गुरूपधत्वेन लघूपधगुणो न व्यावर्तत इति ज्ञापितम् । 'क्रुसनोः किल्करणेन त्रसिगृधिधृषिक्षिपेः क्नुः' । 'हलन्ताच्च' इति । चेततीति । वर्तमाने लट् । तस्य तिप् । शप् । चेततः । चेतन्ति । चेतसि । चेतथः । चेतथ । चेतामि । चेतावः । चेतामः । पूर्ववत्प्रक्रिया । चेतेदिति । 'विधिनिमन्त्रण–' इति लिङ् । तस्य तिप् । यासुट् । सलोपः । 'अतो येयः' इतीय् । 'इतश्च' इतीकारलोपः । 'आद्गुणः' । 'लोपो व्योर्वलि' । चेतेताम् । चेतेयुः । चेतेः । चेतेतम् । चेतेत । चेतेयम् । चेतेव । चेतेम । चेततिविति । 'लोट् च' इति लोट् । 'एरुः' । चेततात् । चेतताम् । चेतन्तु । चेत । चेततात् । चेततम् । चेतत । चेतानि । चेताव । चेताम । अचेतदिति । 'अनद्यतने लङ्' इति लङ् । अडागमः । इकारलोपः । अचेतताम् । अचेतः । अचेततम् । अचेतत । अचेतम् । अचेताव । अचेताम । लुङि सिचि इडागमे कृते इति । चित् अस्मात् 'लुङ्' इति लुङ् । 'च्लि लुङि' इति च्लिः । तस्य 'च्लेः सिच्' इति सिच् । 'आर्धधातुकस्येड् वलादेः' इतीट् । इकारलोपः । अडागमः । एवं सति अ चित् इ स् त् इति स्थिते इत्यर्थः ।

---

१. After it—परयोः N. २. °धत्वेपि लघूपधो Dc₃. ३. इलोपः Bc₃.

**वदव्रजहलन्तस्याचः ॥७।२।३॥**

एषामचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदे ॥ इति वृद्धिप्राप्तौ ।

**नेटि ॥७।२।४॥**

इडादौ सिचि हलन्तस्य वृद्धिर्न स्यात् ॥ गुणः ।

---

वदव्रज । वद व्यक्तायां वाचि । व्रज गतौ । 'अतो हलादेर्लघोः' इति विकल्पबाधनार्थं वदिव्रज्योर्ग्रहणम् । ननु चात्र योगविभागे सति हलन्तग्रहणं विनापि सिध्यति । कथमिति चेदुच्यते । 'वदिव्रज्योः' इत्येकं सूत्रम् । द्वितीयम् 'अचः' इति । तत्र प्रथमे सूत्रे 'अतः' इति स्थान्यनुवर्तते । वदिव्रज्योरतो वृद्धिर्भवति । द्वितीये सूत्रे अङ्गेनाज्विशेष्यते । अङ्गस्याचः सिचि परतो वृद्धिरिति । सत्यम् । इह हि हल्ग्रहणं हल्समुदायपरिग्रहार्थम् । इहापि यथा स्यात् । रञ्ज रागे । अराङ्क्षीत् । षञ्ज परिष्वङ्गे । असाङ्क्षीदिति । अन्यथा येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात् इत्येकेन वर्णेन व्यवधाने स्यात् । अनेकेन हला न स्यात् । उदवोढामित्यत्र वहेः सिचि ढत्वादीनामसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः । पश्चादोत्वम् । तत्र कृते पुनर्वृद्धिं न कृतवान् । यत्र त्वकृता वृद्धिस्तत्रौकारस्यैव स्यात् । सौढामित्रस्यापत्यं सौढामित्रिरिति ।

नेटि । अनन्तरस्य विधिर्वा प्रतिषेधो वेति परिभाषया नेटीति योगो 'वदव्रज-' इत्यस्यैव बाधक इत्यभिप्रेत्याह । हलन्तस्येति । हलन्तस्य किम् । अलावीत् । ननु चैतदप्यन्तरङ्गत्वात् गुणावादेशयोर्हलन्तम् । न । आरम्भसामर्थ्यात् सिचि वृद्धिरन्तरङ्गमपि गुणं बाधते । गुण इति । 'पुगन्त-' इत्यनेन ।

---

१. °परेषु D3. २. °ग्रहः Bc2. ३. द्वितीयसूत्रे Bc2. ४. °समुदायस्य Bc2. ५. इति मत्वाहा Bc2.

**अस्तिसिचोऽपृक्ते ॥७।३।९६॥**

अस्तेः सिचश्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमः स्यात् ॥ लघूपधत्वेन इटो गुणे प्राप्ते ।

**दीधीवेवीटाम् ॥१।१।६॥**

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः ॥

**इट ईटि ॥८।२।२८॥**

इटः परस्य सिचो लोपः स्यादीटि ॥ सिज्लोप एकादेशे सिद्धो वाच्यः । सवर्णदीर्घः । अचेतीत् । अचेतिष्टाम् ।

---

अस्ति । अस्तेरिति । अस भुवीत्यस्मात् ।

दीधी । दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिना तुल्ये । अथ दीङ् क्षये । धीङ् अनादरे । वेञ् तन्तुसन्ताने । वी गतिप्रजनकान्त्यशनखादनेषु । एषां ग्रहणं कस्मान्न । उच्यते । यद्येतेभिमताः स्युस्तर्हि संदेहार्थं वीवेधीदीटामिति न्यासं कुर्यात् । अतः पूर्वोक्ताविव । इटश्चेति । आर्धधातुकस्येत्यादिना विहितस्य । अथ इण् इट गताविति किं न गृह्येते । युक्तं चैतत् । धातुसाहचर्यात् । मैवम् । इह अल्पाच्तरमिति इटः पूर्वनिपाते कर्तव्ये तद्विपर्ययं कुर्वतैतत् सूचितम् । धातुसाहचर्येप्यत्रागमस्यैवेटो ग्रहणमिति । सिज्लोप इति । 'अकः सवर्णे दीर्घः' इत्यनेन दीर्घे क्रियमाणे 'पूर्वत्रासिद्ध–' न्यायेन सिज्लोपस्यासिद्धत्वं प्राप्तं तत् प्रतिषिध्यते । अचेतिष्टामिति । चित् तस् 'च्लेः सिच्' । इट् । गुणः षत्वम् । तसस्ताम् । ष्टुत्वम् । अडागमः ।

१. °पृक्तसार्वधातुकस्य C; परस्य dropped $D_3$. २. सस्य for सिचो $B_1$, $D_1$, $N_1$. ३. °दीटि परे $B_2$, $D_3$. ४. सवर्णे दीर्घः $B_1$, $B_2$, $D_2$. ५. न्यायान्तर° $Bc_2$. ६. °प्यत्रेणमस्यैवोटो $Bc_2$. ७. च्लि इट् गुणः मूर्धन्यः । $Bc_2$. ८. अट् । $Bc_2$.

**सिजभ्यस्तविदिभ्यश्च ॥३।४।१०९॥**

सिचः परस्याभ्यस्तविदिभ्यां च ङित्संबन्धिनो झेर्जुस् स्यात् ॥ अचेतिषुः । अचेतीः[1] । चिचेत ।

**असंयोगाल्लिट् कित् ॥१।२।५॥**

असंयोगात् परोपित् लिट् कित् स्यात् ॥ चिचितुः । चिचितुः[2] । चिचेतिथ[3] । चेतिता । चित्यात् ।

---

**सिज** । अलिङर्थ आरम्भः । विद ज्ञाने अस्यैव ग्रहणमस्मादेव परस्य झेः संभवात् । नान्येषां विदादीनाम् । अभ्यस्तविदिग्रहणम्[4] असिजर्थम् । **अचेतिषुरिति** । च्लेः[5] सिच् । इट् । गुणः । अडागमः । मूर्धन्यः । रुत्वविसर्गौ । अचेतीरिति । सिच् । इट् । गुणः । अट् । इलोपः । 'अस्तिसिचोपृक्ते' इतीट् । 'इट ईटि' । इति सिज्लोपः[6] । सवर्णदीर्घः । रुत्वविसर्गौ । अचेतिष्टम् । अचेतिष्ट । अचेतिषम् । अचेतिष्व । अचेतिष्म । चिचेतेति । 'परोक्षे लिट्' इति लिट् । तिप् । 'लिट् च' इत्यार्धधातुकत्वम् । 'परस्मैपदानाम्—' इति णल् । 'लिटि धातोः—' इति द्वित्वम् । उपधागुणः ।

**असंयोगात् लिट्** । लिटाक्षिप्तो धातुरसंयोगेन विशेष्यते । असंयोगान्ताद्धातोरिति । ननु च पर्युदासोयम् । ततश्च नञिवयुक्त-न्यायेन संयोगान्तसदृशाद्धलन्तादेव स्यात् चिचिततुरित्यादौ निन्य-तुरित्यादौ न स्यात् । मैवम् । यदयं 'ऋतश्च संयोगादेर्गुणः' इति गुणं शास्ति तज् ज्ञापयति नात्र नञिवयुक्तन्याय इति । ङित्वे प्रकृते किंत्वस्यातिदेशः[7] ईजतुरित्यादौ संप्रसारणार्थः । चिचिततुरिति किन्त्वा-द्गुणाभावः । चिचेतिथ । चिचितथुः । चिचित । चिचेत । चिचितिव । चिचितिम । चेतितेति । 'अनद्यतने लुट्' इति लुट् । तस्य तिबादयः ।

---

१. After it—अचेतिष्टम् । अचेतिष्ट । अचेतिषम् । अचेतिष्व । अचेतिष्म $B_2$;—अचेतिष्टम् $D_4$. २. Dropped $D_1$. ३. Dropped N, $D_2$, $D_3$, $D_4$. ४. विदि dropped $Bc_2$. ५. च्लिः । $Bc_2$. ६. सलोपः $Bc_2$, $Dc_3$. ७. कित्त्वविधिः $Bc_2$.

चेतिष्यति । अचेतिष्यत् । च्युतिर् आसेचने ॥ इर इत्संज्ञा वाच्या ॥* च्योतति । च्योतेत् । च्योततु । अच्योतत् ।

**इरितो वा ॥३।१।५७॥**

इरितो धातोः परस्य च्लेरङादेशो वा स्यात् परस्मैपदेषु ॥

'स्यतासी–' इति तासि इट् । उपधागुणः । 'लुटः प्रथमस्य–' इति डा । टिलोपः । चेतितारौ । चेचितारः । चेचितासि । चेतितास्थः । चेचितास्थ । चेचितास्मि । चेतितास्वः । चेचितास्मः । चित्यादिति । 'आशिषि लिङ्लोटौ' इति आशिषि लिङ् । तस्य तिप् । 'यासुट् परस्मैपदेषु–' इति यासुट् । 'इतश्च' इति इकारलोपः । 'स्कोः संयोगा–' इति सलोपः । चित्यास्ताम् । चित्यासुः । चित्याः । चित्यास्तम् । चित्यास्त । चित्यासम् । चित्यास्व । चित्यास्म । चेतिष्यतीति । 'लृट् शेषे च' इति लृट् । तस्य तिप् । स्य । 'आर्धधातुकस्येड् वलादेः इतीट् । उपाधागुणः । 'आदेशप्रत्यययोः' । चेतिष्यतः । चेतिष्यन्ति । चेतिष्यसि । चेतिष्यथः । चेतिष्यथ । चेतिष्यामि । चेतिष्यावः । चेतिष्यामः । अचेतिष्यदिति । 'लिङ्निमित्ते लृङ्–' । तस्य तिप् । स्यः । इट् । गुणः । अट् । इकारलोपः । अचेतिष्यताम् । अचेतिष्यन् । अचेतिष्यः । अचेतिष्यतम् । अचेतिष्यत । अचेतिष्यम् । अचेतिष्याव । अचेतिष्याम । भूवत् प्रक्रिया । च्युतिर् इति । आसेचनमीषत्सेकः । इर इत्संज्ञा वाच्येतीकारस्य 'उपदेशेऽजनुनासिक इत्' इति । रेफस्य 'हलन्त्यम्' इति । अथवा—

'इरितो वा' इत्यत एव ज्ञापकात् समुदायस्येत्संज्ञा । अत उक्तं वाच्येति । च्योततीति । च्युत् अस्मात् 'वर्तमाने लट्' इति लट् । चितीवत् प्रक्रिया । च्योतेदिति । च्युत् अस्मात् 'विधिनिमन्त्रणा—' इति लिङ् । च्योतत्विति । 'लोट् च' इति लुट् । अच्योतदिति । 'अनद्यतने लङ्' ।

१. सत्वम् । $Bo_2$ (for आदेश?). २. इलोपः $Bc_2$.

अच्युतत् । अच्योतीत् ।

**हलादिः शेषः ॥७।४।६०॥**

अभ्यासस्यादिर्हल् शिष्यतेऽन्यो हल् लुप्यते ॥ चुच्योत ।

---

अच्युतदिति । 'लुङ्' इति लुङ् । तिप् । 'च्लि लुङि' इति च्लिः । तस्य अङ् । ङित्त्वाद्गुणाभावः । अडागमः । अच्योतीदिति । अङभावपक्षे रूपम् ।

हलादिः । हलादिरिति षष्ठीतत्पुरुषः स्यात् कर्मधारयो वा हल् चासावादिश्चेति । अथवा असमासः हल् आदिरिति । तत्र षष्ठीतत्पुरुषे आट आटतुरित्यादौ टेत्यभ्यासस्यानादिहल्लोपो न स्यात् । अतः कर्मधारयपक्षः श्रेयान् । तत्रापि विशेषणत्वादादेः पूर्वनिपातः स्यादतोसमासपक्ष एव श्रेयस्तम इति मनसि कृत्वाह । अभ्यासस्यादिर्हलिति । ननु चात्रापि आटेत्यादिषु हलादिशेषो न स्यात् । यदि आदिशेषनिमित्तोयमनादेर्लोपो विधीयते । न चात्रादिर्हलस्ति । सत्यम् । अभ्यासजातेराश्रयणात् पपाचेत्यादावपि वर्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति । अन्ये त्वाहुः । शेषशब्दोयं निवृत्त्या विशिष्टमवस्थानमाह । तदवस्थानयुक्त्या प्रधानमप्यविधेयत्वादप्रधानं विधेयत्वान्निवृत्तिरेव प्रधानम् । ततोयमर्थः । अभ्यासस्यानादेर्हलो निवृत्तिः स्यादिति । सा किमित्यादेरविधेयामनिवृत्तिमपेक्षिष्यत इति । चुच्योतेति । परोक्षे लिट् । णल् । द्विर्त्वम् । च्युत् च्युत् इति । पूर्वहलस्य शेषः । गुणः ।

---

१. °न्ये हलो लुप्यन्ते C; $D_1$; अभ्यासस्यादिहलः शिष्यन्ते अन्ये लुप्यन्ते N. २. च्लिः । अङ् $Bc_2$. ३. Before it—हलामादिरिति $Dc_3$. ४. मत्वाह $Bc_2$. ५. यतः $Bc_2$, $Dc_3$. ६. तदवस्थानं युक्त्याप्रधानमप्यविधेयत्वानिवृत्तेरेव प्रधानम् । $Bc_2$. ७. °नादिहलो $Bc_2$. ८. द्विर्त्वम् । हलादिशेषः । चुच्युततुः $Bc_2$.

8232

च्योतिता । च्युत्यात् । च्योतिष्यति । अच्योतिष्यत् ।

[१]च्युतिर् क्षरणे ।

**शर्पूर्वाः खयः ॥७।४।६१॥**

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेन्ये हलो लुप्यन्ते ॥

---

चुच्युततुः । चुच्योतिथ । च्योतितेति । लुट् । च्योतितारौ । च्योतितारः ।
च्युत्यादिति । आशिषि लिङ् । च्युत्यास्ताम् । च्युत्यासुः ।
च्योतिष्यतीति । लृट् । अच्योतिष्यदिति । लृङ् ।

[२]च्युतिर् इति । क्षरणं स्रवणम् । दन्त्यादिरयम् । ततश्च मधुश्च्युतमाचष्टे णिच् टिलोपः क्विप् णिलोपः । संयोगादित्वात् सलोपः । संयोगान्तत्वाद्यलोपः । चस्य कुत्वम् । ततो मधुगिति स्यात् । षट् [३]श्च्योतन्तीत्यत्र श्चुत्वं धुट्त्वेसिद्धं वक्तव्यमिति धुट् न । क्षीरस्वाम्यादयस्त्वेवमाहुः । शास्तालव्योत्र । दन्त्यादित्वे षट् श्च्योतन्तीति श्चुत्वस्यासिद्धत्वात् 'डः सि धुट्' इति । धुडागमः स्यादिति । तन्मते मधुडिति भवेत् इति [४]डाच्युतिर् इत्यप्याहुः । कौशिकस्तु [५]श्च्युतिमयकारं मन्यते । श्चोतति । श्चोतेत् । श्चोततु । अश्चोतत् । इति । 'इरितो वा' । इति त्वाङ् । अश्चुतत् । अश्चोतीत् ।

शर्पूर्वाः । 'हलादिः शेषः' इत्यनेन शरां शेषे प्राप्ते खयां शेषोत्र विधीयते । ततः खयः शेषेण आदिशेषो बाध्यते । एकाभ्यासविषयत्वात् संभवेपि सति बाधा स्यादिति न्यायात् । किं त्वासंभवोप्यत्रास्ति कथं शेषशब्दोयं निवृत्तिमदवस्थानमाह । न चोभयोरवस्थाने निवृत्ति-विशिष्टमवस्थानं स्यात् ।

---

१. श्चुतिर् D3. २. Dropped N. ३. श्च्योतन्तीति Dc3.
४. द्रमिडा च्युतिर् Bc2. ५. श्च्युतिमयोपधं चकारं मन्यते Bc2.

चुश्च्योत[1] ।

मन्थ विलोडने । ममन्थ[2] । संयोगात् परस्य लिटो-कित्त्वादनिदितां हल इति नलोपो न । ममन्थतुः संयोगाल्लिटो वा कित्त्वमिति केचित् । ममथतुः । लोपः[3] । मथ्यात्[4] ।

कुथि हिंसासंक्लेशनयोः ।

---

'चुश्च्योतेति । लिट् । णल् । द्वित्वम् । गुणः । चुश्च्युततुरित्यादि । श्च्योतिता । श्च्युत्यात् । श्च्योतिष्यति । अश्च्योतिष्यत् ।

मन्थ । मन्थति । मन्थेत् । मन्थतु । अमन्थत् । अमन्थीत् । ममन्थेति । परोक्षे लिट् । तिप् । णल् । द्विस्वम् । संयोगादित्यादि । 'असंयोगाल्लिट् कित्' इति 'संयोगात्परस्य लिटोकित्त्वात् 'अनिदिताम्—' इति क्ङिति विधीयमानो नलोपो न भवतीत्यर्थः । केचिदिति । प्रबोधोदयवृत्तिकारादयः । तथा च प्रबोधोदयवृत्तावुक्तम् । संयोगाल्लिट् किद्वा । ररजतुः । ररञ्जतुरिति । मन्थिता । नलोप इति । 'अनिदिताम्' इत्यनेन । मथ्यात् । मन्थिष्यति । अमन्थिष्यत् ।

कुथि हिंसासंक्लेशनयोः । हिंसा प्राण्युपघातः । संक्लेशो बाधा । इकार इदित्कार्यार्थः ।

---

१. चुश्चोत । श्चोतिता । श्चुत्यात् । श्चोतिष्यति । अश्चोतिष्यत् । $D_3$. २. Before it—मन्थति । मन्थेत् । मन्थतु । अमन्थत् । अमन्थीत् । मन्थिष्यति । अमन्थिष्यत् । $B_2$. ३. नो लोपः C, $D_1$; नलोपः $D_2$, N; न्लोपः $D_3$, $D_4$. ४. After it—मन्थिता $B_2$; मन्थिष्यति । अमन्थिष्यत् $D_3$. ५. चुश्चोत $Dc_1$, $Dc_4$. ६. चुश्चुततुरित्यादि । श्चोतिता &c. $Dc_1$, $Dc_4$. ७. न्लोप $Bc_2$, $Dc_3$. ८. हिंसासंक्लेशनयोः dropped $Dc_1$.

**इदितो नुम् धातोः ॥७।१।५८॥**

इदितो धातोर्नुमागमः स्यात् ॥ कुन्थति ।

**कुहोश्चुः ॥७।४।६२॥**

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशः स्यात् ॥ चुकुन्थ[1] । इदित्त्वान्नलोपो न । [2]प्रनिकुन्थ्यात् । कादित्वान्न णः ।

षिधु गत्याम् ।

**धात्वादेः षः सः ॥६।१।६४॥**

धातोरादेः षस्य सः स्यात् ॥

---

इदितो नुम् । नुमागमोयं धातूपदेशावस्थायामेव भवति । कुण्डेत्यादौ 'गुरोश्च हलः' इति अकारप्रत्ययो यथा स्यात् । कुन्थतीति । लट् । तिप् । शप् । कुन्थेत् । कुन्थतु । अकुन्थत् । अकुन्थीत् ।

चुकुन्थेति । णल् । द्वित्वम् । चुत्वम् । कुन्थिता । इदित्वान्नलोपो नेति । 'अनिदिताम्— ' इत्यनेन । प्रनिकुन्थ्यादिति । आशीर्लिङ् । कादित्वान्न ण इति । 'शेषे विभाषा कखादावषान्त उपदेशे ' इत्यनेन । कुन्थिष्यति । अकुन्थिष्यत् ।

षिधु ।

धात्वादेः । धातुग्रहणं किम् । षोडश । षंडिकः । आदेः किम् । कर्षति । 'आदेशप्रत्यययोः' इति षत्वव्यवस्थार्थं षोपदेशानां लक्षणं करोति ।

---

१. After it—कुन्थिता । कुन्थ्यात् । कुन्थिष्यति । अकुन्थिष्यत् । $D_3$.
२. प्रतिकुन्थ्यात् $D_2$, $D_4$. ३. षोढा $Bc_2$. ४. षढां कः । षण्ढः । $Dc_3$.

[1]सेकृसृप्सृस्तृसृजस्तृस्त्यो[2]न्ये दन्त्याजन्तसादयः ।
षोपदेशाः स्मृताः [3]ष्वष्कस्विद्स्वद्स्वञ्जस्व[4]प्स्मिङः ॥
[5]सेधाति । [6]अच्छ सेधाति । 'सात्पदाद्योः' इति षत्वनिषेधे प्राप्ते ।

सेकृसृपित्यादि । दन्त्याजन्तसादयः षोपदेशाः स्मृताः । दन्त्यश्च अच् च दन्त्याचौ तौ अन्ते परौ यस्य स दन्त्याजन्तः । स चासौ सश्च दन्त्याजन्तसः । स आदिर्येषां धातूनां ते तथोक्ताः । ते च सेकादिभ्योन्ये । सेकृ गतौ । [7]सृपृ गतौ । सृ गतौ । स्तृञ् आच्छादने । सृज विसर्गे । [8]स्तृ[9]ञ् आच्छादने । स्त्यै शब्दसंघातयोः । एभ्योन्ये षोपदेशाः । षः उपदेशे पाठे येषां ते षोपदेशाः । वैयधिकरण्येपि गमकत्वाद्बहुव्रीहिः । अथवोपदिश्यते [10]प्रथमत उच्चार्यत इत्युपदेशः । षः उपदेशो येषां ते तथा । ष्वष्कादयश्च षोपदेशाः । ष्वष्क गतौ । ञिष्विदा गात्र[11]प्रक्षरणे । स्वद आस्वादने । ष्वञ्ज परिष्वङ्गे । ञिष्वप शये । [12]ष्मिङ् ईषद्धसने । ष्वष्कादीनां पञ्चानां वकारस्य केवलदन्त्यत्वाभावात् पुनर्ग्रहणम् । दन्त्याजन्तेति किम् । स्कुञ् आप्रवणे । चुस्काव । सेकाद्यन्ये इति किम् । [13]सेके । सिसेकेत्यादि ज्ञेयम् ।

सेधतीति । सत्वम् । लट् । तिप् । शप् । 'पुगन्त-' इति गुणः । सेधतु । असेधत् । असेधीत् । सिषेध । सेधिता । सिध्यात् । सेधिष्यति । असेधिष्यत् । अच्छ सेधतीति । 'अच्छ गत्यर्थवदेषु' इति गतिसंज्ञार्थमुदाहरणम् । अच्छ शब्दोभि[14]शब्दार्थे दृढार्थे च वर्तते । सात्पदाद्योरिति षत्वनिषेधे प्राप्ते इति । निषेधतीत्यत्र ।

---

१. $B_1$ has before this Kârikâ दन्त्यश्चाच दन्त्याचौ तौ अन्त्ये यस्य स दन्त्याजन्तः । स चासौ सश्च दन्त्याजन्तसः । स आदिर्येषां ते दन्त्याजन्तसादयः । ष उपदेशो येषां ते षोपदेशाः । उपदेशो धातुपाठः । सेक्यततिभ्यः सप्तभ्योन्ये ये दन्त्याजन्तसादयः प्रयुज्यन्ते धातवस्ते षोपदेशा इत्यर्थः तथा ष्वक्कादयश्च ।; C has on the margin from दन्त्य°...to °सादयः. २. °स्त्याभ्योन्ये $B_2$. ३. स्वष्क $D_1$, N. ४. स्वपि $D_2$, N, स्वप $D_3$, $D_4$. ५. सेधाति । सेधेत् । सेधतु । असेधत् । असेधीत् । सिषेध । सेधिता । सिध्यात् । सेधिष्यति । असेधिष्यत् । $B_2$. ६. असेधत् for अच्छ सेधाति in P, $B_2$. ७. सृपसृच $Bc_2$ ; सृप् गतौ $Dc_3$. ८. Dropped $Bc_2$. ९. स्तृञ् आच्छादने dropped $Bc_2$. १०. प्रथम $Bc_2$. ११. °क्षरणे $Dc_3$. १२. ष्मिङ् $Bc_2$, $Dc_3$. १३. सेकः $Bc_2$. १४. °भिन्नार्थे $Dc_3$.

**उपसर्गात्[1] सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥८।३।६५॥**

उपसर्गस्थान्निमित्तात्[3]परस्यैषां सस्य षः स्यात् ॥

**सदिरप्रतेः[2] ॥८।३।६६॥**

उपसर्गात् सदेः सस्य षः[4] स्यान्न[5] तु प्रतेः परस्य ।

---

**उपसर्गात्** । षुञ् अभिषवे । षू प्रेरणे । षोन्तकर्मणि । ष्टुञ् स्तुतौ । ष्टुभु[6] स्तम्भे । एतेषां श्तिपां निर्देशो यङ्लुङ्निवृत्त्यर्थः । अभिसोषवीतीत्यादि । ष्ठा गतिनिवृत्तौ । सेनयेति सुब्धातुः । षिधु गत्याम् । षिधू शास्त्रे माङ्गल्ये च । शपा[7] निर्देशो यङ्लुग्दैवादि[8]निवृत्त्यर्थः । षिच क्षरणे । षञ्ज सङ्गे । ष्वञ्ज परिष्वङ्गे । सिचादीनां यङ्लुक्यपि यथा[9] स्यात् । अभिषेषी[10]चतीत्यादि । उपसर्गादिति तात्स्थ्यात् ताच्छब्द्यमित्यभिप्रेत्याह । उपसर्गस्थादिति । अत्र कवर्गस्यासंभवादिण् संबध्यते । उपसर्गात् किम् । दधि सिञ्चति । निर्गताः[11] सेचका अस्मान्निःसेचक इत्यत्र न सिचिं प्रत्युपसर्ग इति षो न । अभिषावकमिच्छति अभिषावकीयतीत्यत्र सुनोतिमेव प्रत्युपसर्ग इति षः । सावकमिच्छति सावकीयति ततोभिना योगे षो न । अभिसावकीयतीति । 'प्राक् सितात्—' इति व्याख्याय प्रसङ्गात् षत्वप्रकरणमाह ।

**सदिः** । सदिरिति षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह । सदेरिति । षद्लृ विशरणगत्यवसादनेषु ।

---

१. उपसर्गात् पर° C. २. सदेरप्रतेः $D_1$. ३. उपसर्गस्थान्निमित्तात् परस्य $D_3$. ४. षत्वं C. ५. अप्रतेः for न तु प्रतेः $D_2$. ६. ष्टुभ स्तम्भने $Dc_3$. ७. शपा $Bc_2$. ८. °दैवादिक° $Dc_3$. ९. Dropped $Bc_2$, $Dc_3$. १०. अभिषेषिञ्चीत्यादि $Bc_2$. ११. निर्गतः सेचकोस्मान्निः° $Bc_2$.

**स्तम्भेः ॥८।३।६७॥**

[1]उपसर्गात् पर[2]स्य[3] स्तम्भेः [4]सस्य [5]षत्वं स्यात् ॥

**अवाच्चालम्बनाविदूर्ययोः ॥८।३।६८॥**

अवात् परस्य स्तम्भेरेतयोः षत्वं स्यात् ॥

**वेश्च स्वनो भोजने ॥८।३।६९॥**

[6]व्यवाभ्यां स्वनतेः षत्वं स्याद्भोजने ॥

**परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥८।३।७०॥**

परिनिविभ्यः परेषामेषां [7]षत्वं स्यात् ॥ निषेधति ।

---

स्तम्भेः । स्तम्भु रोधने । योगविभागादप्रतेरिति नानुवर्तते ।

अवात् । आलम्बनमाश्रयणम् । अविदूरस्य भावः आविदूर्यम् । अत एव निपातनान्नञ्पूर्वात्तत्पुरुषाद्भावप्रत्ययः ।

भोजनं [8]स्वनेन विशिष्टोभ्यवहारोत्राभिमतः । स्वन शब्दे ।

परिनि । षेवृ सेवने । सित [9]निष्ठान्तः । निषितः । [10]सय इति षिञ् बन्धने एरजन्तः । विषयः । षिवु तन्तुसन्ताने । षह मर्षणे । सुट् आगमः । परिष्करोति । ष्टुञ् स्तुतौ । ष्वञ्ज परिष्वङ्गे । ननु स्तुस्व[11]ञ्जोः पूर्वेणैव सिद्धम् । सत्यम् । तयोर्ग्रहणं 'सिवादीनां वाड्व्यवायेपि' इत्येतदर्थम् ।

---

१. Dropped $N_1$, $D_3$, $D_4$. २. P drops परस्य. ३. उपसर्गस्थान्निमित्तात् परस्य $B_2$. ४. षः $D_1$. ५. $B_1$ and P, N, $D_4$ drop it. ६. व्यवाभ्यां परस्य $B_1$. ७. सस्य षत्वं $B_1$, $D_1$. ८. For स्वनेन-स्वजन° $Dc_1$. ९. निष्ठान्तम् $Dc_1$. १०. सयेति $Dc_1$. ११. स्वञ्ज्योः $Bc_2$.

**प्राक् सितादड्व्यवायेपि ॥८।३।६३॥**

सेवसितेत्यत्र सितशब्दात् प्राग्ये सुनोत्यादयस्तेषामड्व्यवधानेपि षत्वं स्यात् । न्यषेधत् ।

**स्थादिष्वभ्यासेन चाभ्यासस्य ॥८।३।६४॥**

स्थादिषु प्राक् सितादभ्यासेन व्यवायेपि[1] षत्वं स्यादभ्यासस्य च ॥ निषिषेध ।

**सेधतेर्गतौ ॥८।३।११३॥**

गत्यर्थस्य सेधतेर्न षत्वम् ॥ गङ्गा विसेधति ।

---

**प्राक्सि** । सेवसितेत्यत्र सितशब्दात् प्राग्ये सुनोत्यादय इति । सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जां[2] सदस्तम्भस्वन च[3] एषामित्यर्थः । इण्कोरिति पञ्चमीनिर्देशात् व्यवाये न प्राप्नोतीत्ययमारम्भः । अडित्यागमग्रहणम् । न प्रत्याहारस्य । अपिग्रहणं किम् । अव्यवधानेपि यथा स्यात् । अन्यथा विशेषवचनाद्व्यवाय एव स्यात् । न्यषेधदिति । लङ् ।

**स्थादि** । अषोपदेशार्थमवर्णान्ताभ्यासार्थं[4] वचनम् । अभिषिषेणयिषति सेनया अभियातुमिच्छति । सह इनेन वर्तते सेना[5] । अभितष्ठौ । षणिप्रतिषिद्धार्थं च[6] । अभिषिषिक्षति । अभ्यासस्येति वचनं नियमार्थं स्थादिष्वेवाभ्याससकारस्य षत्वं नान्यत्र । अभिसिषासति ।

**गङ्गां विसेधतीति** । गच्छतीत्यर्थः ।

---

१. व्यवायेपि C; $D_1$, $D_3$. २. स्वञ्ज $Bc_2$. ३. सेव for च $Bc_2$. ४. °मवष्टम्भोभ्यासार्थं $Bc_2$. ५. इति सेना $Bc_2$. ६. प्रतिषेधार्थम् । सिच् । $Bc_2$.

षिधू शास्त्रे माङ्गल्ये च ।

**स्वरतिसूतिसूयतिधूञूदितो वा ॥७।२।४४॥**

स्वरत्यादेरूदितश्च [1]परस्य वलादेरा[2]र्धधातुकस्येड्वा स्यात् ॥

असेधीत् । 'वदव्रज—' इति वृद्धिः । चर्त्वम् । असैत्सीत् ।

---

षिधू । शास्त्रं शास्त्र[3]विषया शासनक्रिया । माङ्गल्यं मङ्गल[4]विषया क्रिया लक्ष्यते । [5]अत उक्तम् ।

'क्रियैव वाच्या धातूनां कर्तृव्यापारलक्षणा ।
स्वैकनिष्ठक्रियार्थत्वं धा[6]त्वर्थेष्वक्रियात्मसु' ॥ इति ।

ऊकार इत् । 'धात्वादेः षः सः' इति सत्वम् । सेधति । सेधेत् । सेधतु । असेधत् ।

स्वरति । 'इट् सनि वा' इत्यतो वेत्यनुवृत्तावपि वाग्रहो लिङ्सिचोर्निवृत्त्य[7]र्थः । स्वृ शब्दोपतापयोः । षूञ् प्राणिगर्भविमोचने अदादिकः । षूङ् प्राणिप्रसवे दि[8]वादिकः । धूञ् कम्पने इति स्वादिः क्र्यादिश्चु[9]रादिकश्च । तत्र 'एकाचः' इत्यधिकारात् आद्ययोर्ग्रहणं नेतरस्य । ऊदितः षिधू शास्त्रे माङ्गल्ये चेत्येवमादयः । स्वरतेरनुदात्तत्वात् प्रतिषेधे प्राप्ते इतरेषामुदात्तत्वान्नि[10]त्यमिटि प्राप्ते विकल्पार्थं वचनम् । किति 'श्र्युकः किति' इति नित्यं [11]प्रतिषेधः पूर्वविप्रतिषेधेन । असेधीदिति । लुङ् । तिप् । च्लि लुङि 'च्लेः सिच्' । इट् वा । [12]उपधाया गुणः । 'इतश्च' इतीकारलोपः । 'अस्तिसिच—' इतीट् । 'इट इटि' इति सलोपः । [13]सवर्णदीर्घः । अडागमः । चर्त्वमिति । 'खरि च' इति । असैत्सीदिति । इडभावपक्षे रूपम् ।

---

१. परश्च वलादेरिड्वा स्यात् N. २. P, $D_2$ omit आर्धधातुकस्य ; इड्वार्धधातुकस्य स्यात् $B_2$ ; आर्धधातुकस्य वलादेः $D_4$. ३. °विषय° $Bc_2$. ४. °विषय° $Bc_2$. ५. यत $Bc_2$. ६. धात्वर्थेषु क्रियात्मभिः $Dc_3$. ७. °वृत्त्यर्थम् $Dc_3$. ८. दैवादिकः $Bc_2$. ९. °श्चुरादिश्च $Bc_2$. १०. °न्नित्यमितीटि $Bc_2$. ११. निषेधः $Dc_3$. १२. उपधागुणः $Bc_2$. १३. सवर्णे दीर्घः $Bc_2$.

झलो झलि ॥८।२।२६॥

झलः परस्य सिचो लोपः स्याज्झलि ॥

झषस्तथोर्धोऽधः ॥८।२।४०॥

झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । जश्त्वम् । असैद्धाम् । खद स्थैर्ये हिंसायां च ।

अतो हलादेर्लघोः ॥७।२।७॥

हलादेर्लघोरकारस्य इडादौ सिचि परस्मैपदे वा वृद्धिः स्यात्॥

---

झलः । इतः प्रभृति सिचो लोप इष्यते इत्यभिप्रेत्याह । सिच इति । तेनेह न । दृषत्स्थानम् ।

झषः । अध इति धाधातुनिषेध इत्याह । न तु दधातेरिति । यदि धकारमात्रनिषेधः स्यात् गतिबुद्धीत्यादयो निर्देशा न स्युः । असैद्धामिति । सिच् । तसस्ताम् । 'वदव्रज-' इति वृद्धिः । अडागमः । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । सिषेध । सिषिधतुः । सेधिता । सेद्धा । इड्वा । सिध्यात् । सेधिष्यति । सेत्स्यति । असेधिष्यत् । असेत्स्यत् । खद स्थैर्ये हिंसायां च । खदति । खदेत् । खदतु । अखदत् ।

अतः । 'नेटि' इति प्रतिषेधे प्राप्ते पक्षे विध्यर्थकमेतत् । अतः किम् । अदेवीत् । हलादेः किम् । मा भवानटीत् । लघोः किम् । अतक्षीत् । अथेह कस्मान्न स्यात् । अचकासीदिति । उच्यते । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन हला व्यवधानमाश्रितम् । अत्र त्वज्झल्समुदायेन व्यवधानमिति वृद्धिर्न । एवं तर्ह्येकेन वर्णेन व्यवधानमाश्रीयते न त्वनेकेनेति लघोरिति न वाच्यम् । अतक्षीदित्यत्रानेकेन व्यवधानमिति वृद्धिर्न स्यात् ।

---

१. झलां $D_2$. २. °स्तकारथकारयो° N. ३. Dropped $D_3$. ४. C has असैत्सुः after it. ५. सिध् तस् सिच् तसस्ताम् । &c. $Dc_3$. ६. Dropped $Bc_2$. ७. स्थैर्ये हिंसायां च dropped $Bc_2$, $Dc_3$. ८. विधानार्थमेतत् $Bc_2$ : विध्यर्थमे° $Dc_3$. ९. °माश्रितम् $Bc_2$. १०. व्यवधानाद्वृद्धि° $Bc_2$, $Dc_3$.

प्रन्यखादीत् । खादित्वान्न णः । अखदीत् ।

**अत उपधायाः ॥७।२।११६॥**

उपधाया अतो वृद्धिः स्यात् ञिति णिति[1] ॥ चखाद ।

**णलुत्तमो वा ॥७।१।९१॥**

उत्तमणल्[2] णिद्वा स्यात् ॥ चखाद । चखदे[3] ।

गद् व्यक्तायां वाचि ।

**नेर्गदनदपतपदघुमास्थास्यातिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥८।४।१७॥**

उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं स्याद्गदादौ परे ॥

---

सत्यम् । विस्पष्टार्थं लघोरित्युक्तम् । खादित्वान्न ण इति । 'शेषे विभाषा कखादौ—' इत्यादिना । अखदीदिति । वृद्ध्यभावपक्षे रूपम् । अखदिष्टम् । अखादिष्टमित्यादि ।

अतः । अत इति किम् । भेदयति । चिचेत । उपाधाया इति किम् । चकासयति । चखादेति । परोक्षे लिट् । तिप् । णल् । वृद्धिः । द्वित्वम् । ह्रस्वः । 'कुहोः—' इति छकारः । 'अभ्यासे चर्च' इति चेः ।

णल् । णिद्वा स्यादिति । णित्कार्यकृद्वा स्यादित्यर्थः । णित्त्वाद् वृद्धिः । चखाद । चखद । खदिता । खद्यात् । खदिष्यति । अखदिष्यत् ।

गद ।

नेर्गद् । गद व्यक्तायां वाचि । णद व्यक्ते[4][5] शब्दे । पत्ल गतौ । पद[6] गतौ । घुसंज्ञाः[7] । मा इति माङ् माने शब्दे च ।

---

१. After it—च परे B$_2$. २. उत्तमो णल् C, D$_1$. ३. After it—खद्यात् । खदिता । खदिष्यति । अखादिष्यत् B$_2$. ४. चकारः । Bc$_2$, Dc$_3$. ५. अव्यक्ते Bc$_2$, Dc$_3$. ६. दृगतौ । घुसंज्ञकः । Dc$_3$. ७. °संज्ञकाः Bc$_2$.

प्रणिगदति । अगदीत् । अगादीत्[2] ।

रद विलेखने ।[3]

**अत एकहल्मध्येनादेशादेर्लिटि ॥६।४।१२०॥**

लिट्[4]कृताभ्यासादेशहीनस्य धातोरसंयुक्तहलोर्मध्यस्यात एत्वं स्यात् किति लिटि अभ्यासलोपश्च । रेदतुः । रेदुः ॥

---

मेङ् प्रतिदाने इति द्वयोर्ग्रहणमिष्यते । षोन्तकर्मणि । हन हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायां गतौ । प्सा भक्षणे । टुवप् बीजतन्तुसन्ताने । वह प्रापणे । शमु उपशमे । चिञ् चयने । दिह उपचये । गदति । गदेत् । गदतु । अगदत् । अगादीत् । अगदीत् । ‘ अतो हलादेः ’ इति वा वृद्धिः । जगाद । उत्तमे । जगाद । जगद । गदिता । गद्यात् । गदिष्यति । अगदिष्यत् ।

रद विलेखने । विलेखनमुत्पाटनम् । रदति । रदेत् । रदतु । अरदत् । अरादीत् । अरदीत् । रराद ।

अत एक । लिटि कृतेत्यादि । लिटि परतः कृतो यः अभ्यासादेशस्तेन हीनस्येत्यर्थः । इहैत्वे अभ्यासस्य जश्त्वचर्त्वयोर-सिद्धत्वं नास्ति । तेन तदादिरप्यादेशादिः स्यात् । बभणतुः । चकणतुः । अत्र ज्ञापकः फलिभज्योरेत्वविधिः । अतः किम् । दिदिवुः । तपरः किम् । ररासे । एकहल्मध्ये किम् । तत्सरुः । रूपाभेदे त्वादेशादित्वं नाश्रीयते । शंशिदद्योर्निषेधाज्ज्ञापकात् । तेन देमुः पेचुरित्यादीनां प्रकृतिजश्चरादेशादीनामेत्वं भवति ।

---

१. Dropped N. २. After it—जगाद । जगदतुः । जगदुः । गद्यात् । गदिता । गदिष्यति । अगदिष्यत् $B_2$. ३. After it—रराद $B_2$. ४. °कृतभ्यासा° $D_3$, $D_4$, B, P, C. ५. द्वयोरेव ग्रहण° $Bc_2$, $Dc_3$. ६. शम् $Dc_3$. ७. शशदद्यो° $Bc_2$. ८. °चरादीना° $Bc_2$.

थलि च सेटि ॥६।४।१२१॥

इड्वति थलि परे पूर्वविषये एत्वाभ्यासलोपौ स्तः ॥ रेदिथ । अनादेशादेः किम् । चखदतुः । नलोपिनो[1] नेति केचित् । ममथतुः ।

णद् अव्यक्ते शब्दे ।

णो नः ॥६।१।६५॥

धात्वादेर्णस्य नः स्यात् ॥

---

थलि । पूर्वविषये इति । लिटि कृताभ्यासादेशहीनस्य धातोरसंयुक्तहलोर्मध्यस्थस्यात[2] इत्यर्थः । न्लोपिन इति । यन्मते-संयोगात्परस्य लिटो वा कित्त्वं तन्मते न्लोपिनो नेति साक्षादे-त्वाभ्यासलोपौ निषेधति । स्वमते तु न्लोपादेशस्यासिद्धवदत्रेत्य-[3]सिद्धत्वान्नेति भावः । अथवा स्वमते तु[4] न्लोप एव नास्तीति । केचिदिति[5] । उक्तं[6] मुग्धबोधे । अशशददवाद्यन्यथाखिणु नलोपिनामिति[7] । रदिता । रद्यात् । रदिष्यति । अरदिष्यत् ।

णद ।

णो नः । सुब्धातोर्न नत्वम् । तेन णकारीयतीति सिद्धम् । णत्वव्यवस्थार्थं णोपदेशान् लक्षयति ।

---

१. नलोपिनो $B_2$, C, $D_2$. २. °मध्यस्यात इत्यर्थः $Bc_2$. ३. न्लोपस्या° $Bc_2$, $Dc_3$. ४. Dropped $Bc_2$, $Dc_3$. ५. केचिदित्युक्तम् $Bc_2$, $Dc_3$. ६. तथोक्तं $Bc_2$, $Dc_3$. ७. न्लोपि° $Bc_2$.

णोपदेशास्त्वनृन्नर्दनाथ्नाध्नन्द्नक्नॄनृतः ।[1]

**उपसर्गादसमासेऽपि णोपदेशस्य ॥८।४।१४॥**

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णत्वं स्यात् समासे[2]ऽसमासेऽपि ॥ प्रणदति ।[3] 'नेर्गद—' इति णत्वम् । प्रणिनदति । लिट्कृताभ्यासादेशाभावा[4]देत्वाभ्यासलोपौ[5] ।

---

**णोपदेशा** इति । नृती गात्रविक्षेपे । नर्द शब्दे । नाथृ नाधृ याञ्चोपतापैश्वर्याशीःषु । टुणदि समृद्धौ । नक्क नाशने । नॄ नये । नट चलने । एतान् वर्जयित्वा येऽन्ये नादयस्ते णोपदेशा इत्यर्थः । नदति । नदेत् । नदतु । अनदत् । अनादीत् । अनदीत् ।

**उपसर्गात्** । उपसर्गादिति किम् । प्रगतो नायकोऽस्मात् प्रनायकः । अत्र प्रस्य गमित्युक्तत्वात्तमेव प्रत्युपसर्गत्वं न नयतिं प्रति । असमासेऽपि किम् । पूर्वपदाधिकारात् समास एव स्यात् । तदधिकारनिवृत्तिद्योतनाय प्रणमतीत्यादि असमासे प्रमाण इत्यादि समास उदाहरणम् । णोपदेशस्येति किम् । प्रनर्दति । **लिट्कृताभ्यासादेशाभावादिति** । 'अत एक—' इत्यत्र सूत्रे लिटि इत्यनादेशादेरित्यस्य विशेषणमिति कृत्वा लिट्कृताभ्यासादेशहीनस्येति व्याख्यानम् । अतो यद्यपि णादेरादेर्णस्य नादेशो 'णो नः' इति कृतस्तथापि[10] स लिटि परकृते कृतः 'णो नः' इत्यस्यानैमित्तिकत्वात्[11] ।

---

१. °ध्नन्द्न° D₁. २. समासे dropped P. ३. Before it—प्राणदीत् प्राणदीत् B₂. ४. लिट्कृतादेशाभावात् नेत्वतुः &c. D₃. N. ५. एत्वाभ्यास-लोपौ dropped P, C, D₁, D₂, D₄. ६. °नदि Bc₂, Dc₃. ७. गणने Bc₂, Dc₃. ८. णादय° Bc₂, Dc₃. ९. °स्मादेशात् Bc₂, Dc₃. १०. °स्तथापि लिटिपरभूतेन कृतः Bc₂. ११. इत्यस्यानिमित्तकत्वात् Bc₂.

नेदतुः[1] । नेदिथ ॥ अर्द गतौ याचने च ।[2] लिटि द्वित्वे कृते ।

## अत आदेः ॥७।४।७०॥

अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः ॥

---

अतो नेदतुः नेदिथेत्यत्र एत्वाभ्यासलोपौ भवत इत्यर्थः । ननाद । नदिता । नद्यात् । नदिष्यति । अनदिष्यत् । अर्द । यातने चेत्येके । अर्दितः । खेदितः । अर्दति । अर्देत् । अर्दतु । आर्दत् । आर्दीत् । लिटि द्वित्वे कृते इति । 'लिटि धातोरनभ्यासस्य' इत्यनेन ।

'अत आदेः' इत्युक्तेस्तदन्तविधिर्न । अत्र च 'लिटि' इत्यनुवर्तते । 'किति' इति निवृत्तम् । तपरकरणं किम् । दीर्घस्य दीर्घो मा भूदिति । ततश्चाँछेर्दीर्घविधेरभावात् 'तस्मानुड्—' इति नुट् न स्यात् आञ्छेति । यद्यप्यत्रापि ह्रस्वे भूते अदेव तथापि तपरत्वसामर्थ्यात् स्वाभाविकपरिग्रहः । पररूपापवाद इति । 'अतो गुणे' इति प्राप्तस्य पररूपस्यापवाद इत्यर्थः ।

---

१. After it—नेद्दुः B₁. २. After it—अर्दति । अर्देत् । आडजादीनाम् । आर्दत् । आर्दीत् । B₁, B₂. ( P and C have अर्दति only ). ३. After it-लिटि B₂, C. ४. °रूपत्वा° D₄. ५. नेदतुः । नेद्दुः । नेदिथे° Bc₂. ६. Dropped Bc₂, Dc₃. ७. °श्चाञ्छे° Bc₂, Dc₃. ८. आञ्छति Bc₂. ९. कृते Bc₂, Dc₃.

**तस्मान्नुड् द्विहलः ॥७।४।७१॥**

दीर्घीभूतादकारात् परस्य द्विहलो धातोर्नुडागमः स्यात् । आनर्द ।[2]

इदि परमैश्वर्ये ।[3]

**आडजादीनाम् ॥६।४।७२॥**

अजादेरङ्गस्याडागमः स्यात् लङ्लुङ्लृङ्क्षु ॥[4]

आटश्चेति वृद्धिः । ऐन्दत् ।

**इजादेश्च गुरुमतोऽनृच्छः ॥३।१।३६॥**

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्ततः आम् प्रत्ययः[5] स्याल्लिटि ॥

---

तस्मात् । द्विहलः किम् । आट । आटतुः[6] । अर्दिता । अर्द्यात् । अर्दिष्यति । आर्दिष्यत् ।

इदि । परमैश्वर्यं परमेशनक्रिया । इकार 'इदितो नुम् धातोः' इति नुमर्थः । इन्दति । इन्देत् । इन्दतु ।

आट् । उदात्तश्च स स्यात् । विचारे विशेषस्तु वश कान्तावित्यत्र स्यात् । ऐन्दादिति । लङ् । तिप् । शप् ॥ इलोपः । ऐन्दीत् । ऐन्दिष्टामित्यादि ।

इजादेः । इच् आदिर्यस्य स इजादिः । इच् प्रत्याहारः । गुरुर्विद्यते यस्यासौ गुरुमान् । अथामो मकारस्य 'हलन्त्यम्' इतीत्संज्ञा कस्मान्न स्यादित्यत आह ।

---

१. °भूतादभ्यासात् परस्य $D_2$, $B_1$, $B_2$, N : भूतादकारस्य P. २. After it—आनर्दतुः । आनर्दुः । आर्दीत् । आर्दिष्टाम् । अर्द्यात् । अर्दिता । अर्दिष्यति । आर्दिष्यत् $B_2$. ३. After it—इदितो नुम् धातोः ॥७।१।५८॥ इन्दति $D_4$, C, ($D_4$ has इन्दति before 'इदितो नुम् धातोः'). ४. लुङ्लङ्° $D_2$, $N_1$. ५. $B_1$ drops प्रत्ययः. ६. After it—आटुः । आनर्द । $Bc_2$. ७. Dropped $Bc_2$.

[1]आमोमित्त्वमदन्तत्वाद्गुणत्वं विदेस्तथा ।
आस्कासोराम्विधानाच्च[2] पररूपं कतन्तवत् ॥

**आमोमित्त्वमित्यादि** । म इत् यस्य स मित् । न मित् अमित् । तस्य भावः अमित्त्वम् । कुतः । अदन्तत्वात् । मकारान्तत्वे हीत्संज्ञा । न चायं मकारान्तः । किं तर्हि । अकारान्तः । तेनाकार इत्संज्ञामनुभवन् मकारस्येत्संज्ञां[3] प्रतिबध्नाति । यथामोमित्त्वं तथा विदेरपि अदन्तत्वादेवागुणत्वं गुणाभावः विदांचकारेत्यत्र अकारान्तत्वे हि 'अतो लोपः' इत्यकारलोपे कृते तस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवत्त्वादिकार उपधा न भवति तेन लघूपधगुणो न । अदन्तत्वं तु विदेः 'उषविद—' इत्याम्संनियोगे अकारान्तत्वनिपातनात् । अभ्युपेत्याप्यामो मान्तत्वममित्त्वं प्रतिपादयितुमाह । **आस्कासोराम्विधानाच्चेति** । आमो मित्त्वमिति प्रकृतेन संबन्धः । 'दयायासश्च' इति आस आम्विधिः कास[4] उपसंख्यानात् । यद्यामो मित्त्वं स्यात् आस्कासोरामो विधानं व्यर्थं स्यात् । मित्त्वस्य हि 'मिदचोऽन्त्यात् परः' इति प्रयोजनम् । एवं[5] तयोरामि सत्यसति वा न कश्चिद्विशेषः । उभयत्र सवर्णदीर्घे कृते तदेव रूपं स्यात् । अतस्तयोराम्विधानस्यार्थक्यायामोमित्त्वम्[6] । ननु चामोऽदन्तत्वे 'कास्प्रत्यय–' इत्यत्र 'आमामन्त्रे' इति स्यादत आह । **पररूपं कतन्तवदिति** । यथा 'सर्वत्र लोहितादिकतन्तेभ्यः' इत्यत्र पररूपं तथेहापि पररूपमित्यर्थः ।

१. Before it—कास्प्रत्ययादाममन्त्रे लिटि । सर्वत्र लोहितादिकतन्तेभ्यः ।—आभ्यां सूत्राभ्यामामोमित्त्वं ज्ञातव्यं पररूपत्वात् $B_2$. २. °त्तु $D_4$. ३. तेनाकारस्येत्संज्ञा° $Bc_2$. ४ कासः कास्प्रत्यय इति यदि आमो &c. $Bc_2$. ५. एवं च $Bc_2$. ६. °विधानसामर्थ्यादामोमित्त्वम् $Bc_2$.

**आमः ॥२।४।८१॥**

आमः परस्य लेर्लुक् स्यात् ॥[1]

**कृञ्चानुप्रयुज्यते लिटि ॥३।१।४०॥**

आमन्ताद्धातोः कृञ् अनुप्रयुज्यते लिटि परे। अभूततद्भावे कृभ्वस्तीत्यतः कृञो [2]द्वितीयेति ञकारेण कृञ्प्रत्याहारः।

---

**आमः** । अयं च लुक् नाप्राप्तेषु तिबादिषु विधीयमानत्वात्तेषामयमपवादस्तेनेन्दांचकारेत्यादौ 'तिङ्ङतिङः' इति निघातः सिध्यति । ननु अम गताविल्यस्य णलि वृद्धौ आमिति स्यात् । ततश्च णलोपि स्थानिवद्भावेन लित्त्वाल्लोपः स्यात् । मैवम् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमित्यत्र न स्यात् । लाक्षणिकत्वात् ।

**कृञ्च** । अनु पश्चात् प्रयुज्यते । सावधारणत्वात् सर्वत्राख्यानामाम्प्रत्ययस्यैव पश्चात् प्रयुज्यते । तेन व्यवधाने न भवति । ननु च 'आमः' इति लिटो लुका भवितव्यं तत् कुतस्तस्य परत्वम् । नैष दोषः । न ह्ययमत्रार्थो भवति । लक्षणान्तरेण विहिते लिटि परत इति । अपि तु अनेनैव सूत्रेण लिटि परतः कृतः । अनुप्रयुज्यते । लिटपरः कृञ् अनुप्रयुज्यत इति यावत् । अभूततद्भाव इति । प्रत्याहारोत्र गृह्यते इत्यत्र लिङ्गम् 'आम्प्रत्ययवत् कृञोनुप्रयोगस्य' इत्यत्र कृञ्ग्रहणं भ्वस्तिव्यावृत्त्यर्थम् । अन्यथा 'आम्प्रत्ययवदनुप्रयोगस्य' इत्येवावक्ष्यत् । 'अभिविधौ संपदा च' इति संपदोपि

---

१. After it $B_1$, $B_2$, $D_1$, $D_2$ have—लिटः कृत्संज्ञकत्वात् सुः (स्युः $D_2$) आमः स्वरादिषु पाठादव्ययत्वम् । ततः सोर्लुक् । (After सोर्लुक्—$B_2$ has—अव्ययादाप्सुप इत्यनेन सोर्लुक् स्यात्). २. द्वितीयेन $D_1$. ३. कृञ् dropped $D_3$. ४. नाप्राप्ते तिबादिषु $Bc_2$. ५. अयं dropped $Bc_2$, $Dc_3$. ६. ननु च अम् अचिन्त्यं स्यात् । णलि &c. $Bc_2$ ; ननु च $Dc_3$. ७. कृञ् अनुप्र॰ $Dc_3$.

तेन कृभ्वस्तयो ज्ञेयाः। तेषां द्वित्वादि।

**उरत् ॥७।४।६६॥**

अभ्यासऋवर्णस्य अत् आदेशः स्यात्॥[1] रपरत्वम्।[2] हलादिः शेषः। अचो ञ्णिति। इन्दांचकार। परत्वादादौ यणादेशः।

---

तत्रान्तर्भावादनुप्रयोगः प्राप्नुयात्। मैवम्। 'सनाद्यन्ताः–' इत्यतो 'धातवः' इत्यनुवृत्तेर्धातूपसर्गसमुदायसंपदो न स्यात्। योत्र धातुस्तस्यापि न। अर्थविप्रतिषेधात्। तेषां द्वित्वादीति। कृभ्वस्तीनां द्वित्वादि। आदिशब्दात् अभ्याससंज्ञा अभ्यासकार्यं कुहोश्चुरित्यादि।

उरत्। अदादेशो रपरत्वं ततो 'हलादिः शेषः'। नर्नर्तीत्यादौ अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते इति उरत्वे कृते पश्चात् रुगादय आगमाः क्रियन्त इति ज्ञेयम्। इन्दांचकारेति। परोक्षे लिट्। लिटस्तृतीये धात्वधिकारे विहितत्वात्। अतिङ्त्वाच्च कृत्त्वात्। लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेन 'कृत्तद्धित–' इति प्रातिपदिकत्वात् सुः। स्वरादिष्वाम इति पाठात् आमन्तस्याव्ययत्वात् 'अव्ययादाप्सुपः' इति सोर्लुक्। 'तद्धितश्च' इति चकाराद्वाऽव्ययत्वम्। अथवा 'हल्ङ्याप्' इति सुलोपः। परत्वादादौ यणादेश इति। इदां कृ अतुस् इत्यत्र 'असंयोगाल्लिट् कित्' इति कित्त्वाद्गुणाभावे सति 'लिटि धातोः—' इति द्वित्वं प्राप्तम्। 'इको यणचि' इति यणादेशश्च। तत्र 'विप्रतिषेधे परं कार्यम्' इति परत्वादादौ यण्।

---

१. अकारादेशः $D_1$. २. अचो ञ्णिति। रपरत्वम्। इन्दांचकार $D_2$. ३. रपरत्वम्। हलादिः शेषः dropped $D_3$. ४. हलादिशेषः N, $D_4$. ५. °समुदायस्य संपदो $Bc_2$, $Dc_3$. ६. विकारेष्वपवादा $Bc_2$. ७. विज्ञेयम् $Bc_2$ ८. इति लुक्। $Dc_1$. ९. चकाराद्व्ययत्वम् $Bc_2$. १०. Dropped $Bc_3$.

## द्विर्वचनेचि ॥१।१।५९॥

रूपातिदेशोयम्।[1] द्वित्वनिमित्तेचि योजादेशः स स्थानिवत् स्यात् द्वित्वे कर्तव्ये इति[3] साच्कत्वात् द्वित्वम् । इन्द्रांचक्रतुः । इंद्रांचक्रुः ।

---

द्विर्वचने । द्वित्वस्य निमित्तं योच् तस्मिन् परतः । रूपातिदेश इति । स च नियतकालः क्रियते । कृते द्वित्वे पुनरादेशरूपमेवावतिष्ठते । ननु च 'द्विर्वचनेचि' इत्युच्यते कथं पुनरर्थद्वयं लभ्यते । द्वित्वनिमित्त इति द्वित्वे कर्तव्ये इति च । उच्यते । द्विर्वचनं च द्विर्वचनं चेत्येकशेषात् । तथा च भाष्ये उक्तम् । एकशेषनिर्देशात् 'एकशेषनिर्देशोयम्' इत्यादि । भर्तृहरिणाप्युक्तम् ।

'तथा द्विर्वचनेचीति तन्त्रोपादितलक्षणः ।
एकशेषेण निर्देशो भाष्य एव प्र[illegible]तः' ॥ इति ।

स्थानिवद्भावप्रयोजनान्यल्लोपणिलोपयण[illegible]वायावत्वोत्वादेशाः । द्विर्वचने कर्तव्ये किम् । जग्ले । भावे लिट् । अत्र [illegible]श्रवणमाकारस्य न । परेण सह 'वृद्धिरेचि' इति वृद्धिरपि न । द्विर्व[illegible]चननिमित्त इति किम् । दुद्यूषति । ऊठि यणादेशो न स्थानिवत् । अचि [illegible] किम् । [illegible]ध्मीयति । देध्मीयते 'ईघ्राध्मोः' इतीत्वत् । यङि द्वित्वे कार्ये [illegible] स्थानिवत् स्यात् । इति साच्कत्वाद् द्वित्वमिति । ईन्दांचक्रतुरित्यत्र[10] द्वित्वनिमित्ते अतुसि ऋकारस्य यणादेशो जातः स 'लिटि–' इति द्वित्वे कर्तव्ये स्थानिवत् । ततो द्वित्वम् । ईन्दांचक्रतुः[11] । 'उरत्' । 'कुहोश्चुः' ।

---

१. After it—नियतकालकृते द्विर्वचने पुनरादेशिरूपमेवावतिष्ठते । C. $B_1$ (°रादेशरूप° C). २. द्वित्वे कर्तव्ये स्थानिवत् स्यात् P. ३. Dropped from इति to द्वित्वम् P. ४. साच्कस्य $D_4$. ५. Dropped $D_4$. ६. नथा $Dc_1$, ७. महाभाष्ये $Dc_3$. ८. °पायादिलक्षणः $Dc_3$. ९. °लक्षणम् $Bc_2$. १०. इन्दां कृ अतुस् इत्यत्र $Bc_2$. ११. इन्दां कृ कृ उस् $Dc_3$.

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि[1] ॥७।२।१३॥

क्रादिभ्य एव लिटि इण् न स्यात् । अन्यस्मादनिटोपि स्यात् ।

इन्दांचकर्थ । वा णित्त्वम् । इन्दांचकार । इन्दांचकर । इन्दांचकृव । इन्दांचकृम । इन्दांबभूव । 'अत आदेः' ।[2] इन्दामास । विधानसामर्थ्यादस्तेर्भूभावो न[3] ॥[4]

---

कृसृ । डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । भृञ् भरणे । वृञ् वरणे[5] । वृङ्[6] संभक्तौ । ष्टुञ् स्तुतौ । द्रु गतौ । स्रु गतौ । श्रु श्रवणे । क्रादीनाम् 'एकाच उपदेशे--' इति प्रकृत्याश्रये इट्प्रतिषेधे सिद्धे वृङ्वृञोस्तु प्रत्ययाश्रये 'श्र्युकः किति' इति निषेधे सिद्धे पुनरारम्भो नियमार्थः । सिद्धे सत्यारम्भो नियमार्थ इति कृत्वा इत्येतन्मनसि कृत्वाह । क्र्यादिभ्य एवेत्यादि ।

इन्दांचकर्थेति । गुणो[7] रपरः[8] । स्थानिवत्त्वम्[9] । द्वित्वम् । अत्वम् । चुत्वम् । इन्दांचकृथुः । इन्दांचक्र । वा णित्त्वमिति । उत्तमे 'णलुत्तमो वा' इत्यनेन । इन्दांचकार । इन्दांचकर । पूर्ववत् प्रक्रिया । इन्दांचकृव । इन्दांचकृमेति कित्त्वाद्गुणाभावः । इन्दांबभूवेति । भुवोनुप्रयोगो लिट्परस्य । द्वित्वम् । ह्रस्वः । 'भवतेरः' । 'अभ्यासे चर्च' । 'इन्धिभवतिभ्यां च' इति कित्त्वाद्गुणाभावः । 'भुवो वुक्' इति वुक् । इन्दांबभूवतुरित्यादि । इन्दामासेति । अस्तेर्लिट्परस्यानुप्रयोगः । ननु चासेति[10] प्रयोगो न घटते । अस्तेर्भूभावस्य विहितत्वादित्याशङ्क्याह । विधान-सामर्थ्यादिति । इन्दिता । इन्द्यात् । इन्दिष्यति । ऐन्दिष्यत् ।

---

१. लिटि C, $D_3$. २. After it— 'तस्मान्नुड् द्विहलः' इति न नुट् द्विहलत्वाभावात् C, $D_1$, $D_4$. ३. नास्ति N. ४. After it—ऐन्दीत् । इन्द्यात् । इन्दिता । इन्दिष्यति । ऐन्दिष्यत् $B_2$. ५. आवरणे $Bc_2$. ६. वृञ् $Dc_3$. ७. गुणः । अण् $Bc_2$. ८. रपरत्वम् । $Dc_3$. ९. °वत्त्वाद् द्वित्वम् । $Dc_3$. १०. चासरूप° $Bc_2$; चासेति रूपं $Dc_3$.

णिदि कुत्सायाम् ।[1]

**वा निंसनिक्षनिन्दाम् ॥८।४।३३॥**

उपसर्गस्थान्निमित्तादेषां णत्वं वा स्यात् ॥ प्रणिन्दति । प्रनिन्दति ।

उख गतौ । ओखति ।[2] औखत् । औखीत् । उपधागुणः । द्वित्वम् । ह्रस्वः ॥

---

णिदि । 'णो नः' । 'इदितो नुम् धातोः' । निन्दति । निन्देत् । निन्दतु । अनिन्दत् । अनिन्दीत् । निनिन्द । निनिन्दतुः । निन्दिता । निन्द्यात् । निन्दिष्यति । अनिन्दिष्यत् ।

**वा निंस**[3] । णिसि चुम्बने । णिक्ष रोषणे[4] । णिदि कुत्सायाम् । णोपदेशत्वादेषां नित्ये णत्वे प्राप्ते विकल्पः । **प्रणिन्दति** । **प्रनिन्दतीति** । लिट् । तिप् । शप् ।

**उख** । **ओखतीति** । शप् । उपधागुणः । ओखेत् । ओखतु । औखदिति । लङ् । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । औखीदिति लुङ् । 'च्लेः सिच्'[5] । उपधागुणः । इट् । इकार-लोपः । 'अस्ति—' इतीट् । 'इटः—' इति सवर्णदीर्घः । आडागमः । वृद्धिः । उपधागुण इति । लिटि णलि 'पुगन्तलघूपधस्य च' इत्यनेनेत्यर्थः । **द्वित्वमिति** । 'लिटि—' इत्यादिना । **ह्रस्व इति** । 'ह्रस्वः—' इत्यनेन । स च 'एच इग्घ्रस्वादेशः' इत्योकारस्य उकार इति भावः । एवं उ ओख अ इति स्थिते ।

---

१. After it—निन्दति । निन्देत् । निन्दतु । अनिन्दत् । अनिन्दीत् । अनिन्दिष्टाम् । निनिन्द । निन्दिता । निन्द्यात् । निन्दिष्यति । अनिन्दिष्यत् । $B_2$. २. After it—ओखेत् । ओखतु । $D_1$, $D_2$, $D_3$. ३. णिंस $Bc_2$, $Dc_3$. ४. रोषे $Bc_2$. ५. च्लिः । सिच् । $Bc_2$.

**अभ्यासस्यासवर्णे ॥६।४।७८॥**

अभ्यासस्य इउवर्णयोरियङुवङौ स्तः असवर्णे अचि ॥ उवोख । ऊखतुः ।[1]

अञ्चु गतिपूजनयोः ।[2] आनञ्च । आनञ्चतुः ।

**नाञ्चेः पूजायाम् ॥६।४।३०॥**

इति नलोपाभावः । अञ्च्यात् । गतौ तु अच्यात् ।

म्रुचु गतौ ।

---

**अभ्यासस्य** । ननु चात्रोकारस्य 'अचः परस्मिन्—' इति स्थानिवद्भावत्वादुवङा न भवितव्यम् । न अनादिष्टादचः पूर्वस्य विधौ कार्ये स्थानिवत्त्वमिष्यते । अयं चाभ्यास आदिष्टादचः पूर्वः । **उवोखेति** । ननु चात्र गुणे कृते 'इजादेः—' इत्यामा भाव्यम् । मैवम् । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति लिट्संनिपातेन जातो गुण आमुद्वारा तद्विघातं न करोतीति न स्यादाम् । **ऊखतुरिति** । द्वित्वं सवर्णदीर्घः । ऊखुः । उवोखिथ । ओखिता । उख्यात् । ओखिष्यति । औखिष्यत् ।

**अञ्चु** । अञ्चति । अञ्चेत् । अञ्चतु । आञ्चत् । आञ्चीत् । **आनञ्चेति** । परोक्षे लिट् । णल् । द्वित्वम् । 'अत आदेः' इति दीर्घः । 'तस्मान्नुड् द्विहलः' इति नुट् । अञ्चिता । अञ्च्यात् । आञ्चिष्यति । आञ्चिष्यत् ।

**म्रुच** । म्रोचति । म्रोचेत् । म्रोचतु । अम्रोचत् ।

---

१. After it—ओखिता । उख्यात् $D_1$; उख्यात् । ओखिता । ओखिष्यति । औखिष्यत् । $B_2$. २. Before it—अञ्चति । अञ्चेत् । अञ्चतु । आञ्चत् $B_2$.

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ३।१।५८॥

एभ्यश्च्लेरङ्[1] वा स्यात् परस्मैपदेषु[2] ॥ अम्रुचत् । अम्रोचीत् । एवं म्लुचुग्रुचुग्लुचुग्लुञ्चु[3][4] ।

आछि आयामे । [5]आञ्छतेर्नुड् वेति केचित् । आनाञ्छ[6] । आञ्छ । हुर्छा कौटिल्ये ।

---

जॄस्तम्भु । जॄष् वयोहानौ । स्तम्भुः सौत्रो धातुः । म्रुचुम्लुचु गतौ । ग्रुचुग्लुचु स्तेयकरणे । ग्लुञ्चु गतौ । टुओश्वि गतिवृद्ध्योः । अम्रुचदिति । ङित्त्वाद् गुणाभावः । अम्रोचीदिति । अङभावपक्षे रूपम् । सिच्[7] । इट् । इटि सलोपः । गुणः । अट् । एवमित्यादि । एवमनेन प्रकारेण म्लुचादीनां रूपाणि ज्ञेयानीत्यर्थः । अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् । अग्लोचीत् । अग्लुञ्चत् । अग्लुञ्चीत् । ननु ग्लुचग्लुञ्चोरन्यतरोपादानेपि रूपं त्रयं स्यात् । सत्यम् । अर्थभेदात्तु द्वावप्युपात्तौ । केचिदाहुः । द्वयोरुपादानसामर्थ्यात् ग्लुञ्चेर्नलोपो न स्यात् अग्लुञ्चदिति । जॄस्तम्भोरग्रे कथयिष्यते रूपम् । मुम्रोच । म्रोचिता । म्रुच्यात् । म्रोचिष्यति । अम्रोचिष्यदिति ।

आछि । इदित्वान्नुम् । आञ्छति । आञ्छेत् । आञ्छतु । आञ्छत् । आञ्छीत् । आञ्छतेरिति । तस्माद्ग्रहणान्नुट् न प्राप्नोति । 'अत आदेः' इति अत्र तपरग्रहणात् तेन दीर्घाभावात् स वेति केचिदाहुरित्यर्थः । तथोक्तं मुग्धबोधे । 'स्यान्तादादॄदाद्यभोः खेरान् ठ्यां वा त्वाञ्छेः' इति । आञ्छिता । आञ्छ्यात् । आञ्छिष्यति । आञ्छिष्यत् । हुर्छा ।

---

१. °रङ्गादेशः $D_4$. २. Dropped $N_1$, $D_1$, $D_3$, $D_4$. ३. स्रुचु $D_3$. ४. °श्विप्रभृतयः $B_2$. ५. $B_1$ has आछत् । आञ्छत् । केचित् आनाञ्छ । आछ । for आञ्छते° .. आञ्छ ; आञ्छतेर्द्विहलो नुडिति $B_2$. ६. आञ्छ । आनाञ्छ । $D_3$. ७. च्लिः । सिच् $Bc_2$. ८. अग्लुचत् । अग्लोचीत् । अग्लुञ्चत् $Bc_2$. ९. Before it—आनाञ्छ । आञ्छ । $Bc_2$.

उपधायां च ॥८।२।७८।

धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत[1] इको दीर्घः स्यात् ॥ हूर्छति । अ[3]हूर्छीत् । जु[4]हूर्छ ।

वज गतौ ।[5]

न शसददवादिगुणानाम् ॥६।४।१२६॥

शशेर्ददेर्वकारादीनां गु[6]णभूतस्य चाकारस्य एत्वमभ्यास-[7]लोपश्च न स्तः[8] ॥

---

उपधा । धातोः । 'र्वोरुपधाया दीर्घ इकः' 'हलि च' इत्यनुवर्तते । उपधायामिति षष्ठीद्वि[9]वचनस्य स्थाने सप्तम्येकवचनम् । तच्च र्वोर्विशेषणम् । प्रकृतं तूपधाग्रहणमिति इको विशेषणम् । तत्तु र्वपेक्षया पूर्वत्वमाह इत्येतत् सर्वं चेतसि कृत्वाह । धातोरित्यादि । हलि किम् । चिरिणोति । चतुर्यितेत्यत्र बहिरङ्गत्वेनासिद्धत्वात् अल्लोपस्य धातोरुपधाभूतो रेफो न । [10]हूर्च्छति । हूर्च्छेत् । हूर्च्छतु । अहूर्च्छत् । अहूर्च्छीत् । जुहूर्च्छ । हूर्च्छिता । हूर्च्छ्यात् । हूर्च्छिष्यति । अहूर्च्छिष्यत् ।

वज । वजति । वजेत् । वजतु । अवजत् । अवाजीत् । अवजीत् । ववाज ।

न शस । शस हिंसायामिति केचित् । केचित्तु शस प्लुतगताविति । दद दाने । गुणभूतस्य चाकारस्येति । गुणशब्देन भावितस्येत्यर्थः ।

---

१. °परत: D3. २. Dropped D1. ३. P, N, C, and B2 drop अहूर्छीत् । जुहूर्छ ; अहूर्छत् । जुहूर्छ । हूर्छिता D1; dropped D2, D3. ४. Dropped D3; after it—हूर्छिता D4. ५. After it—वजाति । वजेत् B2. ६. गुणभूतस्याकार° D3. ७. एत्वाभ्यासलोपौ न स्तः D2, D3, D4. ८. स्यात् D1. ९. द्विवचनस्थाने Bc2. १०. Dropped Dc1.

ववजतुः । ववजिथ ।

व्रज गतौ । वदव्रजेति वृद्धिः । अव्राजीत् ।

अज गतौ क्षेपणे च ।

अजेर्व्यघञपोः ॥२।४।५६॥

अजेरार्धधातुके वीत्यादेशः स्यात् न तु घञपोः परतः ॥ वलादावार्धधातुके वेष्यते ।

एकाच उपदेशेनुदात्तात् ॥७।२।१०॥

उपदेशे यो धातुरेकाच् अनुदात्तस्ततः परस्य वलादरार्धधातुकस्येड् न स्यात् ।

---

ववजिथेति । 'आर्धधातुकस्येड् वलादेः' । वजिता । वज्यात् । वजिष्यति । अवजिष्यत् ।

व्रज । व्रजति । व्रजेत् । व्रजतु । अव्रजत् । अव्राजीत् । 'वदव्रज—' इति वृद्धिः । वव्राज । व्रजिता । व्रज्यात् । व्रजिष्यति । अव्रजिष्यत् ।

अज । अजति । अजेत् । अजतु । आजत् ।

अजेः । आर्धधातुक इति 'आर्धधातुके' इत्यस्मादधिकारसूत्राल्लभ्यते । आर्धधातुके विवक्षित इत्यर्थः ।

एकाचः । नास्त्युदात्तो यस्मिन् सोनुदात्तः । अथवा अनुदात्ताच्कत्वात् समुदाय एवानुदात्त उच्यते । उपदेशः प्रकृतिपाठः । उपदेश इति मध्ये पठितत्वादुभाभ्यामेकाजनुदात्ताभ्यां मध्यप्रदीपिकान्यायेन संबध्यत इत्यभिप्रेत्याह । उपदेशे यो धातुरित्यादि । के पुनरुपदेशेनुदात्ताः । ये तथा पठ्यन्ते । तानेव विस्पष्टार्थं पद्यैर्निबध्नाति । तत्र प्रथममजन्तेष्वनुदात्तानुपदिशति ।

१. वजति । अवजीत् । अवाजीत् । ववाज । ववजतुः । ववजिथ । $D_1$; अवाजीत् । अवजीत् । वजिता । वज्यात् । वजिष्यति । अवजिष्यत् $B_3$.
२. Dropped $B_2$, $D_2$, $D_3$, $D_4$. ३. मध्ये $Dc_3$. ४. °दात्तान्निर्दिशति $Bc_2$.

अदूदृदन्तरुस्नुक्ष्णुशीयुणुक्षुश्विडीश्रि[2]भिः ।
वृङ्[3]वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोनिटः ॥ १ ॥
वसतिः शक्लृघसॢरभ्यमभूलभ्यमो रमिमन्यती ।
नमिर्हनिगमी दिग्धि[4]र्दुह्मिह्नह्वह्लिहो रुहिः ॥ २ ॥
दहिर्दिशिदृशी दंशिस्पृशिमृशविशरुशिक्रुशः ।
[5]लिशरि[6]शूसिध्यतिरुधराधसाधयुधः शुध्यतिबुध्यती ॥३॥

अदूदृ इत्यादि । एकाचः स्वरान्ता धातवोनिट इत्यनुदात्ता पठ्यन्ते । इत्यनिटो[8] भवन्तीत्यर्थः । अकारान्ता ऊकारान्ता ऋकारान्ताः । रु शब्दे । ष्णु[9] प्रस्रवणे । क्ष्णु तेजने । शीङ् स्वप्ने । यु मिश्रणे । णु स्तुतौ । टुक्षु शब्दे । टुओश्वि गतिवृद्ध्योः । डीङ् विहायसा गतौ । श्रिञ् सेवायाम् । वृङ् संभक्तौ । वृञ् आवरणे । एभिर्विना एतान् वर्जयित्वेत्यर्थः । इदानीं हलन्तेष्व[10]नुदात्तानुपदिशति । वसतिरित्यादि । वस निवासे । शपा निर्देशात् । शक्लृ शक्तौ । घस्लृ अदने इति प्रकृत्यन्तरमस्ति । रभ राभस्ये । यभ मैथुने । डुलभष् प्राप्तौ । यमु उपरमे । रमु क्रीडायाम् । मन[11] ज्ञाने । दैवादिकः । श्यना निर्देशात् । णमु प्रह्वत्वे[12] शब्दे च । हन हिंसागत्योः । गम्लृ गतौ । दिह उपचये । दुह प्रपूरणे । मिह सेचने । णह बन्धने । वह प्रापणे । लिह आस्वादने । रुह जन्मनि प्रादुर्भावे[13] । दह भस्मीकरणे । दिश अतिसर्जने । दृशिर् प्रेक्षणे । दंश दशने । स्पृश संस्पर्शने[14] । मृश आमर्शने । विश प्रवेशने । रुश हिंसायाम् । क्रुश आह्वाने । लिश अल्पीभावे । रिश हिंसायाम् । [15]षिधु संराद्धौ । दैवादिकः । श्यना निर्देशात् । रुधिर् आवरणे । राध साध संसिद्धौ । साध[16] संवृद्धौ च । युध संप्रहारे । शुध शौचे । बुध अवगमे दिवादिरेव ।

१. मु $D_1$, $D_2$, $D_3$, $N_1$. २. डांङ्श्रिभिः $B_1$, P : C. ३. वृञ्वृङ्भ्यां $D_2$. ४. दुह् $D_1$, $B_2$. ५. रिश् $D_2$. ६. रिश्लिश् $B_2$. ७. विश् $D_2$. ८. इत्यनिटोनुदात्ता $Bc_2$. ९. स्नु $Bc_2$. १०. °ष्वनिट उप° $Bc_2$. ११. मनु $Dc_3$. १२. प्रह्वीभावे $Bc_2$. १३. °भावे च $Bc_2$. १४. संस्पर्शे $Bc_2$, $Dc_3$. १५. सिधु शुद्धौ $Bc_2$. १६. राध वृद्धौ च $Bc_2$, $Dc_3$.

क्रुधिक्षुधी व्यधिर्वन्धिः शुष्यतिः पुष्यतिः श्लिषिः ।
दुषिद्विषी विष्पिषौ त्विषतुषौ शिष् कृषिकर्षती ॥ ४ ॥
तप्तिप्यापिवपिस्वप्लिप्लुपस्तृप्यतिदृप्यती ।
सृप्शपौ छुप्क्षिपौ स्कन्दिर्हदिच्छिदिभिदिक्षुदः ॥५॥
अदिः शदिसदी खिद्नुदतुदः स्विद्यतिपद्यती ।
विनत्तिर्विद्यतिः पच्वच्विचिरिच्प्राछिरञ्जयः ॥ ६ ॥

श्यना निर्देशात् । क्रुध कोपे । क्षुध बुभुक्षायाम् । व्यध ताडने । बन्ध बन्धने । शुष शोषणे । पुष पुष्टौ । श्लिष आलिङ्गने । श्लिषु दाहे । दुष वैकृत्ये । द्विष अप्रीतौ । विषु सेचने । विष्लृ व्याप्तौ । पिष्लृ संचूर्णने । त्विष दीप्तौ । तुष तुष्टौ । शिष्लृ विशेषणे । कृष विलेखने । तौदादिको भौवादिकश्च । कृषिकर्षतीति निर्देशात् । तप संतापे । तप ऐश्वर्ये । तिपृ क्षरणे । आप्लृ व्याप्तौ । टुवप बीजतन्तुसन्ताने । ञिष्वप् शये । लिप लेपे । लुप च्छेदे । तृप प्रीणने । दृप हर्षविमोचनयोः । तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थम् । इट् तु तयो रधादित्वेन विकल्प्यते । तुदादिषु यौ तयोर्ग्रहणं न । श्यनादिनिर्देशात् । सृप्लृ गतौ । शप उपालम्भने । शप आक्रोशे । छुप स्पर्शे । क्षिप प्रेरणे । स्कन्दिर् गतिशोषणयोः । हद पुरीषोत्सर्गे । छिदिर् द्वैधीकरणे । भिदिर् विदारणे । क्षुदिर् संप्रेषणे । अद भक्षणे । शद्लृ शातने । षद्लृ विशरणगत्यवसादनेषु । खिद दैन्ये । खिद परिघाते । नुद प्रेरणे । तुद व्यथने । ञिष्विदा गात्रप्रक्षरणे । दिवादिः । श्यना निर्देशात् । न भ्वादिः । पद गतौ । विद विचारणे । विद सत्तायाम् । श्नम्श्यन्भ्यां निर्देशो वेत्तिविन्दत्योर्निवृत्त्यर्थः । डुपचष् पाके । वच परिभाषणे । 'ब्रुवो वचिः' । विचिर् पृथग्भावे । रिचिर् विरेचने । प्रच्छ ज्ञीप्सायाम् । रञ्ज

१. द्विषौ $D_3$. २. हदि $D_1$, $D_4$. ३. श्यनोक्तत्वात् $Bc_2$. ४. °लम्भे $Bc_2$. ५. हदि $Bc_3$.

निजिः सिचिमुची भञ्जिभजिभृज्जतियज्त्यजः ।
युजिः सञ्जिरुजी स्वञ्जिसृजिमस्जिभुजो विजिर् ॥ ७॥
इमे हलन्तेष्वनिटः इत्यनिट्धातुसंग्रहः ॥[४]

**सिचि वृद्धिः परस्मैपदेषु ॥७।२।१॥**

सिचि परस्मैपदे परे इगन्तस्याङ्गस्य वृद्धिः स्यात् ॥

---

रागे । णिजिर् शौचपोषणयोः । षिचिर् क्षरणे । मुच्लृ मोक्षणे ।[६] भञ्जो आमर्दने । भज सेवायाम् । भ्रस्जो पाके । यज देवपूजादौ । त्यज हानौ । युजिर् योगे । युज समाधौ । षञ्ज सङ्गे । रुजो भङ्गे । ष्वञ्ज परिष्वङ्गे । सृज विसर्गे । टुमस्जो शुद्धौ । भुज कौटिल्ये । विजिर् विवेके । हलन्तेषु मध्ये इमे अनिटः[८] । अनिट इत्यनुदात्तत्वोपलक्षणम् । ततश्चामादिमन्यत् कार्यं स्यात् । इत्यनिट्धातुसंग्रह इति । अनुदात्तधातुसंग्रहः समाप्त इत्यर्थः ।

**सिचि** । अत्र सिचि परस्मैपदेष्विति द्वे अपि परसप्तम्यौ । तत्र सिचोऽङ्गापेक्षं परत्वम् । परस्मैपदानां सिजपेक्षम् । तत्रेको गुणवृद्धीत्युपतिष्ठते । ततश्चेकोऽङ्गस्य विशेषणात् तदन्तविधिः स्यादित्यभिप्रेत्याह । **सिचीत्यादि** । अन्तरङ्गमपि गुणमेषा वचनाद्बाधते । न्यनुवीत् न्यधुवीदित्यत्र कुटादित्वात् ङित्त्वेन निषिद्धायां वृद्धौ उवङादेशः । ननु यथा गुणो बाध्यते एवं निषेधोपि बाध्यः । मैवम् । येन नाप्राप्ते यो विधिः स तस्य बाधकः । गुणे च नाप्राप्ते वृद्धिरारभ्यते ।

---

१. सजि $D_1$; स्वञ्जि $D_2$; स्वजिसजीसञ्जि $B_2$. २. सञ्जि $D_2$. ३. मस्ज $D_1$. ४. After this $B_1$, $B_2$, $D_2$, $D_4$ have—

रधादित्वाद्विकल्पेप्यत्रोपात्तस्तृपिदृपिः ।
अनुदात्तत्वमाख्यातुं तच्चाप्यागमसिद्धये ॥ (तच्चामागमसिद्धये ॥ $D_2$, $D_4$).

५. इगन्ताङ्गस्य C; इगन्तस्य (अङ्गस्य dropped) $D_1$. ६. After it—भज सेवायाम् $Dc_3$. ७. षञ्ज $Bc_2$, $Dc_3$. ८. Dropped $Bc_2$. ९. After it—अनुदात्ता इत्यर्थः $Bc_2$. १०. °दात्तत्वो° $Bc_2$, $Dc_3$. ११. अत्रे° $Bc_2$.

अवैषीत् । आजीत् । विवाय । एरनेकाचेति यण् । न पदान्तेति सूत्रेण दीर्घयलोपयोर्लोपाजादेश एव न स्थानिवत् ।

---

निषेधे तु प्राप्ते चाप्राप्ते चेति न तस्य बाधिका । अवैषीदिति । लुङ् । च्लिः । तस्य सिच् । अजेर्वीआदेशः । स च एकाच्‌ः । स्वरान्तत्वेनानुदात्त इतीट्प्रतिषेधः । वृद्धिः । अडागमः । 'इतश्च' इतीकारलोपः । 'अस्तिसिचोपृक्ते' इति ईट् । षत्वम् । अवैष्टामित्यादि । आजीदिति । व्यभावपक्षे रूपम् । अनुदात्तत्वाभावादिट् । पूर्ववदीट् । 'इट ईटि' इति सलोपः । आजिष्टामित्यादि । विवायेति । लिट् । वी । णल् । 'अचो ञ्णिति'। 'एचोऽयवायावः' । 'एरनेकाचः—' इति यण् । विव्यतुः इति । वि वी अतुस् इत्यत्र । ननु चात्र परत्वात् द्विर्वचनात् पूर्वमियङादेशेन भाव्यम् । मैवम् । पूर्वविप्रतिषेधात् द्वित्वमेवादौ स्यात् । अथवा पदादेशेन यणादेशेन भाव्यमित्युत्सर्गत्वादियङ् द्वित्वात्पूर्वं न प्रवर्तते । अथवा सतीयङि तस्य स्थानिवत्वात् द्वित्वात् द्वित्वम् । तत्र कृते अपवादत्वादियङं बाधित्वा यणेव स्यात् । ननु विव्य् अतुस् इत्यत्र 'उपधायां च' इति दीर्घत्वं प्राप्नोति । अथोच्यते । 'अचः परस्मिन्—' इति यणः स्थानिवत्वात् वकारस्याच्परत्वान्नेति । तन्न । 'न पदान्त—' इति दीर्घविधौ स्थानिवत्वनिषेधात् । इति शङ्कापरिहारार्थमाह । न पदान्तेत्यादि । 'न पदान्त—' इति सूत्रेण दीर्घविधौ यलोपविधौ च क्रियमाणे लोप एव योजादेशः स स्थानिवन्नान्यः ।

---

१. After it—अवैष्टाम् । अवैषुः । $B_2$. २. Before it—अचो ञ्णिति । $D_4$. ३. यणि कृते C. ४. स्थानिवदन्यो भवति । स्थानिवत्त्वेन अचः परस्मि° &c. $B_2$. ५. °र्वीभावः $Bc_2$. ६. °निषेधः $Bc_2$. ७. Dropped $Dc_3$ ८. अथवापवादेन यणादेशेन भाव्यम् । $Dc_3$.

तेन अचः परस्मिन्निति यणः स्थानिवत्त्वाद्वकारस्याच्परत्वं तेन उपधायां चेति न दीर्घः । विव्यतुः । विव्युः ।

अचस्तास्वत् थल्यनिटो नित्यम् ॥७।२।६१॥

अजन्तो यो धातुस्तासौ नित्यमनिट् ततः परस्य थल इट् न स्यात् ॥

---

तेन कारणेन । 'अचः परस्मिन्–' इति सूत्रेण यणः स्थानिवत्त्वात् वकारस्याच्परत्वम् । तेन 'उपधायां च' इति दीर्घो न । हल्परत्वाभावादित्यर्थः ।

अचः । क्रादिनियमादिटि प्राप्ते अजन्तात् तासौ नित्यमनिट-स्थलि प्रतिषेधो विधीयते । अचः किम् । बिभेदिथ । तास्यनिटः किम् । बभूविथ । अयं किति 'श्र्युकः किति' इति नित्यमनिट् । तासाविव तास्वदिति ङ्र्वति निर्देशः किमर्थः । उच्यते । योपि तासावसन् असत्त्वाच्च नित्यानिट् तस्य थलि निषेधाभावार्थः । जघसिथ । अदादेशो घसिस्तासौ न । अतः स्थानिवत्त्वात् 'इडत्त्यर्त्ति—' इति इट् । थलीति किम् । विव्यिव । विव्यिम । अनिड्ग्रहणं नित्यमित्यतेन विशेषणार्थम् । नित्यग्रहणं किम् । धूञ् । दुधविथ । षिधू । सिषेधिथ । तासौ वेट्स्थलि नित्यमिट् । एतच्च यावान् कश्चिदिडभावो निषेधकृतो विकल्पकृतो वा स सर्वः क्रादिसूत्रेण नियम्यत इति पक्षे । यदा तु क्रादीनामेवेट् न स्यादिति नियमान्निषेध एव सर्वो निवर्तते स्वरत्यादिलक्षणस्तु विकल्पः स्यादेवेति पक्षस्तदा थल्येव वेट् ।

---

१. परस्मिन् पूर्वविधाविति $D_1$. २. नित्यानिट् $D_3$. ३. तास्यनिडिति किम् $Bc_2$. ४. °भावार्थम् $Bc_2$. ५. तयोर्निवर्तते $Dc_1$, $Dc_4$. ६. थल्यापि $Bc_2$, $Dc_3$.

## ऋतो भारद्वाजस्य ॥७।२।६३॥

तासौ नित्यानिट्[1] ऋदन्तस्यैव थलि नेट् भारद्वाजस्य मतेन । तेन पक्षे इटोनुज्ञा । विवेथ । विवयिथ ॥[2]

क्षि क्षये । क्षयति । अक्षैषीत् । चिक्षाय । अचिश्नुधात्विती यङ् । चिक्षियतुः ।

---

ऋतः । ऋदन्तानां मध्ये वृङ्वृञावुदात्तौ । तत्रापि वृङः थल् न संभवत्यात्मनेपदित्वात् । वृञस्तु ववर्थेति निपातनाद्भाषायामिटा भाव्यम् । तस्मात्तयोरिट्निषेधार्थं तावदेतन्न । अन्ये तु ऋदन्तास्तासौ नित्यानिट इत्यचस्तास्वदित्यनेनैव निषेधः सिद्धः । ननु परत्वाद्गुणे रपरत्वे च कृते अनजन्तत्वान्न सिध्यति । मैवम् । 'अचस्तास्वद्— ' इत्यत्रोपदेश इत्यस्यापकर्षात् सिद्धो निषेध इति सिद्धे सत्यारम्भो नियमार्थ एतन्मनसि कृत्वाह । तासावित्यादि । तपरकरणमॄकारान्तनिवृत्त्यर्थम् । वता । अजिता । वीयात् । वेष्यति । अजिष्यति । अवेष्यत् । आजिष्यत् ।

क्षि । अनिट् । क्षयति । क्षयेत् । क्षयतु । अक्षयत् । अक्षैषीदिति । लुङ् । च्लिः । '[10]च्लेः सिच् ' । 'एकाच– ' इतीट्प्रतिषेधः । 'सिचि वृद्धिः— ' इति वृद्धिः । चिक्षायेति । [11]लिट् । णल् । द्वित्वम् । 'हलादिः शेषः' । 'कुहोश्चुः ' । चिक्षयिथ । चिक्षेथ । क्षेता ।

---

१. नित्यानिट् $D_3$, $B_1$, P, C. २. After this—आजिथ । विव्यिथ । आजिव । वेता । अजिता । वीयात् । $B_1$, $D_2$; $B_2$ has अनुज्ञातपक्षे । आजिथ; । वीयात्; $D_3$ has विवयिथ । विवेथ ।; वेता । वीयात् $D_4$. ३. °धातुभ्रुवामितीयङ् C, $D_1$. ४. निपातात् $Dc_3$. ५. Dropped $Dc_3$. ६. Dropped $Dc_3$. ७. इत्यपकर्षसिद्धो $Bc_2$. ८. इत्यभिप्रेत्याह । $Bc_2$, $Dc_3$. ९. तपरत्वम° $Bc_2$, $Dc_3$. १०. सिच् $Bc_2$. ११. परोक्षे लिट् । $Dc_3$.

अकृत्सार्वधातुकयोर्दीर्घः ॥७।४।२५॥

अकृद्यकारे असार्वधातुके च यकारेचो दीर्घः स्यात् ॥ क्षीयात् ।

कटे वर्षावरणयोः ।

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥७।२।५॥

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेश्च एदितश्च वृद्धिर्न

---

अकृत् । अकृदिति किम् । प्रस्तुत्य । परत्वाद्दीर्घेण तुको बाधः स्यात् । असार्वधातुके किम् । चिनुयात् । क्ङिति किम् । उरुया । उरुणेति प्राप्ते 'सुपां सुलुक्—' इति यादेशः । क्षेष्यति । अक्षेष्यत् ।

कटे । वृष्टावावरणे चार्थे । इतस्त्रयः सेटः । कटति । कटेत् । कटतु । अकटत् ।

ह्म्यन्त । हमयान्तस्येत्यादि । हकारमकारयकारान्तस्य धातोः । क्षणु हिंसायाम् । श्वस प्राणने । जागृ निद्राक्षये । टुओश्वि गतिवृद्ध्योः । णिप्रत्ययान्तस्य एकारेतश्च धातोरित्यर्थः । ह्म्यन्तक्षणश्वसामेदितां च 'अतो हलादेर्लघोः' इति विकल्पे प्राप्ते प्रतिषेधः । जागृणिश्वीनां तु सिचि वृद्धिः प्राप्ता सा च 'नेटि' इति न प्रतिषिध्यते । अन्तरङ्गत्वाद्धलन्तलक्षणाया एव वृद्धेः प्रतिषेधो 'नेटि' इति न पूर्वस्या' इति पूर्वमेव व्याख्यातम् । अथ णिश्विग्रहणं किमर्थम् । यतोन्तरङ्गत्वादत्र गुण एव स्यात् । गुणे च कृते यादेशस्ततो यकारान्तत्वादेव निषेधः स्यात् । मैवम् । सिचि वृद्धिरनवकाशप्रसङ्गात् स्यात् सर्वत्रान्तरङ्गत्वाद्गुणस्यैव प्राप्तत्वात् । अथवेदमेव णिश्विग्रहणं ज्ञापकं सिच्यन्तरङ्गं नास्तीत्यस्य । अथ जागृग्रहणं

---

१. असार्वधातुकयकारेचो P. २. Dropped $D_3$. ३. यकारे परे $D_4$. ४. हमयान्त्यस्य $B_1$. ५. च dropped $D_3$, $D_4$. ६. बाधा $Bc_2$. ७. अनन्तरत्वा° $Bc_2$. ८. इति तु $Bc_2$. ९. व्यथ न for किमर्थम् $Dc_3$.

स्यादिडादौ सिचि ॥ अकटीत् ।[१]

गुपू रक्षणे

**गुपूधूपविच्छिपणिपनिभ्य आयः ॥३।१।२८॥**

एभ्य आयप्रत्ययः स्यात् स्वार्थे ॥[२] उपधागुणः ।[३]

**सनाद्यन्ता धातवः ॥३।१।३२॥**

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः ॥

---

किमर्थम् । यतो 'जाग्रोविचिण्णल्ङित्सु' इति जागर्तेर्गुणो वृद्धेरपवादो विधीयते । स यथा ञिति णिति वृद्धिं बाधते तथा सिचि वृद्धिमपि बाधिष्यते । नैवम् । कृते गुणे 'अतो ल्रान्तस्य' इति प्राप्ताया[४] निषेधः । अथ गुणविधानसामर्थ्यादुत्तरभाविन्यपि वृद्धिर्बाध्यते यथा जागरयतीत्यत्रेति चेत् भवतु तर्हि मन्दमतीनां सुखप्रतिपत्त्यर्थं जागृग्रहणम् । अकटीदिति । लुङ् । च्ल्यादि । चकाट । कटिता । कट्यात् । कटिष्यति । अकटिष्यत् ।

गुपू । ऊँ इत् । गुपू धू । गुपू रक्षणे । धूप संतापे । विच्छ गतौ । पण व्यवहारे स्तुतौ च । पन च । उपधागुण इति 'पुगन्त-' इत्यादिना ।

सनाद्यन्ताः । सन् आदिर्येषां[५] ते सनादयः । सनादय अन्ते येषां ते समुदायाः । सनाद्यन्ता इति व्यधिकरणे बहुव्रीहिरित्यभिप्रेत्याह[६] । सनादय इत्यादि । प्रत्ययग्रहणपरिभाषैव पदसंज्ञायामन्तवचनेन[७] प्रतिषिद्धा

---

१. After it—चकाट । अत उपधाया वृद्धिः । कटिता । $D_4$. २. आयः प्रत्ययः $D_4$, P ; आयः C, $D_1$. ३. उपधाया गुणः C, $D_2$. ४. प्राप्तायां $Bc_2$, $Dc_2$. ५. आदित् $Bc_2$. ६. इति $Bc_2$. ७. मनेन प्रति° $Bc_2$.

शप्तिबादि । गोपायति ।

**आयादय आर्धधातुके वा ॥३।१।३१॥**

आर्धधातुकविवक्षायामायादयो वा स्युः ।

**अतो लोपः ॥६।४।४८॥**

अकारस्य लोपः स्यादार्धधातुके ॥ अगोपायीत् । ऊदित्वादिड्वा । [2]अगोपीत् । अगौप्सीत् । [3]अगौप्ताम् ।

---

पुनः प्रतिप्रसूयते अत्रान्तवचनेन । **शप्तिबादीति** । तिबादयश्च शप् च शप्तिबादि । 'अल्पाच्तरम्' इति शपः पूर्वनिपातः । सर्वोपि द्वन्द्वो विभाषयैकवद्भवतीति एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वाद्ध्रस्वत्वम् । **गोपायतीति** । वर्तमाने लट् । तिप् । कर्तरि शप् । अतो गुणो पररूपम् । गोपायेत् । गोपायतु । अगोपायत् ।

**आयादयः** । आर्धधातुके इतीयं विषयसप्तमी । आर्धधातुकविषयत्वं तद्विवक्षायां सत्यां बुद्धिस्थे तस्मिन् संभवति नान्यथेत्यभिप्रेत्याह । **आर्धधातुकविवक्षायामिति** । नित्यप्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुकविषये विकल्प्यते । तत्र यथायथं पश्चादार्धधातुकप्रत्यया भवन्ति । गुप्तिः गोपाया इत्यादयः ।

**अतः** । अत्र आर्धधातुक इतीयं विषयसप्तमी परसप्तमी चेष्यते तच्च यथास्थानं व्याख्यास्यामः । **अगोपायीदिति** । आयप्रत्ययपक्षे रूपम् । **ऊदित्वादिड्वेति** । आयप्रत्ययाभावे 'स्वरतिसूति—' इत्यादिना । **अगोपीदिति** । इट्पक्षे 'नेटि' इति वृद्धिप्रतिषेधः । **अगौप्सीदिति** । इडभावे 'वदव्रज—' इति वृद्धिः । **अगौप्तामिति** । वृद्धिः । तसस्ताम् । 'झलो झलि' इति सिचो लोपः । **अगौप्सुरित्यादि** ।

---

१. धातुत्वात् तिबादि $B_2$; शप्तिबादयः $B_1$, $D_1$, $D_2$, P, C. २. $B_1$, $B_2$, $D_2$ have अगोपीत् after अगौप्ताम्. ३. Before it—झलो झलि $D_4$. ४. नपूंसकत्वम् $Bc_2$, $Dc_3$ ५. °विषयत्वं तु $Bc_2$.

## कास्प्रत्ययादाममन्त्रे लिटि ॥३।१।३५॥

कास्[1]धातोः प्रत्ययान्तेभ्यश्च आम् स्याल्लिटि न तु मन्त्रे ॥ कृञोनुप्रयोगः । गोपायामास । जुगोप जुगोपिथ । गोपायिता । गोपिता । गोप्ता । गोपाय्यात् । गुप्यात् ।

---

कास् । अमन्त्रे इति विषयसप्तमी । मन्त्रे निषेधात् भाषायां ब्राह्मणे च भवति । ब्राह्मणं मन्त्रव्याख्याग्रन्थः । ननु नञिवयुक्तन्यायेन ब्राह्मण एव स्यात् । नैवम् । यदि हि भाषायां न स्याद् ब्राह्मण इत्येव[2] ब्रूयात् ।

कृञोनुप्रयोग इति । 'कृञ् चानुप्रयुज्यते लिटि' इति लिट्पराणां कृभ्वस्तीनामनुप्रयोग इत्यर्थः । गोपायामासेति । 'आमः' इति ले[3]र्लुक् । तत्रास प्रयुज्यते । द्वित्वम् । 'अत आदेः' । विधानसामर्थ्यादस्तेर्भूभावो न । जुगोपेति । आयप्रत्ययाभावपक्षे रूपम् । णल् । गुणः । द्वित्वम् । 'कुहोश्चुः' । जुगोपिथेति । इट् । नित्यम् । गोपायितेति । आयः । अनद्यतने लुट् । 'स्यतासी—' इति तासिः । 'आर्धधातुकस्येड् वलादेः' । 'अतो लोपः' । 'लुटः प्रथमस्य—' इति डा । टिलोपः । गोपितेति । आयाभावपक्षे रूपम् । 'स्वरति—' इति वेट् । गोप्तेति । इडभावे रूपम् । गोपाय्यात् । इत्यायपक्षे आशीर्लिङ् । यासुट् । इलोपः । 'स्कोः संयोग—' इति सलोपः । 'अतो लोपः' । गुप्यादिति । आयाभावे । गोपायिष्यति । गोपिष्यति । गोप्स्यति । अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् ।

---

१. कास्धातोः C. २. इत्येवं $Dc_1$, $Dc_4$. ३. लिट्लुक् $Bc_2$. ४. तत्राम् $Dc_3$. ५. प्रत्युद्यते $Bc_2$. ६. Dropped $Bc_2$. ७. Dropped $Bc_2$. ८. कलोपः $Bc_2$.

एवं धूप संतापे । धूपायतीत्यादि । तप संतापे । एकाजनुदात्तत्वान्नेट् । अताप्सीत् । अताप्ताम् । [1]तेपतुः ।

उपदेशेत्वतः ॥७।२।६२॥

धातुपाठेकारवतस्तासौ नि[2]त्यानिटः परस्य थलो नेट् स्या[3]त् ॥ ऋतो भा[4]रद्वाजस्येति पक्षे इट्[5] । तेपिथ । ततप्थ ।[6] चमु अदने ।

---

एवं धूपेति । गुपूवत् अस्यापि प्रक्रिया ज्ञेयेत्यर्थः[7] । धूपायतीत्यादि । 'गुपूधूप—' इत्यायः । अलघूपधत्वान्न गुणः । धातुत्वम् । तिप्[8] । पररूपम् । आदिशब्दात् धूपायेत् । धूपायतु । अधूपायत् । 'आयादय आर्धधातुके वा' । अधूपायीत् । अधूपीत् । धूपायामास । दुधूप । धूपायिता । धूपिता । धूपाय्यात् । धूप्यात् । धूपायिष्यति । धूपिष्यति । अधूपायिष्यत् । अधूपिष्यत् । तप[9] । अनिट् । तपति । तपेत् । तपतु । अतपत् । एकाजनुदात्तत्वान्नेडिति । 'एकाच उपदेश—' इत्यादिना । अताप्सीदिति । लुङ् । च्लिः । सिच् । 'वदव्रज—' इति वृद्धिः । 'अस्ति—' इतीट् । अट् । अताप्तामिति । 'झलो झलि' इति सलोपः । तताप । तेपतुरिति । 'अत एकहल्मध्ये—' इति एत्वाभ्यासलोपौ ।

उपदेशे । अनजन्तार्थमारम्भः । उपदेशे किम् । चकर्षिथ । अत्वतः किम् । बिभेदिथ । तपरत्वं किम् । रा[10]द्धा । रराधिथ । तास्वदित्येव । जिघृक्षति । जग्रहिथ । नित्यमनिडित्येव । अङ्क्ता । अञ्जिता । आनञ्जिथ । तेपिथेति । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । तेपिव । तेपिम । तप्ता । तप्यात् । तप्स्यति । अतप्स्यत् । चमु । इतो द्वौ सेटौ ।

---

१. P, $B_2$, $D_3$ have तताप before तेपतुः २. नित्यमनिटः $D_1$ ३ Dropped $D_3$. ४. भारद्वाजेति $D_3$, $D_4$. ५. After it—स्यात् $D_4$. ६. After this $B_1$, P, $B_2$, $D_2$ have—उपदेशग्रहणं किम् । चकर्षिथ ।. ७. आख्यातप्रक्रियेत्यर्थः $Bc_2$. ८. तिप् । शप् । $Bc_2$. ९. तप संतापे । $Dc_3$. १०. राद्धा dropped $Bc_2$.

**ष्ठिवुक्लमुचमां शिति ॥७।३।७५॥**

एषामचो दीर्घः स्यात् शिति । अत्र दैवादिकस्य क्लमो[1] ग्रहणम् । आचामति । आङ् किम् । चमति । विचमति । मान्तत्वान्न वृद्धिः । अचमीत् ।[2]

क्रमु पादविक्षेपे ।

**वा भ्राश[3]भ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः[4] ॥ ३।१।७०॥**

एभ्यः श्यन् वा स्यात् कर्तरि सार्वधातुके ॥ पक्षे शप । क्राम्यति[5] ।

---

ष्ठिवु । ष्ठिवु निरसने । क्लमु[6] ग्लानौ । चमु[7] अदने । आङ्पूर्वः । अत्र दैवादिकस्येति । तस्य हि 'शमामष्टानाम्' इति दीर्घः विहितः शपि न प्राप्नोतीत्ययमारम्भः । **आचामतीति** । शप् । आचामेत् । आचामतु । आचामत् । **मान्तत्वान्न वृद्धिरिति** । 'ह्यन्त—' इत्यादिना । **अचमीदिति** । लुङ् । चचाम । चेमतुः । चमिता । चमिष्यति । अचमिष्यत् ।

**क्रमु[8]** पादन्यासार्थे[9] ।

**वा भ्रास** । टुभ्राशृ[10] भ्लाशृ दीप्तौ । भ्रमु[11] अनवस्थाने । भ्रमु चलने । द्वयोरपि ग्रहणम् । क्रमु पादविक्षेपे । क्लमु[12] ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ । **क्राम्यतीति** । लट् । तिबादि । क्राम्येत् । क्राम्यतु । अक्राम्यत् ।

---

१. क्लमेर्ग्र° $D_2$. २. After it—चचाम । चम्यात् । चमिता । चमिष्यति । अचमिष्यत् $B_2$. ३. भ्रासभ्लास° $N_1$. ४. लशः $D_3$. ५. क्राम्यति $D_2$, $D_4$. ६. क्लम् $Dc_3$. ७. चम् $Dc_3$. ८. क्रम् $Dc_3$. ९. पादन्यासे अर्थे $Bc_2$, $Dc_3$. १०. टुभ्राश् भाशृ $Dc_3$. ११. भ्रम् $Dc_3$. १२. क्लम् क्लान्तौ $Dc_3$.

**क्रमः परस्मैपदेषु ॥७।३।७६॥**

क्रमो दीर्घः स्यात् शेपि परस्मैपदेषु ॥ क्रामति ।

**स्नुक्रमोरनात्मनेपदनिमित्ते ॥७।२।३६॥**

यत्रात्मनेपदनिमित्तं नास्ति तत्रैव स्नुक्रमोरिट् स्यात् ॥

---

**क्रमः** । ननु 'ष्ठिवुक्लम्वाचमां शिति' इत्यतः 'शिति' इत्यनुवर्तते । तत् कथं शपीत्युच्यते शितीति वाच्यम् । सत्यम् । स्वमते शितित्येव । अर्वाचीनमतेन शपीत्युक्तम् । तथोक्तं दुर्गेण । 'ष्ठिवुक्लम्वाचमामनि । क्रमः परस्मै' इति । तन्मतमेवाश्रित्य क्रम्यतीति ह्रस्व उदाहृतः श्यनि । स्वमते तु श्यन्यपि दीर्घः । क्राम्यतीति । परस्मैपदेषु किम् । आक्रमते । ननु चमुक्रामसंक्रामेत्यत्र हेर्लुकि कृता 'न लुमता—' इति प्रत्ययलक्षणानिषेधात् दीर्घो न स्यात् । न लुमता लुप्ते प्रत्यये परतो यदङ्गं तस्य कार्ये स प्रतिषेधः । न च हौ क्रमिरङ्गम् । किं तर्हि । शपि । अतः शपस्ततः परतो विहितस्य विद्यमानत्वाद्दीर्घो भवति । क्रामति । क्रामेत् । क्रामतु । अक्रामत् ।

**स्नुक्रमो** । ष्णु स्रवणे । क्रमु पादविक्षेपे । यत्रात्मनेपदं नास्तीति । यत्रार्थे आत्मनेपदनिमित्तं स्नुक्रमी न भवत इत्यर्थः । अथवा यत्र प्रयोगविशेषे आत्मनेपदनिमित्तमर्थो नास्तीति । कश्चार्थ आत्मनेपदनिमित्तम् । भावकर्मकर्तृकर्मव्यवहारः । क्रमेर्वृत्त्यादयोपि । यत्रात्मनेपदं तदाश्रयं भवति तदात्मनेपदनिमित्तम् । तेन सत्येवात्मनेपदे इट्प्रतिषेधः ।

---

१. शिति $D_4$. २. तथा चोक्त कातन्त्रे $Bc_2$, $Dc_3$. ३. क्रामतीति $Bc_2$. ४. क्रमतीति $Dc_3$. ५. प्रत्ययलक्षणनिषेधात् dropped $Bc_2$. ६. किं प्रत्ययलक्षणनिषेधात् । तर्हि शपि $Bc_2$. ७. °स्ततः परतोपि $Bc_2$. ८. स्नु प्रस्रवणे । क्रम् $Dc_3$. ९. °कर्तरि $Bc_2$. १०. °व्यतिहारः $Bc_2$, $Dc_3$.

[1]अक्रमीत् ।

यॅम[2] उपरमे ।

**इषुगमियमां छः ॥७।३।७७॥**

एषां छोन्तादेशः स्यात् शिति ॥ यच्छति ।

**यमरमनमातां सक्च ॥७।२।७३॥**

यमादेरादन्ताच्च सिच इट् स्यात् परस्मैपदेषु एषा

---

कुर्वद्रूपमेव हि[3] निमित्तम् । **अक्रमीदिति** । लुङ् । 'ह्मयन्तक्षण—' इति वृद्ध्यभावः । चक्राम । क्रमिता । क्रम्यात् । क्रमिष्यति । अक्रमिष्यत् ।

यॅमु[4] । उपरमो निवृत्तिः । इतो द्वावनिटौ ।

इषु । इषिरुदित् । इषु इच्छायामित्यस्य ग्रहणम् । इह मा भूत् । इष गतौ । इष आभीक्ष्ण्ये । इष्यति । इष्णाति । **यच्छतीति** । लट् । तिप् । शप् । यच्छेत् । यच्छतु । अयच्छत् ।

**यमरम** । यॅमु[5] उपरमे । रमुँ[6] क्रीडायाम् । णमुँ[7] प्रह्वत्वे शब्दे च । आदन्ता या प्रापण इत्येवमादयः[8] । सर्वेषामनुदात्तत्वादिट्प्रतिषेधे प्राप्तेस्यारम्भः । अत्र च षष्ठीनिर्देशाद्यमादीनामेव सक्[9] भवति । इट्

---

१. $B_1$, $D_2$ have before it—मान्तत्वान्न वृद्धिः ; $B_2$ has—क्रम्यात् । क्रमिता । क्रमिष्यति । अक्रमिष्यत् । मान्तत्वान्न वृद्धिः ।. २. मु $B_2$, $D_3$, $N_1$. ३. Dropped $Dc_1$. ४. यम $Dc_3$. ५. यम $Dc_3$. ६. रम $Dc_3$. ७. णम $Dc_3$. ८. इत्यादयः $Bc_2$. ९. Dropped $Bc_2$.

सगागमश्च ॥ अयंसीत्[1] । येमिथ । ययन्थ ।

णमु प्रह्वत्वे शब्दे च[2] । प्रणमति । अनंसीत् । नेमिथ । नेनन्थ[3] । हय गतौ । यान्तत्वान्न वृद्धिः । अहयीत् ।[4]

---

पुनरार्धधातुकाधिकारात्तस्यैव । अयंसीदिति । लुङ् । च्लिः । सिच् । 'अस्ति—' इटीत् । 'इट ईटि' इति सिचो लोपः । अट् । 'नश्चा-पदान्त—' इत्यनुस्वारः । अयंसिष्टामित्यादि । ययाम । येमिथ । ययन्थेति । 'उपदेशे त्वतः' इतीट्प्रतिषेधः । 'ऋतो भारद्वाजस्य' इति पक्षे इट् । इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । अन्यत्रानुस्वारपरसवर्णौ । यन्ता । यम्यात् । यंस्यति । अयंस्यत् ।

णमु प्रह्वत्वे नम्रत्वम् । प्रणमतीति । लट् । तिप् । शप् । 'उपसर्गादसमासेपि णोपदेशस्य' इति णत्वम् । नमेत् । नमतु । अनमत् । अनंसीदिति । लुङ् । सिच् । 'यमरमानतां सक् च' इतीट्सकौ । सलोपः । अनंसिष्टामित्यादि । ननाम । नेमिथ । ननन्थेति । 'उपदेशेत्वतः' इति इट्प्रतिषेधः । 'ऋतो भारद्वाजस्य' इति पक्षे इट् । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । नन्ता । नम्यात् । नंस्यति । अनंस्यत् । हय । इतः षट् सेट्काः । हयति । हयेत् । हयतु । अहयत् । यान्तत्वान्न वृद्धिरिति । 'ह्म्यन्तक्षण—' इत्यादिना । जहाय । हयिता । हय्यात् । हयिष्यति । अहयिष्यत् ।

---

१. After it—अयंसिष्टाम् । अयंसिषुः । अयंसीः । अयंसिष्टम् । अयंसिष्ट । अयंसिषम् । अयंसिष्व । येमतुः । येमुः । $B_2$. २ च dropped P, $B_1$, $D_1$. ३. Dropped $D_2$. ४. After it—जहाय । जहयिथ $B_1$; जहाय । जहयतुः । हय्यात् । हयिता । हयिष्यति । अहयिष्यत् $B_2$. ५. सिज्लोपः । $Bc_2$. ६. निषेधः $Bc_2$.

दल विशरणे ।

अतो ल्रान्तस्य ॥७।२।२॥

अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्याकारस्य[1] वृद्धिः स्यात् सिचि परस्मैपदेषु । 'नेटि' इत्यस्यापवादः । अदालीत् ।[2]

त्रिफला विशरणे ।

---

दल । विशरणं शैथिल्यम्[3] । दलति । दलेत् । दलतु । अदलत् ।

अतः । अन्तःशब्दोवयववाच्यप्यस्ति यथा वसनान्त इति । समीपार्थोप्यस्ति[4] । तद्यथा उदकान्तं सद्गत[5] इति । तत्रावयववचनस्यात्र ग्रहणं व्यर्थम् । तस्य ह्युपादाने एतत् प्रयोजनम् । रेफलकारान्तस्य यथा स्यात् । एतच्च येन विधिस्तदन्तस्येति सिद्धम् । तस्मात् । समीपवाचिनोत्र ग्रहणं युक्तमिति मत्वाह । अतः समीपौ यौ ल्रावीति । नेटीत्यस्यापवाद इति । 'नेटि' इति हलन्तलक्षणया वृद्धेः प्रतिषेधे प्राप्ते तदपवादे 'अतो हलादेर्लघोः' इति विकल्पे प्राप्ते तस्यापवाद इत्यर्थः । अतः किम् । अखोरीत्[6] । ल्रान्तस्य किम् । मा भवानशीत् । अन्तस्येति किम् । बभ्र[7] गतौ । अबभ्रीत्[8] । अदालीदिति । लुङ्[9] । सिच् । इडादि । ददाल । देलतुः । दलिता । दल्यात् । दलिष्यति । अदलिष्यत् ।

त्रिफला ।

---

१. तदन्ताङ्गाकारस्य B1, D2 ; तदन्ताङ्गस्याकारस्य N, D4. २. After it—अदालिष्टाम् । अदालिषुः B2. ३. Dropped from विश° to °ल्यम् Dc1. ४. सामीप्यार्थोप्यस्ति Dc3. ५. गत इति Bc2, Dc3. ६. अचोरीत् Dc3. ७. भ्रव Bc2. ८. अभ्रवीत् Bc2. ९. इट् Bc2.

आदिर्ञिटुडवः ॥१।३।५॥

भ्वादेर्धातोराद्या ञिटुडु एते इतः स्युः[1] ॥ अफालीत् । अभ्यासचर्त्वस्यैत्वं प्रत्यसिद्धत्वादेत्वे प्राप्ते अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वाच्ये इति वचनादादेशादित्वेनैत्वनिषेधे प्राप्ते[2] ।

तॄफलभजत्रपश्च ॥६।४।१२२॥

एषां किति[3] लिटि सेटि थलि च एत्वाभ्यासलोपौ स्तः । फेलतुः[4] । फेलिथ ।[5]

---

आदिः । अत्र टुशब्दस्य ग्रहणेन 'अणुदित् सवर्णस्य—' इति टवर्गस्य[6] ग्रहणं कस्मान्न भवति । उच्यते । उकारस्यानुनासिकत्वाप्रतिज्ञानात् 'चुटू' इत्यत्र टुग्रहणाच्च[7] । यदि वात्र[8] टवर्गग्रहणं स्यात्तर्ह्यनेनैव सिद्धत्वात् 'चुटू' इति टुग्रहणमनर्थकं स्यात्[9] । ञिडुभ्यां साहचर्याच्च । फलेत् । फलतु । अफलत् । अफालीदिति । 'अतो ल्रान्तस्य' इति वृद्धिः । पफाल । अभ्यासस्येत्यादि । फल अतुस् इति स्थिते द्वित्वम् । 'अभ्यासे चर्च' इति पूर्वस्य पकारे कृते आदेशादित्वादेत्वनिषेधप्राप्तावपि पूर्वत्रासिद्धन्यायेनैत्वं प्रति चर्त्वस्यासिद्धत्वात् एत्वे प्राप्ते सति अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वाच्ये इति वचनादेत्वं प्रति चर्त्वस्यासिद्धत्वादादेशादित्वे[10]देत्वप्रतिषेधे प्राप्ते सतीत्यर्थः । फलिता । फल्यात् । फलिष्यति । अफलिष्यत् ।

---

१. फलति before and पफाल after it $B_2$. २. प्राप्ते dropped P, $D_2$, $D_4$, B. ३. क्ङिति P. ४. Before it—पफाल $D_2$. ५. After it—णिसि चुम्बने । प्रणिंसाति । प्रनिसाति । प्रणेसाति $B_1$. ६. टवर्गग्रहणं $Bc_2$. ७. च dropped $Bc_2$. ८. चात्र $Dc_3$. ९. पुनर्डू इति डुग्रहणं व्यर्थं स्यात् $Bc_2$. १०. °त्वेनै° $Bc_2$, $Dc_3$.

णिक्षु[1] चुम्बने । प्रणिक्षति । प्र[2]निक्षति । [3]

त्सर छद्मगतौ । [4]अत्सारीत् । तत्सार ।

ष्ठिवु निरसने । सुब्धातुष्ठ्यै[5]ष्वष्काष्ठिवां सत्वनिषेधः[6] । 'ष्ठिवुक्लमु—' इति दीर्घः । ष्ठीवति । अष्ठेवीत् । ष्ठिवेरभ्यासठकारस्य ठ[7]कारो वा । चर्[8]त्वम् । तिष्ठेव । टिष्ठेव ।

---

णिक्षु[9] चुम्बने । चुम्बनं [10]वङ्कसंयोगविशेषः । प्रणिक्षति । प्रनिक्षति । इति । लट् । तिप् । शप् । 'वा निसनिक्षनिदाम्' इति वा णत्वम् । निक्षेत् । निक्षतु । अनिक्षत् । अनिक्षीत् । निनिक्ष । निक्षिता । निक्ष्यात् । निक्षिष्यति । अनिक्षिष्यत् ।

त्सर । त्सरति । त्सरेत् । त्सरतु । अत्सरत् । अत्सारीदिति । 'अतो ल्रान्तस्य' इति वृद्धिः । तत्सारेति । लिट् । णल् । वृद्धिः । द्वित्वम् । 'हलादिः शेषः' । त्सरिता । त्सर्यात् । त्सरिष्यति । अत्सरिष्यत् ।

ष्ठिवु । सुब्धातुरिति वक्तव्यम् । सुब्धातवः षण्डयतीत्यादयः । ष्ठ्यै शब्दसंघातयोः । ष्वष्क गतौ । ष्ठिवुरुक्तार्थः । ष्ठीवतिति । लट् । ष्ठिवु[11]क्लमु इति दीर्घः । ष्ठीवेत् । ष्ठीवतु । अष्ठीवत् । अष्ठेवीदिति । लुङ् । सिच् । इट् । शितीति विशेषणाद्दीर्घाभावः । 'पुगन्त—' इति गुणः । ष्ठिवेरिति । इयमिष्टिः । टिष्ठेव । तिष्ठेवेति । लिट् । द्वित्वम् ।

---

१. णिक्ष $D_1$, $B_2$, N. २. प्रनिक्षति dropped $D_1$, $D_2$. ३. After it—प्राणिक्षीत् । प्राणिक्षत् । नक्ष्यात् । नाक्षिता । नाक्षिष्यति । अनाक्षिष्यत् $B_2$. ४. Before it—त्सराति । त्सरिष्याति । अत्सारिष्यत् $B_2$. ५. ष्वष्कु $B_1$, $B_2$, P. ६. After it—वक्तव्यः $D_1$. ७. तकारो वा $D_2$. ८. Dropped $D_1$, $D_2$, $D_4$. ९. णिक्षि $Dc_3$. १०. वक्कसंयोगः $Dc_1$ $Dc_3$. ११. ष्ठिवु दीर्घः dropped $Dc_1$.

ष्ठेविता । 'हलि च' इति[2] दीर्घः । ष्ठीव्यात् ।

जि जये ।[3]

**सन्लिटोर्जेः ॥७।३।५७॥**

अभ्यासात् परस्य जेः कुत्वं स्यात् सनि लिटि च । जिगाय । जीयात् ।[4]

तुर्वी हिंसायाम् । 'उपधायां च' इति दीर्घः । तूर्वति ।[5]

रक्ष पालने । प्रनिरक्षति । षान्तत्वान्न णः ।

---

'शर्पूर्वाः खयः' । ष्ठेवितेति । लुट् । 'स्यतासी—' इति तासिः । 'लुटः प्रथम—' इति डा । 'आर्धधातुक—' इतीट् । गुणः । ष्ठीव्यादिति । आशीर्लिङ् । यासुट् । ष्ठेविष्यति । अष्ठेविष्यत् ।

जि । जयः सर्वोत्कर्षः । अनिट् । जयति । जयेत् । जयतु । अजयत् । अजैषीत् ।

सन् । जिनातेः संप्रसारणे कृते यद्यपि जिर्भवति तथापि लाक्षणिकत्वात् तस्य ग्रहणं न । जिज्यतुः । जिगायेति । लिट् । जेता । जीयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः । जेष्यति । अजेष्यत् ।

तुर्वी । इतश्चत्वारः सेट्काः । तूर्वति । तूर्वेत् । अतूर्वत् । अतूर्वीत् । तुतूर्व । तूर्विता । तूर्व्यात् । तूर्विष्यति । अतूर्विष्यत् ।

रक्ष । प्रनिरक्षतीति । लट् । षान्तत्वादिति । 'शेषे विभाषा—' इति । अरक्षीत् । ररक्ष ।

---

१. 'हलि च' । र्वोरुपधाया इको दीर्घः स्याद्धलि । ष्ठीव्यात् $D_1$. २. इति दीर्घः dropped N, $D_4$. ३. After it—अजैषीत् $B_2$. ४. After 'अकृतसार्व–' इति दीर्घः । $B_1$. ५. तूर्वति dropped $D_3$. ६. After it—तूर्व्यात् $D_2$, $B_2$. ७. Before it—अरक्षीत् । ररक्ष । रक्षिता । रक्ष्यात् । रक्षिष्यति । $B_2$. ८. After it—शिष्यन्ते $Bc_2$, $Dc_3$.

अक्षू व्याप्तौ संघाते च ।

**अक्षोऽन्यतरस्याम् ॥३।१।७५॥**

अक्षो वा श्नुप्रत्ययः स्यात् कर्तरि सार्वधातुके । पक्षे शप् । गुणः । अक्ष्णोति । अक्षति । ङित्वान्न गुणः । अक्ष्णुतः । अचिश्नुधात्विति उवङ् । अक्ष्णुवन्ति । अक्ष्णुयात् ।

**उस्यपदान्तात् ॥६।१।९६॥**

अपदान्तादवर्णादुसि[2] पररूपमेकादेशः स्यात् ॥ अक्ष्णुयुः । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णोत् । ऊदित्वादिड्वा । आक्षीत् ।

---

अक्षू ।

**अक्षः** । अप्राप्तविभाषेयम् । अक्ष्णोतीति । लट् । अक्षतीति । शप्पक्षे रूपम् । **ङित्वान्न गुण** इति । 'सार्वधातुकमपित्' इति ङित्त्वात् । 'क्ङिति च' इति न गुण इत्यर्थः । **अक्ष्णुयादिति** । लिङ् । अक्ष्णुयाताम् ।

**उसि** । आद्गुणापवादः । अपदान्तादिति किम् । का उस्रा । कोस्रा । अवर्णात्[4] किम् । चक्रुः । **अक्ष्णोतु** इति । लोट् । 'एरुः' । अक्ष्णुताद्वा । **आक्ष्णोदिति** । लङ् । 'आडजादीनाम्' । आक्ष्णुताम् । आक्ष्णुवन् । इत्यादि । शप्पक्षे । अक्षति । अक्षेत् । अक्षतु । आक्षत् । इति । **ऊदित्वादिड्वेति** । 'स्वरतिसूति—' इति । **आक्षीदिति** ।

---

१. अक्ष्णुतः । ङित्वान्न गुणः । P ; C ; $D_1$ drops अक्ष्णुतः ; $D_2$ has अक्षतः in place of अक्ष्णुतः and drops ङित्वान्न गुणः. २. °दुसि परे $D_1$ ; °दुसि च पर° $D_2$; °दुसि परतः $D_4$. ३. P, $B_2$, $D_4$ drop it. ४. अविति किम् । बभ्रुः । $Bc_2$ ; आविति किम् । चक्रुः । $Dc_3$.

ईडभावपक्षे 'स्कोः[1] संयोगाद्योरन्ते च' इति कलोपः ।

षढोः कः सि ॥

षस्य ढस्य च कः स्यात् सकारे परे ॥ षत्वम्[2] । कषसंयोगे[3] क्षः । आक्षीत् । आक्षिष्टाम् । आष्टाम् । आक्षिषुः । आक्षुः । आक्षीः[4] । आक्षिष्टम् । आष्टम् । आक्षिष्ट । आष्ट । आक्षिषम् । आक्षम् । आक्षिष्व । आक्ष्व । आक्षिष्म[4] । आक्ष्म[4] । आनक्ष । आक्षिता । अष्टा ।

---

लुङ् । सिच् । इट् । ईट् । अडागमः । षत्वमिति । 'आदेशप्रत्यययोः' इति । आक्षीदिति । 'अस्ति—' इतीट् । आक्षिष्टामिति । इट्पक्षे रूपम्[5] । 'तस्थस्थमिपाम्—' इति तसस्ताम् । षत्वम् । ष्टुत्वम् । आष्टामिति । इडभावे 'झलो झलि' इति सिज्लोपः । 'स्कोः—' इति कलोपः । ताम् । ष्टुत्वम्[6] । आक्षिषुः । आक्षुरिति । इड्भावाभावयो रूपे । 'सिजभ्यस्त—' इति जुस् । आक्षीः । आक्षिष्टम् । आष्टम् । आक्षिष्ट । आष्ट । आक्षिषम् । आक्षमिति मिपोम् । आक्षिष्वेति सलोपः । आक्षिष्म । आक्ष्म । आनक्षेति । लिट् । द्वित्वम् । 'अत आदेः । 'तस्मान्नुट् द्विहलः' । अक्षिता । अष्टेति । वेट् । अक्ष्यात् । अक्षिष्यति । अक्ष्यति । आक्षिष्यत् । आक्ष्यत् ।

---

१. स्कोः संयोगेति N, $D_3$, $D_4$. २. $B_1$, $D_1$, $D_2$ drop षत्वम् ; इण्कोरादेश अनेन षत्वम् $B_2$. ३. कषयोगे $B_1$, $D_1$, $D_3$, N. ४. N drops the forms आक्षीः । आक्षिष्टम् । आष्टम् । आक्षिष्ट । आष्ट । आक्ष्व । आक्ष्म । $D_3$, $D_4$ drop from आक्षीः to आष्ट and आक्षिष्म । आक्ष्म । ५. रूपम् dropped $Bc_2$. ६, षत्वष्टुत्वे $Bc_2$, $Dc_3$.

तक्षूत्वक्षू तनूकरणे ।

**तनूकरणे तक्षः ॥३।१।७६॥**

तनूकरणार्थात् तक्षः श्नुः[2] स्यात्[3] कर्तरि सार्वधातुके[4] ॥ तक्ष्णोति । तक्षति काष्ठम् । अतक्षीत् । अताक्षीत् । अतक्षिष्टाम् । अताष्टाम् । निर्भत्सने तु संतक्षति । वाग्भिः[5] ।

कृष विलेखने । कर्षति[6] ।

---

तक्षू तनूकरणे । ननु चायं धातुस्तनूकरण एव वर्तते । तत् किमर्थं विशेषणोपादानम्[7] । व्यवच्छेद्याभावात् । मैवम् । अनेकार्थत्वाद् धातूनां विशेषणोपादानम् । तक्ष्णोतीति । लट् । तिप्[8] । श्नुः । णत्वम् । सार्वधातुके गुणः । तक्षतीति । श्नोरभावे रूपम् । शप् । तक्ष्णुतः । तक्ष्णुवन्ति । तक्ष्णुयात् । तक्षेत् । तक्ष्णुयुः । तक्षेयुः । तक्ष्णोतु । तक्षतु । तक्ष्णुहि । अतक्ष्णोत् । अतक्षत् । अतक्षीदिति । लुङ् । सिच् । 'स्वरतिसूति—' इति वेट् । 'अस्ति—' इतीट् । 'नेटि' इति न वृद्धिः । अट् । अताक्षीदिति । इडभावे रूपम् । 'स्कोः—' इति कलोपः । 'षढोः कः सि' । षत्वम् । कषयोगे क्षः । 'वदव्रज—' इति वृद्धिः । 'अस्ति—' इतीट् । अतक्षिष्टामिति । इट्पक्षे रूपम् । तसस्ताम् । षत्वष्टुत्वे । अताष्टामिति । इडभावे । ताम् । 'झलो झलि' इति कलोपः । ततक्ष । तक्षिता । तष्टा । तक्ष्यात् । तक्षिष्यति । तक्ष्यति । अतक्षिष्यत् । अतक्ष्यत् ।

कृष[10] । अनिट् । कर्षतीति । लट् । शप् । तिप्[11] । गुणः । रपरः ।

---

१. Dropped $N_1$, $D_1$ ; त्वक्षूतक्षू $B_2$. २. श्नुप्रत्ययः $D_3$. ३. स्याद्वा $D_1$ ; $D_2$ प्रत्ययः स्याद्वा $B_2$. ४. After it—परे $D_3$. ५. वाचा $D_1$ ; वाक्यैः P, $B_1$. ६. Dropped $B_2$. ७. विशेषोपादानम् । $Bc_2$. ८. तिप् dropped $Dc_1$. ९. सलोपः । कत्वष्टुत्वादि । $Dc_3$. १०. कृष विलेखने । विलेखनमुत्पादनम् । $Dc_3$. ११. Dropped $Bc_2$, $Dc_3$.

कृषमृशस्पृशतृपदृपसृं[1]पश्च्लेः सिज्वा ॥ [2]कत्वम् । षत्वम् । अकार्क्षीत् ।

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥६।१।५९॥**

उपदेशेनुदात्तो य ऋदुपधस्तस्य अमागमो वा स्यात् झलादावकिति परे । [3]यणादेशः । अतो वृद्धिः । अक्राक्षीत् । [4]अक्राष्टाम् । अकार्ष्टाम् । [5]सिजभावपक्षे ।

**शल इगुपधादनिटः क्सः ॥३।१।४५॥**

इगुपधो यः शलन्तोनिट् तस्माच्च्लेः क्सादेशः स्यात् ।

---

कृषमृशेति । कृष विलेखने । भ्वादितुदाद्योर्द्वयोरपि ग्रहणम् । मृश [6]आमर्शने । स्पृश संस्पर्शे[8] । तृप प्रीणने । दृप हर्षविमोचनयोः । सृप्लृ[7] गतौ । कृषमृशस्पृशानां क्से प्राप्ते तृपदृपयोः पुषादित्वादाङि सृपो लृदित्वादङि प्राप्तेस्यारम्भः । अत्र केचित् सृपिं न पठन्ति । कत्वमिति । 'षढोः कः सि' इति । षत्वमिति । 'आदेशप्रत्यययोः' इति । अकार्क्षीदिति । कृष् । लुङ् । तिप् । 'वदव्रज—' इति वृद्धिः । रपरः । इलोपः । ईट् । अट् ।

अनुदात्तस्य । मित्वादन्त्यादचः परः । अकार्ष्टामिति । अमभावे वृद्धिः । अक्राष्टामिति । अमागमः । 'वदव्रज—' इति । वृद्धिः ।

शलः । ननु चात्रानिट इति धातुविशेषणत्वेन व्याख्यायते । तन्न व्याख्येयम् । एवं हि व्याख्यायमाने च्लेरुपदेशो व्यर्थः स्यात् । स हि[9] शलित्यत्रस्थमनिड्ग्रहणं [10]च्लिविशेषणं यथा स्यादित्येवमर्थं

---

१. °सृपां C. २. $B_1$ has before it—एभ्यो धातुभ्यः परस्य च्लेः सिज्वा स्यात्. ३. यणादेशे $D_1$. ४. आकार्ष्टाम् । अक्राष्टाम् C, P, $D_1$, $D_4$, N. ५. After it—अकार्क्षीत् । अकार्ष्टाम् । अक्राष्टाम् सिज° $D_3$, After it—अक्राक्षुः । अक्राक्षुः $B_2$. ६. आमर्शे $Bc_2$. ७. सृप्लृ° $Bc_2$. ८. स्पृशि $Bc_2$. ९. हि अत्रस्थ° $Dc_3$. १०. च्लि dropped $Dc_2$.

के इत् । कत्वषत्वादि । किस्त्वान्नाम् । अकृक्षत् । क्रष्टा । कर्ष्टा ।

रुषरिष हिंसायाम् ।

---

क्रियत इति च्लिलुङिति । अत्रोक्तं काशिकायां च । 'शलन्तो यो धातुरिगुपधस्तस्मात्परस्य च्लेरनिटः क्स आदेशो भवति' इति व्याख्यातम् । सत्यम् । आचार्यवर्यैस्तु भाष्यकाराभिमतं व्याख्यानं कृतम् । तथा च च्लेरुपदेशो व्यर्थ इत्यभिप्रेत्य भाष्ये उक्तम् । 'यद्यप्युच्यते क्सविधाने चानिड्विधाने च्लिः संप्रत्ययार्थ इति धातुमेवात्रानिट्त्वेन विशेषयिष्यामो धातोरनिट इति' इत्यादि । यत्तु गुहेर्न सिध्येदित्युक्तं तत्र कैयटेनोत्तरमुक्तम् । 'गुहादयो विकल्पितेट इटो भावाभावाभ्यां भिद्यन्ते तत्र ये सेटस्तेभ्यः सिज् भविष्यति । अनिड्भ्यस्तु क्स इति न च कश्चिद्दोषः' इति । शल इति किम् । अभैत्सीत् । इगुपधादिति किम् । अधाक्षीत् । अनिट इति किम् । अकोषीत् । क इदिति । 'लशक्वतद्धिते' इत्यनेन । कत्वषत्वादीति । कत्वं 'षढोः—' इति षत्वम् 'आदेश—' इति । आदिशब्दात् कषयोगे क्षः । इतश्च 'लुङ्लङ्—' इत्यट् । अकृक्षताम् । । अकृक्षन् । इत्यादि । चकर्ष । क्रष्टा । कर्ष्टेति । लुट् । तासिः । डा । 'अनुदात्तस्य च—' इति वाम् । अमभावे गुणः । कृष्यात् । क्रक्ष्यति । कर्क्ष्यति । अक्रक्ष्यत् । अकर्क्ष्यत् ।

रुष रिष । इतश्चत्वारः सेट्काः । रोषति । रेषति । इत्यादि । अरोषीत् । अरेषीत् । रुरोष । रिरेष ।

---

१. C, $D_2$ drop क इत्. २. चकर्ष । चकृषतुः । क्रष्टा । कर्ष्टा । कृष्यात् । क्रक्ष्यति । कर्क्ष्यति $D_1$; Before it—अकृक्षताम् $B_2$; कर्ष्टा । क्रष्टा । $D_3$. ३. Dropped $Dc_1$. ४. भाष्यकारेण $Dc_3$. ५. कथने-नोत्तर° $Bc_2$, $Dc_1$, $Dc_4$. ६. विकल्पेनेद् इटो &c. $Dc_3$. ७. अकोषीत् $Bc_2$, $Dc_3$. ८. अम् वा $Dc_3$.

**तीषसहलुभरुषरिषः ॥७।२।४८॥**

इच्छत्यादेः[1] परस्य तादेरार्धधातुकस्येड् वा स्यात् । रोषिता । रोष्टा । एवं रिषेः[2] । उष दाहे ।

**उषविदजागृभ्योन्यतरस्याम् ॥३।१।३८॥**

एभ्य आम् वा स्याल्लिटि । ओषां[3]बभूव । उवोष ।[4]

---

तीष । इषु इच्छायाम् । षह मर्षणे । लुभ गार्ध्ये । लुभ विमोहने । द्वावपि । रुष रिष हिंसायाम् । सर्वे एते उदात्ताः इति । नित्यमिटि प्राप्ते विकल्पार्थमारम्भः । अत्र सूत्रे [5]केचिदुदितामिषं पठन्ति । इष्यते इष्णातेश्च ग्रहणं मा भूदिति । ये पुनरुदितं न पठन्ति ते 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यतः प्रकृतस्य वेत्यस्य व्यवस्थितविभाषात्वाद्भौवादिकेन सहिना साह[6]चर्यादिच्छार्थस्यैव ग्रहणं न ग[7]त्यर्थाभीक्ष्ण्यार्थयोरिति वर्णयन्तीति चेतसि कृत्वाह । इच्छत्यादेरिति । रोषितेति । लुट् । 'पुगन्त—' इति गुणः । रोष्टेति । गुणः । ष्टुत्वम् । एवं रिषेति । एवमनेन प्रकारेण रिषेर[8]पि रूपाणीत्यर्थः । रेषिता । रेष्टा । रुष्यात् । रिष्यात् । रोषिष्यति । रेषिष्यति । अरोषिष्यत् । अरेषिष्यत् ।

उष । ओषति । ओषीत् । उषविद । उष दाहे । विद ज्ञाने । जागृ निद्राक्षये । परस्मैपदिभ्यामुषजागृभ्यां साहचर्यान्न[9] सत्ताविचारार्थयोरात्मनेपदिनोर्ग्रहणम् । अदादिकेन जागर्तिना सहचाराल्लाभार्थस्योभयपदिनः ।[10] ओषांबभूवेति । आम् । गुणः । 'आमः' इति लेर्लुक् । 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परस्य भुवोनुप्रयोगः । णल् । द्वित्वम् । ह्रस्वः । 'भवतेरः' । 'अभ्यासे चर्च' । 'भुवो वुक्—' इति वुक् । उवोषेति । णल् । गुणः । द्वित्वम् ।[11]

---

१. इषु इत्यादेः $B_2$. २. रिष् $D_3$, $D_4$; $B_2$ has रिष for एवं रिषः ३. ओषामास $D_3$, $D_4$. ४. After it—ऊषतुः । उष्यात् । ओषिता । ओषिष्यति । औषिष्यत् $B_2$. ५. केचिदिषुमुदितं $Bc_2$. ६. साहचर्यादि° $Bc_2$. ७. गत्यर्थभक्ष्यार्थयो° $Bc_2$. ८. अपि dropped $Bc_2$. ९. साहचर्यान्न $Dc_3$. १०. After it—अतो ज्ञानार्थस्यैव विदेर्ग्रहणम् । $Dc_3$. ११. After द्वित्वम्—ह्रस्वः $Bc_2$.

शश प्लुतगतौ । 'न शश—' इति एत्वं न । शशशतुः । शशशिथ । मिह सेचने । शल इगुपधादनिटः क्सः । हो ढः । कत्वषत्वे । अमिक्षत् । ढत्वम् । झषस्तथोरिति धत्वम् । ष्टुत्वम् ।

**ढो ढे लोपः ॥८।३।१३॥**

ढस्य लोपः स्यात् ढे परे ॥

---

'अभ्यासस्यासवर्णे' इत्युवङ् । ऊषतुः । ऊषुः । उवोषिथ । ओषिता । उष्यात् । ओषिष्यति । औषिष्यत् ।

शश प्लुतिभिर्गमने । शशति । शशाश । 'न शश—' इति । अत्र सूत्रे शसेति केचिद् दन्त्यान्तं पठन्ति । तथा च न्यासकारेणोक्तम् । 'शसु हिंसायाम्' इति । अन्ये तु शशेति तालव्यान्तं पठन्ति । यथा च शान्तेनु विचारमणावुक्तम् । वावश्यते च न वशः शशतुर्न शन्तेति । नैतदिति मुग्धबोधप्रदीपेप्युक्तम् । शश प्लुतगताविति तदुभयमिष्टम् । शशशतुः इति । अतुस् । द्वित्वम् । शशशिथेति । 'आर्धधातुक—' इतीट् । शशितेत्यादि । मिह इतो ह्यावनिटौ । मेहति । कत्वषत्वे इति । कत्वं 'षढोः—' इति षत्वम् 'आदेशप्रत्यययोः' इति । अमिक्षदिति । लुङ् । तिप् । च्लिः । इतश्च । अट् । मिमेह ।

ढो ढे । यद्यपि । पदाधिकारस्तथापि तस्यासंभवादपदान्तस्य ढस्य लोपो विज्ञायते । अकार उच्चारणार्थः । ढमात्रं निमित्तम् । ननु च मेढेत्यादावसिद्धं ष्टुत्वं तत् कथमत्र लोपः । उच्यते । अत्र च ढे परे ढलोपो विधीयते । एवं सति यदि ष्टुत्वमसिद्धं स्यात् एतर्त्तार्हि निर्विषयं स्यात् । ननु च । यत्रोत्पत्तिजो ढः श्लिड् ढौकन

१. Before it—शशाश $B_2$. २. °पधादिति क्सः C; $D_3$, °पधेति $D_1$. ३. After it—च $D_4$. ४. Dropped $D_3$. ५. प्लुतिगतौ $Dc_3$. ६. केचित् शसेति $Dc_3$. ७. भाष्यकारेणो° $Bc_2$. ८. शशशुर्न शसेति नेत इति $Dc_1$, $Dc_3$, $Dc_4$. ९. मुग्धबोधेप्युक्तम् $Dc_3$. १०. इतः । अट् । $Bc_2$. ११. ढस्य लोपो $Bc_2$, $Dc_3$. १२. °त्पत्तिको $Bc_2$, $Dc_3$.

मेढा । मेढारौ ।[१] मेक्ष्यति ।

दह भस्मीकरणे । दादेरिति घत्वम्[२] । एकाचो बश इति भष्भावः ।

अधाक्षीत् । अदाग्धाम् । अत्र सिचि लुप्ते भष्भावो न ।

---

इत्यादौ सावकाशं स्यादिति चेन्नैवम् । अत्रान्तरङ्गत्वादसिद्धत्वाद्धच-पूर्वं[३] जश्त्वे कृते कार्यी[४] नास्तीति ढलोपाभाव एव । न च ढलोपो जश्त्वापवादः स्यादिति वाच्यम् । तस्य हि मेढादिविषयोस्ति । ननु कथं मेढादिरनवकाशः[५] । [६]यतो यथा श्वलिड् ढौकत इत्यत्र जश्त्वे कृते कार्यिणोभावस्तथा मेढादावपि ष्टुत्वस्यासिद्धत्वा-न्निमित्तस्याभावः । अथ मेढादौ वचनादसिद्धत्वं बाध्यते तर्हीतरत्रापि जश्त्वं बाधनीयमिति चेन्नैवम् । लोपेन तावदवश्यमसिद्धत्वं बाध्यम् । तत्र मेढादौ एकमेव पूर्वत्रासिद्धत्वमतस्तदेव बाध्यते । श्वलिड् ढौकत इत्यत्र तु लोपस्य जश्त्वापेक्षया बहिरङ्गत्वात् परत्वाच्च [८]द्विविधमसिद्धत्वमिति न बाध्यते । अत इष्टसिद्धिः ।
मेढेति । लुट् । 'स्यतासी—' इति तासिः । 'लुटः प्रथमस्य—' इति डा । टिलोपः । गुणः । मिश्रात् । मेक्ष्यतीति । लृट् । स्यः । गुणः । ढत्वम् । कत्वम् । षत्वम् । कषयोगे क्षः[९] । अमक्ष्यत् ।

दह । दहति । अधाक्षीत् । लुङ् । सिच् । 'वदव्रज–' इति वृद्धिः । 'खरि च' इति चर्त्वम् । षत्वम् ।

अदाग्धामिति । लुङ् । तसस्ताम् । सिच् । वृद्धिः । घत्वम् । 'झलो झलि' इति लोपः[१०] । 'झषस्तथोर्धोधः' । 'झलां जश् झशि' इति गः । ननु चात्र सिचि लुप्तेपि प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन भष्भावः स्यादित्याशङ्क्याह ।

---

१. After it—मेढारः $D_3$. २. घः $D_1$. ३. त्वात् पूर्वं $Dc_3$. ४. कार्यं $Dc_1$; कार्यं $Dc_3$. ५. °रवकाशः $Dc_3$. ६. तयोर्यथा $Do_1$. ७. जशि $Bc_2$. ८. विविध° $Dc_1$. ९. क्षत्वम् for कषयोगे क्षः $Bc_2$. १०. सिचो लोपः $Bc_3$.

तस्य वर्णाश्रयत्वेन प्रत्ययलक्षणत्वाभावात् । [१]देहिथ । ददग्ध । दग्धा । धक्ष्यति ॥

चह परि[२]कल्कने । [३]अचहीत् । हान्तत्वादि[४]ह न वृद्धिः ।

शुच शोके । भृस्तुशुच्वसृत्यशूभ्यः परस्य तादेरार्धधातुकस्येड्[५]वेति केचित् । 'चोः कुः' । शोक्ता । [६]शोचिता । एवं भृस्त्वादीनामपि । ग्लै हर्षक्षये । ग्लायति ।

---

त[७]स्येत्यादि । तस्य भष्भावस्य सकाराश्रितत्वेन [८]प्रत्ययलक्षणत्वाभावादित्यर्थः । देहतुरिति । 'अत एकहल्मध्ये—' इति एत्वाभ्यासलोपौ । देहिथेति । थल् । द्वित्वम् । 'उपदेशेत्वतः' इति इण्निषेधः । 'ऋतो भारद्वाज—' इति प[९]क्षे इट् । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । ददग्धेति । इडभावे रू[१०]पम् । 'दादेर्धातोर्घः' । 'झषस्तथोर्धोऽधः' । जश्त्वम् । दग्धेति । लुट् । घत्वम् । धत्वम् । जश्त्वम् । धक्ष्यतीति । लृट् । स्यः । घत्वम् । चर्त्वम् । षत्वम् ।

चह । कल्कनं दम्भः कथनं च । इतो द्वौ सेटौ । चहति । हान्तत्वादिति । 'ह्म्यन्तक्षण—' इति । चचाह । चेहतुः । चहिता ।

शुच । शोचति । अशोचीत् । शुशोच । भृस्त्विति । भृञ् भरणे । ष्टुञ् स्तुतौ । शुच शोके । वस आच्छादने । लुङ्निर्देशाद्वसतेर्न । अश भोजने । अशूङ् व्याप्तौ । केचिदिति । [११]हेमसूर्यादयः । शुच्यात् । शोचिता । शोचिष्यति । ग्लै । हर्षक्षयोऽत्र धात्व[१२]पचयः । इत आरभ्य त्रयोविंशतिः स्कन्दान्ता अनिटः । ग्लायतीति । लट् । तिप् । शप् । 'एचोऽयवायावः' ।

---

१. Before it—अधाक्षुः । ददाह $B_1$, $B_2$, $D_2$ ; देहतुः $D_1$, $D_2$, $D_3$, $D_4$. २. कल्कने $D_1$. ३. Before it—चहति । चचाह $B_2$. ४. इह dropped $D_1$, $D_3$. ५. °स्येड्वा स्यादिति N. ६. शोचिता । शोचिष्यति । अशोचिष्यत $B_2$. ७. अत्रेत्यादि $Bc_2$, $Dc_3$. ८. प्रत्ययाश्रितत्वाभावादित्यर्थः $Bc_2$, $Dc_3$. ९. वेट् for पक्षे इट् $Bc_2$. १०. Dropped $Bc_2$. ११. हेमसूरिमुख्याः $Bc_2$. १२. वृद्ध्यपचयः $Bc_2$.

आदेच उपदेशेऽशिति ॥६।१।४५॥

उपदेशे एजन्तस्य धातोरेच आत् स्यात् आदिशितोऽन्यस्मिन् प्रत्यये विवक्षिते । यमरमेतीट्सकौ । अग्लासीत् ।[२]

आत औ णलः ॥७।१।३४॥

आदन्ताद्धातोर्णल औरादेशः स्यात् ॥ वृद्धिः । जग्लौ ।

---

आदेच उपदेशे इति । आद्युच्चारणे । धातुपाठे इत्यर्थः । ननु च उपदेशग्रहणं विनैव लक्षणप्रतिपदोक्तपरिभाषयैव चेतव्यादौ आत्वं न स्यात् । बाढम् । एवं तर्हि उपदेशग्रहणेनास्याः परिभाषाया अनित्यत्वं ज्ञाप्यते । तेन क्षापयतीत्यादिषु लाक्षणिकत्वेप्याकारस्य 'अर्तिह्री–' इति पुक् सिद्धो भवति । अस्नासीदित्यादिषु इट्सकौ भवतः । ननु श इत् यस्य स शित् । न शित् अशिदित्यर्थः । तदा जग्ले इति न स्यादेशोपि शित्त्वात् । मैवम् । श एव इत् शित् इत्यर्थः । तत्र यस्मिन्विधिस्तदादावल्ग्रहणे इति शिदादौ प्रतिषेधः । एश पुनः शकारादिर्न एतच्चेतसि कृत्वाह । आदिशितोन्यस्मिन्निति । अशितीति प्रसज्यप्रतिषेधोयम् । तेनैतदात्वमनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवतीत्यभिप्रेत्याह । विवक्षित इति । अग्लासीदिति । लुङ् । सिच् । इट्सकौ ।

आत । अत्र ओकारौकारयोर्लाघवे विशेषाभावेपि । ओत्वमपास्य प्रयोगसमवाय्यौकार एव विधीयते । अन्ये तु ददरिद्राविल्यत्रालोपेप्यौत्वश्रुत्यर्थमाहुः । वृद्धिरिति । 'वृद्धिरेचि' इत्यनेन । जग्लौ इति । अत्रैकादेशात् सवर्णदीर्घात् प्रथममनवकाशत्वादौत्वम् । द्विर्वचनादपि परत्वादेकादेशवृद्धिः । ततः स्थानिवद्भावात् द्वित्वम् । 'हलादिः शेषः' । ह्रस्वः । चुत्वम् । अभ्यासे चर्त्वं ।

---

१. आत्वम् C; आ $D_1$, N. २. अग्लासिष्टाम् after it in $B_1$, $D_2$. ३. औ आदेशः P; औ स्यात् $D_1$. ४. °न तस्याः $Bc_2$. ५. °त्यादौ $Bc_2$. ६. Dropped $Bc_2$. ७. अग्लासी° $Bc_2$, $Dc_3$. ८. Dropped $Bc_2$. ९. सिचि $Bc_2$. १०. समुदायौ° $Dc_3$. ११. स्यादेकादेश° $Bc_2$.

## आतो लोप इटि च ॥६।४।६४॥

अजादावार्धधातुके क्ङिति[1] इटि च परे आतो लोपः स्यात् ॥ ततो द्विर्वचनेचीति स्थानिवत्वाद् द्वित्वम् । जग्लतुः । जग्लुः[2] । जग्लिथ । जग्लाथ । जग्लौ । जग्लिव । जग्लिम[3] । ग्लाता ।

## वान्यस्य संयोगादेः ॥६।४।६८॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एकारः[4] स्याद्वा आर्धधातुके लिङि क्ङिति ॥ ग्लेयात् । ग्लायात् ।

---

**आतः** । अजादावार्धधातुके इति । अजादाविति प्रत्येकमभिसंबध्यते । अजादावार्धधातुके क्ङिति[5] परे । अजादाविटि च परे आकारस्य लोपः स्यादित्यर्थः । अजादाविति किम् । कितोनजादेः प्रत्युदाहरणं ग्लायते इति यक् । इटोनजादेः प्रत्युदाहरणं दासीयेति दाञ् उत्तमैकवचनम् । इट् । आशीर्लिङ् । सीयुट्[6] । इड्ग्रहणमकिदर्थम्[7] । जग्लिथ । जग्लाथेति । 'कृसृ—' इत्यादिना । प्राप्तस्य 'अचस्तास्वत्—' इति इटोभावः[8] । 'ऋतो भारद्वाज—' इति पक्षे इट् । जग्लौ । इत्युत्तमणल् । जग्लिवेति । 'कृसृ—' इति नियमादिट् । ग्लाता इति । लुट् । आत्वम् । इडभावः । 'एकाचः—' इति ।

**वान्यस्य** । घुमास्थादेरित्यादिग्रहणात् पिबतिजहातिस्यतयः[9] । ग्लेयात् । ग्लायादिति । आशीर्लिङ् । अन्यस्येति किम् । स्थेयात् । संयोगादेरिति किम् । यायात् । क्ङिति किम् । ग्लासीष्ट । अङ्गस्येत्येव निर्यायात् । ग्लास्यति । अग्लास्यत् ।

---

१. क्ङिति लिटि $B_2$. २. P drops जग्लुः. ३. Dropped $B_2$, $D_2$. ४. ए $D_1$, $D_2$, N ; एत्वं $D_3$, $D_4$. ५. क्ङिति ङिति $Dc_3$. ६. लस्य सीयुट् $Dc_3$. ७. इड्ग्रहणं किमर्थम् । जग्लिथ । &c. $Dc_3$. ८. भावः $Bc_2$. ९. गैपिबतिजहातिस्त्रयः । $Dc_3$.

गै शब्दे । गायति । अगासीत् । जगौ ।

एर्लिङि ॥६।४।६७॥

घुसंज्ञानां मास्थागैपिबतिजहातिस्यतीनां च क्लित्यार्धधातुके लिङि आत एं स्यात् ॥ गेयात् ।[1]

ष्ठ्यै शब्दसंघातयोः । ष्ठ्यायति ।[4] दैप् शोधने ।[5]

---

गै । गायतीति । तिप् । शप् । आय् । गायेत् । अगासीदिति । लुङ् । सिच् । 'आदेच—' इत्यात्वम् । 'यमरम—' इतीट्सकौ । जगाविति लिट् । णल् । आत्वम् । 'आत औ णलः' । द्वित्वम् । ह्रस्वः । 'अभ्यासे चर्च' । जगतुः । जगुः । गाता ।

'एर्लिङि' । घुसंज्ञका दारूपा धारूपाश्च धातवः । मा माने न तु माङ्मेङौ । तयोरात्मनेपदित्वेनाकित्त्वात् ततः परस्य लिङः । ष्ठा गतिनिवृत्तौ । गै शब्दे । न तु गाङ् गताविङादेशो वा । आत्मनेपदित्वात् । नेणादेशो गा । तस्य लिङ्यसंभवात् । पा पाने । ओहाक् त्यागे । षोन्तकर्मणि । गास्यति । अगास्यत् ।

ष्ठ्यै । ष्ठ्यायति । सुब्धातु । ष्ठ्यैष्वष्काष्ठिवां सत्वनिषेधः । अष्ठ्यासीत् । टष्ठ्यौ । ष्ठ्याता । ष्ठ्येयात् । ष्ठ्यायात् । ष्ठ्यास्यति । अष्ठ्यास्यात् । दैप् । दायति । दायेत् ।

---

१. Dropped N. २. एत् P ; एकारः C ; एः N; एत्वम् $D_3$. ३. After it—गेयास्ताम् $D_4$. ४. After it—तष्ठ्यौ । ष्ठ्यायात् । ष्ठ्येयात् । अष्ठ्यासीत् $B_2$ ; तष्ठ्यौ $D_2$ ; अष्ठ्यासीत् । तष्ठ्यौ । ष्ठ्याता । ष्ठ्यास्यति $D_4$. ५. After it—दायति $B_2$. ६. घुसंज्ञा $Bc_2$. ७. तष्ठ्यौ $Bc_2$. ८. Dropped $Dc_1$. ९. दैप् शोधने $Dc_3$.

दाधाघ्वदाप् ॥ १।१।२०॥

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। इति घुसंज्ञत्वाभावाद् 'गातिस्थाघुपा—' इति सिचो न लुक्। अदासीत्। अदासिष्टाम्। 'यमरमनमातां सक् च' इत्यनेन सिद्धमेत्वं च न। दायात्। धेट् पाने। टो ङीबर्थः।

---

दाधा। उपदेशस्थानां यावतां दाधारूपमनुकरणं संभवति तेषां सर्वेषामिह ग्रहणं दाधा इति। ततश्च दोदेङ्धेङ्अनुकरणानाम् 'आदेच उपदेशेऽशिति' इत्यात्वसद्भावात् तेषां ग्रहणम्। तथा दाँण्दाञ्धाञां चेति सर्वेषां सिध्यति। लक्षणप्रतिपदोक्तपरिभाषा निरनुबन्धकपरिभाषा चात्र न प्रवर्तते। सर्वेषां च स्वरूपेणानुक्रियमाणत्वात् प्रनिदारयतीत्यत्र त्वप्रसङ्गः। न हि दृ इत्येतदनुकरणस्यात्वमस्ति। एवं च दीङो-नुकरणस्यात्वाभावात् तृजादिषु 'मीनाति—' इत्यात्वे घुसंज्ञा नेति सर्वं चित्ते कृत्वाह। दारूपा धारूपा इति। 'उदीचां माङो व्यतीहारे' इति मेङः कृतात्वस्य निर्देशात् ज्ञायते नानुबन्धकृतमनेजन्तत्वमिति माङ् मान इत्यस्य हि न व्यतिहारे वृत्तिः। तेन दैपः पकारे श्रूयमाणे एवात्वं भवति। ततोदाबिति। दाप् लवने दैप् शोधने इत्युभयोर्निषेध इत्यभिप्रेत्याह। दाप्दैपौ विनेति। ददौ। ददतुः। दाता। दायात्। दास्यति। अदास्यत्। धेट्। टो ङीबर्थ इति। स्तनंधयीत्यत्र धयति।

---

१. घुसंज्ञकाः $B_1$. २. वर्जयित्वा $D_3$. ३. घुत्वा° C, $D_3$ ; घुसंज्ञकत्वा° $B_1$, $D_2$ ; घुसंज्ञा° $D_1$ ; घुत्वाभावान्नेत्वम्। दायात् $B_2$. ४. 'गातिस्था–' इति $D_1$, $D_3$. ५. न सिचो $D_3$. ६. P and C drop from अदासिष्टाम् to च न ; $D_1$, $D_3$, N from अदासिष्टम् to सिद्धम् ; $B_2$ from अदासिष्टाम् to दायात्. ७. दाण् दाने दाञ् धाञ् चेति सर्वेषां &c. $Dc_3$. ८. निरनुबन्धपरि° $Bc_2$. ९. बुद्धिः $Dc_1$, $Dc_4$. १०. दाने $Bc_2$. ११. Dropped $Bc_2$. १२. Dropped $Bc_2$.

**विभाषा धेट्श्व्योः ॥३।१।४९॥**

आभ्यां परस्य च्लेश्चङादेशो वा[1] स्यात् कर्तरि लुङि परे[2] ॥

**चङि ॥६।१।११॥**

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः ॥ चङो ङित्वादातो लोपः । अदधत् । अदधताम् । अदधन् । सिच्पक्षे ।

**विभाषा घ्राधेट्शाच्छासः ॥२।४।७८॥**

एभ्यः परस्य[3] सिचो वा लुक् स्यात् परस्मैपदेषु ॥ अधात् । अधाताम्[4] ।

**आतः ॥३।४।११०॥**

सिज्लुकि[5] आदन्तादेव[6] झेर्जुस् स्यात् ॥

---

**विभाषा** । धेट् पाने । टुओश्वि वृद्धिगत्योः । कर्तरि किम् । अधिषातां गावौ वत्सेन । आतो लोपः इति । 'आतो लोप इटि च' इत्यनेन ।

अदधदिति । आत्वम् । लुङ् । तिप् । ह्रस्वः । 'अभ्यासे चर्च' इति जश्त्वं दकारः । अदधन्निति । 'झोन्तः' इति लोपे च कृते संयोगान्तलोपः[7] ।

**विभाषा** । घ्रा गन्धोपादाने । धेट् पाने । शो तनूकरणे । छो छेदने । षोन्तकर्मणि ।

---

१. स्याद्वा $D_1$. २. परे dropped $B_1$, $D_2$. ३. Dropped $D_1$. ४. C drops आधाताम्. ५. सिचि लुकि $D_1$; सिज्लुकि dropped $B_2$. ६. एव dropped $D_4$. ७. संयोगान्तस्य लोपः $Bc_2$.

उस्यपदान्तात् ॥ अधुः । आदन्तादेवेति किम् । अभूवन् । लुगभावे अधासीत् । धेयात् ।

पा पाने ।

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिब-जिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः॥७।३।७८॥**

पादीनां क्रमात् पिबादय आदेशाः स्युः शिति । पिबादेशोदन्तस्तेन नोपधागुणः । पिबति । गातिस्थेति सिचो लुक् । अपात् । पेयात् ।

घ्रा गन्धोपादाने । जिघ्रति । अघ्रात् । अघ्रासीत् ।

---

अधासीदिति । 'यमरम—' इतीट्सकौ । दधौ । धाता । धेयात् इति । 'एर्लिङि' इत्येत्वम् । धास्यति । अधास्यत् ।

पा । पा पाने न पा रक्षणे लुग्विकरणत्वात् ।

घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । ष्ठा गतिनिवृत्तौ । म्ना अभ्यासे । दाण् दाने । दृशिर् प्रेक्षणे । ऋ गतिप्रापणयोः । सृ गतौ । एतौ भौवादिकौ । जौहोत्यादिकयोस्तु शितौ संभवान्न ग्रहः । श्नानशः संभवेपि शश्वासाविच्चेति कर्मधारयात् शितीति शिदोदौ विज्ञायते तेन तत्र न । शद्लृ शातने । षद्लृ विशरणे । भौवादिकतौदादिकयोर्ग्रहणम् । अपात् । अपाताम् । अपुः । पपौ । पपिथ । पपाथ । पाता । पेयात् । 'एर्लिङि' इत्येत्वम् । पास्यति । अपास्यत् । घ्रा । जिघ्रतीति । जिघ्रादेशः । अघ्रादिति । 'विभाषा घ्रा—' इति वा सिचो लुक् । अघ्रासीदिति । लुगभावे

१. इति dropped $D_3$. २. लुगभावे $D_1$. ३. धेयात् । धाता । धास्यति । अधास्यत् $B_2$. ४. नोपधाया गुणः $B_2$. ५. Before it–पपौ । पाता । 'एर्लिङि' । इत्येकारः । $B_1$, $B_2$ ; पेयात् dropped $D_4$. ६. Dropped $Dc_1$, $Dc_3$. ७. जुहोत्यादिकयो । $Bc_2$, $Dc_3$. ८. ग्रहणम् $Bc_2$. ९. शित्यादौ $Dc_3$. १०. °शरणगत्यवसादनेषु $Bc_2$, $Dc_3$. ११. Dropped $Dc_1$, $Dc_3$.

जघ्रौ । घ्रेयात् । घ्रायात् ॥ ध्मा शब्दाग्निसंयोगयोः । धमति । अध्मासीत् । ध्मेयात् । ध्मायात् ॥ ष्ठा गतिनिवृत्तौ । तिष्ठति । सिचो लुक् । सत्वे कृते प्रकृतिस्तवर्गः स्यात् ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः ॥

---

'यमरम—' इतीट्सकौ । जघ्राविति । 'आत औ णलः' । जघ्रिथ । जघ्राथ । घ्रेयात् । घ्रायादिति । 'वान्यस्य—' इत्येत्वं वा । ध्मा । शब्दो मुखानिलादिना अग्निसंयोगे वा । धमतीति । धमादेशः । अध्मासीदिति । इट्सकौ । दध्मौ । ध्माता । ध्मेयात् । ध्मायादिति एत्वं वा । ष्ठा । तिष्ठतीति । तिष्ठादेशः । सिचो लुगिति । 'गातिस्था—' इत्यनेन । सत्वे कृते इति । 'धात्वादेः षः सः' इति सत्वे कृते निमित्ताभावात् । तवर्गः प्रकृतिः स्यादिति । ठस्य प्रकृतिभूतस्थकार एव श्रूयते इत्यर्थः । ननु नायं तवर्गजष्ठकारः किं तु स्वाभाविक इत्याशङ्क्याह ।

नकारजावित्यादि । धातुषु झलि परतः अनुस्वारपञ्चमौ । अनुस्वारश्च पञ्चमश्च । पञ्चमो नाम ङञणनमाः । एतौ नकाराज्जातौ वेदितव्यौ । झलि शकारः सकारजः षकारात् परष्टवर्गस्तवर्गाज्जातो वेदितव्यः । अथवा सकारजः शकारजश्चेर्षाट्टवर्गस्तवर्गजः इति वा पाठः । चे चकारे परे शकारः सकारजः । र्षात् रेफषकाराभ्यां परष्टवर्गस्तवर्गज इत्यर्थः । तत्रानुस्वारस्य नकारजत्वे शंसेः शशंसुरित्यत्र 'असंयोगाल्लिट् कित्' इति कित्त्वनिषेधः । तथा चित्प्रत्यये सति प्रथमैकवचने संयोगान्तलोपे कृते शन्निति तस्य श्रवणं स्यात् । पञ्चमस्य नकारजत्वे अङ्केश्वङि 'अजादेर्द्वितीयस्य' । 'नन्द्राः संयोगादयः'

---

१. Before it–दध्मौ $D_2$, $D_4$. २. 'गातिस्था–' इति सिचो लुक् $B_1$, $B_2$, P, C. ३. प्रकृतेस्त° C; तवर्गः प्रकृतिः Com. ४. मुखानलादिसंयोगे च $Bc_2$. ५. °संयोगेन $Dc_3$. ६. वा एत्वम् $Dc_3$. ७. ज्ञेयः $Bc_2$. ८. Dropped $B_2$. ९. कृते सति तस्य श्रवणं स्यात् $Dc_3$.

अस्थात् । अड्व्यवायेपि षः । न्यष्ठात् । अभ्यासव्यवायेपि षः । नितष्ठौ ।[2] स्थेयात् ॥ म्ना अभ्यासे । मनति ।[3] दाण् दाने । प्रणियच्छति । प्रण्यदात् । देयात् ॥ ह्वृ कौटिल्ये । ह्वरति । अह्वार्षीत् । जह्वार ॥

---

इति अनौ परित्यज्य ककारस्य द्वित्वं स्यात् आञ्चिकदिति । अन्यथाङस्यैव द्वित्वे आङिङ्कदिति स्यात् । चे शकारस्य सकारजत्वे व्रश्चेः वृक्णः सुवृडित्यादौ 'स्कोः संयोगाद्योः–' इति लोपः स्यात् । रेफात् टवर्गस्य तवर्गजत्वे ऊर्णोतेरूर्णुनात्रेत्यादौ नकारस्य श्रवणं स्यादित्येवमादीनि कार्याणि नकारजावित्यादेर्ज्ञेयानि ।

अस्थादिति । लुङ् । अड्व्यवायेपि ष इति । 'प्राक् सित–' इत्यनेन । अभ्यासेति । 'स्थादिष्वभ्यासेन' इति । नितष्ठाविति । 'आत औ णलः' । 'शर्पूर्वाः खयः' । स्थाता । स्थेयादिति । 'एर्लिङि' इत्येत्वम् । स्थास्यति । म्ना । अभ्यासः पारम्पर्येणावृत्तिः । मनतीति । मनादेशः । अम्नासीत् । मम्नौ । म्नेयात् । म्नायात् । दाण् । णकारो दाणश्च सा चेदिति विशेषणार्थः । प्रणियच्छतीति । यच्छादेशः । 'नेर्गद—' इति णत्वम् । प्रण्यदादिति । लुङ् । सिच् । 'गातिस्था–' इति सिचो लुक् । ददौ दाता । देयादिति । 'एर्लिङि' इत्येत्वम् । दास्यति । ह्वृ । ह्वरतीति । तिप् । शप् । गुणः । रपरः । अह्वार्षीदिति । लुङ् । सिच् । 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः । अट् । 'अस्ति—' इतीट् । जह्वारेति । णल् । वृद्धिः । स्थानिवत्त्वम् । द्वित्वम् 'उरत्' । 'हलादिः शेषः' । अभ्यासस्य जश्त्वम् ।

---

१. षत्वम् C, $D_1$, N. २. After it–नितष्ठतुः । नितष्ठुः । स्थाता । स्थास्यति $B_2$. ३. After it—अम्नासीत् । मम्नौ । म्नाता । म्नायात् । म्नेयात् । म्नास्यति । अम्नास्यत् $B_1$, $B_2$ ( मम्नतुः $B_2$ ). ४. प्रनियच्छति । प्रन्यदात् $D_1$. ५. देयात् । दाता । दास्यति $B_2$. ६. स्थानिवत्त्वात् द्वित्वम् $Bc_2$. ७. अभ्यासजश्त्वम् $Bc_2$.

**ऋतश्च संयोगादेर्गुणः ॥७।४।१०॥**

संयोगादेर्ऋदन्तस्य गुणः स्यादवृद्धिनिमित्ते लिटि परे ॥ जह्वरतुः । जह्वरुः । ऋतो भारद्वाजस्येति थलि नेट् । जह्वर्थ । क्रादिनियमादिट् । जह्वरिव । जह्वरिम । ह्वर्ता ।

**गुणोर्तिसंयोगाद्योः ॥७।४।२९॥**

अर्तेः संयोगादेर्ऋदन्तस्य गुणः स्याद्यकि असार्वधातुके लिङि च ॥ ह्वर्यात् ।

**ऋद्धनोः स्ये ॥७।२।७०॥**

ऋतो हन्तेश्च परस्य स्यस्य इट् स्यात् ॥ ह्वरिष्यति ।[७]

---

**ऋतश्च** । ननु सर्वत्रात्र साभ्यासमङ्गं न च तत्संयोगादिरभ्यासस्य संयोगविघातकत्वात् । एवं तर्हि प्राक् द्विर्वचनात् संयोगादिरिति विज्ञास्यते । ननु च वृद्धिविषयेपि पश्चाद्गुणेन भाव्यम् । मैवम् । पूर्वविप्रतिषेधेन वृद्धिरेव भवतीत्येतदभिप्रेत्याह । **अवृद्धिनिमित्ते लिटि परे** इति । जह्वरतुरिति । 'उरत्' ।

**गुणः** । ऋ गतिप्रापणयोः । भ्वादिः । ऋ सृ गतौ । ह्वादिः । द्वयोरप्यर्तीति छान्दसो लुका निर्देशः । **असार्वधातुके लिङीति** । या इत्यनुवृत्तेर्यकारादावेव स्यात् । तेन स्तीर्षीष्टेत्यादौ न । ह्वर्यादिति । 'उरण् रपरः' । अह्वरिष्यत् ।

---

१. $B_1$, $B_2$ drop जह्वरतुः. २. Dropped $D_4$. ३. च गुणः $N_1$, $D_3$. ४. चासावसार्वधातुके $B_2$. ५. $D_1$ drops च. ६. स्यप्रत्ययस्य $B_2$. ७. After it—अह्वरिष्यत् $D_3$. ८. ऋतश्चेति $Bc_2$. ९. Dropped $Bc_2$. १०. Dropped $Bc_2$. ११. परत्वात् $D_3$. १२. ऋ गतौ $Bc_2$.

स्वृ शब्दोपतापयोः ॥ स्वरति । स्वरतिसूतीति वेट् । अस्वारीत् । अस्वार्षीत् । स्वर्ता । स्वरिता ॥ स्वरतेः स्यस्य नित्यमिड् वाच्यः । स्वरिष्यति ॥ सृ गतौ । पाघ्राध्मेति धौरादेशः । धावति । सर्तेः शीघ्रगतावेवायमिष्टः । अन्यत्र तु सरति ।

**सर्तिशास्त्यर्तिभ्यश्च ॥३।१।५६॥**

एभ्यः परस्य च्लेरङादेशः स्यात् ॥ पृथक्सूत्रकरणादुभयपदेषु

**ऋदृशोऽङि गुणः ॥७।४।१६॥**

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि ॥ असरत् ॥

---

स्वृ । स्वरति । अस्वारीदिति । 'इट ईटि' इति सलोपः । 'सिचि वृद्धिः—' इति वृद्धिः । अस्वार्षीदिति । वृद्धिः । रपरः । षत्वम् । स्वरतेरिति । वाच्यो व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानं स्वरतीत्यस्माद् 'ऋद्धनोः स्ये' इति स्याद्विप्रतिषेधेनेति नित्यं स्यस्येडिति । तथा चोक्तं काशिकायाम् । 'स्वरतेरेतस्माद्विकल्पात् 'ऋद्धनोः स्ये' इत्येतद्भवति 'विप्रतिषेधेन' इति । अस्वरिष्यत् । सृ । सर्तीति । पृथगिति । यदि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' 'सर्तिशास्त्यर्तिभ्यः' इत्येकमेव सूत्रं क्रियेत तर्हि सर्तिप्रभृतिभ्योपि परस्मैपद एव स्यान्नात्मनेपदे । तस्मादेतेभ्यः समारतेत्यादावात्मनेपदेपि यथा स्यादित्येवमर्थं पृथक् सूत्रकरणम् । असरताम् । असरन् ।

---

१. Dropped $D_1$, $D_2$, $D_3$, $N_1$. २. स्वरतीति वेट् $D_3$. ३. सस्वार । सस्वरतुः । स्वर्ता $B_2$. ४. Dropped $N_1$, $D_2$, $D_3$, $D_4$. ५. After it—सिच् $Dc_3$. ६. वाच्ये व्याख्येये $Dc_3$. ७. °तीत्यस्य $Bc_2$. ८. क्रियते $Bc_2$, $Dc_3$. ९. आरताम् । आरन् । $Bc_2$.

ऋसृभ्यामङ् वेति केचित्[1] । असार्षीत् । सस्रतुः[2] । ससर्थ । क्रादित्वान्नेट् । ससृव ।

रिङ् शयग्लिङ्क्षु ॥७।४।२८॥

शे यकि यादावसार्वधातुके[3] लिङि च परे ऋतो रिङादेशः स्यात् ॥ रीङं बाधित्वा रिङ्विधिसामर्थ्यादकृतसार्वधातुकयोरिति[4] न दीर्घः । स्रियात् । सरिष्यति ।[5]

ऋ गतौ प्रापणे च । ऋच्छति ।[6] आरत् । आर्षीत् । द्वित्वम् । उरत् । वृद्धिः । आर ।

---

ऋसृभ्यामिति । तथोक्तं कातन्त्रवृत्तिपञ्जिकायाम् । अर्तिसर्त्तीति यद्यपि धातुमात्रनिर्देशे तिपि विशेषाविवक्षायां विकरणे[7] न भवति । तथापि लुग्विकरणयोरेव ग्रहणं शास्तिना साहचर्यादित्याद्युक्त्वा भौवादिकयोः सिजेव आर्षीत् असार्षीदिति एवं व्यवस्थायामुक्तायां विकल्प एव उक्तः स्यादित्युक्तम्[8] । ससार । सस्रतुरिति । 'इको यणचि' इति यण् । 'द्विर्वचनेचि' इति स्थानिवत्त्वात् साकच्कस्य द्वित्वम् । उरत् । ससर्थेति । गुणः । सर्ता ।

रिङ् शय इति । 'तुदादिभ्यः शः' । 'कृञः श च' । यक् । 'सार्वधातुके यक्' । रीङं बाधित्वेति । 'रीङृतः' इति । सरिष्यतीति । 'ऋद्धनोः स्ये' इतीट् । असरिष्यत् ।

ऋ । ऋच्छतीति । 'पाघ्राध्मा—' इति ऋच्छादेशः । आरदिति 'सर्तिशास्त्यर्ति' इत्यङ् । 'ऋदृशोङि गुणः' । 'आडजादीनाम्' । आर्षीदिति । मतान्तरे । सिच् । वृद्धिः । आर्ष्टाम् । आर्षुः । द्वित्वमिति । 'लिटि धातोरनभ्यासस्य' इत्यनेन । वृद्धिरिति । 'अत्तोञ्गिति' इत्यनेन ।

---

१. ऋसृभ्या° P, Com. २. ससार । सस्रतुः $B_2$, $D_2$. ३. यादावार्धधातुके C. ४. योर्दीर्घो न । $D_3$. ५. After it—असरिष्यत् $D_4$. ६. After it—आर्च्छत् $D_1$, $D_2$, $B_1$; प्रार्च्छत् $B_2$. ७. विकरणो $Bc_2$. ८. Dropped $Bc_2$. ९. °ति केचिदित्युक्तम् । $Bc_2$.

**ऋच्छत्यॄताम् ॥७।४।११॥**

तौदादिकऋच्छेर्ऋधातोर्ॠतां चा[1]वृद्धिनिमित्ते लिटि गुणः स्यात् ॥ आरतुः । आरुः ।

**इडत्त्यर्तिव्ययतीनाम् ॥७।२।६६॥**

अद्ऋव्येञ् एभ्यस्थलो नित्यमिट् स्यात् ॥ आरिथ । [2]आरिव । अर्ता । गुणोर्त्तीति गुणः । अर्यात् । अरिष्यति ।[3]

---

ऋच्छ । अर्तेरप्यत्र प्रश्लेषो बहुवचननिर्देशादवसीयत इत्यभिप्रेत्याह । तौदादिकऋच्छेर्ऋधातोरिति । अथार्तिप्रश्लेषः किमर्थः । आरतुरित्यादिरूपसिद्धये । अन्यथा ऋ अतुस् इति स्थिते विव्यतुरितिवत् यणः पूर्वं द्वित्वम् । उरत्वं साङ्गं बाधित्वा स[4]वर्णत्वादन्तरङ्गत्वात् सवर्णदीर्घः । तत्र य[5]द्यभ्यासग्र[6]हणे ग्रहः स्यात् उरत्वं हलादिः शेषः अत आदेः आतो लोपः आरुरिति स्यात् । अथ धातुग्र[7]हणाद्ग्रहः ततः ऋदन्तत्वाद् गुणे अरतुरिति स्यात् । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । ऋ गतौ प्रापणे च । ॠकारान्ताः कॄ विक्षेपे [8]इत्यादयः । अत्र वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिरे[9]व भवतीत्यभिप्रेत्याह । अवृद्धिनिमित्तेति । वृद्धेर्निमित्तं वृद्धिनिमित्तम् । यस्मिन् लिटि परतो वृद्धिर्न प्राप्नोति तं वर्जयित्वान्यस्मिन् लिटि गुणः स्यादित्यर्थः । अयं भावः । वृद्धिप्राप्तौ वृद्धिरेव पूर्वविप्रतिषेधेनेष्यते । यत्र वृद्धिर्न प्राप्नोति तत्र गुण इति ।

इट् इति । अद भक्षणे । ऋ गतौ प्रापणे च । ऋ सृ[10] गतौ । व्येञ् संवरणे । आरिथेति । क्रादिनियमादिट् । अरिष्यतीति । ‘ऋद्धनोः स्ये’ इतीट् ।

---

१. च वृद्धि $D_2$, $D_3$, $D_4$, P, C, $B_1$, $B_2$. २. आरिव । आरिम । $D_1$, $D_3$. ३. After it—आरिष्यत् $D_4$. ४. वर्णत्वादन्त° $Dc_3$. ५. यद्यभ्यास° $Dc_1$. ६. °ग्रहणे ग्रहः $Dc_3$. ७. °ग्रहाद्ग° $Bc_2$. ८. इत्याद्याः । $Bc_2$. ९. एव dropped $Bc_2$. १०. Dropped $Bc_2$; ऋ dropped $Dc_3$.

श्रु श्रवणे ।

**श्रुवः शृ च ॥३।१।७४॥**

श्रुवः श्नुप्रत्ययः स्यात् कर्तरि सार्वधातुके परे शृभावश्च । शृणोति । शृणुतः ।

**हुश्नुवोः सार्वधातुके ॥६।४।८७॥**

हुश्नुवोरनेकाचोरसंयोगपूर्वोवर्णस्य यण् स्यादचि

---

श्रु ।

श्रुवः । शपि प्राप्ते श्नुर्विधीयते । श्रुव इति । प्रत्ययविधौ पञ्चमी यदा त्वादेशेन संबध्यते तदार्थात् षष्ठी संपद्यते । चशब्देन प्रत्ययान्तरे शृभावस्यासंभवं दर्शयति । शृणोतीति । तिप् । श्नुः । श इत् । श्नोर्ङित्वाद्गुणाभावः । णत्वम् । श्नोस्तिपि गुणः । शृणुत इति । 'सार्वधातुकमपित्' इति ङित्वम् । 'क्ङिति च' इति गुणनिषेधः ।

**हुश्नुवोः** । **अनेकाचोरिति** । अङ्गयोरिति शेषः । ओरित्यनुवर्तते । असंयोगपूर्वस्योकारविशेषणार्थम् । अन्यथा हुश्नुवोरेव विशेषणं स्यात् । ततश्च तक्ष्णुवन्ति इत्यत्रैव निषेधः स्यात् । राध्नुवन्तीत्यत्र न स्यात् । उर्ज्वा जुह्वतीत्यत्र यणादेशो न स्यात् । तस्मादोरित्यनुवर्तनीयम् । तस्य च विशेषणमसंयोगपूर्वस्येति तदेतदभिप्रेत्याह । **असंयोगपूर्वोवर्णस्येति** । असंयोगपूर्वो य उवर्णस्तस्येत्यर्थः । हुश्नुवोरिति किम् । योयुवति । इदमेव श्नुग्रहणं ज्ञापयति भाषायां यङ्लुगस्तीति ।

---

१. Before श्रुवः शृ च $B_1$ has—श्रुवो वा शृ च । श्रुवो धातोः श्नुप्रत्ययो वा स्यात् । पक्षे कर्तरि शपिति शप् । यत्र शप् तत्र शृ आदेशो वा । शरति । श्रवति । कर्तरि सार्वधातुके परे शृभावश्च । शृणोति. २. परे Dropped C. $D_1$, $D_3$. ३. यद्यत्रादेशेन । $Bc_2$. ४. श्नु इत्यत्र ङित्वा° $Bc_2$. ५. शक्नुवन्ती° $Bc_2$.

सार्वधातुके । शृण्वन्ति ।

**लोपश्चास्यान्यतरस्यां म्वोः ॥६।४।१०७॥**

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यान्म्वोः परयोः ॥ शृण्वः । शृणुवः । शृण्मः । शृणुमः । परत्वाद्गुणेन लोपो बाध्यते । शृणोमि । शृणुयात् ।[1] पररूपत्वम् । शृणुयुः ॥[2]

**उतश्च प्रत्ययादसंयोगपूर्वात् ॥६।४।१०६॥**

असंयोगपूर्वात् प्रत्ययस्योकारात् परस्य हेर्लुक् स्यात् ॥ शृणु । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृण्व ।

---

छन्दसि हि 'छन्दस्युभयथा' इत्यार्धधातुकत्वादेव यणोप्रसङ्गः । न च यङ्लुगन्तादन्यदुवर्णान्तमनेकाच असंयोगपूर्वं सार्वधातुकं प्रत्युदाहरणमस्ति । अरुत्ननिति तु नानेकाच् । 'असिद्धवदत्र—' इत्यसिद्धत्वात् ।

लोपः । असंयोगपूर्वस्येति किम् । तक्ष्णुवः । तक्ष्णुमः । प्रत्ययस्येति किम् । युवः । युमः । पररूपत्वमिति । 'उस्यपदान्तात्' इति । शृणुयुरिति । 'जुसि च' इति गुणो न । यासुटो ङित्त्वात् ।

उतश्च । असंयोगपूर्वस्येति किम् । तक्ष्णुहि । गुणावादेशाविति । गुणः 'सार्वधातुकार्धधातुकयोः' इति । अवादेशः । 'एचोयवायावः' । शृणवानीति । 'मेर्निः' । 'आडुत्तमस्य' इत्याट् । शृणवाव । शृणवामेति । 'लोटो लङ्वत्' इति सलोपः । अशृणोत् । अशृण्व ।

---

१. After it—यासुटो ङित्त्वान्न गुणः $B_2$. २. After it—शृणोतु $B_2$. ३. प्रत्ययोकारात् $B_2$, $D_1$, $D_3$. ४. °दन्यत्र $Dc_3$. ५. सार्वधातुके $Dc_3$.

अशृणुव । अशृण्म । अशृणुम । अश्रौषीत् ।[1] शुश्राव । शुश्रोथ । शुश्रुव । श्रूयात् ।

षु प्रसवे ।[3]

**स्तुसुधूञ्भ्यः परस्मैपदेषु ॥७।२।७२॥**

एभ्यः सिच इट् स्यात् परस्मैपदेषु ॥ असावीत् ।[4] सुषुविव ।[5] रुदुसुनुधातूनां लिटं विना इड् वेति केचित् । सोता । सविता ।[6]

स्रु गतौ ।

---

अशृणुवेति । लङ् वस् । उलोपो वा । 'नित्यं ङितः' इति सलोपः । अश्रौषीदिति । लुङ् । च्लिँ । सिच् । वृद्धिः । इलोपः । इट् । षत्वम् । अट् । शुश्राव । शुश्रुवतुः । शुश्रोथेति । थल् । गुणः । द्वित्वम् । 'हलादिः शेषः' । क्रादिनियमान्नेट् । श्रूयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः । श्रोष्यति ।

षु । सवति ।

स्तुसु । ष्टुञ् स्तुतौ । षुञ् अभिषवे । षु प्रसवे । धूञ् कम्पने । असावीदिति । 'सिचि वृद्धिः—' इति वृद्धिः । सुषाव । सुषविथ । सुषोथ । सुषुविवेति । क्रादिनियमादिट् । रुदु इति । रु शब्दे । दु गतौ । षु प्रसवे । षुञ् अभिषवे । णु स्तुतौ । केचिदिति । हेमसूर्यादयः । सूयात् । सविष्यति । सोष्यति ।

स्रु । स्रवति ।

---

१. $B_1$ has अश्रौष्टाम् । शुश्राव after it ; $D_1$ drops शुश्राव; अश्रौषीत् । अश्रौष्टाम् । अश्रौषुः । शुश्राव । शुश्रुवतुः । शुश्रुव । श्रूयात् । श्रोता । श्रोष्यति । $B_2$; अश्रौषीत् । अश्रौष्टाम् । शुश्राव । शुश्रुवतुः । शुश्रोथ । शुश्रुव । शुश्रुम । श्रूयात् $D_2$. २. Dropped N, $D_3$ ; After it—शुश्रुवतुः । शुश्रुवुः । $D_4$. ३. प्राणिप्रसवे $B_2$, $D_4$. ४. After it–सुषाव $D_4$, $B_1$, P, C. ५. $B_1$ has before it—सुषुवतुः । सुषुवुः । सुषविथ । सुषोथ । सुषुवथुः । सुषुव । सुषाव । सुषव and after it—सुषुविम. ६. After it—सोष्यति । सविष्यति $B_2$. ७. तिप् । $Bc_2$. ८. Dropped $Bc_2$.

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥३।१।४८॥**

ण्यन्तात् श्र्यादिभ्यश्च्लेश्चङादेशः स्यात् कर्त्रर्थे लुङि[1] ॥ द्वित्वम् । उवङादेशः । असुस्रुवत् । 'ऋतो भारद्वाज[2]—' इति प्राप्त इट् क्रादिसूत्रेणापोद्यते[3] । सुस्रोथ । सुस्रुव ।[4] स्रूयात् ॥

द्रु गतौ ।[5] अद्रावीत् । अद्रौषीत् ।[6] दुद्रविथ । दुद्रोथ । [7]मतान्तरे नित्यमिट् ।[8] दुद्रुविव ।[9] द्रोता । मतान्तरे इड् वा । [10]द्रविता ॥

---

णिश्रि । सिजपवादश्चङ् विधीयते । श्रिञ् सेवायाम् । द्रु गतौ । स्रु गतौ । चङितिङकारो गुण[11]निषेधार्थः । चकारश्चङीति विशेषणार्थः । द्वित्वमिति । 'चङि' इति । उवङादेश इति । 'अचि श्नुधातु—' इति । असुस्रुवदिति । लुङ् । तिप् । च्लिः । 'हलादिः शेषः' । 'इतश्च' इतीकारलोपः । असुस्रु अत् इति स्थिते तिबा[12]श्रयो लघूपधगुणः प्राप्तः चङाश्रय उवङ् । तत्रान्तरङ्गत्वादुवङ् । कर्तरि किम् । अकारिषातां कटौ देवदत्तेन । कर्तरीति 'अचः कर्मकर्तरि' इत्यचः प्रागनुवर्तते । असुस्रुवताम् । असुस्रुवन् । सुस्राव । सुस्रोथेति । थलि गुणः । स्रोता । स्रूयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः । स्रोष्यति ।

द्रु । द्रवति । अद्रावीत् । अद्रौषीदिति । 'रुद्रुसुनुधातूनाम्' इति वेट्[13] । 'सिचि वृद्धिः—' इति वृद्धिः । इट्पक्षे 'इट ईति' इति सलोपः । अन्यत्र सस्य षः । दुद्रविथ । दुद्रोथेति । थल् । गुणः । द्वित्वम् । 'ऋतो भारद्वाज—' इति पक्षे इट् । [14]मतान्तरे [15]दुद्रविथेति नित्यमिट् । हेमसूर्यादिमते रुद्रुसुनुधातूनां लिटं विनेत्युक्तत्वादिति भावः । द्रोता । द्रविता । द्रूयात् । द्रविष्यति । द्रोष्यति ।

---

१. लुङि परे $D_3$. २. भारद्वाजस्य—$D_1$. ३. °पोह्यते $B_2$. ४. After it—सुस्रुम $D_3$. ५. Before it—द्रविता $B_2$. ६. After it—अद्रौष्टाम् । अद्रौषुः । दुद्राव । दुद्रविथ । मतान्तरे नित्यमिट् । दुद्रुविव । द्रोता । द्रूयात् । मतान्तरे इड् वा । द्रुगतौ &c. $D_4$. ७. After it—दुद्रविथ $D_3$. ८. C has मतान्तरे इड् वा after द्रविता. ९. After it—दुद्रुविम । C; द्रोता । द्रोष्यति । द्रविता । $D_2$. १०. Dropped $D_1$, $D_3$, N, $B_2$; द्रोता । द्रविता $D_2$. ११. °निषेधार्थम् $Dc_1$, $Dc_4$; ओर्गुणप्रतिषेधार्थः $Dc_3$. १२. °श्रये $Bc_2$, $Dc_3$. १३. वेट् $Bc_2$. १४. मतान्तरे इति $Bc_2$. १५. दुद्रविथेत्यत्र नित्यमिट् $Dc_1$, $Dc_4$.

द्रु गतौ ।[1] 'णिश्रि—' इति चङ् । अदुद्रुवत् । दुद्रोथ । दुद्रुव । द्रोता ।

गम्लृ गतौ । '[2]इषुगमि—' इति छः । गच्छति ॥

**पुषादिद्युताद्य्लृदितः परस्मैपदेषु ॥३।१।५५॥**

श्यन्[4]विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य[5] च्लेरङ् स्यात्

---

द्रु । द्रवति । अदुद्रुवदिति । 'चङि' इति द्वित्वम् । 'हलादिः शेषः' । 'अचि श्नुधातु—' इत्युवङ् । दुद्राव । दुद्रोथ । दुद्रुवेति । क्रादिनियमान्नेट् । द्रोता । द्रूयते । द्रोष्यति ।

गम्लृ । गच्छतीति । लट् । तिप् । शप् । 'इषुगमि—' इति छः ।

पुषादि । पुषो हि भ्वादौ पठ्यते दिवादौ च । क्र्यादौ च । अत्र भौवादिको यदि गृह्यते तर्हि पुषाद्यनन्तरं द्युतादीनां पाठात् पृथग् ग्रहणं न कुर्यात् । तेनैव सिद्धत्वात् । क्र्याद्यन्तर्गणोपि न । तत्र हि चत्वार एव पठ्यन्ते । यदि तेभिमतास्तर्हि ऌदित एव तान् कुर्यादिति । अतः पारिशेष्याद्दिवादिक एव । न हि स ऌदित् कर्तुं शक्यते तत्रो-दित्कार्याभावे तयोरभावः स्यादित्येतन्मनसि कृत्वाह । **श्यन्विकरण-पुषादेरिति** ।

पुषिः शुषिस्तुषिश्चैव दुष्श्लिषी शकि ञिष्विदा ।
क्रुधिक्षुधी शुधिः षिधूरधृनशृतृपो दृपद्रुही अपि ॥१॥
मुहिः ष्णुहिः ष्णिहिः शम् तम् दम् श्रम् भ्रम् क्षम् क्लमो मदी ।
अस् यस् जस् तस् दसु वसु व्युष् प्लुष् बिस् कुसि बुस् मुसः ॥२॥

---

१. After it— द्रवति $B_2$. २. इषुगमियमां छः $D_1$, $B_2$. ३. ऋदितः P. ४. °विकरणे C; °विकरणस्य $B_2$. ५. परस्मैपदेषु च्लेरङादेशः स्यात् $D_1$. ६. द्विः $Bc_2$. ७. गम्लृ गतौ । 'पाघ्रा–' इति गच्छादेशः $Dc_3$. ८. पुषादि $Bc_2$, $Dc_3$. ९. तत्रोदितकार्ये भाव्ये तयोरभावेः स्यात् $Bc_2$, $Dc_3$ (स्यात् dropped $Dc_3$ ).

प[1]रस्मैपदेषु । अनङीत्युक्तेरुपधालोपो न । अगमत् । जगाम[2] । '[3]गमहनजन—' इत्युपधालोपः । तस्य 'द्विर्वचनेचि' इति स्थानिवत्त्वात् साच्कस्य द्वित्वम् । जग्मतुः । जग्मुः[4] । जगमिथ । जगन्थ । जग्मिव[5] । जग्मिम[6] ।

**गमेरिट् परस्मैपदेषु ॥७।२।५८॥**

गमेः सकारादेरार्धधातुकस्येट्[7] स्यात् परस्मैपदेषु ॥ ग[8]मिष्यति । परस्मैपदग्रहणं तङानयोरभावं लक्षयति । तेनासत्यपि

---

मसीलुठौ लुटिं केचित् उच्भृशभ्रंशुवृशक्रुशः ।
तृषि हृष् रुष् रिष डिपः कुप्गुपौ युप् रुपोपि लुप् ॥३॥
लुभक्षुभौ णभतुभी क्लिदमदा ष्विद् ऋधुगृधु ।
पञ्चषष्टिरिमे ज्ञेयाः पुषाद्या अङ्विधौ बुधैः ॥४॥
एकोनविंशतिः केचिद्वदन्त्येतान् शमावधीन् ।
द्युतश्विताञिमिद्ष्विदौ क्ष्विद्रुच्घुट् रुट्लुटी अपि ॥५॥
शुभिक्षुभी णभतुभी स्रंसुभ्रंसू तथा परौ ।
ध्वंसुभ्रंशू तथा भ्रंसु ध्वस् वृतौ वृध् शृधावपि ॥६॥
स्यन्दू कृपू द्युताद्याः स्युश्चतुर्विंशति[9]रत्र तु ॥७॥

**अनङीत्युक्तेरिति** । 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्यत्र । **जगामेति** । णल् । 'अत उपधायाः' इति वृद्धिः । द्वित्वम्[10] । चुत्वम् । **जगमिथ** । **जगन्थेति** । थल् । 'उपदेशेऽत्वतः' इतीडभावः । 'ऋतो भारद्वाज—' इति प[11]क्षे इट् । इडभावे 'नश्चापदान्त—' इत्यनुस्वारः । 'अनुस्वारस्य ययि परसवर्णः' ।

**गमेः** । गमेरित्यादेशानादेशयोर्ग्रहणमविशेषात् । **गमिष्यतीति** । लृट् । स्यः । षत्वम् । **परस्मैपदग्रहणमित्यादि** । तेनासत्यपि

---

१. परस्मैपदेषु dropped P. २. Dropped $D_1$. ३. 'गमहन—' $D_1$. ४. Dropped $D_1$. ५. Dropped $D_2$. ६. जग्मिम dropped N, $D_3$, $D_4$. ७. °स्येडागमः $B_2$. ८. गम्यात् । गन्ता । गमिष्यति $B_2$. ९. °ति धातवः $Dc_1$, $Dc_3$, $Dc_4$. १०. द्विः $Bc_2$. ११. वेट् $Bc_2$.

परस्मैपदे इट् स्यात्[1] । आत्मनेपदयोग्याद्वेति[2] केचित् ।[3]

सृप्लृ गतौ । सर्पति । लृदित्वादङ् । असृपत् । 'कृषमृश—' इति वा सिच् । 'अनुदात्तस्य च—' इत्यम् वा । असाप्सीत्[4] । अस्राप्सीत् । ससर्पिथ[5] । ससृपिव ।[6] स्रप्ता । सर्प्ता ॥[7]

स्कन्दिर् गतिशोषणयोः ।

---

लुग्गेपि परस्मैपदे अथवान्यस्मिन् सकारादौ प्रत्यये कृति परे इट् स्यादित्यर्थः । तथा चोक्तं काशिकायाम् । 'आत्मनेपदसमानस्थस्य गमेरयमिडागमो नेष्यते । अन्यत्र सर्वत्रैवेष्यते[8] । कृत्यपि भवति परस्मैपदलुकि च । संजिगमिषिता व्याकरणस्य जिगमिषत्वमिति । पदशेषकारस्य पुनरिदं दर्शनं गम्युपलक्षणार्थं[10] परस्मैपदग्रहणम् । परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात् सकारादेरार्धधातुकस्येड् भवतीति । तन्मतेन संजिगंसिता व्याकरणस्येति । भवितव्यमिति । आत्मनेपदयोग्यादिति । अर्वाचीनमतमेतत् । अगमिष्यत् ।

सृप्लृ । सर्पतीति । लट् । शप् । गुणः । रपरः । लृदित्वाद-ङिति । 'पुषादि—' इति । असृपदिति । अट् । 'इतश्च' इतीकार लोपः । असार्प्सीदिति । अमभावे रूपम् । 'वदव्रज—' इति वृद्धिः । 'अस्ति—' इतीट् । अस्राप्सीदिति । अमृपक्षे[11] रूपम् । वृद्धिः । ससर्प । सस्रपतुः । ससर्पिथ । ससृपिवेति । क्रादिनियमादिट् । सर्प्ता । स्रप्तेति । 'अनुदात्तस्य—' इत्यम् वा । सृप्यात् । सर्प्स्यति । स्रप्स्यति । अस्रप्स्यत् । असर्प्स्यत् ।

स्कन्दिर् ।

---

१. After it—जिगमिषुः $B_2$. २. °योगाद्वे° $D_4$, P, C, $B_1$, $B_2$ N. ३. After it—जिगमिषुः $D_4$. ४. अस्राप्सीत् । असार्प्सीत् C. ५. Before it—असृपत् । ससर्प $D_2$. ६. After it—ससृपिम $D_4$. ७. After it—सर्प्स्यति । स्रप्स्यति $B_2$. ८. Dropped $Bc_2$. ९. एव dropped $Dc_3$. १०. °लक्षणं $Bc_2$ ११. Dropped $Bc_2$.

**वेः स्कन्देरनिष्ठायाम् ॥८।३।७३॥**

वेः परस्य स्कन्देः [1]षत्वं वा स्यान्न तु निष्ठायाम् ।[2] विस्कन्दति । विष्कन्दति । निष्ठायां तु

**परेश्च ॥८।३।७४॥**

अस्मात् स्कन्देर्वा [3]षत्वम् । [4]परिस्कन्दति । परिष्कन्दति । [5]निष्ठायामपि वा षत्वम् ।[6] [7]परिष्कण्णः । परिस्कन्नः । [8]इरित्वादङ् वा । अस्कदत् । अस्कान्त्सीत् । अस्कान्ताम् ।[9] चस्कन्दिथ । झरो झरि सवर्णे । चस्कन्थ । [10]स्कंद्यात् ।

---

वेः । विष्कन्दति । विस्कन्दतीति । लट् । शप् । विस्कन्न इति । 'निष्ठा' इति क्तः । 'रदाभ्याम्—' इति तकारदकारयोर्नत्वे 'अनिदिताम्—' इति [11]न्लोपः ।

परेः । निष्ठायामपि वा षत्वमिति । पृथग्योगकरणसामर्थ्यादिति भावः । स्कन्देत् । अस्कान्त्सीत् । चस्कन्द । चस्कन्दतुः । चस्कन्दिथेति । 'ऋतो भारद्वाज—' इति वेट् । स्कन्ता । स्कद्यादिति । 'अनिदिताम्—' इति [12]न्लोपः । स्कन्त्स्यति । अस्कन्त्स्यत् ।

---

१. अनिष्ठायां षत्वं वा स्यात् $D_1$. २. विष्कन्दति । विस्कन्दति $D_4$, N. ३. षत्वं वा स्यात् $D_3$. ४. परिष्कन्दति । परिस्कन्दति N. ५. वा निष्ठायामपि षत्वम् । $D_1$. ६. After it—अनिष्ठायामिति योगविभागसामर्थ्यादनुवृत्तेः $D_2$. ७. परिष्कन्नः $B_2$. ८. From इरित्वात् to अस्कान्ताम् dropped $D_2$; N and $D_3$ have for it only अस्कान्त्सीत् । अस्कदत् ।; च्लेरङ् वा $D_4$. ९. After it—अस्कान्त्सुः C. १०. स्कन्ता । स्कन्द्यात् । स्कन्त्स्यति । अस्कन्त्स्यत् $D_1$, $B_2$; झरो झरि सवर्णे । स्कन्ता । स्कद्यात् । $N_1$. ११. नलोपः $Dc_3$. १२. नलोपः $Dc_3$.

तॄ प्लवनतरणयोः । ऋत इदितीत्वे प्राप्ते इत्वोत्वाभ्या गुणवृद्धी[1] विप्रतिषेधेनेति गुणः । तरति । अतारीत् । ऋच्छत्यॄतामिति गुणः । गुणाकारत्वेपि तॄफलभजेत्येत्वम् । तेरतुः । तेरुः[2] । ॠदन्तत्वात् सर्वत्रेट् । तेरिथ । तेरिवे[3] ।

**वॄतो वा ॥७।२।३८॥**

वृङ्वृञ्भ्यामॄदन्ताच्च इटो दीर्घो[4] वा स्यान्न तु लिटि[5] ॥ तरिता । तरीता । लिटि तु । तेरिम ।

---

तॄ । सेट् । तरतीत्यत्रान्तरङ्गत्वादित्वं स्यादित्याशङ्क्याह । ऋत इदितीत्वे इत्यादि । तरेत् । अतारीदिति । लङ् । सिच् 'आर्धधातुकस्येड् वलादेः' । 'सिचि वृद्धिः—' इति वृद्धिः । अतारिष्टाम् । अतारिषुः । ततार । गुणाकारत्वे इति । गुणाकारत्वे सति न 'शसदद—' इत्येत्वाभ्यासलोपनिषेधे प्राप्तेपीत्यर्थः ।

वॄतः । वॄत इति किं वॄ वरणे अस्यैव ग्रहणमथवा ॠकारान्तानामथास्य ऋकारान्तानां च अथवा वृङ्वृञोश्चान्येषामॄकारान्तानामथवा वृङ्वृञोश्च ॠकारान्ताम् । तत्र यदि प्रथमः पक्षः स्यात् तदा त्र इत्येत्वं निर्देशं कुर्यात् यथा 'ग्रो यङि' इति । अथ द्वितीयः अस्य पृथग् ग्रहणं न कुर्यात् । ऋत इत्यनेनैव सिद्धत्वात् । अथ तृतीयः 'ॠतश्च' इत्यत्र पुनर् ऋशब्देन ह्रस्वग्रहणं न कुर्यात् । इदमेवानुवर्तिष्यते । अथ चतुर्थः वृङ्वृञोः पृथग् ग्रहणं न कुर्यात् । तस्मात् पारिशेष्यात् पञ्चमोत्राश्रितः पक्ष इति मत्वाह । वृङ्वृञ्भ्यामॄदन्ताच्चेति । तरिता । तरीतेति । लुट् । तासिः । इट् । गुणः । रपरः । तेरिमेति । 'ऋच्छ—' इति गुणः । रपरः[6] । द्वित्वम् । 'तॄफल—' इत्येत्वाभ्यासलोपौ ।

---

१. C has भजतः after it; $D_3$ has भवतः after it. २. Dropped $B_2$, N, $D_4$; before it—स्कन्त्ता $D_4$. ३. After it—तेरिम $D_3$. ४. वा दीर्घः $B_1$, $D_2$, $N_1$. ५. $B_1$, $D_2$, $N_1$ have तेरिव before it; लिटि तु तेरिम dropped $D_3$. ६. रपरत्वम् । 'तॄफल—' $Dc_3$.

## सिचि च परस्मैपदेषु ॥७।२।४०॥

वृङ्वृञ्भ्यामृदन्ताच्च इटो दीर्घो न स्यात् सिचि परस्मैपदेषु । अतारिष्टाम् ।

## न लिङि ॥७।२।३९॥

वॄत इटो लिङि न दीर्घः । तरिषीष्ट । यासुटः कित्त्वान्न गुणः ।

## ॠत इद्धातोः ॥७।१।१००॥

ॠदन्तस्य धातोरिकारान्तादेशः स्यात् । रपरत्वम् । हलि चेति दीर्घः । तीर्यात् । तरिष्यति । तरीष्यति ।

षञ्ज सङ्गे ।

---

सिचि । अतारिष्टामिति । 'तस्थस्थमिपाम्—' इति तसस्ताम् । इट् । सिच् । वृद्धिः ।

न लिङि । तरिषीष्टेति । आशीर्लिङ् । कर्मण्यात्मनेपदम् । 'लिङः सीयुट्' । इट् । 'सुट्तिथोः' । षत्वम् । ष्टुत्वम् । यासुटः कित्त्वादिति । तॄयात् इति स्थिते 'किदाशिषि' इत्यनेन यासुटः कित्त्वात् । 'क्ङिति च' इति गुणनिषेध इत्यर्थः ।

ॠतः । धातोः किम् । मातॄणाम् । ननु चात्र लाक्षणिकत्वादेव न स्यात् । मैवम् । लाक्षणिकस्याप्यत्रेष्यते चिकीर्षतीति । तरिष्यति । तरीष्यति । 'वॄतो वा' इति वा दीर्घः । अतरिष्यत् । अतरीष्यत् ।

षञ्ज । इत आरभ्य त्रयोनिटः ।

---

१. न दीर्घः $D_4$. २. वृङ्वृञ्भ्यामृदन्ताच्च $D_2$. ३. षत्वष्टुत्वे $Dc_3$.

## दंशसञ्ज[१]स्वञ्जां[२] शपि ॥६।४।२५॥

एषां न्लोपः[३] स्याच्छपि । षत्वम् । निषजति । अटोन्तरेपि[४] षत्वम् । वृद्धिः । 'चोः कुः'[५] । अनुस्वारपरसवर्णौ । न्यषाङ्क्षीत् ।[६] अभ्यासेनान्तरेपि अभ्यासस्य च षत्वम्[७] ।[८] निषषञ्ज । ससञ्जतुः । ससञ्जुः[९] । ससञ्जिथ । ससङ्क्थ ।[१०] सङ्क्ता । सज्यात् । सङ्क्ष्यति ॥[११]

---

दंश । दंश दशने । षञ्ज सङ्गे । स्वञ्ज[१२] परिष्वङ्गे । षत्वमिति । 'उपसर्गात् सुनोति—' इत्यनेन । निषजतीति[१३] । 'धात्वादेः षः सः' । अटोन्तरेपि[१४] षत्वमिति । 'प्राक्सितादड्व्यवायेपि' इति । वृद्धिरिति । हलन्तलक्षणा । न्यषाङ्क्षीदिति । लुङ् । तिप् । सिच् । अट् । 'इतश्च' । इट् । न्यषाङ्क्ताम् । 'झलो झलि' इति सलोपः[१५] । न्यषाङ्क्षुः । अभ्यासेनेति । 'स्थादिष्वभ्यास—' इत्यनेन । निषषञ्जेति । द्वित्वम् । ससञ्जतुरिति । संयोगाल्लिटो[१६] वा कित्त्वमिति केचित् । ससञ्जिथ । ससङ्क्थेति । 'ऋतो भारद्वाज—' इति वेट् । सङ्क्तेति । लुट् । तासिः । 'चोः कुः ।' अनुस्वारपरसवर्णौ । सज्यादिति । 'अनिदिताम्—' इति न्लोपः[१७] । सङ्क्ष्यतीति । लृट् । स्यः । 'चोः कुः' । षत्वम् । अनुस्वारपरसवर्णौ । कषयोगे[१८] क्षः । असङ्क्ष्यत् ।

---

१. षञ्ज P; $D_4$.  २. ष्वञ्जां $N_1$, $D_4$.  ३. नलोपः C, $D_2$, $D_3$, $D_4$. ४. अटान्तरेपि $B_1$, $D_3$, $D_4$; अडन्तरेपि $D_1$, $D_2$.  ५. Before it—'चोः कुः' $D_3$.  ६. After it—असाङ्क्ताम् $B_1$; न्यषाङ्क्ताम् $B_2$, C. ७. षत्वमभ्यासस्य च $D_1$; अभ्यासान्तरेप्यभ्यासस्य षत्वम् $D_3$.  ८. After it—स्यात् $D_2$.  ९. ससजतुः for it $D_3$  १०. After it—ससञ्जथुः । ससञ्ज । $D_4$.  ११. After it—असङ्क्ष्यत् $D_4$.  १२. ष्वञ्ज $Bc_2$, $Dc_3$. १३. निष्वजतीति $Dc_3$.  १४. अडन्तरेपि $Bc_2$ ; अटान्तरेपि $Dc_3$. १५. सिचो लोपः $Dc_3$. १६. संयोगात् परो $Dc_3$. १७. नस्य लोपः $Bc_2$ ; नलोपः $Dc_3$. १८. °संयोगे $Bc_2$.

दृशिर् प्रेक्षणे । पश्यति ।

**न दृशः ॥३।१।४७॥**

दृशश्च्लेः क्सो न स्यात् ॥ इरित्त्वादङ् वा । ऋदृशोऽङि गुणः । अदर्शत् । सिच्पक्षे ।

**सृजिदृशोर्झल्यमकिति ॥६।१।५८॥**

अनयोरमागमः स्यात् झलादावकिति[3] ॥ वृद्धिः । व्रश्चादीनां षत्वम् । कत्वम्[4] । अद्राक्षीत् । अद्राष्टाम् ।

**विभाषा सृजिदृशोः ॥७।२।६५॥**

आभ्यां[5] थल इड्वा स्यात् ॥ ददर्शिथ । दद्रष्ठ ।[6]

---

**दृशिर्** । **पश्यतीति** । 'पाघ्राध्मा—' इति पश्यादेशः । **इरित्त्वादिति** । 'इरितो वा' इत्यनेन । **अदर्शादिति** । 'इतश्च' । अट् । अदर्शताम् ।

**सृजि** । लघूपधगुणापवादोयमम् । **वृद्धिरिति** । अमि कृते हलन्तलक्षणा वृद्धिः । पूर्वं त्वमा बाध्यते । झलि किम् । सर्जनम् । दर्शनम् । अकितीति किम् । सृष्टः । दृष्टः । धातोः स्वरूपग्रहे तत्प्रत्यये कार्यविज्ञानादिह न भवति । देवदृग्भ्याम् । रज्जुसृग्भ्याम्[7] । **अद्राष्टामिति** । तसस्ताम् । अम् । वृद्धिः । 'झलो झलि' इति सलोपः । षत्वम् । ष्टुत्वम् । अद्राक्षुः । ददर्श ।

**विभाषा । ददर्शिथ । दद्रष्ठेति** । अम् । षत्वम् । ष्टुत्वम् । द्रष्टा । दृश्यात् । द्रक्ष्यति । अद्रक्ष्यत् ।

---

१. क्सादेशः C, $D_1$, $D_4$. २. °ङीति $N_1$, $D_4$. ३. After it—परे $D_3$. ४. कत्वम् dropped P, $B_1$. ५. आभ्यां परस्य $D_3$. ६. After it—द्रष्टा । द्रक्ष्यति $B_2$. ७. रज्जुसृड्भ्याम् $Bc_2$.

दंश दशने । दशति । अदाङ्क्षीत् ।[१]

कितॆ निवासे रोगापनयने च ।[२][३]

**गुप्तिज्किद्भ्यः सन्** ॥३।१।५॥

एभ्यः सन् प्रत्ययः स्यात् ॥[४]

**सन्यङोः** ॥६।१।९॥

[५]अनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः सनि यङि च[६] परे ॥

---

**दश** । दशतीति । 'दंशसञ्ज—' इति नलोपः । **अदाङ्क्षीदिति** । 'सिचि वृद्धिः—' । 'व्रश्च—' इति षत्वम् । कत्वम् । अनुस्वारपरसवर्णौ । इट्[७] । अट् । ददंश । ददंशिथ । ददंष्ठ । दष्टा । दश्यात् । दङ्क्ष्यति । अदङ्क्ष्यत् ।

**कित** । द्वौ सेट्कौ[८] ।

**गुप्ति** । गुप गोपने । तिज निशाने[९] क्षमायां च । कित निवासे रोगापनयने च ।

**सन्यङोः** । ननु च सन्यङोरित्यस्य सनि यङि चेति व्याख्यानमनुपपन्नम् । एवं हि व्याख्यायमाने प्रतीषिषतीति न सिध्येत् । अत्र हि सनो निमित्तत्वात् द्वित्वं न स्यात् । भाव्यं च सनो द्वित्वेन[१०] । षष्ठ्यन्तव्याख्याने एष[११] दोषो न । तत्र हि सन्नन्तस्य यङन्तस्येत्यर्थः । अत एतदपि सिध्यति । अत एव **वृत्तिकृतोक्तम्**[१२] । षष्ठ्यन्तमेतदिति । **न्यासकारेण** चैतदेव विवृतम् । सत्यम् । सप्तमीव्याख्यानेपि सन्नन्तस्य यङन्तस्य द्वित्वं स्यात् सन्यङोरकारोच्चारणात्

---

१. $B_1$ has दश्यात् after it. २. किति $D_2$, $D_3$, P, C, $B_1$, $B_2$. ३. C has संशये before it ; रोगापनयने निवासे च $D_2$. ४. $B_1$, $D_1$, $D_3$, $D_4$ have स्वार्थे after it. ५. अनभ्यासधात्व° $D_1$. ६. $B_1$ drops it ; सनि यङि च परे dropped $D_3$. ७. ईट् $Dc_3$. ८. इतौ द्वौ $Dc_3$. ९. शातने $Bc_2$. १०. द्वित्वम् $Bc_2$, $Dc_1$, $Dc_4$. ११ चैष $Dc_3$. १२. वृत्तिकारेणोक्तम् $Dc_3$.

धातोरित्यविहितत्वात् सनोऽत्र नार्धधातुकत्वं तेनेड्गुणौ न स्तः[१]। '[२]सनाद्यन्ता—' इति धातुत्वात् शप्तिबादि[३] ॥

**पूर्ववत् सनः ॥१।३।६२॥**

पूर्वधातुवत् सन्नन्तादपि पदं स्यात् ॥

---

ज्ञापकात् । अत एवाग्रे वक्ष्यति शपोकारेण सिद्धे सन्यङोरकारोच्चारणमजादेरिति द्वित्वार्थमिति । अथवा सन्यङोरिति सत्सप्तमीयम् । सन्प्रदेशेषु सत्सप्तमीति 'सन्यतः' इत्यादिना ज्ञापितं तथा हि परसप्तमीपक्षे प्रतीषिषतीत्यत्रेत्वमपि न स्यात् समुदायस्य सद्रूपत्वात् सन्परत्वाभावात् । तथा च **पदमञ्जर्यां** स्तौतिण्योरिति सूत्रेऽभिहितम् । प्रतीषिषतीत्यत्र सन एव द्विर्वचनमिति षण्परत्वाभावादयं नियमो न प्रवर्तयिष्यते सन्यत इतीत्वमपि तर्हि न प्राप्नोति । समुदायस्य सद्रूपत्वादस्य च सन्परत्वाभावात् । तस्मात् सन्प्रदेशेषु सप्तमी विज्ञेयति ।

**पूर्ववत्** । **पूर्वधातुवदिति** सनो यः पूर्वधातुस्तेन तुल्यं पूर्वधातुवत् पदं स्यात् । आत्मनेपदं स्यादित्यर्थः । येन निमित्तेन पूर्वस्मादात्मनेपदं तेनैव सन्नन्तादपीति भावः । आस्ते शेते अनुदात्तेत्वंङित्त्वं चात्मनेपदनिमित्तमत्र तत् सन्नन्तादपि । आसिसिषते । शिशयिषते । 'नेर्विशः' । निविविक्षते । इह न । शिशत्सति । मुमूर्षति । न ह्यत्र शदिम्रियतिमात्रमात्मनेपदनिमित्तम् । किं तर्हि । शिदाद्यपि । यस्य च पूर्वत्रैव निमित्तत्वं निषिध्यते तत् सन्नन्तेपि

---

१. $D_1$ drops it. २. 'सनाद्यन्ता धातवः' इति धातुसंज्ञा । धातुत्वात् $B_2$. ३. °तिबादिः $D_4$. ४. सप्तमीयम् । $Bc_2$, $Dc_3$. ५. सत्सप्तमीति विज्ञायत इति । $Bc_2$. ६. पूर्वमेव $Bc_2$, $Dc_3$.

गुपादेः क्रमात् निन्दाक्षमारुग्जयेषु सन्निष्यते । नान्यत्र । चिकित्सति । कितः संदेहे च । विचिकित्सति । अचिकित्सीत् ।[२] चिकित्सामास ।[३]

**ऋतेरीयङ् ॥३।१।२९॥**

ऋतिः सौत्रो धातुर्घृणार्थः । तस्मादीयङ् प्रत्ययः स्यात् ॥

---

अनिमित्तम् । अनुचिकीर्षति । पराचिकीर्षति । इह जुगुप्सते मीमांसते इत्यादौ 'अनुदात्तङित—' इत्येव तङ् । अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति । इह त्वस्य सूत्रस्य पाठः सन्प्रसङ्गादिति ज्ञेयम् । गुपादेरित्यादि । रुग्जयेति प्रायिकमन्यत्रापि दर्शनात् । 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' । अत्र चिकित्स्यो नाश्यो निग्राह्योपि निन्दाद्यर्थाभावे । चुरादित्वाण्णिच् । गोपायति । तेजयति । संकेतयति । चिकित्सतीति । द्वित्वम् । 'कुहोश्चुः' । लट् । तिप् । शप् । चिकित्सेत् । चिकित्सतु । अचिकित्सत् । अचिकित्सीदिति । लुङ् । सिच् । 'इट ईटि' । चिकित्सामासेति । 'कास्प्रत्यय—' इत्याम् । 'कृञ्चा—' इत्यस्यानुप्रयोगः । चिकित्सिता । चिकित्स्यात् । चिकित्सिष्यति । अचिकित्सिष्यत् ।

ऋते । घृणार्थ इति । जुगुप्सार्थे इत्यर्थः । ङिदित्यव सिद्धे

---

१. °ग्यजेषु $D_1$. २. After it—अचिकित्सिष्टाम् $B_1$. ३. After it—चिकित्स्यात् । चिकित्सिता । चिकित्सिष्यति । अचिकित्सिष्यत् $B_2$. ४. धातुः dropped N, $B_2$, $D_4$. ५. Dropped $Bc_2$. ६. °षणं $Bc_2$. ७. दृश्यते $Dc_3$. ८. जुगुप्सा इत्यर्थः $Dc_3$. ९. ऋतेः छाङि° $Bc_2$; ऋतेश्च ङित्त्वे च सिद्धे । $Dc_3$.

ङित्त्वात् तङ् । ऋतीयते ।[1]

इति परस्मैपदप्रक्रिया ॥

---

इयङ्वचनं ज्ञापनार्थमित्युक्तम्[2] । ङित्त्वात्तङिति । 'अनुदात्त—' इत्यनेन । ऋतीयते । ऋतीयेत । ऋतीयताम् । आर्तीयत । ऋतिरयं सौत्रो धातुरित्यस्य इयङ्विषय एव प्रयोगः । तेनार्धधातुके विकल्पो[3] नोदाहृतः । 'वञ्चिलुञ्च्यृतश्च' इति निष्ठायामकित्त्वविधानात् । तत्रेयङ्-विकल्पो ज्ञेयः । वृत्तिकारमते त्वार्धधातुके सर्वत्र विकल्पः । तेनार्ति-ष्टेत्यादि ज्ञेयम् । आर्तीयिष्ट । ऋतीयांचक्रे । ऋतीयिता । ऋतीयिषीष्ट । ऋतीयिष्यते । आर्तीयिष्यत ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगुरथ परस्मैपदिभ्वादयोमी ॥

---

---

१. After it—आर्तीयिष्ट C, $D_1$ ; (after आर्तीयिष्ट $D_1$ has ऋतीयिता); ऋतीयेत । ऋतीयताम् । आर्तियत । आर्तियिष्ट । आर्तीत् । आनर्त । ऋतीयांचक्रे । अर्तिता । ऋतीयिता । ऋत्यात् । ऋतीयिषीष्ट । $D_3$ ; आर्तीयिष्ट । आर्तीत् । अर्तिता । ऋतीयिता । $D_4$. २. ज्ञापकार्थ° $Bc_2$, $Dc_3$. ३. विकल्पेनोदाहृताः । $Dc_3$.

# अथात्मनेपदिनः ॥

एध वृद्धौ । एधते । ऐधिष्ट । ऐधिध्वम् ।[2]

आम्प्रत्ययवत् कृञोनुप्रयोगस्य ॥१।३।६३॥

आम् प्रत्ययो यस्मात् कृतः[3] तदनुप्रयुज्यमानस्य[4] कृञ आत्मनेपदं स्यात् अकर्तृगामिन्यपि[5] फले ॥

---

एध । इत आरभ्य ष्यञ्जवर्जिता गाङ्वधिकाः द्वाविंशतिः सेट्काः[6] । एधते इति । अनुदात्तेत्त्वादात्मनेपदम् । त । शप् । 'टित आत्मनेपदानां टेरे' । एधेते । एधन्ते । एधेत । एधेयाताम् । एधेरन् । एधताम् । एधेताम् । एधन्ताम् । ऐधत । ऐधेताम् । ऐधन्त । ऐधिष्टेति । लुङ् । च्लिः । सिच् । 'आर्धधातुकस्य—' इतीट् । षत्वम् । ष्टुत्वम् । 'आडजादीनाम्' । 'आटश्च' इति वृद्धिः । ऐधिषाताम् । 'आत्मनेपदेष्वनतः' । ऐधिषत । ऐधिध्वम् । 'धि च' इति सलोपः । ध्वे सलोपो वा सस्य दः इति केचिदिति पक्षे ऐधिढ्ध्वम् ।

आम्प्रत्ययवत् । 'तत्र तस्येव' इति षष्ठीसमर्थाद्वतिः । आम्प्रत्ययो यस्माद्विहितस्तस्य च अनुप्रयुज्यमानस्य कृञोपि आत्मनेपदं भवतीत्यर्थः[7] । एतच्चाकर्त्रभिप्रायार्थमित्याह । अकर्तृगेपि इति । ननु यद्यकर्त्रभिप्रायार्थं तर्हि विध्यर्थं स्यात् । ततश्च उदुम्भां[8]-चकारेत्यत्र कर्त्रभिप्राये तङ् प्राप्नोति । नैष दोषः । उभयमनेन क्रियते विधिर्नियमश्च । कथं पूर्ववदिति वर्तते । स द्वितीयो यत्नः ।

---

१. एध वृद्धौ dropped $D_2$. २. After it—'इजादेश्च गुरुमत–' इत्याम् $B_1$, $D_2$ ; एधेते । एधध्वे for ऐधिष्ट । एधिध्वम् $D_3$. ३. क्रियते C, $D_2$, N, drop कृतः; विहितः, P, $D_3$; dropped $D_4$. ४. तद्वत्तदनु° $B_1$; तद्वदनु° $D_3$, $D_4$. ५. अकर्तृगामिनि फलेपि च $B_1$ ; अकर्तृगामिनि फलेपि N, $D_1$ ; $D_4$, अकर्तृगामिनि क्रियाफलेपि $B_2$, $D_3$. ६. सेटः $Bc_2$, $Dc_3$. ७. स्यादित्यर्थः $Bc_2$. ८. उम्भांचकारे° $Dc_3$.

एधांचक्रे । एधांचकृषे ।

**इणः षीध्वं लुङ्लिटां धोऽङ्गात् ॥८।३।७८॥**

इणन्तादङ्गात्[2] परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः[3] स्यात् ॥ एधांचकृढ्वे । एधांचकृवहे ।[4] कृञः किम् ।

---

तत्र पूर्वेण 'आम्प्रत्ययवत्—' इत्यादिना वचनेन विधिः क्रियते स मूल एव व्याख्यातः । द्वितीयेन नियमस्तस्यायमर्थः । यदि कृञ् आत्मनेपदं स्यात् तदा पूर्ववदेव स्यादिति । एधांचक्रे इति । लिटि 'इजादेः—' इत्याम् । 'आमः' इति लेर्लुक् । 'कृञ्चा—' इत्यादिना कृञो लिट्परस्यानुप्रयोगः ।[6] एधां कृत इति सति 'लिटस्तझयोरेशिरेच्—' इत्येश् । यणादेशः । 'द्विर्वचनेचि' इति स्थानिवत्त्वात् साच्कस्य द्वित्वम् । 'उरत्' । 'कुहोश्चुः' । एधांचक्राते । एधांचक्रिरे । एधांचकृषे इति । 'थासः से' । क्रादित्वादिडभावः ।

इणः । अत्र इणन्ताद्विहितानामित्यर्थो यदि स्यात् तदा चकृढ्वे इत्यादिष्वेव स्यात् अदिढ्वमित्यादौ दादीनां न स्यात् । नत्सीध्वमित्यादौ नहादीनां प्राप्नुयाच्च । एतद्दोषपरिहाराय इणन्तादङ्गात् परेषामिति व्याकरोति । नन्वेवमप्युच्यमाने ऐधिध्वमित्यादौ प्राप्नुयात् । यद्यपीटः परभक्तत्वाच्छास्त्रकृतमानन्तर्यं[8] नास्ति तथा श्रुतिकृतानन्तर्यस्य सत्त्वात्[9] । उच्यते । 'विभाषेटः' इति इटो विभाषयोक्तत्वात् गोबलीवर्दन्यायेन तद्व्यतिरिक्ते णन्तमङ्गमिह गृह्यते । अथवा श्रुतिकृतमानन्तर्यं नाश्रीयते । ऐधिध्वमित्यादौ न अदिढ्वमित्यादौ स्यात् । पदमञ्जरी-कारादिमते[10] ऐधिध्वमित्यादौ मूर्धन्यो भवत्येव । श्रुतिकृतस्यानन्तर्यस्य

---

१. C drops it. २. इणन्तात् परे $B_1$. ३. मूर्धन्यादेशः P, $B_2$, $D_1$, C. ४. After it–एधांचकृमहे $D_2$, N. ५. यत्नेन $Dc_3$. ६. °परस्य कृञोऽनुप्रयोगः । $Bc_2$. ७. स्थिते $Bc_2$. ८. परत्वाच्छास्त्र° $Bc_2$. ९. सत्त्वम् $Dc_3$. १०. ऐधिढ्° $Bc_2$, $Dc_3$.

एधामास । एधांबभूव । एधिता । [1]एधिषीष्ट । एधिष्यते । ऐधिष्यत ।

दद दाने ।[2] न शशददेत्युक्तेरेत्वं न । ददे ।[3]

ष्वष्क गतौ । [4]ष्वष्कते । [5]षष्वष्के ।

---

संभवात् । तच्च पदमञ्जर्यां निपुणतरमुपपादितम् । 'विभाषेटः' इत्यत्र । नेह विस्तरभयाल्लिख्यते । इण्कोरिति वर्तमाने इण्ग्रहणं कवर्गनिवृत्त्यर्थम् । [6]वक्षीध्वमिति । लुङ्लिटां किम् । स्तुध्वे । अङ्गात् किम् । [7]परिवेविषीध्वम् । अर्थवद्ग्रहणादपि सिद्धे विस्पष्टार्थम् । एधामासेति । अस्तेः प्रयोगविधानसामर्थ्यादस्तेर्भूभावो न । द्वित्वम् । सवर्णदीर्घः । एधांबभूवेति । भुवोनुप्रयोगः । द्वित्वम् । ह्रस्वः । 'भवतेरः' । अभ्यासजश्त्वं । बकारः । 'भुवो वुक्' इति वुक् । एधितेति । लुट् । 'स्यतासी—' इति तासिः । इट् । 'लुटः प्रथमस्य—' इति डा । टिलोपः । एधितासे । एधिताहे । एधिषीष्टेति । आशीर्लिङ् । लिङः सीयुट् । इट् । यलोपः । 'सुट्तिथोः' । षत्वमुभयत्र ष्टुत्वम् । एधिषीयास्ताम् । एधिषीय । एधिष्यत इति । लट् । त । एत्वम् । स्यः । इट् । षत्वम् । ऐधिष्यतेति । लङ् । स्यः । इट् । आट् । वृद्धिः । शेषं प्राग्वदर्थभूवत् ।

दद । ददते । ददेत । ददताम् । अददत । अददिष्ट । ददे इति । एत्त्वम् । द्वित्वम् । ददिता । ददितासे । ददिषीष्ट । ददिष्यते । अददिष्यत ।

ष्वष्क् । ष्वष्कत इति । सुब्धातुष्ठिवुष्वष्कतीनां[8] सत्वनिषेधः । अष्वष्किष्ट । षष्वष्के इति । 'हलादिः शेषः' । ष्वष्किता । ष्वष्किषीष्ट । ष्वष्किष्यते । अष्वष्किष्यत ।

---

१. एधिषीध्वम् $B_1$; एधिषीध्वम् after एधिषीष्ट $D_2$. २. After it—ददते $B_2$. ३. After it—अददिष्ट । अददिषाताम् $D_4$. ४. $B_1$ drops ष्वष्कते. ५. Dropped $D_3$; अष्वष्किष्ट । अष्वष्किषाताम् after it $D_4$. ६. पक्षीध्वमिति $Bc_2$, $Dc_3$. ७. Before it—वेष्टा $Bc_2$, $Dc_3$. ८. जश्त्वं $Bc_2$, $Dc_3$.

ऋज गतौ स्थैर्ये च । अर्जते । आर्जिष्ट । अत आदेरिति दीर्घः । ऋकारैकदेशो रेफोपि नुड्विधिं प्रति हल् । तेन तस्मान्नुड् द्विहल इति नुट् । आनृजे । अर्जिषीष्ट ।

तिज निशाने क्षमायां च । तितिक्षते ।[२]

---

ऋज । अर्जते इति । 'पुगन्त—' इति गुणः । रपरः । टेरेत्वम् । आर्जिष्टेति । सिच् । इट् । गुणः । आट् । वृद्धिः । षत्वम् । ष्टुत्वम् । 'अत आदेः' इति दीर्घः इति । ऋज् एश् इति स्थिते 'उरत्' इत्यत्वे च कृते अ ऋज् ए इत्यत्र । ऋकारै-केत्यादि । ऋकारैकदेशो रेफोपि नुड्विधिं प्रति हल्ग्रहणेन गृह्यत इत्यर्थः । कथं वर्णात्मना हलां ग्रहणेनावर्णात्मको गृह्यत इति चेन्नैष दोषः । द्विहल्सामर्थ्यात् । न च 'तस्मान्नुड्' इत्येवोक्ते अटित्यत्रापि प्रसङ्गः स्यादिति वाच्यम् । 'अश्नोतेश्च' इत्यस्य नियमार्थत्वात् । अद्विहलो यदि भवति अश्नोतेरेव नान्यस्येति । तस्मादन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनं यस्याप्येको मुख्यो हलवयवो द्वितीयस्तु तच्छायानुका-रित्वादुपचारेण हल्व्यपदेशार्हस्तस्यापि स्यादिति । अर्जिता । अर्जिष्यते । आर्जिष्यत ।

तिज । तितिक्षते इति । 'गुप्तिज्किद्भ्यः सन्' इति सन् । 'सन्यङोः' इति द्वित्वम् । धात्वधिकरणविहितत्वात् सनो नार्धधातु-कत्वम् । तेनेड्गुणौ न । 'चोः कुः' । षत्वम् । कषसंयोगे क्षः । 'सनाद्यन्ताः' इति धातुत्वात् शबादि । एत्वम् । अतितिक्षिष्ट । तितिक्षांचक्रे । तितिक्षिता । तितिक्षिषीष्ट । तितिक्षिष्यते । अतितिक्षिष्यत ।

---

१. $N_1$ drops from आर्जिष्ट to दीर्घ. २. After it C has—निशानं चुरादित्वात् णिच् । तेजयति । ३. कत्वं षत्वम् । $Dc_3$. ४. क्षत्वम् $Bc_2$.

ष्वञ्ज परिष्वङ्गे । निष्वजते ।

**सिवादीनां वाड्व्यवायेपि ॥८।३।७१॥**

परिनिविभ्यः परेषां सिवसहसुट्स्तुस्वञ्जामडव्यवायेपि [1]वा षत्वं स्यात् ॥ [2]झलो झलि । [3]न्यस्वङ्क्त । न्यष्वङ्क्त ।

[4]स्वञ्जेः [5]संयोगादपिल्लिटो वा कित्त्वम् ।[6] सस्वञ्जे । सस्वजे ।

---

ष्वञ्ज । निष्वजते इति । 'दंशसञ्जष्वञ्जाम्' इति [7]न्लोपः । [8]'परिनिविभ्यः सेव' इत्यादिना षत्वम् ।

सिवादीनाम् । प्रत्यासत्तेः 'परिनिविभ्यः—' इति सूत्रे संनिविष्टा एव सिवादयो गृह्यन्त इत्यभिप्रेत्याह । सिवसहेत्यादि । उभयत्र-विभाषेयम् । स्तुस्वञ्जोः प्राक् सितादिति प्राप्ते इतरेषामप्राप्ते । न्यस्वङ्क्तेति । षत्वाभावे रूपमेतत् । लुङ् । सिच् । 'चोः कुः' । अनुस्वप सवर्णौ । [9]अडागमः । षत्वपक्षे रूपं न्यष्वङ्क्तेति । अस्वङ्क्ताम् । अस्वङ्क्षत । स्वञ्जेरित्यादि । वक्तव्यमिति शेषः ।

सस्वञ्जे इति । द्वित्वम् । 'हलादिः शेषः' । कित्त्वाभावे एतत् । सस्वजे इति । कित्त्वात् 'अनिदिताम्—' इति [10]नलोपः ।

---

१. षत्वं वा $B_2$. २. Dropped $B_2$. ३. न्यष्वङ्क्त । न्यस्वङ्क्त $D_1$, $D_3$; न्यष्वङ्क्त । व्यष्वङ्क्त । $D_4$; व्यष्वङ्क्त and व्यस्वङ्क्त in place of न्यष्वङ्क्त and न्यस्वङ्क्त $D_2$, P, C, $B_1$, $B_2$. ४. ष्वञ्जेः $N_1$. ५. संयोगादेरपि° P; संयोगान्तादपि° C. ६. After it—कित्वान्नलोपः $B_2$. ७. नलोपः $Dc_3$. ८. त । सिच् । $Dc_3$. ९. अट् । $Dc_2$. १०. न्लोपः । $Bc_2$.

**सदिष्वञ्ज्योः परस्य लिटि ॥८।३।११८॥**

अनयोरभ्यासात् परस्य सस्य षत्वं न स्याल्लिटि ॥ परिसस्वञ्जे । स्वङ्क्ता । स्वङ्क्षीष्ट ।

त्रपूष् लज्जायाम् । ऊदित्वाद्वेट् । अत्रपिष्ट । अत्रप्त । तफलेत्येत्वम् । त्रेपे । त्रपिता । त्रप्ता ।

जभ गात्रविनामे ।

**रधिजभोरचि ॥७।१।६१॥**

अनयोर्नुमागमः स्यादचि ॥ जम्भते । अजम्भिष्ट ।

---

सदि । परिषस्वजे इति । पूर्वस्य षत्वम् । स्वङ्क्तेति । लुट् । तासिः । कुत्वम् । अनुस्वारपरसवर्णौ । स्वङ्क्षीष्टेति । 'लिङः सीयुट्' । कुत्वानुस्वारपरसवर्णषत्वानि । सुट् । स्वङ्क्ष्यते । अस्वङ्क्ष्यत ।

त्रपूष् । त्रपते । ऊदित्वादिति । 'स्वरतिसूति—' इत्यादिना । अत्रपिष्टेति । सिच् । वेट् । अत्रप्तेति । इडभावे 'झलो झलि' इति सलोपः । त्रपिता । त्रप्तेति । वेट् । त्रप्सीष्ट । त्रपिषीष्ट । त्रपिष्यते । त्रप्स्यते । अत्रपिष्यत । अत्रप्स्यत ।

जभ ।

रधिजभोः । रध हिंसासंराध्योः । जभ उक्तार्थः । वृद्धिः परापि सती नुमा नित्यत्वाद् बाध्यते । रन्धयति । जम्भयति । अचि किम् । रद्धा । जम्भत इति । नुम् । मित्त्वादन्त्यादचः परः । अजम्भिष्टेति । लुङ् । त । सिच् । इट् । नुम् । षत्वम् । ष्टुत्वम् । अट् । जजम्भे । जम्भिता । जम्भिषीष्ट । जम्भिष्यते ।

---

१. Dropped $D_1$. २. °षस्वजे $N_1$, $D_2$, $D_3$, $D_4$. ३. After it—जजम्भे $D_4$. ४. ।लिङ् । सीयुट् । $Dc_3$.

ष्टुभ स्तम्भे । विष्टोभते । व्यष्टोभिष्ट । तुष्टुभे ।[1]

पण व्यवहारे स्तुतौ च । गुपूधूपेत्यायः । पणे[2] स्तुतावेवायं[3][4] प्रत्ययः । अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । वेति केचित् । पणायते । गोपायति । गोपायते ।[5] अपणायीत् ।[6] अपणिष्ट । पणायांचकार । पणायांचक्रे ।[7] पेणे ।

---

ष्टुभ । विष्टोभत इति । 'उपसर्गात् सुनोति—' इति षत्वम् । ष्टुत्वम् । अष्टोभिष्टेति । अड्व्यवायेपि षः । तुष्टुभे इति । द्वित्वम् । 'शर्पूर्वाः खयः' । षत्वम् । स्तोभिता । स्तोभिष्यते ।

पण । पणे स्तुतावेवेति । स्तुत्यर्थेन पनिना साहचर्यात् तदर्थः पणिः प्रत्ययमुत्पादयति न व्यवहारार्थ इत्यभिप्रायः । अथ पणायतीत्यत्रात्मनेपदं किं न स्यात् यतः पणिरयमनुदात्तेदित्याशङ्क्याह । अनुबन्धस्येति । अनुदात्तस्येत्यर्थः ।[8] पणायतीति । 'सनाद्यन्ताः—' इति धातुत्वात् तिप् । शप् । वेति केचिदिति । तथोक्तं मुग्धबोधे । 'सनः पमे धोर्वा त्वायात्' इति । अपणायीदिति । लुङ् । च्लिः । सिच् । 'इट ईटि' । अपणिष्टेति । 'आयादय आर्धधातुके वा' इति यदायु नास्ति तदेदम् । सिच् । इट् । केषांचिन्मते अपणायिष्ट । पणायांचकारेति । प्रत्ययान्तत्वादाम् । पेणे

---

१. After it—स्तोभिषीष्ट । स्तोभिता $B_2$. २. °त्यायादयः $B_1$. ३. पणे $D_4$. ४. °वेवायः $B_1$; °वेवायः प्रत्ययः $D_1$. ५. गोपायति । गोपायते dropped $D_1$, $D_3$. ६. P has—अगोपायीत् । अगोपिष्ट । पणायांचक्रे and C has—अपणायीत् । 'आयादय–' इति वायप्रत्ययः । अपणायिष्ट । अपणिष्ट । पणायांचकार । पेणे in place of अपणायीत्.. पणायांचकार ; $B_2$, $D_3$ have after it—अपणायिष्ट ; $D_2$ has अपणायिष्ट before it. ७. पणायांचक्रे । dropped $D_2$, $D_4$, $B_1$, $B_2$; पेणे dropped $D_3$. ८. After it $Bc_2$ has—अवयवे चरितार्थं लिङ्गं समुदायस्य विशेषकं न भवतीति न्यायादिति । ९. यदायो नास्ति तदा सिच् $Bc_2$.

पणेर्व्यवहारे तु शतस्य पणते । पन च । पनायतीत्यादि ॥

कमु कान्तौ ।

कमेर्णिङ् ॥३।१।३०॥

कमेर्धातोर्णिङ् प्रत्ययः स्यात् स्वार्थे ॥ उपधावृद्धिः ।

---

इति । आयाभावे 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ । पणायांचक्रे । पणायिता । पणिता । पणाय्यात् । पणिषीष्ट । पणायिषीष्ट । पणायिष्यति । पणिष्यति । पणायिष्यते । अपणायिष्यत् । अपणिष्यत् । अपणायिष्यत । शतस्य पणत इति । व्यवहरतीत्यर्थः । 'व्यवहृपणोः—' इति षष्ठी । पन च । चकारा स्तुतौ । पनायतीत्यादि । आयप्रत्ययः । आदिशब्दात् पनायेत् इत्यादिरूपाणि पणवत् ज्ञेयानि । क्षीरस्वामिपक्षे आयप्रत्ययान्तादपि पनेरात्मनेपदम् । यथाह क्षीरतरङ्गिण्याम् । पनायते हरिम् । अत्रावयवे हि कृतं लिङ्गं समुदायस्य विशेषकं भवतीत्यवयवव्यवधानेप्यात्मनेपदमिति ।

कमु । कान्तिरभिलाषः ।

कमेः । णकारो वृद्ध्यर्थः । ननु च यदि वृद्ध्यर्थो णकारस्तर्हि 'न कम्यमिचमः' इति मित्संज्ञा प्रतिषेधो व्यर्थः । णित्करणसामर्थ्यादेव हि ह्रस्वत्वं न स्यात् । अन्यथा णित्करणं व्यर्थं स्यादिति । मैवम् । नानर्थकं णित्वम् । तस्य 'णेरनिटि' इति सामान्यग्रहणार्थत्वात् । अन्यच्च 'आयादय आर्धधातुके वा' इति यदा णिङ् नास्ति हेतुमण्णिच्कृतस्तदा ह्रस्वो मा भूदित्येवमर्थो मित्संज्ञाप्रतिषेधः । ङकार आत्मनेपदार्थः । उपधावृद्धिरिति । 'अत उपधायाः' इत्यनेन ।

---

१. पणेः dropped N. २. प्रत्ययः dropped C. ३. उपधाया वृद्धिः C. ४. पणिवत् $Bc_3$, $Dc_3$. ५. णकारो वृद्ध्यर्थ॰ $Bc_2$.

शप् । तिबादि । गुणायादेशौ । कामयते । ण्यन्तत्वात् च्लेश्चङ् ॥

**णौ चङ्युपधाया ह्रस्वः ॥७।४।१॥**

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥

---

**शप्तिबादि** । 'सनाद्यन्ताः—' इति धातुसंज्ञायां सत्यां तिबादयश्च शप् च स्यादिति भावः । **गुणायादेशाविति** । कामि अ ते स्थिते 'सार्वधातुक—' इति गुणः । 'एचोयवायावः' इत्याय् । कामयेत । कामयताम् । अकामयत । ण्यन्तत्वात् 'च्लेश्चङ्' इति 'णिश्रि—' इत्यादिना कामि अ त इति स्थिते द्वित्वे प्राप्ते परत्वादादौ 'णेरनिटि' इति णिलोपः । सौकर्यार्थमन्ते णिलोपसूत्रं पठितं ज्ञेयम् । णिलोपे द्वित्वे प्राप्ते परत्वादादौ ह्रस्व इत्यभिप्रेत्यादौ पठति ।

**णौ चङि** । चङ्परो यस्मात् स तथोक्तः । चङ्युपधाया ह्रस्व इत्येतावत्युच्यमाने असति णिग्रहणे चङि परतो यदङ्गं तस्योपधाया ह्रस्व इत्यर्थः स्यात् । एवं च चङि णिसहितमङ्गं तथा चानवकाशो ह्रस्वोलीलवदित्यादावन्तरङ्गामपि वृद्धिं बाधित्वा वचनसामर्थ्यादकारस्यैव स्यात् । अथापि कथंचिद् वृद्धिर्न बाध्यते एवमपि तस्यां सत्यां अन्तरङ्गमप्यावादेशं बाधित्वा ओकारस्य स्यात् । अन्यथा वचनं व्यर्थं स्यात् । कृतेप्यावादेशे ह्रस्वाप्राप्तौ अदीदपत् इत्यत्र च दातेर्णिचि चङि च कृते दा इ अत् इति स्थिते वचनप्रामाण्यादनवकाशो ह्रस्वोन्तरङ्गमपि पुकं बाधित्वा प्रवर्तेत । तस्मिन् च सति पुक् विहितनिमित्तत्वाभावान्न स्यात् । अपीपचदित्यत्र चङि परतो यदङ्गं पाचीति तस्योपधायाश्चकारस्य ह्रस्वासंभवात् ह्रस्वो न स्यादेव । तस्माण्णाविति वक्तव्यम् । तदेतत् सर्वं मनसि कृत्वा व्याकरोति । **चङ्परे णौ यदङ्गमिति** ।

१. तिबादिः P, $D_1$, $D_4$. २. च्लेः dropped C. ३. स्युरिति $Bc_2$. ४. त इति $Dc_3$. ५. Before it—कामयते $Dc_3$. ६. णि लोपे सूत्रे वचनं ज्ञेयम् $Dc_3$. ७. णिलोपे कृते $Dc_3$. ८. णेः स $Dc_3$. ९. °त्युक्ते $Bc_2$. १०. अपि $Dc_3$. ११. मप्यादेशं $Dc_3$. १२. पुग्विधिर्हि अनिमित्तत्वान्न स्यात् $Bc_2$.

**सन्वल्लघुनि चङ्परेऽनग्लोपे ॥७।४।९३॥**

लघुनि धात्वक्षरे परे अभ्यासस्य सन्वत् कार्यं स्यात् चङ्परे णौ न त्वग्लोपे ॥

**सन्यतः ॥७।४।७९॥**

अभ्यासस्यात इकारः स्यात् सनि ॥

---

सन्व । 'सन्यतः' इत्यादिना सूत्रत्रयेण यदभ्यासस्य सनि कार्यं विहितं तल्लघुनि चङ्परेतिदिश्यते । लघुनि चङ्परे इति च व्यधिकरणे सप्तम्यौ । चङ्परे चङि परतो यत् पूर्वमङ्गं तस्य संबन्धि यल्लघु तस्मिन् परतो योऽभ्यासस्तस्य सन्वद् भवतीति । चङ्पर इति बहुव्रीहिः । चङ् परो यस्मादिति चङ्परः । सामर्थ्यात् । अगिति प्रत्याहारः । तस्य लोपोऽग्लोपः । एवं सूत्रार्थमभिप्रेत्याह । **लघुनीत्यादि** । लघुनि किम् । अततक्षत् । अजजागरदित्यत्र केचिद् गॄशब्दं लघुमाश्रित्य सन्वद्भावमिच्छन्ति । कथमिच्छन्ति । यतो लघुनि पर इत्युच्यते व्यवहितं चात्र लघु । सत्यम् । तथापि अचीकर-दित्यादौ ककारादिव्यवधानेपि वचनप्रामाण्याद्यथा सन्वद्भावस्तथात्रापि व्यवधानेपि भविष्यतीति । तदसत् । एकेन हि वर्णेन सर्वत्र व्यवधानमस्ति वर्णसमूहेन तु न कुत्रचित् तत्राशङ्क्य परिहारेणैकवर्णेन व्यवधानेपि वचनप्रामाण्याद् भवति न तु शक्यपरिहारेण वर्णसमूहेन । एवं चेदचिक्षणदित्यत्र कथं सन्वद्भावः । उच्यते । यदयं 'अत्स्मृदृ—' इतीत्वबाधनार्थमत्वं विदधाति स ज्ञापयति भवत्येवंजातीयकानामि-त्वमिति । चङ्ग्रहणं किम् । अहं पपच । परग्रहणं किम् । चङ्येव केवले मा भूत् । अचकमत । अनग्लोपे किम् । अचकथत् । अमी-मवदित्यादौ अत्र ग्रहणात् सन्वद्भावेनाभ्यासलोपो न भवति । सन्यतः ।

---

१. णौ परे $D_2$, $N_1$. २. इत् C. ३. सामर्थ्याण्णिः $Dc_3$. ४. °शब्दे $Dc_3$. ५. Dropped $Dc_3$. ६. Dropped $Dc_1$. ७. °चक्षण° $Dc_3$.

**दीर्घो लघोः ॥७।४।९४॥**

लघुनि धात्वक्षरे परे हलादेर्लघोरभ्यासस्य दीर्घः स्यात् चङ्परे[1] णौ[3] न[2] त्वग्लोपे ॥

**णेरनिटि ॥६।४।५१॥**

अनिडादावार्धधातुके परे णेर्लोपः स्यात् । इयङ् । गुणादेरपवादः । अचीकमत । णिङभावपक्षे । कमेश्चङ्[4] वाच्यः ॥ णेरभावान्न दीर्घसन्वद्भावौ । अचकमत ।

**अयामन्ताल्वाय्येत्न्विष्णुषु ॥६।४।५५॥**

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् ॥

---

तपरग्रहणं किम् । पापच्यते । सन् । पापचिषते । अत्र मा भूद्दीर्घः । अत्र यद्यपि हलादेरिति नास्ति तथाप्यर्वाचीनमतेनोक्तम् । तथा च प्रदीपे उक्तम् । हलादेः किम् । और्णुनवदिति ।

णे । णेरिति णिङ्णिचोः सामान्यग्रहणम् । इयङादिभिः सर्वस्य विषयस्याविष्टब्धत्वादनवकाशः सन् णिलोपस्तान् बाधत इत्यभिप्रेत्याह । इयङादेरिति । आदिना यण्वृद्धिदीर्घग्रहणम् । अचीकमतेति । णिलोपः । प्रत्ययलक्षणेनोपधाया ह्रस्वः । द्वित्वम् । चुत्वम् । अचीकमताम् । णिङभावपक्षे इति । 'आयादयः—' इत्यनेन ।

अयामन्त । 'णेरनिटि' इति प्राप्तस्य णिलोपस्यापवादो[5]यमाय् । ननु [6]णिलोपोनुवर्तते तं[7]त्र नेत्येव वाच्यं लाघवार्थं न उत्तरार्थमायादेश-

---

१. णौ परे $D_2$, $N_1$. २. अनग्लोपे $D_1$, $D_4$, $N_1$. ३. Dropped $N_1$, $D_4$. ४. °श्चलेश्चङ् $B_2$. ५. °वादोयम् । $Bc_2$, $Dc_3$. ६. णिलोपो न प्रवर्तते $Dc_3$. ७. तत्र णेत्येवं $Dc_3$.

कामयांचक्रे । चकमे ।[1] इडादित्वान्न णिलोपः । कामयिता । कमिता ।[2]

अय गतौ । अयते ।

**उपसर्गस्यायतौ ॥८।२।१९॥**

अयतौ परे उपसर्गरेफस्य लत्वं स्यात् ॥ प्लायते । पलायते । पल्ययते ।

---

वचनम् । **कामयांचक्रे** इति । प्रत्ययान्तत्वादाम् । कृञोनुप्रयोगः । 'आम्प्रत्ययवत्—' इत्यात्मनेपदम् । कामयिषीष्ट । कमिषीष्ट । कामयिष्यते । कमिष्यते । अकामयिष्यत । अकमिष्यत ।

**अय** ।

**उपसर्गस्य** । इह द्वौ पक्षौ । अयतिग्रहणं रेफविशेषणमित्येकः । उपसर्गविशेषणमिति द्वितीयः । अत्र प्रथमे पक्षे वृत्तिः सुयोज्या । द्वितीये त्वेवं नेया । अयतौ परतो य उपसर्गस्तस्य रेफस्य लत्वं स्यादिति । **प्लायते** । **पलायते** इति । सवर्णदीर्घः । ननु चाद्यपक्षे लत्वं न स्यात् । यावता प्लायते पलायते इत्यत्र तस्मिन् कर्तव्ये 'अचः परस्मिन्—' इत्येकादेशस्य स्थानिवद्भावाद् धातूपसर्गविभागे सति अवर्णेन व्यवधानाद्रेफस्यायतिः परो न संभवतीति पल्ययत इत्यत्र च यकारेण व्यवधानादिति चेत् नैवम् । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानेपि लत्वं भवति । प्लायते इत्यादिषु ।

---

१. After it—चकमाते P, C, $B_1$. २. After it—कामयिष्यते । कमिष्यते $B_2$. ३. Dropped $D_4$. ४. उपसर्गस्य रेफस्य $D_1$, $N_1$. ५. उपसर्गग्रहण° $Dc_1$. ६. तत्र $Bc_2$. ७. सवर्णदीर्घः $Bc_2$, $Dc_3$. ८. भवतीति $Bc_2$. ९. पल्यत इत्यत्र $Dc_3$.

प्रत्यय इति ज्ञापकात् प्रतेर्न । प्रत्ययते । निस्दुस् एतयो रेफस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । आयिष्ट । आयिढ्वम् । आयिध्वम् ।

दयायासश्च ॥३।१।३७॥

दय[1] अय आस्[2] एभ्य आम्[3] स्याल्लिटि ॥ अयांचक्रे ।[4]

दय दानगतिहिंसादानेषु । [5]अदयिढ्वम् । अदयिध्वम् । दयांचक्रे ।

---

प्रत्ययते इत्यत्र तु न भवति । वर्णसमुदायेन व्यवधानात् । द्वितीये तु पक्षे सिद्धमेव सर्वत्र लत्वम् । तत्पक्षे प्रतेरपि प्राप्नोति तन्निवारणायाह । प्रत्यये इति ज्ञापकादिति । एतच्च दुमित्रमतेनोक्तम् । प्रत्यय इति सूत्रे प्रत्ययते ज्ञायतेऽर्थोऽस्मादिति प्रत्ययः 'पुंसि संज्ञायां घः प्रायेण' इति घान्तस्य प्रत्ययशब्दस्यान्वर्थस्य निर्देशो ज्ञापक इति भावः । तथा च इन्दुमत्यां वृत्तावुक्तम् । '[6]प्रतेस्तु व्यञ्जनव्यवहितो य इति न निमित्तम्' इति । प्रत्यय इति ज्ञापकमिति केषांचिन्मते प्रतेरपि भवति लत्वम् । स्पष्टत्वात् त्यक्तं प्रसङ्गाद्व्याख्यायते । 'परेश्च घाङ्कयोः' ॥८।२।२२॥ रस्य लो वा । परिघः । पलिघः । पर्यङ्कः । पल्यङ्कः । योगे च । परियोगः । पलियोगः । आयिष्टेति । लुङ् । सिच् । इट् । 'आडजादीनाम्' । आयिढ्वम् । आयिध्वमिति । 'विभाषेटः' इति वा मूर्धन्यः ।

दयाय । दय दानादिषु । अय गतौ । आस उपवेशने । अयिता । अयिषीष्ट । अयिषीढ्वम् । अयिषीध्वम् । आयिष्यते । आयिष्यत ।

दय । दयते । अदयिष्ट । अदयिढ्वम् । अदयिध्वमिति वा मूर्धन्यः । दयांचक्रे इति । 'दयाय—' इत्याम् । दयिषीध्वम् । दयिषीढ्वम् । दयिष्यते । अदयिष्यत ।

---

१. Dropped $D_3$, P, C, N. २. दय् अय् C. ३. आस P, $D_1$. ४. After it—अयिता । अयिषीष्ट । आयिष्यते $B_2$. ५. Before it—दयते P, $B_1$, $B_2$. ६. प्रतेस्तु व्यवहितेयतिर्निमित्तमिति $Bc_2$.

स्फायी वृद्धौ। स्फायते। चायस्फायप्यायामिड्वेति केचित्॥ अस्फायिष्ट। लोपो व्योर्वलि। अस्फास्त। पस्फाये।

आप्याया वृद्धौ।

दीपजनबुधपूरितायिप्यायिभ्योन्यतरस्याम् ॥३।१।६१॥

दीपादिभ्यश्च्लेश्चिणादेशः स्याद्वा एकवचने तशब्दे परे॥

---

स्फायी। स्फायते। केचिदिति। हेमसूर्यादयः। अस्फायिड्वम्। अस्फायिध्वम्। पस्फाये इति। 'शर्पूर्वाः खयः'। पस्फायिड्वे। पस्फायिध्वे। स्फाता। स्फायिता। स्फासीष्ट। स्फायिषीष्ट। स्फायिषीड्वम्। स्फायिषीध्वम्। स्फास्यते। स्फायिष्यते।

ओप्यायी। प्यायते।

दीपजन। दीपी दीप्तौ। जनी प्रादुर्भावे। बुध अवगमने। दीप्यादिभिरात्मनेपदिभिः साहचर्यात् जनिबुध्योरात्मनेपदिनोरेव ग्रहणं न्याय्यम्। पूरी आप्यायने। तायृ संतानपालनयोः। ओप्यायी वृद्धौ। एकवचने तशब्दे परे इति। एतच्च सामर्थ्याल्लभ्यते। तथा हि 'चिण् ते पदः' इत्यतस्ते इत्यनुवर्तते। तत्र त इत्यनेन एकवचनमेवोच्यते न बहुवचनं मध्यमस्य पदःपरस्य तथासंभवात्तस्य परस्मैपदत्वात् पदश्चात्मनेपदित्वादिति।

---

१. Dropped $D_1$, $D_3$, $D_4$. २. Before it—स्फायिषीष्ट। स्फायिता। स्फायिष्यते $B_2$. ३. ओप्यायीङ् $D_4$. ४. हेमाद्याः। $Bc_2$. ५. एव dropped $Bc_2$. ६. तस्यासंभवात् $Dc_3$.

**चिणो लुक् ॥६।४।१०४॥**

चिणः परस्य तप्रत्ययस्य लुक् स्यात् ॥ अप्यायि । अप्यायिष्ट । अप्यास्त ।

**लिड्यङोश्च ॥६।१।२९॥**

लिटि यङि च प्यायः पीभावः स्यात् ॥ पिप्ये । प्यायिता । प्याता ।

तायृ संतानपालनयोः । '[1]दीपजन—' इति वा चिण् । अतायि । अतायिष्ट ॥[2]

---

चिणः । अकारितरामित्यत्र 'असिद्धवदत्राभात्' इति तलोपस्यासिद्धत्वात् तरप्तमपोर्लुक् न । ननु चान्यस्यान्यत्रासिद्धत्वं विषयभेदाद्भिद्यते । व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणम् । वचनादेकस्यात्मन्यासिद्धत्वं न स्यात् । सत्यम् । अभेदेन श्रुतमपि लक्षणं भिद्यते इति कृत्वा अतश्चिणः परस्यान्यस्य प्रत्ययस्यासंभवात् तप्रत्ययस्यैव लोप इत्यभिप्रेत्याह । तप्रत्ययस्येति । अप्यायीति । लुङ् । त । च्लिः । अट् । अप्यायिष्ट । अप्यास्तेति केषांचिन्मते । न वेट् । इडाभावेति । 'लोपो व्योर्वलि' इति यलोपः । अप्यायिढ्वम् । अप्यायिध्वम् ।

लिड्यङोः । पिप्ये इति परत्वात् कृते पीभावे पुनः प्रसङ्गविज्ञानाद् द्वित्वम् । 'एरनेकाचः—' इति यण् । प्यायिता । प्यातेति । वेट् । यलोपः । प्यायिषीढ्वम् । प्यायिषीध्वम् । प्यास्यते । प्यायिष्यते ।

तायृ । तायते । अतायीति । 'चिणो लुक्' इति तलोपः । अतायिष्टेति । चिणभावे सिच् । 'आर्धधातुकस्येड् वलादेः' इतीट् । तताये । तायिता । तायिषीष्ट । तायिष्यते ।

---

१. ताय $B_1$, $D_2$, $D_3$, $D_4$, P, C. २. Before it—तायते । तायेत । तायताम् । अतायत । तताये । ततायाते । ततायिरे $B_2$. ३. After it—तायिषीष्ट । तायिता । तायिष्यते । अतायिष्यत $B_2$. ४. तरपो लुक् न $Bc_2$

शल चलने संवरणे च ।[1] अशलिड्ढ्वम् । अशलिध्वम् ।

षेवृ सेवने । 'परिनिविभ्यः—' इति षत्वम् । परिषेवते । न्यषेविष्ट । विषिषेवे ।[3] ऐभ्यः किम् । प्रतिसेवते ।

काशृ दीप्तौ । काश आम् वेति केचित् । काशामास । चकाशे ।

कासृ शब्दकुत्सायाम् ।[4] '[5]कास्प्रत्यय—' इत्याम् । कासांचक्रे । वेति केचित् । चकासे ।

---

शल । शलते । अशलिष्ट । अशलिड्ढ्वम् । अशलिध्वमिति । इट् मूर्धन्यः । शेले । शेलिढ्वे । शेलिध्वे । शलिता । शलिषीष्ट । शलिष्यते ।

षेवृ । परिषेवत इति । 'धात्वादेः षः सः' । न्यषेविष्ट इति । अड्व्यवायेपि षत्वम् । विषिषेवे इति । 'एत्र इग्ह्रस्वादेशे' । 'अभ्यासव्यवायेपि' अभ्यासस्य च षः । सिषेविढ्वे । सिषेविध्वे । सेविता ।

काशृ । काशते । अकाशिष्ट । काश इति । तथोक्तं बोपदेवपण्डितैः । 'दरिद्राकासकाशृरुष्जागृवाम् ठ्याम्' इति । काशामासेति । असोनुप्रयोगः । चकाशे इति । ह्रस्वः । चुत्वम् । काशिता । काशिषीष्ट ।

कासृ । शब्द[6]कुत्सा रोगजत्वात् । कासते । अकासिष्ट । कासिता ।

---

१. Before it—शलते $B_2$. २. After it—न्यषेवत $B_1$. ३. एभ्य इति किम् $D_3$. ४. After it—गतौ $D_3$. ५. °प्रत्ययात्–' C; before it—कासते $B_3$. ६. शब्दस्य $Bc_2$.

ईह चेष्टायाम् । [1]ऐहिढ्वम् । [2]ऐहिध्वम् । ईहांचक्रे । ईहिता । गाङ् गतौ । [3]गातेः शपि कृते [4]प्रकृत्याश्रितत्वादादौ [5]सवर्णदीर्घः । तेन 'आतो ङितः' इति इय् न । [6]गाते । गाते । 'आत्मनेपदेष्वनतः' । गाते । गासे । गाथे । गाध्वे ॥ गै । [7]एति आलोप इत्येके । गे । गावहे । [8]गामहे । गेत । गेयाताम् । गेरन् । गाताम् । गै । गावहै । गामहै । अगात । अगाताम् । [9]अगास्त । जगे । गाता । गासीष्ट ॥

---

ईह । ईहते । ऐहिढ्वम् । ऐहिध्वमिति । सिच् । इट् । 'विभाषेटः' इति वा मूर्धन्यः । आट् । 'आटश्च' इति वृद्धिः । ईहांचक्रे इति । 'इजादेः—' इत्याम् । ईहिता इति । इट् । अलघूपधत्वान्न गुणः । ऐहिष्यत । गाङ् । अयमानिट् । गाते इति । शप् । सवर्णे दीर्घः । शपि कृते इति । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयेति भावः । [11]ईतीत्यादि । तथोक्तं मुग्धबोधे । 'उस्येर्वाम्यण्वराचि लोपः' । इति । गेतेत्यादि । लिङ् । गातामित्यादि । लोट् । त आता झेषु शपि कृते सवर्णदीर्घः । गास्व । गाथाम् । गाध्वम् । अगातेति । लङ् । बहुवचनेपि 'आत्मनेपदेष्वनतः' इत्यदादेशे कृते । अगात । अगास्तेति । लुङ् । जगे इति । लिट् । 'आतो लोप इटि च' इत्यालोपः । गातेति लुट् । गासीष्ट । गास्यते । अगास्यत ।

---

१. ऐहिध्वम् । ऐहिढ्वम् । $B_1$, $D_4$; before it—ईहते $B_2$. २. Dropped $D_3$. ३. गाते । शापि C. ४. प्रत्यया° C. ५. सवर्णे दीर्घः $B_1$, $B_2$, $D_2$. ६. गाते । गाते dropped $D_1$, $D_3$, $B_2$. ७. एति इत्यालोप इत्येके $D_1$; गातेः एति $B_2$. ८. From गामहे to गामहै dropped P. $B_1$, N; after गावहे N has गेत । गेयाताम् । गेरन् । गाताम् । गै । गावहै । अगात &c. ९. After it—अगासाताम् । जगे । जगाते $B_2$, $D_3$. १०. एती° $Bc_3$. ११. तथा चोक्तं $Dc_3$.

रुङ् गतौ भाषणे च ।[1] अरविष्ट ।[2] अरविढ्वम् । अरविध्वम् । मतान्तरे इड् वा ।[3] लिटि तु[4] नित्यम् । रुरुविषे ।[5]

देङ् पालने । दयते ।

**स्थाघ्वोरिच्च** ॥१।२।१७॥

अनयोरिदन्तादेशः स्यात्[6] सिच्च कित् स्यादात्मनेपदेषु ॥ कित्त्वान्न गुणः ॥

---

रुङ् । इट्[7]सहितः । रवते । रवेत । अरविष्टेति । लुङ् । सिच् । अट् । अरविषाताम् । अरविषत । अरविढ्वम् । अरविध्वमित्यादि । 'विभाषेटः' इति वा मूर्धन्यः । अरोष्ट । अरोषाताम् । अरोषत इत्यादि इडभावे । रुरुवे । रुरुवाते । रुरुविरे । रविता । रोता । रविषीष्ट । रोषीष्ट । रविष्यते । रोष्यते ।

देङ् । अयमनिट् । दयते इति । अयादेशः ।

**स्थाघ्वोः** । चकारेण कित्त्वं समुच्चीयत इत्यभिप्रेत्याह । सिच्च किदिति । प्रयोजनं गुणाभावः । इत्वं तु गुणार्थमेव स्यात् । इत्वेत्यत्र तकारो दीर्घनिवृत्त्यर्थः प्लुतप्रवृत्त्यर्थश्च । तथा वार्तिककृतोक्तम्[8] ।

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेपि सः ।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥

इति । इच्चेत्यत्र तकारेत्त्वम् । कस्य कार्यस्य सिद्धये । इति प्रश्ने दीर्घो मा भूदित्युत्तरम् । ननु कित्त्वे 'घुमास्था—' इति ईत्वे विधिं विनापि स सिद्ध[9] इतीत्वविधानसामर्थ्यादन्तरतमोपि

---

१. After it–रवते $B_2$. २. After it–अरोष्ट C, $D_1$. ३. After it—अरोष्ट $D_2$, P, $B_1$, $B_2$. ४. Dropped $D_1$. ५. After it—रविष्यते । रोष्यते । रोषीष्ट । रविषीष्ट । रोता । रविता $B_2$ ; रविता । रविषीष्ट $D_4$. ६. Dropped N, $D_4$. ७. सेट् । $Bc_2$. ८. वार्तिकम् । $Bc_2$. ९. ईत्वविधानादपि स सिद्धः $Bc_2$, $Dc_3$.

**ह्रस्वादङ्गात् ॥८।२।२७॥**

ह्रस्वादङ्गात् परस्य सिचो लोपः स्याज्झलि ॥ अदित । अदिषाताम् ।[१] अदिथाः ।[२] अदिढ्वम् ।

**दयतेर्दिगि लिटि ॥७।४।९॥**

देङो दिगिरादेशः स्याल्लिटि । दिग्यादेशेन द्वित्वबाध इष्यते ।[३] दिग्ये । दिग्याते ।[४] दाता । दासीष्ट ।[५]

---

ह्रस्वः स्यादित्याशङ्क्ते । ऋतेपि स इति । उत्तरम् । अनन्तरे प्लुतो मा भूदिति । असति तपरत्वे अनन्तरेपि विद्यमानेपि विशेषे घुमेति दीर्घः । अनेन वा दीर्घो नियमार्थः स्यात् दीर्घ एव स्यात् प्लुतो मा भूदिति । मा भूत् प्लुत इति चेत् तत्राह । प्लुतश्चेति । स चासति तपरत्वे न प्राप्नोति सति तु तस्मिन् दीर्घस्याप्रसङ्गात् विधिरेव संपद्यत इति स्वविषये प्लुतो न व्यावर्तत इति वार्तिकार्थः । अदितेति । 'आदेच उपदेशेशिति' इत्यात्वम् । अदिढ्वमिति । 'इणः षीध्वम्—' इति मूर्धन्यः ।

दयतेः । दयतेरिति देङो ग्रहणम् । न तु दय दाने इत्यस्य । तस्य हि लिट्याम् उक्त इत्यभिप्रेत्याह । देङ इति । दिग्यादेशेन द्वित्वबाध इति । ननु द्वित्वे प्राप्ते विधीयमानत्वाद्दिग्यादेशो देङो द्वित्वस्य बाधकः स्यात् । दिग्यादेशाद्द्वित्वं तु केन बाध्यते । उच्यते । इह द्विधा बाधो लक्ष्यस्य लक्षणस्य च । अत्र दिग्यादेशशास्त्रेण द्वित्वशास्त्रं बाधितमिति न द्वित्वम् ।

---

१. After it—अदिषत $D_2$, P, C, $B_1$. २. After it—अदिषाथाम् $D_2$, $B_1$, $B_2$. ३. After it—सकृद्गतेर्विप्रतिषेधे यद्बाधितं तद्बाधितमेव $D_2$. ४. After it–दिग्यिरे । दिग्यिषे । 'आदेच–' इत्यात्वम् $B_1$; $B_2$ has 'आदच–' इत्यात्वम्. ५. After it–दास्यते $B_2$. ६. अनन्तरे अ॰विद्यमानेपि विशेषे $Dc_3$.

डिङ्ग विहायसा गतौ ।[1] अडयिष्ट । डिड्ये[2] । डायिता ।[3]

गुप गोपनकुत्सनयोः[4] । जुगुप्सते[5] ।[6]

मान विचारणे ।

**मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥३।१।६॥**

एभ्यः सन् स्यादभ्यासस्य च दीर्घः ॥

---

डीङ् । इतः परं स्वरान्ता नव सेटः । डयते । डयेत । अडयिष्टेति । लुङ् । सिच् । इट् । गुणायादेशौ । अडयिढ्वम् । अडयिध्वम् । डिड्ये । डिड्याते । डयितेति । इट् । डयिषीष्ट । डयिष्यते ।

गुप । जुगुप्सते इति । 'गुप्तिज्किद्भ्यः सन्' । 'सन्यङोः' इति द्वित्वम् । 'कुहोश्चुः' । 'सनाद्यन्ताः—' इति धातुत्वम् । लट् । त । शप् । जुगुप्सेत । अजुगुप्सिष्ट । जुगुप्सांचक्रे । जुगुप्सिता । जुगुप्सिषीष्ट ।

मान् ।

मानबध । मान पूजायाम् । बध बन्धने । दान अवखण्डने । शान अवतेजने[7] । एभ्यः सन् स्यात् । ननु चाभ्यासदीर्घो[8] विशेषत्वात् सामान्यविहितह्रस्वेत्त्वयोर्बाधकः स्यात् । ततश्चानिष्टरूपं[9] स्यादिति

---

१. After it—डयते $D_3$, $B_1$, $B_2$; $D_3$ has उत्पूर्वः । उड्डयते । उदडयिष्ट । डिड्ये । उड्डयिता. २. Dropped P, $D_1$; $D_4$ has—डयिता । डिड्ये । डयिषीष्ट । डयिष्यते. ३. After it—डयिषीष्ट $D_3$, $D_4$, $B_1$. ४. कुत्सनगोपनयोः $B_2$. ५. Before it—'गुप्तिज्–' इति सन् । द्वित्वादि $B_1$, $B_2$. ६. After it—अजुगुप्सिष्ट $D_3$, $B_1$, C, N. ७. तेजने $Dc_3$. ८. °दीर्घस्य $Bc_2$, $Dc_3$. ९. °चानिष्टं $Bc_2$, $Dc_3$.

सन्यत इतीत्वम् । ततो दीर्घः । मीमांसते ।

बध निन्दायाम् । भष्भावः । चर्त्वम् । बीभत्सते ।

द्युत दीप्तौ । द्योतते ।

**द्युद्भ्यो लुङि ॥१।३।९१॥**

द्युतादिभ्यः परस्मैपदं स्याद्वा लुङि ॥ 'पुषादिद्युता—'

---

यश्चोदयेत् तं प्रत्याह । सन्यत इतीत्वम् । ततो दीर्घ इति । कथमित्वम् । यावतेत्वं सामान्यविहितं दीर्घत्वं विशेषः एवं मन्यते 'दीर्घो कितः' इत्यत्र ज्ञापितमेतत् । अभ्यासविकारेष्वपवादा नोत्सर्गविधीन् बाधन्त इति । मानादेः क्रमाद्विचारनिन्दार्जवनिशानेषु सन्निष्यते । अत एव मान विचारणे बध निन्दायाम् दान आर्जवे शान निशाने इत्येतदर्थानेव धातून् पठति । मीमांसत इति । ह्रस्वः । इत्वम् । द्वित्वम् । दीर्घः । धातोरित्वविधेः । सन आर्धधातुकत्वाभावादिट् न । अनुस्वारः । धातुत्वात्तिप् शबादि । अमीमांसिष्ट । मीमांसांचक्रे । मीमांसिता । मीमांसिषीष्ट ।

बध । भष्भाव इति । 'एकाचो बशः—' इति । चर्त्वमिति । 'खरि च' इति । बीभत्सते इति । 'मान्बध—' इति सन् । 'सन्यङोः' । दीर्घः । धातुत्वम् । त । शप् । अबीभत्सीष्ट । बीभत्सांचक्रे । बीभत्सिता । बीभत्सिषीष्ट ।

द्युत । द्योतत इति । 'पुगन्त—' इति गुणः ।

द्युद्भ्यः । ननु च द्युतेरेकत्वाद् बहुवचननिर्देशो नोपपद्यते इत्यत आह । द्युतादिभ्यः इति । अयमभिसंधिः । यथैकेन छत्रिणा साहचर्यादन्येपि तत्सहचारिणश्छत्रिण इत्युच्यन्ते छत्रिणो गच्छन्तीति तथा द्युतिना साहचर्यात् द्युतादयोपि कृपूपर्यन्ता द्युत इति व्यपदिश्यन्ते ।

---

१. बन्धने $B_2$. २. वा स्यात् $D_1$, $D_3$, $D_4$, N. ३. °ष्वपवादो $Bc_2$. ४. बाधते $Bc_2$. ५. धातोरित्वविधे $Dc_3$. ६. तिचादि $Bc_2$. ७. सन्यतः । दीर्घः । $Dc_3$ ८. धातुत्वात्त । $Bc_2$. ९. बहुत्वं $Bc_2$. १० तत्सहचरा $Bc_2$. ११. द्युतिसाह° $Bc_2$. १२. द्युतय $Dc_1$. १३. वृत्यादयोपि $Dc_3$.

इत्यङ् । अद्युतत् । अद्योतिष्ट ।

**द्युतिस्वाप्योः संप्रसारणम् ॥७।४।६७॥**

द्युतेः स्वापेश्चाभ्यासस्य संप्रसारणं स्यात् पूर्वरूपत्वम् । दिद्युते ।[1] वृतु वर्तने ।[2] द्युतादित्वात् अवृतत् । अवर्तिष्ट ।[3]

**वृद्भ्यः स्यसनोः ॥१।३।९२॥**

वृतादिभ्यः पञ्चभ्यो वा[4] परस्मैपदं स्यात् स्ये सनि च[5] ।

**न वृद्भ्यश्चतुर्भ्यः[6] ॥७।२।५९॥**

वृतु वृधु शृधु स्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न[7] स्यात् ॥

---

बहुवचननिर्देशसामर्थ्यादिति । अद्योतिष्टेति । लुङ् । च्लिः । सिच् । इट् । 'पुगन्त—' इति गुणः । द्युतादयः कथिताः ।

द्युतिस्वाप्योः । ण्यन्तस्वपिः स्वापिरुच्यते । तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते । सुष्वापयिषति । इह न स्वापयतेर्ण्वुल् । स्वापकः । ततः । क्यच् । स्वापकीयते । सन् । सिस्वापकीयिषति । पूर्वरूपत्वमिति । 'संप्रसारणाच्च' इति । द्योतिता । द्योतिषीष्ट । द्योतिष्यते । वृतु । वर्तते । द्युतादित्वादवृतदिति । 'द्युद्भ्यो लुङि' इति परस्मैपदम् । 'पुषादिद्युत—' इत्यङित्यर्थः ।

वृद्भ्यः । वृतादिभ्यः पञ्चभ्य इति ।[8] वृतु वर्तने । वृधु वृद्धौ[9][10] । शृधु शब्दकुत्सायाम् । स्यन्दू स्रवणे[11] । कृपू सामर्थ्ये । इत्येतेभ्यः ।

न वृद्भ्यः । बहुवचननिर्देशात् अयमर्थो[12] लभ्यते । तत्राद्यानां त्रयाणां नित्यमिटि प्राप्ते स्यन्देस्तूदित्वात् पाक्षिकप्रतिषेधोऽयमुच्यते[13] ।

---

१. After it–दिद्युताते $B_2$. २. $B_1$, $B_2$, $D_3$ have वर्तते before it and C has द्युतादित्वात् परस्मैपदम्; द्युतादित्वादङ् $D_1$, $D_3$, $D_4$, $B_2$. ३. C has ववृते after it. ४. परस्मैपदं वा $D_3$. ५. After it—परे $D_3$. ६. वृत्वृध्शृध्स्यन्द्भ्यः C; वृतवृधशृधुभ्यः वृभ्यः P; वृत्वृधशृधस्यन्दूभ्यः $D_1$, $D_3$. ७. परस्य सार्वदार्ध° $B_1$. ८. ण्यन्तः स्वापिः $Bc_2$. ९. Before it—वृतादिभ्यः $Dc_3$. १०. वर्धने $Bc_2$. ११. प्रस्रवणे $Bc_2$. १२. अयमर्थो $Bc_2$. १३. पाक्षिक $Bc_2$, $Dc_3$.

तङानयोरभावे पदद्वयादन्यत्र वेति केचित् । वर्त्स्यति ।
[1]आत्मने[2]पदेषु वर्तिष्यते ।

स्यन्दू प्रस्रवणे ।

**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥८।२।७२॥**

[3]एभ्यः परस्याप्राणिकर्तृकस्य [4]स्यन्दते[5]र्वा षत्वं [6]स्यात् ॥ [7]अनुष्यन्दते ।[8] [9]अनुस्यन्दते । एवं विपर्यभिनिभ्यः । अप्राणिषु किम् । निस्यन्दते हस्ती ।[10] अस्यदत् । अस्यन्दिष्ट । अस्यन्त्त[11] ।

---

अत्र [12]तङा समानपद[13]स्थितेभ्यो वृतादिभ्य इडिष्यते । अन्यत्र निषेधः । क्रत्यपि परस्मैपदलुकि च विवृत्सिता विवृत्सत्वमितीत्यभिप्रेत्याह । तङानयोरभावे इति । पदद्वयादिति । तथोक्तं मुग्धबोधे । ‘ वृद्भ्यो [14]नेमं पे स्यसनोर्वा त्वमे ’ इति । अवर्त्स्यत् । अवर्तिष्यत ।

स्यन्दू ।

अनु । अनुस्यन्दते । तैल[15]मिति शेषः । अप्राणिष्विति प्रसज्य-प्रतिषेधः । तेन प्राण्यप्राणिसमुदायेपि प्राण्यस्तीति अनुस्यन्दते मत्स्य उदके इत्यत्र षत्वं नेति काशिकाकाराभिप्रायः । अन्ये तु पर्युदासं मन्यमाना भवितव्यमेवात्र षत्वेनेत्याहुः । वृतादित्वादङ् परस्मैपदे । अस्यदत् । अस्यन्दिष्टेति । ऊदित्वादिड् वा । अस्यन्त्तेति । इडभावे ‘ झलो झलि ’ इति [16]सलोपः । ‘ झरो झरि सवर्णे ’ इति दलोपः ।

---

१. आत्मनेपदे P; आत्मनेपदे तु $D_1$. २. पदे तु $D_2$, $D_3$, $N_1$. ३. एष्व-प्राणि° $D_3$. ४. स्यन्देर्वा C. ५. षत्वं वा $D_3$. ६. P drops it. ७. अनु-स्यन्दते । अनुष्यन्दते C. ८. After it–उदकम् $D_1$, $D_4$. ९. Dropped $D_2$. १०. After it–लुङि वृतादित्वात् परस्मैपदं वा । अङ् वा । $D_3$, P, $B_2$ ( $D_3$ and P have च for वा; पुषादित्वादङ् $B_2$ ). ११. After it—सस्यन्दे । स्यन्दिता । स्यन्दिषीष्ट । स्यन्त्सीष्ट । स्यन्त्ता । स्यन्त्स्यति । स्यन्दिष्यते । अस्यन्त्स्यत् । अस्यन्दिष्यत $B_2$. १२. तङानसमानपदस्थेभ्यो $Dc_3$ १३. °पदस्थेभ्यो $Bc_2$. १४. न्येभ्यो: $Dc_3$. १५. तिल° $Bc_2$. १६. सिचो लोपः $Dc_3$.

स्यन्दिता । स्यन्ता । स्यन्स्यति । स्यन्दिष्यते । स्यन्स्यते ।

कृपू सामर्थ्ये ।

**कृपो रो लः ॥८।२।१८॥**

कृपे रेफस्य लकारः स्यात् ॥ रो ल इति सामान्योक्तेर्ऋकारैकदेशस्य रेफस्य ऌकारैकदेशो लः । कृपादौ तु लत्वं नेष्टम् । कल्पते । अक्लृपत् । अकल्पिष्ट ।

**लिङ्सिचावात्मनेपदेषु ॥१।२।११॥**

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि परे॥

---

सस्यन्दे । स्यन्दिता । स्यन्तेति । इड्वा । स्यन्दिषीष्ट । स्यन्त्सीष्ट । स्यन्त्स्यतीति । 'वृद्भ्यः—' इति परस्मैपदम् । 'न वृद्भ्यः—' इतीडभावः । अस्यन्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत ।

कृपू ।

कृपे । र इति सामान्यमुपादीयते तेन केवलो यो रेफः यश्च ऋकारस्थस्तयोर्द्वयोर्ग्रहणम् । ल इत्यपि सामान्यमेव तेन केवलस्य रस्य लकारः ऋकारैकदेशस्य ऌकारैकदेशः । एतदेवाह । रो ल इति । कृपादाविति । आदिशब्दात् कृपण कृपीटकर्पूरादयः । कथमिच्छाभावः सिध्यति । 'उणादयो बहुलम्' इति बहुलग्रहणात् । अक्लृपदिति । परस्मैपदम् । अङ् । अकल्पिष्टेति । ऊदित्वादिड् वा ।

लिङ्सिचौ । तङि परे इति । एतत् सिच एव विशेषणम् । न लिङः । लिङ्परस्मैपदग्रहणस्य झल्ग्रहणानुवृत्त्यैव व्यावर्तितत्वात् ।

---

१. After it—ऊदित्वादिड् C; $D_2$ has this before अस्यन्दिष्ट. २. लः P, $D_3$, $B_1$. ३. $B_1$ drops रेफस्य; रस्य N. ४. Before it—कृपा । कृपणः । कृपाणः । $B_1$, P. ५. Before this—द्युतादित्वात् परस्मैपदमङ् च । N. ६. रेफस्य $Dc_3$. ७. कृपाण° $Dc_3$. ८. लिङः परस्मैपदस्य $Bc_2$. ९. °वृत्तत्वात् $Dc_3$.

[1]अक्लृप्त । [2]चक्लृपे ।

लुटि च [3]क्लृपः ॥१।३।९३॥

लुटि स्यसनो[4]श्च [5]क्लृपो वा परस्मैपदं स्यात् ॥

तासि च [6]क्लृपः ॥७।२।६०॥

[7]क्लृपेः परस्य सादेरार्धधातुकस्य तासेश्चेण्न स्यात् तङानयोरभावे ॥ कल्प्ता । कल्प्तासि । तङि तु । कल्पिता । कल्पितासे । कल्प्तासे । कल्पिषीष्ट । क्लृप्सीष्ट । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते ।[8]

---

अक्लृप्तेति । इडभावे 'झलो झलि' इति सलोपः । 'क्ङिति च' इति गुणनिषेधः ।

लुटि च । वृतादित्वादेव स्यसनोः सिद्धो विकल्पो लुटि विधीयते । चस्तर्हि तदनुकर्षणार्थो न कार्यः । एवं तर्हि इयं प्राप्तिः क्लृपेः पूर्वां प्राप्तिं बाधेत । तस्मात् च कार्यः ।

तासि च । क्लृपेरात्मनेपद[9]समानपदस्थादिडागम इष्यते । अन्यत्र निषेधः । क्लृत्यपि परस्मैपदलुकि च निषेधः । कल्प्ता । **कल्प्तासीति** । लत्वम् । गुणः । **कल्पितासे** । **कल्प्तासे** इति । ऊदित्वाद्वेट् । **कल्पिषीष्ट** । क्लृप्सीष्ट । वेट् । इडभावे 'लिङ्सिचौ—' इति कित्त्वम् । **कल्प्स्यतीति** । 'लुटि च' इति परस्मैपदम् । 'तासि च' [10]इडभावः । **कल्पिष्यते** । **कल्प्स्यते** इति । वेट् । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत ।

---

१. $B_1$ has before it—झलादीति किम् । कल्पिषीष्ट । $B_2$ has it after चक्लृपे. २. Dropped $D_1$, $D_4$, $B_2$. ३. क्लृपः N, $D_3$. ४. After it—परतः $D_1$, $D_2$, P, C. ५. क्लृपेः परस्मैपदं वा स्यात् । C क्लृपेर्धातोर्वा परस्मैपदं स्यात् P, $B_1$, $B_2$. ६. क्लृपः N. ७. क्लृपेः $N_1$; क्लृपः $D_3$. ८. P has after it—अकल्प्स्यत । अकल्पिष्यत. ९. °सामान्य° $Dc_3$. १०. इतीड् न $Bc_2$.

व्यथ दुःखसंचलनयोः[1] ।

**व्यथो लिटि ॥७।४।६८॥**

व्यथोभ्यासस्य संप्रसारणं स्याल्लिटि ॥ विधिबलाद्धलादिशेषो न । विव्यथे ।

ञित्वरा संभ्रमे । अत्वारिद्वम्[2] । अत्वारिध्वम्[3] ।

इत्यात्मनेपदप्रक्रिया ।

---

व्यथ । व्यथते । अव्यथिष्ट ।

**व्यथः** । यकारस्य हलादिशेषेण निवृत्तौ प्राप्तायामिदं संप्रसारणं विधीयते इत्यभिप्रेत्याह । **विधिबलादिति** । वकारस्य तु 'न संप्रसारणे संप्रसारणम्' इति निषिध्यते इति । **विव्यथे** इति । 'संप्रसारणाच्च' । व्यथिता । व्यथिषीष्ट । व्यथिष्यते । अव्यथिष्यत ।

**ञित्वरा** । संभ्रमोत्राशुकारिता । 'आदिर्ञि—' इति इत् । त्वरते । त्वरेत । त्वरताम् । अत्वरत । अत्वरिष्ट । **अत्वरिद्वम्** । **अत्वरिध्वमिति** । 'विभाषेटः' इति वा मूर्धन्यः । तत्वरे । त्वरिता । त्वरिषीष्ट । त्वरिष्यते । अत्वरिष्यत ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगुरथ तङन्ता अमी भ्वादिसंज्ञाः ॥

---

१. दुःखभयसंचलनेषु $D_2$. २. $B_1$ has त्वरते before it; अत्वरिध्वम् । अत्वरिढ्वम् $N_1$, $D_4$. ३. After it—संभ्रमे $Bc_2$.

पतॢ गतौ । ऌदित्वादङ् ।

पतः पुम् ॥७।४।१९॥

पतः पुमागमः स्यादङि ॥ प्रण्यपप्तत् ।[१] पेततुः ।[२] पतिता ।

टुवमु उद्गिरणे । [३]वेम एत्वाभ्यासलोपौ वेति केचित् । वेमतुः । ववमतुः । वेमिथ[४] ।

भ्रमु चलने । वा भ्राशेति श्यन् वा । [५]भ्रम्यति । भ्रमति । अभ्रमीत् ।[६]

---

पतॢ । इतस्त्रयः परस्मैपदिनः सेटश्च[७] । पतति । ऌदित्वादिति । 'पुषादि—' इति ।

पतः । प्रण्यपप्तदिति । 'नेर्गद—' इति णत्वम् । पपात । पेततुरिति । 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ । पेतिथ । पत्यात् । पतिष्यति । अपतिष्यत् ।

टुवमु । उद्गिरणं भुक्तस्योर्ध्वगतिः । टु इत् । वमति । वमेत् । वमतु । अवमत् । अवमीत् । ववाम । ववमतुः इति । 'न शसदद—' इत्येत्वनिषेधः स्वमते । अर्वाचीनमते त्वेवं वेति भावः । वमिता । वम्यात् । वमिष्यति । अवमिष्यत् ।

भ्रमु । अभ्रमीदिति । 'ह्म्यन्तक्षण—' इति न वृद्धिः ।

---

१. $B_1$ has पपात before and पेतुः after it; $B_2$ has पेतुः after it; $D_3$ has अपप्तत् in its place. २. Dropped $D_2$. ३. Before it-वमति । अवमीत् । ववाम । $D_4$. ४. P, $N_1$, C, $B_2$, $D_1$, $D_4$ have ववमिथ after it. ५. भ्राम्यति $B_1$, $D_3$ P ; शमामिति दीर्घः । भ्राम्यति $B_2$, $D_2$. ६. After this $B_1$ has—मान्तत्वान्न वृद्धिः $B_2$ has the same before it and बभ्राम after it. ७. सेटः $Bc_2$.

**वा जॄभ्रमुत्रसाम् ॥**

एषां किति लिटि सेटि थलि च[1] एत्वाभ्यासलोपौ वा स्तः ॥ श्रेमतुः[2] । बभ्रमतुः । श्रेमिथ । बभ्रमिथ ।[3]

षह[4] मर्षणे ।[5] परिनिवीति षत्वम् । विषहते । सिवादित्वात् षो वा । [6]व्यषहत । व्यसहत । असहिष्ट[7] । सेहे । तीषसहेति वेट् । परिषहिता । हो ढः । झषस्तथोरिति धत्वम् । ष्टुत्वम् । ढलोपः[8] ।

**सहिवहोरोदवर्णस्य ॥६।३।११२॥**

सहिवहोरवर्णस्य[9] ओकारः स्यात् ढलोपे सति ॥

---

वा जॄ । जॄष् वयोहानौ । भ्रमु चलने । त्रसी उद्वेगे । भ्रमिता । भ्रम्यात् । भ्रमिष्यति ।

षह । मर्षणं क्षमा । सेट् आत्मनेपदी च । विषहते इति । 'धात्वादेः षः सः' । सहेत । सहताम् । असहिष्ट । सेहे ।

सहिवहोः । अवर्णस्य किम् । ऊढः । ऊढवान् । वर्णग्रहणं किम् । कृतायामपि वृद्धौ यथा स्यात् । उदवोढाम् । तादपि परस्तपर इति अकारस्य तपरत्वात् अकारस्य ग्रहणं न स्यात् ।

---

१. $B_1$, $D_3$ have परे after it. २. After it—बभ्रमतुः । $D_4$. ३. $B_1$ has after it—भ्रेमुः । बभ्रमुः ।. ४. सह $N_1$. ५. After it—भ्रम्यात् । भ्रमिता । भ्रमिष्यति । एते परस्मैपदिनः । $B_2$; परिनिविभ्य इति $D_3$. ६. व्यसहत । व्यषहत । $D_4$. ७. Dropped $N_1$, $D_2$, $D_3$, $D_4$. ८. ढो ढे लोपः $B_2$. ९. Dropped $Bc_2$.

**सोढः ॥८।३।११५॥**

सोढरूपस्य[1] सहेः षो[2] न स्यात् ॥ विसोढा[3] ।

षद्लृ विशरण[4]गत्यवसादनेषु । निषीदति । व्यषदत्[5] । सदिस्वञ्ज्योरिति परस्य न षत्वम् । निषसाद[6] । निषत्ता[7] । अप्रतेरित्युक्तेः प्रतिसीदति ।

शद्लृ शातने । शीयादेशः ।

**शदेः शितः ॥१।३।६०॥**

शित्संबन्धिनः शदेरात्मनेपदं स्यात् ॥ शीयते ।

---

सोढः । सोढरूपस्येति । निष्ठान्तस्य प्रथमान्तनिर्देशः । शङ्काम-पाकरोति । विसोढेति । लुट् । तासिः । डा । सहिषीष्ट[8] । सहिष्यते । असहिष्यत ।

षद्लृ । विशरणं शटनम् । अवसादोनुत्साहः । इतस्त्रयः परस्मै-पदिनः । द्वावनिटौ । निषीदतीति । 'पाघ्राध्मा—' इति सीदादेशः । 'सदेरप्रतेः' इति षत्वम् । व्यषददिति । लुङ् । च्लिः । लृदित्वादङ् । 'प्राक्सित—' इति अड्व्यवायेपि षः । निषत्तेति । चर्त्वम् । सद्यात् । सत्स्यति । असत्स्यत् ।

शद्लृ । शातनं तनूकरणम् । शीयादेश इति । 'पाघ्राध्मा—' इति ।

शदेः । शित्संबधिन इति । तेन शित इत्यस्य[9] षष्ठ्यन्ततां दर्शयति । कथं शदि शितः संबन्धीयस्तस्य प्रकृतिः । प्रागपि शितः शदेः तत्प्रकृतित्वमस्त्येवेति शित्प्रकृतेः शदेरात्मनेपदं भवति । शीयते ।

---

१. सोढ्रूपस्य $N_1$, $D_4$, Com. २. षत्वं $D_1$, $D_4$ ; सस्य षो $D_2$. ३. Before it—सहिषीष्ट । सहिष्यते $B_2$. ४. विसरण° $D_1$, $D_4$, $B_1$, P. ५. न्यषदत् $D_2$, C, P, $B_1$, $B_2$, N. ६. C has after it—निषेदतुः । निषेदुः ।. ७. विषत्ता $D_4$. ८. प्रसहिषीष्ट $Dc_3$. ९. इत्येतस्य $Bc_2$.

अशदत् । शेदतुः । शत्ता ।

फण गतौ ।

**फणानां च सप्तानाम् ॥६।४।१२५॥**

फण राजृ भ्राजृ भ्रासृ भ्लासृ स्यमु स्वन एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः ॥ फेणतुः । पफणतुः । फेणिथ । पफणिथ ।

राजृ दीप्तौ ।[4] विधिबलादातोप्येत्वम् । रेजतुः । रराजतुः । रेजे । रराजे ।

---

अशददिति । लृदित्वादङ् । शशाद । शेदतुरिति । 'अत एक—' इति एत्वाभ्यासलोपौ । शत्तेति । लुट् । शद्यात् । शत्स्यति । अशत्स्यत् ।

फण । सेट् । फणति । अफणीत् । अफाणीत् । पफाण ।

फणानाम् । बहुवचननिर्देशादाद्यर्थो गम्यते । अत एव राजादीनां ग्रहणम् । फण गतौ । राज दीप्तौ । टुभ्राजृ टुभ्रासृ दीप्तौ । स्यमु स्वन शब्दे । फणिता । फण्यात् । फणिष्यति ।[7]

राज । सेट् । उभयपदी च । राजति । राजते । अराजीत् । अराजिष्ट । रराज । ननु च 'फणानाम्—' इत्यत्र सूत्रे नावर्णग्रहोस्ति योप्यत इति प्रकृतिः सोपि मात्राकालः । न च राजादीनां मात्राकालो-वर्णोस्ति तत् कथमाकारस्य स्थाने एत्वं लभ्यत इति यश्चोदयेत्तं प्रत्याह । विधिबलादिति । अयं भावः । अत इत्येतदिहोपस्थितं तपरत्वकृतं कालविशेषमपास्यासंभवादवर्णमात्रं बोधयति । अथवा 'आभ्यस्तयोरातः' इत्यतः आत इत्यनुवर्तते इति । राज्यात् । राजिषीष्ट । राजिष्यति । राजिष्यते ।

---

१. भ्राशृ भ्लाशृ $D_1$. २. क्ङिति $N_1$, $D_4$. ३. पफाण । फेणतुः $B_2$. ४. After it—राजति । राजते $D_2$, $B_1$, P, C. ५. रेजे । रेजाते $B_2$, $D_2$. ६. After it—टुभ्लासृ $Bc_2$, $Dc_3$. ७. After it—अफणिष्यत् $Dc_3$. ८. Dropped $Bc_2$. ९. °विशेषणम° $Dc_3$.

भ्रासृ दीप्तौ । 'वा भ्राश—' इति वा श्यन् । भ्रास्यते । भ्रासते । भ्रेसे । बभ्रासे । एवं भ्लासृ दीप्तौ ॥

स्वन शब्दे । विष्वणाति । अवष्वणाति मांसम् । व्यष्वणत् ॥ विषष्वणतुः । विष्वेणतुः । भोजने किम् । विस्वनाति वीणा । व्यवाभ्यां किम् । निस्वनत्यन्नम् ।

---

भ्रासृ भ्लासृ । सेटावात्मनेपदिनौ द्वौ । अभ्रासिष्ट । भ्रेसे इति । एत्वाभ्यासलोपौ वा । भ्रासिता । भ्रासिष्यते । एवं भ्लासृ । अस्यापि भ्रासृवद्रूपाणि ज्ञेयानीत्यर्थः । भ्लास्यते । भ्लासते । अभ्लासिष्ट । भ्लेसे । बभ्लासे । भ्लासिता । भ्लासिष्यते ।

स्वन । सेट् । परस्मैपदी च । विष्वणति । अवष्वणतीति । 'वेश्च स्वनो भोजने' इति षत्वम् । 'अट्कुप्वाङ्—' इति णत्वम् । सशब्दं मांसं भुङ्क्ते इत्यर्थः । व्यष्वणदिति । 'प्राक्सित—' इति अड्व्यवायेपि षत्वम् । अस्वनीत् । अस्वानीत् । सस्वान । विषष्वणतुः । विष्वेणतुरिति । 'स्थादिषु—' इति अभ्यासव्यवायेप्यभ्यासस्य षत्वम् । 'फणानां च—' इत्येत्वाभ्यासलोपौ वा । विस्वनति वीणेति । नदतीत्यर्थः । व्यवाभ्यां किमिति । 'वेश्च स्वनो भोजने' इत्यत्र 'अवाच्चालम्बनाविदूर्ययोः' इत्यवादिति वर्तते । कण्ठोक्तं च वेरिति । द्वयं व्यर्थम् । 'उपसर्गात्' इत्यस्यानुवृत्त्यैव सिद्धत्वादिति प्रश्नाभिप्रायः । उत्तरमाह । निस्वनत्यन्नमिति । स्वनिता । स्वन्यात् । स्वनिष्यति । अस्वनिष्यत् ।

---

१. भ्रास N. २. शब्दे भोजने च ॥ 'वेश्च स्वनो भोजने ॥ ८।३।६९॥ वेरवाच्च परस्य स्वनतेः सस्य षः स्याद्भोजने । विष्वणाति । मांसं व्यष्वाणीत् । 'अतो हलादेः' इति वा वृद्धिः । व्यष्वणीत् । विषष्वणतुः । विष्वेणतुः । भोजने किम् &c. $B_1$ ; स्वनो शब्दे । व्यवाभ्यां स्वनो भोजने ॥८।३।६९॥ व्यवाभ्यां च परस्य स्वनो भोजने षत्वं स्यात् $B_2$ ; स्वन शब्दे । 'वेश्च स्वनो भोजने' । विष्वणाति । अवष्वणाति मांसम् $D_2$ ; व्यष्वणत् to विष्वेणतुः dropped $D_4$. ३. Before it—व्यष्वणीत् । व्यष्वाणीत् । विषष्वाण $B_2$. ४. वीणाम् $D_1$, $D_2$, P, C, $B_1$, $B_2$, N. ५. अन्नम् dropped $D_3$. ६. तद्द्वयं किमर्थम् । $Bc_2$, $Dc_3$.

खनु[1] अवदारणे ।[2] 'गमहन—' इत्युपधालोपः । चख्नतुः[3] । चख्नुः[4] । चखनिथ ।

**ये विभाषा ॥६।४।४३॥**

जनसनखनामकारोन्तादेशः स्याद्वा यादौ क्ङिति ॥ खायात् । खन्यात् ।

चायृ पूजानिशामनयोः ।[5] अचायीत् । इडभावे यलोपः । अचासीत् ।[6] अचास्ताम् ।[7] अचायिष्ट ।

लष[8] कान्तौ । श्यन् वा । लष्यति । लषति ।[9]

गुहू संवरणे ।

---

खनु । इत आरभ्य ह्वेञन्ता उभयपदिनोऽष्टादश गुहूपर्यन्ताः सेटः[10] । खनति । खनते । अखानीत् । अखनीत् । अखनिष्ट । चखान । चख्ने । खनितासि । खनितासे । खनिषीष्ट । खनिष्यति । खनिष्यते ।

चायृ । चायति । चायते । इडभावे इति । चायस्फायप्यायामिड्वेति केचिदिति । यलोप इति । 'लोपो व्योर्वलि' इति । अचायिष्ट । अचास्त चचाय । चचाये । चायिता । चाता । चायितासे । चातासे । चाय्यात् । चायिषीष्ट । चासीष्ट । चायिष्यति । चास्यति । चायिष्यते । चास्यते ।

लष । कान्तिरिच्छा । श्यन्वेति । 'वा भ्राश[11]भ्लाश—' इति । लष्यते । लषते । अलाषीत् । अलषीत् । अलषिष्ट । ललाष । लेषतुः । लेषे । लष्यात् । लषिषीष्ट ।

गुहू ।

---

१. खन $D_1$, N. २. After it—खनति । खनते C, $D_4$ ( also अखनीत् $D_4$). ३. Before it—चखान $B_2$. ४. Dropped $D_2$. ५. After it—चायति । चायते $D_2$, $B_1$, C, N. ६. अचास्त $B_1$; अचायिष्ट । अचास्त । अचास्ताम् for अचास्ताम् । अचायिष्ट N. ७. P and C, $D_2$, $D_3$ drop it ; $B_2$, $D_4$ have चचाये in place of it. ८. लष् C. ९. After it—लषते C, $B_1$ ; लषते । अलषीत् । अलाषीत् । अलषिष्ट । ललाष । लेषतुः $B_2$ ; लष्यते । लषते । अलाषीत् । अलषीत् । अलषिष्ट N. १०. सेटः $Bc_2$. ११. भ्रासभ्लासेति $Bc_2$.

ऊदुपधाया गोहः ॥६।४।८९॥

गुह उपधाया ऊकारादेशः स्याद् गोह इति निर्देशाद् गुणहेतावचि परे ॥ गूहति । गूहते । इट्पक्षे । अगूहीत् । अगूहिष्ट । अन्यत्र क्सः । अघुक्षत् ।

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥७।३।७३॥

एषां क्सस्य सर्वस्य लोपो वा स्याद् दन्त्ये तङि परे ॥

---

ऊदुपधाया गोहः इति विकृतग्रहणं विषयनियमार्थम् । यत्रास्यै-तद्रूपं तत्र यथा स्यादित्यभिप्रेत्याह । गोह इति निर्देशादिति । इह न । निजुगुहतुः । निजुगुहुः । उपधायाः किम् । अन्त्यस्य मा भूत् । अचीत्यनुवर्तते । गोढा । गूहेत् । गूहेत । पक्षे इति । 'स्वरतिसूति—' इत्यादिना यदेट् तदेत्यर्थः । अगूहिष्टाम् । अगूहिषुः । अगूहिषाताम् । अन्यत्र क्स इति । इडभावे 'शलइगुपध—' इति क्स इत्यर्थः । अघुक्षदिति । 'हो ढः' इति ढत्वम् । 'एकाचो बशो—' इति भष् । 'षढोः कः सि' इति कः । 'आदेशप्रत्यययोः' इति षः । इट् । 'इतश्च' इतीकारलोपः । अघुक्षताम् ।

लुग्वा । दुह प्रपूरणे । दिह उपचये । लिह आस्वादने । गुहू संवरणे । 'घोर्लोपो लेटि वा' इत्यतो लोप इत्यनुवर्तमानेपि पुनर्लुग्-ग्रहणं सर्वलोपार्थं तच्चोत्तमपुरुषद्विवचनार्थमेव । अन्यत्र तस्यैव लोपे कृते 'झलो झलि' इति सलोपो न सिध्यति । स्थानिवद्भावोप्यल्लोपस्य नास्ति । पूर्वत्र सिद्धीये न स्थानिवदिति । दन्त्योष्ठ्यो हि वकारो दन्त्य एव गृह्यते इह । अन्यथा तु न लुग्ग्रहणमेवाकरिष्यत् ।

---

१. गोह C. २. पक्षे इट् C. ३. $B_1$ drops it. ४. C has before it— एकाचो बशो भष् झषन्तस्य स्ध्वोः ।. ५. $B_1$ drops सर्वस्य. ६. °दित्यादि $Bc_2$. ७. इट्पक्षे इति $Dc_3$. ८. वेट् for यदेट् तदेत्यर्थः । $Bc_2$. ९. कत्वम् $Dc_3$. १०. षत्वम् $Dc_3$. ११. अट् $Bc_2$. १२. अन्यथा तु ग्रहणमेवा° $Dc_3$.

ढत्वम् । ध[1]त्वम् । ष्टुत्वम् । ढ[2]लोपः । दीर्घः । अगूढ । अघुक्षत ।

**क्सस्याचि ॥७।३।७२॥**

अजादौ त[3]ङि परे क्सस्या[4]न्तस्य लोपः स्यात् ॥ अघुक्षाताम् । अघुक्षत । बहुवचने क्सान्तलोपाभाव इति केचित् ।[5] अघुक्षन्त । अगूढाः । अघुक्षथाः । अघुक्षाथाम् । अघूढ्वम् । अघुक्षध्वम् । अघुक्षि । [6]अगुह्वहि । अघुक्षावहि । [7]दन्त्ये किम् । अघुक्षामहि ।[8]

---

ढत्वमिति । 'हो ढः' इत्यनेन । धत्वमिति । 'झषस्तथोः—' इत्यनेन । ष्टुत्वमिति । 'ष्टुना ष्टुः' इत्यनेन । ढलोप इति । 'ढो ढे लोपः' इत्यनेन । दीर्घ इति । 'ढ्रलोपे—' इति । अगूढेति । लुङ् । त । च्लिः । क्सः । अ[9]डागमः । अघुक्षतेति । लुगभावपक्षे ढत्वं भष्भावः कत्वम् । षत्वम् ।

**क्सस्य** । [10]ककारवतः [11]क्सस्य ग्रहणादिह न । तृणादिभ्यः स[12]ः । तृणसौ । तृणसः । अघुक्षातामिति । असति क्[13]सो लोपे 'आतो ङितः' इतीयादेशः स्यात् । अघुक्षन्तेति । 'झोन्तः' इति । **अगूढाः** इति । क्[14]सः । लोपः । ढत्वम् । धत्वम् । ष्टुत्वम् । ढो[15] लोपः । दीर्घः । अघूढ्वमिति । ढत्वम् । भ[16]ष् । ष्टुत्वम् । ढलोपः । दीर्घः ।

---

१. झषस्तथोर्धोधः । $D_4$. २. ढलोपे दीर्घः $D_1$. ३. C has क्ङिति for तङि परे and P drops तङि परे ; ताङि $D_1$, $D_3$, $D_4$, $N_1$. ४. °न्तलोपः $D_1$, $D_3$, $D_4$. ५. अघुक्षत after this $D_2$; इत्येके । $D_3$. ६. अघुक्षामहि । अगुह्वहि । $D_3$. ७. दन्त्ये किम् dropped $D_3$. ८. After this $B_1$, $B_2$ have—लिङ्सिचावात्मनेपदेषु इति किच्वात् लिङि न गुणः । घुक्षीष्ट ।; after this—जुगूह । जुगूहतुः । गूहिता । गोढा । गुह्यात् । घोक्ष्यति । गूहिष्यति $D_1$, $D_4$ ; जुगूह । जुगूहे N. ९. अट् ।. $Bc_2$. १०. क्सस्य ककारसहितस्य ग्रहणादिह न । $Dc_3$. ११. सस्य $Bc_2$. १२. Dropped $Bc_2$. १३. क्सान्तलोपे $Bc_2$. १४. क्सलोपः $Bc_2$, $Dc_3$. १५. ढलोपः $Bc_2$, $Dc_3$. १६. भष्भावः $Dc_3$.

हृञ् हरणे । अहार्षीत् ॥[1]

उश्च ॥१।२।१२॥

ऋवर्णात् परौ झलादी लिङ्सिचौ कितौ स्तस्तङि ॥[2] कित्त्वान्न गुणः । सिचूलोपः[3] । अहृत । अहृषाताम् ।[4] ह्रियात् । हृषीष्ट ॥[5]

भृञ् भरणे । भरति ।[6] अभार्षीत् । अभृत । बभृव ।[8] भर्ता । भरिष्यति ।

---

जुगूह । जुगूहे । गूहिता । गोढा । गुह्यात् । गूहिषीष्ट । 'लिङ्सिचौ—' इति कित्त्वम् । घुक्षीष्ट । गूहिष्यति । घोक्ष्यति । गूहिष्यते । घोक्ष्यते । अगूहिष्यत् । अघोक्ष्यत् । अगूहिष्यत । अघोक्ष्यत ।

हृञ् । ह्वावनिटावित आरभ्य । हरति । हरते ।

उश्च । व्याप्तेन्र्यायात् ऋवर्णग्रहणमित्याह । ऋवर्णादिति । लिङ्सिज्भ्यामाक्षिप्तस्य धातोः ऋवर्णेन तदन्तविधिर्ज्ञेयः । सिज्लोप इति । 'ह्रस्वादङ्गात्' इत्यनेन । जहार । जहर्थ । जह्रे । हर्ता । ह्रियादिति । 'रिङ्शयग्लिङ्क्षु' इति रिङ् । हृषीष्ट । कित्त्वान्न गुणः । हरिष्यति । हरिष्यते । अहरिष्यत् । अहरिष्यत ।

भृञ् । भरते । अभार्षीदिति । 'सिचि वृद्धिः—' इति वृद्धिः । 'अस्ति—' इतीट् । अभृतेति । 'उश्च' इति कित्त्वम् । 'ह्रस्वादङ्गात्' इति सिचो लोपः । बभार । बभर्थ । बभृवेति । ऋादित्वान्नेट् । भ्रियात् । भृषीष्ट । भरिष्यति । 'ऋद्धनोः स्ये' इतीट् ।

---

१. Before it—हरति । हरते । C, $B_1$, $B_2$, N. २. After it—परे $B_2$. ३. सिच P, $B_1$. ४. After it—अहृषत । हर्ता C. ५. Before it—जहार $B_2$; 'रिङ्शयग्लिक्षु ।' ह्रियात् । हृषीष्ट । 'ऋद्धनोः स्ये' इतीट् । हरिष्यति $D_3$. ६. After it—हर्ता । हरिष्यति $B_2$; हरिष्यति । अहरिष्यत् C. ७. After it-भरते $D_2$, C, $B_1$, $B_2$. ८. Before it—ऋादित्वान्नेट् । बभर्थ । $B_1$, C, N; $D_2$ has बभार before it; $D_4$ has ऋादित्वान्नेट् ।. ९. सेलोप इति $Bc_2$.

दान आर्जवे[1] । दीदांसते ।[2]

शान तेजने । शीशांसते ।[3]

भज सेवायाम् । भेजतुः[4] । भेजिथ । बभक्थ ।

श्रिञ् सेवायाम् । 'णिश्रि[5]—' इति चङ् । अशिश्रियत् ।[6] श्रयिता ।

---

दान । द्वौ सेट्कौ । दीदांसत इति । 'मानबन्ध—' इति सन् । द्वित्वम् । ह्रस्वः । इत्वम् । अभ्यासदीर्घः । दीदांसति । अदिदांसीत् । अदिदांसिष्ट । दीदांसांचकार । दीदांसांचक्रे । दीदांस्यात् । दीदांसिषीष्ट ।

शान । शीशांसत इति । 'मानबन्ध—' इति सन् । शीशांसति । शीशांसांचकार । शीशांसांचक्रे ।

भज । अनिट् । भजति । भजते । अभाक्षीत् । अभाक्ताम् । अभक्त । अभक्षाताम् । बभाज । भेजतुरिति । 'तृफल—' इत्येत्वाभ्यासलोपौ । भेजिथ । बभक्थेति । 'ऋतो भारद्वाज—' इति पक्षे इट् । भक्ता । भज्यात् । भक्षीष्ट । भक्ष्यति । भक्ष्यते ।

श्रिञ् । सेट्[10]कः । श्रयति । श्रयते । अशिश्रियदिति । 'चङि' इति द्वित्वम् । अ शिश्री अत् इति स्थिते तिबाश्रयो लघूपधगुणः प्राप्तः । इयङ् । तत्रान्तरङ्गत्वात् 'अचि श्नुधातुभ्रुवाम्—' इतीयङेव । अशिश्रियत । शिश्राय । शिश्रिये । श्रयितेति । इट्गुणौ[11] । श्रीयात् । श्रयिषीष्ट ।

---

१. अवखण्डने C, $D_1$; अवखण्डने आर्जवे च $B_2$; आवर्जने N; खण्डने $D_3$. २. Before it—दीदांसति C, $B_1$, $B_2$, N; after it—अदीदांसत् । दीदांसांचकार । दीदांसांचक्रे । दीदांस्यात् । दीदांसिषीष्ट । दीदांसिता $B_2$. ३. Before it C has—'मान् बाध-' इति दीर्घसनौ ; $D_1$, P, C have शीशांसति before it. ४. Before it-भजति । भजते । अभाक्षीत् । अभक्त $D_2$, C, $B_1$, $B_2$ (instead of अभक्त; $B_2$ has बभाज ). ५. Before it—श्रयति श्रयते C, $B_1$, $B_2$. ६. After it—अश्रयिष्ट $B_1$. ७. Before it—शिश्राय । शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिष्यति । अश्रयिष्यत् $B_2$; शिश्राय । श्रयि ।. $D_2$. ८. सेटौ $Bc_2$. ९. वेट् $Bc_2$. १०. सेट् $Bc_2$. ११. गुणः $Bc_2$.

रञ्ज रागे ।

रञ्जेश्च ॥६।४।२६॥

रञ्जेरुपधाया नेकारस्य[1] लोपः स्यात् शपि परे॥ रजति[2] । रजते। अराङ्क्षीत्[3] । अरङ्क्त[4] । अरङ्क्षाताम्[5] । ररञ्जतुः[6] । ररजतुः[7] । रङ्क्ता ।

त्विष दीप्तौ । त्वेषति[8] । त्वेषते । अत्विक्षत् । अत्विक्षत[9] । 'क्सस्याचि' इति क्सान्तलोपः । अत्विक्षाताम् । 'लिङ्सिचौ—' इति कित्त्वम् ॥ त्विक्षीष्ट ।

यज देवपूजासंगतिकरणदानेषु । 'व्रश्च[10]—' इति षत्वम् । अयाक्षीत् । अयष्ट[11] । जश्त्वेन[12] डः । ष्टुत्वम् । अयड्ढ्वम् ।

---

रञ्ज । इतो नव वसान्ता अनिटः । अराङ्क्षीत् । अरङ्क्त । ररञ्ज । ररञ्जतुः । ररञ्जुः[13] इति । संयोगाल्लिटो वा कित्त्वमिति केचित् । कित्त्वान्न लोपः । ररञ्जे । रेजे । रङ्क्तेति । 'चोः कुः' । अनुस्वारपरसवर्णौ । रज्यात् । रङ्क्षीष्ट । रङ्क्ष्यति । रङ्क्ष्यते ।

त्विष । त्वेषति । त्वेषते । अत्विक्षत् । अत्विक्षत । 'शल इगुपध—' इति क्सः । कत्वम् । 'षढोः—' इति षत्वम् । त्वेष्टा । तित्विषे[14] । त्विष्यात् । त्वेक्ष्यति । त्वेक्ष्यते ।

यज । यजति । यजते । अयाक्षीदिति । लुङ् । च्लिः । सिच् । 'वदव्रज—' इति वृद्धिः । कत्वम् । षत्वम् । 'अस्ति—' इतीट् । अयष्टेति । 'झलो झलि' इति सलोपः । 'व्रश्च—' इति षः । ष्टुत्वम् । अयड्ढ्वमिति । 'झलो झलि' इति सलोपः । 'व्रश्च—' इति षः ।

---

१. नस्य N. २. रजति । रजते । ररञ्ज । ररञ्जतुः । संयोगाल्लिटः कित्त्वं वा । ररजतुः । 'अनिदिताम्—' इति नलोपः । ररञ्जुः । रङ्क्ता । $B_2$. ३. This and the next two forms dropped $D_2$, $D_3$. ४. Dropped $D_4$ ; $D_1$ has ररञ्ज for this and the next form. ५. Dropped P, N, $D_4$. ६. ररजतुः । ररञ्जतुः C. ७. Dropped $B_1$, $D_3$. ८. P drops त्वेषते ; N, $D_3$, $D_4$ drop त्वेषति । त्वेषते. ९. Dropped $B_1$. १०. Before it–यजति । यजते $D_2$, C, $B_1$, $B_2$. ११. After it—अयक्षाताम् $B_2$. १२. 'झलां जश् झशि' इति जश्त्वेन $D_1$, $D_4$. १३. ररजतुः $Bc_2$. १४. तित्वेष in its place $Bc_2$.

**लिट्यभ्यासस्योभयेषाम् ॥६।१।१७॥**

वच्यादीनां ग्रहादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि ॥ इयाज ।

**वचिस्वपियजादीनां किति ॥६।१।१५॥**

वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति ॥

---

**लिट्यभ्यासस्य** । अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषामिति ग्रहणं संप्रसारणं हलादिशेषबाधकं यथा स्यात् वव्रश्चेति । इयाजेति । 'अत उपधायाः' इति वृद्धिः । 'संप्रसारणाच्च' इति पूर्वरूपम् ।

**वचिस्वपि** । आदिशब्दो यजिनैव संबध्यते । न प्रत्येकं वच्यादिभिः । यदि प्रत्येकं संबन्धोभिमतः स्यात्तदा वच परिभाषणे इत्यादीनधीत्य ञिष्वप् शये इत्यधीयीत । तत्र वच्यादीनामिति अनेनैव स्वपादेरपि स्यादिति पृथगुपादानं न स्यात् । ननु चैवं 'रुदश्च पञ्चभ्यः' इत्यत्र स्वपेर्ग्रहणं न स्यात् रुदेरादौ स्वपिमधीत्य 'स्वपश्च पञ्चभ्यः' इति सूत्रं कर्तव्यम् । तच्च न कृतम् । तस्मात् यजिनैव संबध्यते इत्यभिप्रेत्योक्तं 'वचिस्वप्योर्यजादीनां चेति' । वच परिभाषणे । ब्रुवो वचि । उभावपि । ञिष्वप शये । यज देवपूजादिषु ।

यजिर्वपिर्वहिश्चैव वसि वेञ् व्येञ् इत्यपि ।
ह्वेञ्वदीश्वयतिश्चैव यजाद्याः स्युरिमे नव ॥

---

१. यजादीनां D4. २. ग्रह्यादीनां N, D3. ३. $B_1$ has किति before संप्रसारणम्. ४. वच्यादिभिः प्रत्येकम् $Bc_2$. ५. स्वपेरपि $Bc_2$, $Dc_3$. ६. इति $Bc_2$. ७. ब्रूञो $Bc_2$. ८. पूजादौ $Bc_2$. ९. वदि $Bc_2$.

ईजतुः ।[1] ईजुः । इयजिथ । इयष्ठ । इज्यात् ।[2]

टुवप्[3] बीजतन्तु[4]संताने । प्रण्युवाप[5] । ऊपतुः । ऊप्यात् ।[6]

वह प्रापणे । प्रण्यवाक्षीत्[7] । 'अवर्णस्य' इत्युक्तेः

---

ईजतुरिति । सवर्णदीर्घः । इयजिथ । इति । 'ऋतो भारद्वाज—' इति पक्षे इट् । इयष्टेति । इडभावे 'व्रश्च—' इति षः । ष्टुत्वम् । ईजे । यष्टा । इज्यात् । 'किदाशिषि' इति कित्त्वम् । संप्रसारणम् । यक्षीष्ट । यक्ष्यति । यक्ष्यते ।

टु वप । बीजादीनां संतानं क्षेत्रे विस्तारणम् । वपति । वपते । अवाप्सीत् । अवप्त । प्रण्युवापेति । 'नेर्गद—' इति णत्वम् । अभ्यासस्य संप्रसारणम् । ऊपतुरिति । यजादित्वात् संप्रसारणम् । उवपिथ । उवप्थ । ऊपे । वप्ता । उप्यादिति । कित्त्वात् संप्रसारणम् । वप्सीष्ट । वप्स्यति । वप्स्यते ।

वह । वहति । वहते । प्रण्यवाक्षीदिति । सिच् । वृद्धिः[8] हलन्तलक्षणा[9] । 'हो ढः' 'षढोः कः सि' । षत्वम् । ईट्[10] । 'नेर्गद—' इति णत्वम् । अवर्णस्येति । 'सहिवहोरोदवर्णस्य' इत्यत्रैवोपपादितम् ।

---

१. $B_1$ drops ईजुः. २. After it—यक्षीष्ट । यष्टा । यक्ष्यति $B_2$. ३. वपु $D_1$, $D_2$, N. ४. तन्तु dropped C, $B_2$. ५. Before it—उभयपदी । वपति । वपते $B_1$. ६. After it—वप्ता । वप्स्यति C, $B_1$, ( C drops वप्ता and $B_1$ वप्स्यति ). The following Kârikâ is given after the forms of वप् by P यजो वपो वहश्चैव वेञ् व्येञो ह्वयतिस्तथा । वसिर्वह्स्वपिश्चैव यजाद्या नव धातवः ॥; N, $D_3$, $D_4$ give on the margin यजिर्वपिर्वहिश्चैव वजिर्वेञ् व्यञ् इत्यपि । ह्वेञ्वदी श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥ ( वासिश्च वेञ् इत्यपि...रमी नव $D_3$; व्येञ् वेञ्...रमी नव $D_4$; $B_1$ has it also on the margin ( यजिर्वपिर्वहिश्चापि ). ७. Before it—वहति । वहते $B_2$. ८. वेद् $Bc_2$. ९. हलन्तलक्षणा वृद्धिः । $Bc_2$. १०. Before it—अट् । $Dc_3$.

कृतायामपि वृद्धावोत्वम् । अवोढाम् । अवाक्षुः । [1]अवोढ । उवाह । [2]ऊहे । वोढा । उह्यात् । वक्षीष्ठ ।

वेञ् तन्तुसन्ताने ।[3] [4]अवासीत् । अवास्त ।

**वेञः ॥६।१।४०॥**

वेञो न संप्रसारणं स्याल्लिटि ॥ ववौ । [5]ववतुः । वविथ । ववाथ ।

---

**अवोढामिति** । वह तस् । तसस्ताम् । 'वदव्रज—' इति वृद्धिः । 'झलो झलि' इति सलोपः । 'हो ढः' । 'झषस्तथोः' इति तस्य [6]धत्वम् । ष्टुत्वम् । 'ढो ढे लोपः' । **अवोढेति** । [7]आत्मनेपदे त । पूर्ववत् प्रक्रिया । **उवाहेति** । 'लिट्यभ्यासस्य' इति संप्रसारणम् । **ऊहे इति** । यजादित्वात् संप्रसारणम् । **वोढेति** । लुट् । तासिः । 'हो ढः' । ढत्वम् । धत्वम् । ष्टुत्वम् । ढलोपः । **उह्यादिति** । संप्रसारणम् । वक्ष्यति । वक्ष्यते ।

**वेञ्** । वयति । वयते । **अवासीदिति** । 'आदेच उपदेशे—' इत्यात्वम् । 'यमरम—' इतीट्सकौ ।

**वेञः** । किति यजादित्वात् [8]धातोः संप्रसारणं प्राप्तम् । अकिति तु 'लिट्यभ्यासस्य' इत्यभ्यासस्य । तदुभयं निषिध्यते । **ववौ इति** । 'आत औ णलः' । **वविथ** । **ववाथेति** । भारद्वाजमते इट् ।

---

१. Before it—अवाक्षम् । अवाक्ष्व । अवाक्ष्म । C. २. Before it—ऊह तुः । उवाहिथ । उवोढ C. ३. After it—वयति $B_2$; वयाति । वयते N. ४. Before it—आत्वे इट्सकौ $B_1$. ५. After it—वतुः $D_1$, $D_2$. ६. धः । $Bc_2$. ७. आत्मनेपदम् । त । $Bc_2$; आत्मनमदम् । $Dc_3$. ८. धातोः dropped $Bc_2$.

**वेञो वयिः ॥२।४।४१॥**

वेञो [1]वयिरादेशो वा स्याल्लिटि ॥ इकार इत् । उवाय ।

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति-भृज्जतीनां ङिति च ॥६।१।१६॥**

एषां किति ङिति च संप्रसारणं स्यात् ॥ [2]यस्य संप्रसारणे प्राप्ते ।

**लिटि वयो यः ॥६।१।३८॥**

वयो यकारस्य न [3]संप्रसारणं स्यात् लिटि ॥ ऊयतुः । ऊयुः ।

**वश्चान्यतरस्यां किति ॥६।१।३९॥**

वयो [4]यकारस्या वो वा स्यात् कि[5]ति लिटि ॥ ऊवतुः । ऊवुः । [6]उवयिथ । वाता । ऊयात् ।

---

वेञः । ई[7]कार इति । इदिव इत् ई[8]यथा न श्रूयते तथा अयमप्युच्चारणार्थत्वादिति भावः । उवायेति । ' अत उपधायाः ' इति वृद्धिः ।

ग्राहि । ग्रह उपदाने । ज्या वयोहानौ । वेञो वयिः । व्यध ताडने । वश कान्तौ । व्यच व्याजीकरणे । ओव्रश्चू छेदने । प्रछ ज्ञीप्सायाम् । भ्रस्जो पाके ।

लिटि वयः । वयेर्लिट्येव विधेर्लिट्ग्रहो व्यर्थः । न । उत्तरार्थः । वेञ इति । ऊये ।

उवयिथेति । नित्यमिट् । वाता इति । आत्वम् । ऊयादिति । संप्रसारणम् । पूर्वरूपम् । ' अकृत्सार्वधातुकयोर्दीर्घः ' । वासीष्ट । वास्यति । वास्यते ।

---

१. लिटि वयिरादेशः स्याद्वा N. २. यकारस्य C. ३. संप्रसारणं न P. C. ४. यस्य $N_1$, $D_3$. ५. लिटि किति $D_1$, $D_3$. ६. उवयिथ । ऊवे । ऊये । ववे । वाता । वास्यति । ऊयात् । अवास्यत् $B_2$. ७. इकार इदिति । $Bc_2$, $Dc_3$. ८. यथा इत् $Bc_2$.

व्येञ् संवरणे ।[1]

**न व्यो लिटि ॥६।१।४६॥**

व्येञ आत्वं न स्याल्लिटि ।[2] वृद्धिः ।[3] विव्याय ।[4] व्येञोऽन्त्यभागस्य किति लिटि संप्रसारणं वेति केचित् । विव्यतुः ।[5] विव्ययतुः ।[6] विव्ययिथ । 'इडत्त्यर्त्ति—' इति नित्यमिट् ।[7] व्याता । वीयात् ।

ह्वेञ् स्पर्धायां शब्दे च ।[8]

**लिपिसिचिह्वश्च ॥३।१।५३॥**

एभ्यश्च्लेरङ् स्यात् ॥ आतो लोपः[9] अह्वत् ।[10]

---

व्येञ् । संवरणमाच्छादनम् ।

व्ययति । व्ययते । अव्यासीत् । अव्यास्त । विव्यायेति । अभ्यासस्य संप्रसारणम् । व्येञो वेति यजादित्वात् प्राप्तम् । केचिदिति । महाकवयो मुग्धबोधकारश्च । तथा हि वृंक्तेः[11] संविव्ययुर्देहान् । संविव्ययुर्वसनचारुचमूसमुत्थम् इत्यादि । महा-[12]कवयः । 'जिं वान्त्यः किति' इति । वीयादिति । संप्रसारणे कृते दीर्घः । व्यासीष्ट । व्यास्यति । व्यास्यते ।

ह्वेञ् । ह्वयति । ह्वयते ।

लिपि । लिप उपदेहे । षिच क्षरणे । ह्वेञ् स्पर्धायाम् । अह्वदिति । आत्वम् । 'आतो लोप इटि च' ।

---

१. After it—व्ययति $B_2$. २. आत्वं व्येञो न स्यात् $D_1$. ३. वृद्धिः dropped C; वृद्धिः । व्यश्च व्येञो लिटि न संप्रसारणं स्यात् । विव्याय $B_2$. ४. Dropped $D_1$, $D_2$, $D_4$, P, C, $B_1$, $B_2$. ५. विव्ययतुः । विव्यतुः C. ६. After it–विव्ययुः P; विव्ययुः । विव्युः $B_2$. ७. Before it—विव्ये । विव्याते । विव्यये । C, $B_1$, $B_2$. ८. After it—ह्वयति $B_2$. ९. आलोपः $N_1$, $D_3$. १०. अङ् वेति केचित् । अह्वासीत् । $B_1$, $B_2$. ११. वक्रौ $Bc_2$. १२. महाकविप्रयोगः । $Bc_2$; महाकविप्रयोगः । मुग्धबोधे $Dc_3$.

**आत्मनेपदेष्वन्यतरस्याम् ॥३।१।५४॥**

लिपिसिचिह्वः परस्य च्लेरङ् वा स्यात् तङि ॥ अह्वत । अह्वेताम् । अह्वास्त । अह्वासाताम् ।

**अभ्यस्तस्य च ॥६।१।३३॥**

अभ्यस्तस्य ह्वयतेः संप्रसारणं स्यात् ॥ जुहाव । जुहुवतुः । जुहविथ । जुहोथ । ह्वाता ।[1]

वस निवासे ।[2]

**सः स्यार्धधातुके ॥७।४।४९॥**

सस्य तः स्यात् सादावार्धधातुके परे[3] । अवात्सीत् ।[4] अवात्ताम् । अवात्सुः । उवास ।

---

अभ्यस्त । 'अभ्यस्तस्य' 'ह्वयतेः' इति व्यधिकरणे षष्ठ्यौ[5] । अभ्यस्तसंबन्धी यो ह्वयतिस्तस्येत्यर्थः । कथाभ्यस्तसंबन्धी ह्वयतिर्यस्तस्य कारणम्[6] । तेनाभ्यस्तकारणात् ह्वयतेर्द्विर्वचनात् प्रागेव संप्रसारणं स्यात् । अन्यथा हि कृते द्विर्वचनेऽभ्यस्तसंज्ञायां संप्रसारणं स्यात् । एवं च सति 'न संप्रसारणे संप्रसारणम्' इत्यभ्यस्तस्य[7] संप्रसारणं न स्यात् । जुहावेति । संप्रसारणे कृते वृद्ध्यावादेशयोश्च स्थानिवद्भावेन हु एतद् द्विरुच्यते । ह्वासीष्ट । हूयात् । ह्वास्यति । ह्वास्यते ।

वस । इतस्त्रयः परस्मैपदिनः । वसति ।

अवात्सीदिति । 'वदव्रज–' इति वृद्धिः । ईट् । अवात्तामिति । 'झलो झलि' इति सलोपः । तस्यासिद्धत्वात् 'सस्यार्धधातुके' इति सकारस्य तकारः । उवासेति । 'लिट्यभ्यासस्य' इति संप्रसारणम् ।

---

१. After this C has–हूयात् । ह्वासीष्ट । ह्वास्यति । अह्वास्यत्. २. $B_1$ has वसति after it. ३. C, $D_3$ drop परे. ४. C has after this— सिज्लोपस्यासिद्धत्वात् 'सः स्यार्धधातुके' इति सकारस्य तकारः । झलो झलि ।; $N_1$ has on the margin the same except झलो झलि ; before it—पूर्वत्रासिद्धमिति सिज्लोपस्यासिद्धत्वात् सस्य तः । $D_3$. ५. व्याधिकरणषष्ठ्यौ $Bc_2$. ६. कारणह्व° $Bc_2$. ७. इत्यभ्यासस्य $Dc_3$.

## शासिवसिघसीनां च ॥८।३।६०॥

इण्कोः परस्यैषां सस्य षः स्यात् ॥ ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता । उष्यात् । वत्स्यति ।

वद व्यक्तायां वाचि । अच्छवदति । वदव्रजेति वृद्धिः । अवादीत् । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् ।

टुओश्वि गतिवृद्ध्योः । श्वयति । 'जॄस्तम्भु—' वाति अङ् वा ।

## श्वयतेरः ॥७।४।१८॥

श्वयतेरिकारस्य अः स्यादङि । ततः पररूपम् । अश्वत् ।

---

शासि । शास अनुशिष्टौ । वस निवासे । घसादेशः । अनादेशार्थं वचनम् । घसिर्यद्यप्यादेशस्तथापि सकार आदेशो न । उवसिथ । उवस्थेति । 'उपदेशेत्वतः' इतीट्निषेधे प्राप्ते 'ऋतो भारद्वाज—' इति पक्षे इट् । वस्तेति । अनुदात्तत्वादिडभावः । उष्यादिति । संप्रसारणम् । षत्वम् । वत्स्यतीति । सस्य तः ।

वद । इतौ द्वौ सेट्कौ । अच्छवदतीति । 'अच्छ गत्यर्थवदेषु' इति गतिसंज्ञा । 'ते प्राग्धातोः' इति प्राक् प्रयोगः । अवादीदिति । इट् । सलोपः । ऊदतुरिति । यजादित्वात् संप्रसारणम् । वदितेति । इट् । वदिष्यति । अवदिष्यत् ।

टुओश्वि । 'आदिर्ञिटुडवः' इतीत्संज्ञायां टुर्लुप्यते । ओः 'उपदेशेजनु—' इतीत्संज्ञायाम् । श्वयति ।

श्वयतेः । पररूपमिति । 'अतो गुणे' इति । अश्वयिष्टाम् ।

---

१. वस्ता । वत्स्यति $B_2$. २. वदति $B_1$, $D_3$. ३. After it—वदिष्यति $B_2$. ४. Dropped $D_4$. ५. अकारः $D_1$, $D_2$. ६. पररूपत्वम् $D_2$, $D_3$, $D_4$. ७. °शार्थं $Bc_2$, $Dc_3$. ८. वेट् $Bc_2$. ९. सेटौ $Bc_2$. १०. ओः is placed after संज्ञायाम् $Bc_2$.

पक्षे सिच् । तस्य इट् । अश्वयीत् [1] । 'विभाषा धेट्श्व्योः' इति चङ् वा [2] । इयङादेशः । अशिश्वियत् ।

**विभाषा श्वेः ॥६।१।३०॥**

श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च ॥ ततो [3] द्वित्वम् । शुशाव । शुशुवतुः । [4] शुशविथ । शिश्वाय । शिश्वियतुः । [5] शिश्वयिथ । श्वयिता । यजादित्वात् [6] शूयात् ॥

इति मिश्रप्रक्रिया ॥

इति भ्वादयः [7] ॥

---

अश्वयिषुः । **इयङादेश** इति । 'अचि श्नुधातु—' इति ।

**विभाषा** । उभयत्रविभाषेयम् । तत्र यङि अप्राप्तं लिटि तु किति यजादित्वान्नित्यं प्राप्तमकित्यप्राप्तं संप्रसारणं सर्वत्र वा स्यात् । यदा धातोर्न तदा 'लिट्यभ्यासस्य' इत्यभ्यासस्यापि न । **शुशुवतुरिति** । संप्रसारणे उवङादेशे च कृते स्थानिवत्त्वात् शु अस्य द्वित्वम् । **शिश्वायेति** । वृद्धिः । हलादिशेषः । श्वयिष्यति । अश्वयिष्यत् ।

इति मिश्रप्रक्रिया ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलो भ्वादिसंज्ञो गणोयम् ॥

---

१. Before it–'ह्म्यन्तक्षण–' इति न वृद्धिः. २. Dropped $D_1$. ३. Before it—द्वित्वम् $B_2$. ४. After it—शुशुवुः $B_2$. ५. After it—शिश्वियुः $D_1$. ६. यजादित्वात् संप्रसारणम् $B_2$. ७. भूवादयः $B_1$; dropped $D_1$.

# अथादादयः।

अद भक्षणे।

**अदिप्रभृतिभ्यः शपः ॥२।४।७२॥**

अदादेः परस्य शपो लुक् स्यात् ॥ चर्त्वम्। अत्ति। अत्तः। अदन्ति। अद्यात्। अत्तु। अत्तात् वा।

**हुझल्भ्यो हेर्धिः ॥६।४।१०१॥**

होर्झलन्ताच्च[1] हेर्धिः स्यात् ॥ अद्धि।

---

अद। इत आरभ्य शासन्ताः सप्तविंशतिः परस्मैपदिनः। द्वावनिटौ। अत्तीति। लट्। तिप्। कर्तरि शप्। 'खरि च' इति चर्त्वम्। अत्तः। अदन्तीति। शपो लुक्। 'झोन्तः'। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः। अद्यादिति। विधि लिङ्। यासुट्। शपो लुक्। अद्याताम्। अद्युः। अद्याः। अद्यातम्। अद्यात। अद्याम्। अद्याव। अद्याम। अत्तु इति। लोट्। 'एरुः'। अत्ताद्वेति। 'तुह्योः—' इति तातङ्। अत्ताम्। अदन्तु।

हुझल्भ्यः। अत्र च 'घसिभसोर्हलि च' इत्यतः 'हलि च[2]' इत्यनुवर्तते। तेन रुदिहि इत्यादौ हलादित्वाभावात् धिभावो न। अत्तादित्यत्र परत्वात् तातङादेशः। तत्र कृते सकृद्गते विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति पुनर्धिभावो न भवति। अत्तम्। अत्त। अदानि। अदाव। अदाम।

---

१. °र्झलन्तेभ्यो C. २. Dropped $Bc_2$, $Dc_3$.

## अदः सर्वेषाम् ॥७।३।१००॥

अदः परस्या[1]पृक्तसार्व[2]धातुकस्य अडागमः स्यात् [3]सर्वेषां मतेन ॥ आदत् । आत्ताम् । आदन् । आदः ।[4]

## लुङ्सनोर्घस्लृ ॥२।४।३७॥

अदे[5]र्घस्लादेशः स्यात् लुङि सनि च ॥ लृदित्वादङ् । अघसत् ।

## लिट्यन्यतरस्याम् ॥२।४।४०॥

अदो [6]घस्लृ वा स्याल्लिटि ॥ जघास । 'गमहन—' इत्युपधालोपः ।

---

**अदः** । आददिति । लङ् । 'आडजादीनाम्' इत्याट् । 'इतश्च' इतीकारलोपः । **आदन्निति** । झोन्ते इलोपे च कृते संयोगान्तलोपः । **आद इति** । सिप् । 'इतश्च' । 'अदः सर्वेषाम्' इति अट् । आत्तम् । आत्त । आदम् । आद्व । आद्म ।

लुङ् । **लृदित्वादङिति** । 'पुषादि—' इत्यनेन । अघसताम् । अघसन् ।

**लिट्यन्य** । ननु च घस्लृ अदने इत्यस्य जघासेति स्यात् अदेस्तु आदेति । अस्ति हि घसिः प्रकृत्यन्तरम् । 'सृघस्यदः क्मरच्' इति क्मरच्विधानात् । तस्माल्लिटि विकल्पो न कार्यः । क्रियते च घसेः । असर्वविषयत्वज्ञापनार्थम् । तेन तस्य सार्वधातुके आर्धधातुके च यत्र लिङ्गं न वचनं वा तत्र प्रयोगो न स्यात् । **जघासेति** । वृद्धिः । द्वित्वम् । श्चुत्वम् । ननु घस् अतुस् इत्यत्र उपधालोपे तस्य द्वित्वं

---

१. °स्यापृक्तस्य C, $D_3$, $D_4$. २. सर्वमतेन $D_1$, $D_4$, $B_1$. ३. Dropped $B_3$. ४. After it—आत्तम् $D_3$. ५. अदो घस्ला° $D_2$, $D_3$, $D_4$. ६. घस्लादेशः $D_4$. ७. अस्मा° $Bc_2$. ८. नास्ति $Bc_2$, $Dc_3$.

उपधालोपस्य चर्विधिं प्रति स्थानिवत्त्वाभावात् घस्य चर्त्वम् । 'शासिवासि–' इति षत्वम् । जक्षतुः । जक्षुः । घसस्तासावभावात् थलिनित्यमिट् । जघसिथ । पक्षे 'अत आदेः' । आद । आदतुः । आदुः । [१]आदिथ । अत्ता । अघात् । अघास्ताम् ।[२] अत्स्यति । प्सा भक्षणे । [३]प्रणिप्साति । प्सायात् ।[४] प्सासुः । प्सातु । प्साहि । अप्सात् ।

**लङः शाकटायनस्यैव ॥**

आतः परस्य लङो झेर्जुस् वा[५] स्यात् ॥ अप्सुः । अप्सान् । अप्सासीत् । पप्सौ । प्साता ।

[६]वश कान्तौ । [७]वष्टि । [८]ग्रह्यादित्वात् संप्रसारणम् । उष्टः ।

---

प्रति स्थानिवत्त्वात् द्वित्वे च कृते 'खरि च' इति घस्य चर्त्वे क्रियमाणे 'अचः परस्मिन्—' इति अकारस्य स्थानिवत्त्वाच्चर्त्वं न स्यात् । इत्यत आह । उपधेति । **स्थानिवत्त्वाभावादिति** । 'न पदान्त—' इत्यनेन स्थानिवत्त्वनिषेधादित्यर्थः । **पक्षे** इति । घस्लभावपक्षे । आदथुः । आद । आदिव । आदिम । अत्तेति । लुट् । तासिः । चर्त्वम् । आत्स्यत् । प्सा । **प्रणिप्सातीति** । 'नेर्गद—' इति णत्वम् ।

लङः । **अप्सुरिति** । 'उस्यपदान्तात्' इति पररूपम् । **अप्सानिति** । झोन्तः इति कृते सवर्णदीर्घः । **अप्सासीदिति** । 'यमरम—' इतीट्सकौ । **पप्सौ** इति । 'आत औ णलः' । **प्सातेति** । इडभावः । **प्सायादिति** । प्सेयात् । प्सास्यति ।

**वश** कान्तौ । कान्तिरिच्छा । सेट्कः । **वष्टीति** । शपो लुक् । 'व्रश्च—' इति षः । ष्टुत्वम् । **उष्ट** इति । पूर्वरूपम् । षत्वष्टुत्वे ।

---

१. After it–आदथुः । आद $D_1$; before it–'इडत्यर्त्ति'–इति नित्यमिट् $D_4$. २. After it—अघासुः $D_1$. ३. 'नेर्गद–' इति णत्वम् before प्राणिप्साति C; प्रतिणिप्सति P. ४. प्सायाताम् after it $B_2$, $D_1$, $D_4$, C. ५. स्याद्वा $D_2$, $N_1$. ६. वशू $D_1$. ७. Before it–'व्रश्च–' इति शस्य षः $D_4$. ८. महिज्यादित्वात् $D_1$. महादित्वात् $D_4$. ९. षत्वं ष्टुत्वम् । $Dc_3$.

उशन्ति । वक्षि । उष्ठः ।[1] उश्यात् । उश्याताम् । वष्टु । उष्टाद्धा । हेर्धित्वम् । षत्वम् । जश्त्वम् । ष्टुत्वम् । उड्ढि । वशानि । वशाव । वशाम ।[2] 'हल्ङ्याब्–' इति तिलोपः[3] । जश्त्वचर्त्वे[4] । अवट् । अवड् । औष्टाम्[5] । औशन् । अवट्[6] । अवड्[7] । अवशम् । औश्व ।

---

उशन्तीति । संप्रसारणपररूपे । वक्षीति । षत्वकत्वे । उष्ठः । उष्ठ । वश्मि । उश्वः । उश्मः । उश्यादिति । संप्रसारणम् । हेर्धित्वमिति । 'हुझल्भ्यो हेर्धिः' इति । षत्वमिति । 'व्रश्च—' इति । जश्त्वमिति । 'झलां जश् झशि' इति । ष्टुत्वम् । 'ष्टुना ष्टुः' इति । उड्ढीति । संप्रसारणम् । औष्टामिति । लङि कृते लावस्थायामेवाडागमात् पूर्वमन्तरङ्गत्वात् लादेशः तस् क्रियते । लादेशो हि धातोर्विहितं लकारमात्रमपेक्षते इत्यन्तरङ्गः । अडागमस्तु लविशेषमङ्गं चापरमिति बहिरङ्गः । तत्र कृते विकरणः कृताकृतप्रसङ्गेन नित्यत्वादडागमं बाधते । अडागमस्त्वनित्यः । शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवतीति परिभाषया । तथा हि कृते विकरणे तदन्तस्याङ्गस्य अकृते तु धातुमात्रस्याट् स्यात् । विकरणे कृते संप्रसारणमडागमात् प्राक् नित्यत्वादेव भवति । संप्रसारणे चँ कृते अजाद्यङ्गं भवति । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । अनेन न्यायेन ऐज्यत औष्यत इत्येवमादि सिद्धं स्यात् । अवट् । अवडिति । सिप् । इलोपः । 'हल्ङ्याब्—' इति सुलोपः । षत्वजश्त्वचर्त्वानि ।

---

१. After it—उष्ठ $D_3$. २. हलङ्यादिलोपः $N_1$. ३. लोपः for तिलोपः C; P; तेलोपः $D_3$; तलोपः $D_4$. ४. जश्त्वम् । चर्त्वम् $N_1$. ५. After it—औष्टम् । औष्ट $D_1$, $D_3$. ६. Dropped $Dc_3$. ७. Dropped $Dc_3$.

औश्म । अवाशीत् । अवशीत् । उवाश । ऊशतुः[1] । उवशिथ । वशिता । उश्यात् । उश्यास्ताम् ।[2]

हन हिंसागत्योः । प्रणिहन्ति ।

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥६।४।३७॥**

अनिटां वनतेस्तनोत्यादेश्चानुनासिकस्य लोपः स्याज्झलादौ क्ङिति ॥

यमिरमिनमिगमिहनिमन्यतयोनुदात्तोपदेशाः । तनुषणुक्षिणुक्षणुऋणुतृणुघृणुवनुमनुतनोत्यादयः ॥ हतः । 'गमहन—' इत्युपधालोपः । 'हो हन्तेः—' इति कुत्वम् । घ्नन्ति । हन्मि ।

---

**अवाशीत्** । **अवशीदिति** । सिच् । 'इट ईटि' इति सलोपः । 'अतो हलादेः—' इति वा वृद्धिः । **उवाशेति** । 'लिट्यभ्यासस्य' इति संप्रसारणम् । **ऊशतुरिति** । 'ग्रहिज्या—' इति संप्रसारणम् । **वशितेति** । इट् । उश्यात् । उश्यासुः । वशिष्यति । अवशिष्यत् ।

**हन इति** । द्वावनिटौ । **प्रणिहन्ति** । 'नेर्गद—' इति णत्वम् ।

**अनुदात्त** । **वनतेरिति** । वन संभक्तौ ।

**यमिरमि इत्यादि** । यम[11] उपरमे । रमु क्रीडायाम् । णम प्रह्वत्वे । गम्लृ गतौ । हन हिंसागत्योः । मन ज्ञाने । तनु विस्तारे । क्षणु क्षिणु हिंसायाम् । ऋण गतौ । तृणु अदने । घृणु दीप्तौ । वनु याचने । मनु बोधने[12] । अनुदात्तोपदेशवनतितनोत्यादीनां किम् । शान्तः ।

---

१. After it—ऊशुः $D_3$. २. After it—वशिता । वशिष्यति $B_2$. ३. °स्तनोत्यादीनां च $D_1$. ४. °कलोपः $D_4$. ५. क्ङिति परे $D_1$. ६. गमि dropped $D_3$. ७. अनिमन्यतयो $B_2$. ८. षणु क्षिणु dropped $N_1$; क्षणुक्षिणु $D_4$; षणु dropped $D_3$, $D_4$. ९. Dropped $N_1$. १०. यमू $Dc_3$. ११. After it—शब्दे च $Dc_3$. १२. अवबोधने $Dc_3$.

**वमोर्वा** ॥८।४।२३॥

उपसर्गस्थानिमित्तात् परस्य हन्तेर्नस्य णो वा स्यात् वमोः परयोः ॥ प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः । प्रहण्मः । प्रहन्मः । 'हन्तेरत्पूर्व–' इति णत्वम् । प्रहण्यात् । हन्तु । हतात् वा । हताम् । घ्नन्तु ।

**हन्तेर्जः** ॥६।४।३६॥

हन्तेर्जादेशः स्यात् हौ परे ।

**असिद्धवदत्राभात्** ॥६।४।२२॥

अत ऊर्ध्वमापादसमाप्तेः कार्यमाभाच्छास्त्रीयं तस्मिन् कर्तव्ये तत्रत्यं कार्यमसिद्धवत् स्यात् । इति जस्यासिद्धत्वान्न

---

उपदेशग्रहणं किम् । इह यथा स्यात् । गतिः । गमेः क्तिनि नित्स्वरेणाद्युदात्तत्वेपि भवति । इह न । शान्तः । सति शिष्टे प्रत्ययस्वरे शेषनिघातेनानुदात्त इति स्यात् । झलीति किम् । घ्नन्ति । क्ङिति किम् । हंसि । हथः । हथ ।

**वमो** । 'हन्तेरत्पूर्व—' इति नित्यं णत्वे प्राप्ते विकल्पः । हन्यात् । हन्याताम् । हन्युः ।

**हन्तेः** । हन्तेरिति श्तिपा निर्देशो यङ्लुगन्तस्य मा भूदित्येवमर्थः ।

**असिद्धवत्** । सिद्धं परिनिष्पन्नम् । न सिद्धमसिद्धम् । तेन तुल्यं वर्तते असिद्धवत् । भसंशब्दनमभिव्याप्य आभात् यच्छास्त्रं तदाभाच्छास्त्रम् । तत्र भवमाभाच्छास्त्रीयम् । तस्मिन् कर्तव्ये तत्रत्यमाभाच्छास्त्रीयं कार्यमसिद्धवत् स्यादित्यर्थः ।

---

१. म्वोर्वा $B_1$, $D_2$. २. Dropped $N_1$. ३. °पूर्वस्येति $D_1$, $D_3$. ४. वा णत्वम् P. ५. P has प्रहण्याताम् after it. ६. इत P, $D_3$, $D_4$. ७. °पाद-परिसमाप्तेः C, $D_3$.

हेर्लुक्[1] । जहि । हनानि । हनाव ।[2] अहन् । अहताम्[3] । अघ्नन् । अहन्व[4] ।

**लुङि च ॥२।४।४३॥**

हनो वध इत्यादेशः स्याल्लुङि ॥ अतो लोपः[5] । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । अवधीत् । 'हो हन्तेः–' इति कुत्वम् । जघान । जघ्नतुः । जघ्नुः ।

---

अत्रेति समानाश्रयप्रतिपत्त्यर्थः । यत्र तदाभाच्छास्त्रीयं तदाश्रयमेवासिद्धं न व्याश्रयम् । तेन पपुषः चिच्युषः लुलुवुषः इत्यत्र वसौ संप्रसारणमल्लोपे यणि उवङि कार्ये नासिद्धं स्यात् । अल्लोपादीनि[6] वसौ वस्वन्तस्य विभक्तौ संप्रसारणमिति व्याश्रयत्वात्[7] । असिद्धं बहिरङ्गे इत्येतदप्यत्र न प्रवर्तते । कुतः । एषा हि परिभाषा आभाच्छास्त्रीया तस्या प्रवर्तमानायां संप्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वादन्तरङ्गबाहिरङ्गयोर्युगपदुपस्थानं नास्तीति परिभाषा नोपतिष्ठते ।

लुङि । वधेति । अयमकारान्त आदेशः । अत एतत् शैलीयमाचार्यस्येह धात्वादेशप्रकरणे । व्यञ्जनान्त आदेशो यत्रेष्टः तत्रोच्चारणार्थमिकारं करोति । यथा जग्धिरित्यादौ । तस्मादिकारान्ताकरणादकारान्तः । स्थानिवत्त्वादिति । 'अचः परस्मिन्—' इति । न वृद्धिरिति । 'अतो हलादेः' इति हलन्तलक्षणा वृद्धिर्नेत्यर्थः । अवधीदिति । 'इट ईटि' सलोपः । अवधिष्टाम् । जघानेति । णल् । 'अत उपधायाः' इति वृद्धिः ।

---

१. Before it—हतम् । हत । $B_2$. २. C, $N_1$, $D_3$, $D_4$ have हनाम after it. ३. C drops अहताम् । अघ्नन् and has अहनम् in place of them and अहन्म after अहन्व. ४. Before it—अहन् । अहतम् $D_1$ $D_2$, $B_2$;—अहनम् । अहनम् $N_1$. before it अहन् । अहतम् । अहत । अहनम् and after it अहन्म । $D_3$, $D_4$ (drops अहन्म $D_4$.). ५. अतो लोपः dropped $N_1$. ६. आलोपा° $Dc_3$. ७. द्वयाश्रयत्वात् $Bc_2$. ८. अवृद्धि° $Bc_2$.

**अभ्यासाच्च ॥७।३।५५॥**

अभ्यासात् परस्य हन्तेर्हस्य कुत्वं स्यात् ॥ जघनिथ । जघन्थ । जघ्निव ।[1] हन्ता ।

**हनो वध लिङि ॥२।४।४२॥**

हनो वधः[2] स्यादार्धधातुके लिङि ॥ अतो लोपः[3] । वध्यात् । 'ऋद्धनोः—' इतीट् । हनिष्यति ।[4]

द्यु अभिगमने ।

**उतो वृद्धिर्लुकि हलि ॥७।३।८९॥**

लुग्विषये उकारस्य[5] वृद्धिः[6] स्यात् पिति[7] हलि न त्वभ्यस्तस्य ॥

---

**अभ्यासाच्च** । ननु हनूशब्दात् क्यचि कृते तदन्ताच्च सनि जिहननीयिषतीत्यत्र कस्मान्न स्यात् । उच्यते । अभ्यासस्य निमित्तभूते प्रत्यये परतो हन्तेरङ्गस्य योऽभ्यासस्तस्मादेतत् कुत्वम् । अत इह न । न ह्यत्राभ्यासनिमित्ते प्रत्यये सति हन्तिरङ्गम् । किं तर्हि । हननीय-शब्दः । जघनिथ । जघन्थेति । 'ऋतो भारद्वाज—' इति पक्षे इट् । जघ्निवेति । क्रादिनियमादिट् ।

हन्तेति । 'नश्चापदान्त—' इत्यनुस्वारः । 'अनुस्वारस्य ययि परसवर्णः' । अहनिष्यत् ।

द्यु ।

उतः । 'नाभ्यस्तस्य' इत्यनुवर्तते इत्यभिप्रेत्याह । **न त्वभ्यस्त-स्येति** । ततश्च योयोतीत्यादौ न । उतः किम् । एति । लुकि किम् । सुनोति । हलि किम् । द्यवानि । द्युवाव । पित्येव । द्युतः । द्युयादित्यत्र ङित्वात् ङिच्च पिन्न भवतीति । पित्त्वनिषेधाद् वृद्धिर्न ।

---

१. P, C and $D_3$ have जघ्निम after it. २. वधादेशः $D_3$. ३. अल्लोपः $N_1$, $D_3$, $D_4$. ४. After it—अहनिष्यत् $D_3$. ५. उकारवृद्धिः C, ६. औकारो वृद्धिः $B_1$. ७. $B_1$ has सार्वधातुके before it.

द्यौति । द्युतः । द्युवन्ति । द्युयात् । द्यौतु । द्युतात् वा । द्युहि । द्यवानि । द्यवाव । द्यवाम[१] । अद्यौत् । अद्युताम् । अद्युवन् । अद्यौषीत् । दुद्याव । द्योता । द्यूयात् ।।[२]

यु मिश्रणे[३] ।[४] [५]अयावीत् । यविता ।

---

द्यौतीति । शपो लुक् । द्युत इति । 'सार्वधातुकमपित्' इति ङित्त्वान्न गुणः । द्युवन्तीति । 'अचि श्नुधातु—' इत्युवङ् । द्युयादिति । यासुटो ङित्त्वान्न गुणः । द्यौतु इति वृद्धिः । द्यवानीति । 'मेर्निः' । 'आडुत्तमस्य पिच्च' । गुणावादेशौ । अद्यौदिति । वृद्धिः । इलोपः । अद्यौषीदिति । लुङ् । सिच् । 'सिचि वृद्धिः—' इति वृद्धिः । अद्यौष्टाम् । अद्यौषुः । दुद्यावेति । वृद्धिः । 'हलादिः शेषः' । द्योतेति । लुट् । तासिः । गुणः । द्यूयादिति । 'अकृत्सार्वधातुक—' इति दीर्घः । द्योष्यति ।

यु । इतश्चत्वारः सेटः । यौति । युतः । युवन्ति । यौषि । युयात् । यौतु । युहि । अयौत् । अयावीदिति । इट् । वृद्धिः । आव् । युयाव । युयविथ । यूयात् । यविष्यति । अयविष्यत् । अयुतसिद्धानामित्यादिस्मरणात् यु अमिश्रण इत्येके ।

---

१. द्यवाम dropped $B_1$, $D_1$, $D_2$, N. २. After it—द्योष्यति $B_2$; द्योष्यति । अद्योष्यत् $D_3$. ३. मिश्रीकरणे $D_2$, N. ४. After it—इतश्चत्वारः सेट्काः $B_1$, P. ५. Before it—यौति । युतः । युवन्ति । युयात् । यौतु । युहि । युताद्वा । अयौत् । अयुताम् । अयुवन् । अयावीत् । युयाव । यविता । यूयात् । यविष्यति । अयविष्यत् $D_1$, $D_3$, $B_2$ ($D_1$ and $B_2$ drop युयात् । यौतु । युहि; after it युयात P, $D_1$ and युयुविव $B_1$.)

णु स्तुतौ ।[1] अनौषीत्[2] । नैविता[3] । अन्यमते अत्र वेट् । नोता[4] । लिटि[5] तु । नुनविथ[6] ।

क्ष्णु तेजने । अक्ष्णावीत्[7] । क्ष्णविता[7] ।

ष्णु प्रस्नवने । सत्वे कृते षयोगाभावात्[8] न णः । स्नौति । 'स्नुक्रमोः—' इतीट् । अस्नावीत् । स्नविता ।

इण् गतौ । एति । ईतः[9] ।

---

णु । 'णो नः' । नौति । नुयात् । नौतु । अनौत् । अनौषीत् । नुनाव । नुनविथेति । नित्यमिट् । गुणावादेशौ । नोता । नूयात् । नविष्यति । नोष्यति । अनविष्यत् । अनोष्यत् ।

क्ष्णु । क्ष्णोति शस्त्रम् । क्ष्णुयात् । क्ष्णौतु । अक्ष्णौत् । अक्ष्णावीत् । चुक्ष्णाव । । क्ष्णवितेति । इट् । क्ष्णुयात् ।

ष्णु । सत्वे इत्यादि । 'धात्वादेः षः सः' इति सत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इत्यर्थः । स्नौतीति । वृद्धिः । स्नूयात् । स्नविष्यति ।

इण् । णकारः 'इणो यण्' इत्यादिविशेषणार्थः । इतः सप्तानिटो द्रान्ताः । एतीति । 'सार्वधातुक-' इति गुणः । इतः इति । ङित्त्वान्न गुणः ।

---

१. After it $D_3$ has—नौति । नुयात् । नौतु । नुताद्वा । अनौत् । अनौषीत् । अनावीत् । नुनाव । नोता । नविता । अन्यमते तु वेट् । लिटि तु नुनविथ । नूयात् । नोष्यति । नविष्यति । ; नौति $B_2$ । ; अनावीत् $D_2$, $D_3$, $B_1$, $B_2$, P, C. २. Dropped $D_1$, $D_2$, $D_4$, N, C. ३. नोता । नविता । अन्यमते वेट् P. ४. Dropped $D_1$, $D_4$, N. ५. लिटि तु नित्यम् N. ६. नुनुविथ $D_1$, $B_2$. ७. Dropped N, $D_3$. In place of them क्ष्णौति $D_1$, क्ष्णौति । क्ष्णविता $B_2$; $D_4$ drops अक्ष्णावीत् only. ८. रषयोरभावात् P. ९. Dropped $D_3$. १०. Before it—अनावीत् $Dc_3$.

**इणो यण् ॥६।४।८१॥**

इणोऽङ्गस्य यण् स्यादचि ॥ इयङोपवादः । यन्ति । इयात् । इयाताम् । एतु । इतात्द्वा । इहि । अयानि । अयाव । अयाम । ऐत् । ऐताम् । आयन् ।[1] ऐः । ऐतम् । ऐत । आयम् ।[2] ऐव ।[3] ऐम ।

**इणो गा लुङि ॥२।४।४५॥**

इणो लुङि[4] परे गा[5] स्यात् ॥ 'गातिस्था' इति सिचो लुक् । अगात् । द्वित्वम् । वृद्धिः । 'अभ्यासस्य—' इतीयङ् । इयाय ।

---

इणः । इण इति प्रत्याहारग्रहणं वा धातुग्रहणं वा । तत्र 'एरच्' । 'ओरावश्यके' 'उरत्' इत्येवमादिभ्यो निर्देशेभ्यो नेदं प्रत्याहारग्रहणम् । अतः पारिशेष्याद् धातुग्रहणम् । मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् इति गुणवृद्धिभ्यां परत्वाद्बाध्यते । अतः अयानीत्येवमादि सिद्धं भवति । ऐदिति । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । आयन्निति । 'इणो यण्' । इति यणादेशस्य 'असिद्धवदत्र—' इत्यसिद्धत्वादाडागमः । आयमिति । गुणायादेशौ ।

इणः । 'लुङि च' इत्यतः 'लुङ्' इत्यनुवृत्तौ पुनर्लुङ्ग्रहणम् 'आत्मनेपदेष्वन्यतरस्याम्' इत्यस्यानुवृत्तिर्मा भूदित्येवमर्थम् । ततश्च इणो नित्यमविशेषेण गा स्यात् । अगात् । अगाताम् । अगुः । द्वित्वमिति । 'लिटि धातोः—' इति वृद्धिः । 'अचो ञ्णिति' इति प्रक्रियास्म[6]रणार्थमेतत् । क्रमस्तु एवमादौ परत्वाद्वृद्धिः । ततो 'द्विर्वचनेऽचि' इति स्थानिवद्भावाद् द्वित्वम् । एवं सर्वत्र

---

१. C has after it—असिद्धवदत्रेति यणादेशोऽसिद्धस्तेन आडागमः २. After it—आयम्—इणो यणिति यणादेशस्यासिद्धत्वादाडागमः । ऐव । ऐम $B_2$. ३. $B_1$ drops ऐम. ४. गा स्यात् लुङि $D_1$. ५. गादेशः C; गा इत्यादेशः $D_3$ ६. °स्मरणमात्रमेतत् । $Dc_1$.

इणो यणि कृते द्वित्वम् ।

दीर्घ इणः किति ॥७।४।६९॥

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि ॥ ईयतुः । ईयुः[1] । इययिथ । इयेथ । ईयिव । [2]ईयिम । ईयात् । ईयास्ताम् ।[3]

एतेर्लिङि ॥७।४।२४॥

उपसर्गात् परस्य इणो ह्रस्वः स्यादाशिषि लिङि क्ङिति ॥ अन्वियात् । एष्यति ।[4] ।[5]

इक् स्मरणे ॥ 'इण्वदिकः' इति वक्तव्यमितीण्वत् कार्यम् । रूपं च तद्वत् ।[6] इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति ।[7]

---

इणो यणि कृते द्वित्वमिति । इ अतुस् इति स्थिते परत्वात् 'इणो यण्' इति यणि कृते 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् साच्कस्य द्वित्वमिति भावः ।

इययिथ । इयेथ इति । 'अचस्तास्वत्—' इतीडभावे 'ऋतो भारद्वाज—' इति पक्षे इट् । 'अभ्यासस्यासवर्णे' इतीयङ् । एता । एतारौ । ईयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः ।

एतेः । 'आशिषि लिङ्' इति विषयं दर्शयति । तत्र हि 'अकृत्सार्व—' इति दीर्घोऽस्ति सार्वधातुके । ननु चातीयादित्यत्र सवर्णदीर्घः संभवति नात्र ह्रस्वः। उपसर्गात् एतेरित्युभयाश्रयणादन्तादिवत्त्वाभावात् । ऐष्यत् ।

इक् । ककारः 'अधीगर्थ—' इति विशेषणार्थः । इण्वदिति । यथा इणो गादेशादिकार्यं भवति तथा इकोपीत्यर्थः । इङिकाविति । यदाहुः । 'कश्चित्तमनुवर्तते' इति । अध्येतीति । यणादेशः । अधीतः ।

---

१. $B_1$ drops ईयुः. २. Dropped $D_1$, $D_3$. $N_1$, ३. After it—एता $B_2$. ४. After it—ऐष्यत् $B_2$. ५. Dropped $D_4$. ६. After it—इङ् अध्ययने $B_2$. ७. अध्येति । अधीतः । अध्यन्ति । (अधियन्ति ?) । अधीयात् । अध्येतु । अधीतात् । अध्यैत् । अध्यैषीत् । अधीयाय । अधीयात् । अधीता । अधीयात् । अध्येष्यति । अध्यैष्यत् । $B_2$. ८. द्वित्वमेवेति $Dc_3$.

मा माने।[1] प्रणिमाति।[2] लेङि। अमुः। अमान्।[4] मेयात्।[5]

ख्या प्रकथने।[6]

**अस्यतिवक्तिख्यातिभ्योऽङ् ॥३।१।५२॥**

एभ्यश्च्लेरङ् स्यात् ॥ 'आतो लोप इटि च'। अख्यत्। चख्यौ।[8] ख्येयात्। ख्यायात्।[9]

---

अधियन्ति। अधीयात्। अध्येतु। अधीहि। अध्ययानि। अध्ययाव। अध्ययाम। अध्यैत्। अध्यायन्। अध्यायम्। अध्यैव। अध्यगात्। अधीयाय। अधीयतुः। अध्येता। अधीयात्। अधीयास्ताम्। अध्येष्यति।

**मा माने**। मानमन्तर्भवनं पात्रे। **प्रणिमातीति**। ननु 'नेर्गद—' इति सूत्रे माङ्मेङोरेव ग्रहणमिष्यते तत् कथं णत्वमुदाहृतम्। सत्यम्। क्षीरस्वामिमतेनोदाहृतम्। तथा हि **क्षीरतरङ्गिण्यां** प्रणिमातीत्युक्त्वोक्तम्। सर्वत्र हि माग्रहणमलुग्विकरणस्य णत्ववर्जमिति। तथा **मुग्धबोधेपि**[10]। प्रणिमातीत्युदाहृतम्। **अमुः**। **अमानिति**। 'लङः शाकटायनस्यैव' इति वा जुस्। पररूपम्। अमासीत्। ममौ। माता। **मेयादिति**। 'एर्लिङि' इत्येत्वम्। मास्यति।

**ख्या**। ख्याति।

**अस्यति**। असु क्षेपणे। वच परिभाषणे। ब्रूञादेशो वा। ख्या प्रकथने। चक्षिङादेशो वा। अस्यतेः पुषादित्वात् सिद्धे आत्मनेपदार्थं वचनम्। 'अस्यतेस्थुक्'। पर्यास्थत। पर्यास्थेताम्। **चख्याविति**। 'आत औ णलः'। हलादिः शेषः। ख्याता। ख्येयात्। ख्यायात्। 'वा न्यस्य—' इत्येत्वं वा। ख्यास्यति।

---

१. शब्दे च after it D4. २. After it—मातः। मान्ति D1. ३. Dropped D3, D4, N. ४. After it—'लङः शाकटायनस्य' इति झेर्जुस् वा P; D3 has अमात्. ५. For it—ममौ। ममतुः। मेयात्। मेयास्ताम्। माता। मास्यति। B2. ६. After it—ख्याति B2. ७. एभ्यः परे C. ८. After it—चख्यतुः B2. ९. After it—ख्याता। ख्यास्यति। B2; ख्यायात् dropped D4. १०. अपि dropped Dc3.

या प्रापणे । प्रणियाति ।[1] एवं वा गतिगन्धनयोः । द्रा कुत्सायां गतौ ।[2] प्रणिद्राति ।[3]

विद ज्ञाने ।

**विदो लटो वा ॥३।४।८३॥**

वेत्तेर्लटः परस्मैपदानां णलादयो नवादेशाः[4] क्रमाद्वा स्युः ॥ वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे । वेत्ति । वित्तः ।[5] इत्यादि । विद्यात्[6] । वेत्तु । विद्धि । वेदानि । वेदाव । वेदाम[7] ।

---

**या** । **प्रणियातीति** । 'नेर्गद—' इति णः[8] । अयुः । अयान् । अयासीत् । ययौ । याता । यायात् । यायास्ताम् । यास्यति । **एवं वेति** । **एवामिति** । या प्रापणे इत्यस्यैव रूपाणि ज्ञेयानीत्यर्थः । गन्धनं मर्दनम् । प्रणिवाति । अवुः । अवान् । अवासीत् । ववौ । वायात् । **द्रा** । कुत्सगतिः[9] पलायनं स्वप्नश्च । प्रणिद्राति । अद्रुः । अद्रान् । अद्रासीत् । दद्रौ । द्राता । द्रेयात् । द्रायात् । द्रास्यति ।

**विद** । इतस्त्रयः सेट्काः ।

**विदः** । अत्र ज्ञानार्थस्यैव विदेर्ग्रहणं नान्येषाम् । यतो विद इति पञ्चमी । तेन 'तस्मादित्युत्तरस्य' इत्यनन्तराणामेव तिबादीनामादेशैर्भाव्यम् । न चान्यस्मात् विदेः परस्मैपदान्यनन्तराणि संन्ति[10] विकरणैर्व्यवधानात् । **वेदेति** । 'पुगन्त—' इति गुणः । **विद्धि इति** । 'हुझल्भ्यो हेर्धिः' । **वेदानीति** । 'मेर्निः' । 'आडुत्तमस्य' इत्याड् । 'पुगन्त—' इति गुणः ।

---

१. After it—अयासीत् । ययौ । यायात् । याता । यास्यति $B_2$; $D_4$, N drop प्रणियाति. २. $D_1$, $D_3$ drop this and the next two forms. ३. After it—दद्रिथ । दद्राथ $B_1$, $B_2$. ४. नव क्रमा° $B_1$, $D_1$; $B_2$, $N_1$ वा क्रमात्स्युः C. ५. $B_1$, $D_3$ drop वित्तः. ६. विद्यात् वा P; C, $B_1$, $B_2$. ७. $N_1$ drops it; $D_4$ drops this and also वेदाव. ८. णत्वम् । $Dc_3$. ९. कुत्सिता गतिः $Bc_2$, $Dc_3$. १०. संभवन्ति $Dc_3$.

विदांकुर्वन्त्वित्यन्यतरस्याम् ॥३।१।४१॥

वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते अविवक्षिते पुरुषवचने ॥

तनादिकृञ्भ्य उः ॥३।१।७९॥

तनादेः कृञश्च उप्रत्ययः स्यात् कर्तरि सार्वधातुके ।[2] शपोपवादः । तनादित्वादेव सिद्धे[3] कृञो ग्रहणमन्यत्तनादिकार्यं नास्येति ज्ञापयति । गुणः[4] । लोट्कार्यम् । विदांकरोतु ।

अत उत् सार्वधातुके ॥६।४।११०॥

उप्रत्ययान्तस्य कृञोकारस्य उत्[5] स्यात् सार्वधातुके क्ङिति ।

---

विदां । वेत्तेरित्यादि । लिट्याम् विहितो लोटि न प्राप्नोतीति निपात्यते । आममाश्रित्य गुणः प्राप्नोति तस्याभावश्च । 'आमः' इति लेर्लुग्विधीयमानो लोटो न स्यादिति लोटो लुक् । लिट्परस्य कृञोनुप्रयोग उक्तः लोट्परस्य न स्यादिति लोट्परस्यानुप्रयोगो निपात्यते इति सर्वत्र संबन्धनीयम् ।

गुण इति । विदां कृ उस् इति स्थिते उप्रत्यये परे 'सार्वधातुक—' इति गुणः । रपरः । लोट्कार्यमिति । तिपि उकारस्य गुणः । 'एरुः' इति उः ।

अत उत् । उप्रत्ययान्तस्य कृञः क्ङिति उच्यमानमुत्वं सार्वधातुक एव स्यादिति पुनः सार्वधातुकग्रहणं भूतपूर्वेपि[6] सार्वधातुके स्यादिति । विदां कुरु । तपरत्वं गुणनिवृत्तये । विदां कुरुताद्वा । ङित्त्वान्न गुणः ।

---

१. कृञोनुप्रयोग° C. २. C has परे after it. ३. सिद्धेः $D_4$. ४. Dropped $D_1$. ५. उः $D_4$. ६. भूतपूर्वे स्यादिति $Dc_3$.

विदांकुरुतात् वा। [1]विदांकुर्वन्तु। 'उतश्च' इति हेर्लुक्। विदांकुरु। विदांकरवाणि । विदांकरवाव ।[2] अवेत्-द् । अवित्ताम् । 'सिजभ्यस्त—' इति झेर्जुस् । वेत्तेर्लङो झेर्जुस्वेति केचित् । अविदुः । अविदन् ।

दश्च ॥ ८।२।७५ ॥

धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा ॥ अवेः । अवेत्-द् । अवेदम् । अवेदीत् । 'उषविद—' इति वाम् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदांबभूव । विवेद । वेदिता ।

[4]अस भुवि । अस्ति ।

---

विदांकुर्वन्त्विति । यणादेशः । विदांकरवाणीति । 'मेर्निः' । 'आडुत्तमस्य' इत्याट् । अवेदिति । लङ् । तप् । इलोपः । 'पुगन्त—' इति गुणः । 'हल्ङ्याब्—' इति तिलोपः । चर्त्वम् । वेत्तेरिति । तथोक्तं मुग्धबोधे । 'द्विषविदातोनुस् वा' इति ।

अवेः । अवेदिति । 'हल्ङ्याब्–' इति सलोपः । अवेदीदिति । लुङ् । सिच् । 'इट ईटि' इति सलोपः । विदांबभूव । भुवोनुप्रयोगो लिट्परस्य । द्वित्वह्रस्वत्वात्वजश्त्ववुगागमाः । वेदितेति । तासिः । इट् । विद्यात् । विद्यास्ताम् । वेदिष्यति ।

अस् । भवनं भूः सत्ता तस्याम् । अस्तीति । शपो लुक् ।

---

१. Before it—विदांकुरुताम् $D_1$, $D_3$, $D_4$, $N_1$. २. P, $D_1$, $D_3$ have विदांकरवाम after it. ३. $B_1$ drops it. ४. असु $N_1$.

श्नसोरल्लोपः ॥ ६।४।१११ ॥

[1]श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति ॥ स्तः । [2]सन्ति । 'तासस्त्योः—' इति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । स्यात् । अस्तु । स्तात् वा ।

घ्वसोरेद्धावभ्यासलोपश्च ॥ ६।४।११९ ॥

घोरस्तेश्चैत्वं स्याद्धौ परे अभ्यासलोपश्च ॥ 'असिद्धवदत्र—' इत्येत्वस्यासिद्धत्वात् 'हुझल्भ्यः—' इति हेर्धिः । एधि । असानि । असाव । असाम ।[3] '[4]अस्तिसिचः—' इतीट् । [5]आडागमः । आसीत् । [6]श्नसोरल्लोपस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वादाडागमः[7] । आस्ताम् । आसन् ।

अस्तेर्भूः ॥ २।४।५२ ॥

अस्तेर्भूरादेशः स्यादार्धधातुके ॥ '[8]स्थानिवदादेशोनल्विधौ' इत्यनेन स्थानिवत्त्वाद् 'अस्तिसिचः—' इतीटि प्राप्ते [9]अस्तेर्भुवश्च इट् नेष्यते । अभूत् । बभूव । इत्यादि ।

---

श्नसोः । श्नसोरिति शकन्ध्वादिषु पररूपं द्रष्टव्यम् ।

घ्वसोः । [10]अभ्यासलोपः शिदिष्यते तेन सर्वस्याभ्यासस्य भवति । अभ्यासग्रहणसामर्थ्यात् [11]वैयर्थ्यमेव नास्त्यर्थं तस्याभ्यासस्यासंभवात् ।

अस्तेः । आर्धधातुके इति । विवक्षिते इत्यर्थः । अभूदिति 'गातिस्था—' इति सिचो लुक् । आदिशब्दात् भविता । भूयात् । भाविष्यति । अभाविष्यत् ।

---

१. श्न इत्येतस्य $B_2$. २. Dropped $D_3$. ३. असाम dropped C, $B_1$, $B_2$. ४. 'अस्तिसिचः–' इतीट्—dropped $N_1$. ५. आडागमः dropped $D_2$. ६. श्नसोरित्यल्लोप° $N_1$. ७. स्यात् after it in $B_1$. ८. From स्थानि° to स्थानिवत्त्वात् dropped $D_1$, $D_3$, $D_4$, $N_1$. ९. आहो भुवश्च $B_1$, P, $D_1$, $D_2$. १०. अयमभ्यास° $Dc_3$. ११. व्यर्थमेत्वं $Dc_3$.

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८।३।८७ ॥

उपसर्गेभ्यः प्रादुषश्च परस्यास्तेः सस्य षः स्यात् यकारे अचि च परे ॥ निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः ।

मृजूष् शुद्धौ ।

मृजेर्वृद्धिः ॥ ७।२।११४ ॥

मृजेरिको वृद्धिः स्यात् सार्वधातुकार्धधातुकयोः ॥ गुणापवादः । 'व्रश्च—' इति षः । मार्ष्टि । 'क्ङिति च' इति न वृद्धिः । मृष्टः । क्ङित्यचि मृजेर्वृद्धिर्वेष्यते ।

---

उप । उपसर्गप्रादुर्भ्यां किम् । दधि स्यात् । अस्ति किम् । अनुसूतम् । कथमत्र प्रसङ्गः । यतः सकारस्य प्रकृतत्वात् तमेव प्रत्युपसर्गत्वमाश्रयिष्यते । न चात्र सकारं प्रत्युपसर्गत्वं तन्मात्रस्याक्रियावाचित्वात् । तत्किमस्तिग्रहणेन । इदं तर्हि प्रत्युदाहरणम् । अनुसूते अनुसूः तस्यापत्यमानुसेयः । शुभ्रादित्वात् ढक् । 'ढे लोपः—' इत्युलोपे कृते सकारमात्रस्य क्रियावाचित्वात् प्रसज्येत । अतोस्तिग्रहणं कृतम् । निष्यादिति । लिङ् । यासुट् । 'श्नसोरल्लोपः' । अभिस्त इति । तस् । अलोपः ।

मृज ।

मृजेः । धातुग्रहणमिदं मृजेरिति धातोश्च कार्यमुच्यमानं धातुप्रत्यये भवतीत्यभिप्रेत्याह । सार्वधातुकार्धधातुकयोरिति । ततश्च कंसमृड्भ्यामित्यत्र न । मार्ष्टीति । 'उरण् रपरः' । ष्टुत्वम् । मृष्ट इति । षत्वष्टुत्वे । क्ङित्यचि मृजेरिति । इष्यत इत्यनेन भाष्यकारेष्टिं प्रमाणयति ।

---

१. उपसर्गेण C. २. Dropped $N_1$, $D_3$. ३. Before it—' ष्टुना ष्टुः ' इति तस्य टः $B_2$. ४. मृजो वृद्धि° $N_1$, $D_3$. ५. तस्मात्तस्याक्रिया° $Dc_3$. ६. लोपः । $Dc_3$.

मृजन्ति । मार्जन्ति । मार्क्षि । मृज्यात् । मार्ष्टु । मृष्टात्[1] वा । मृजन्तु । मार्जन्तु । मृड्ढि[2] । अमार्ट्–ड्[3] । 'नेटि–' इति सिच्कृतवृद्ध्यभावेपि प्रत्ययकृता स्यादेव[4] । अमार्जीत् । अमार्क्षीत् ।[5] केचिदस्यानुदात्तेषु[6] पाठात् 'अनुदात्तस्य च—' इत्यम् वा । अम्राक्षीत् । ममार्ज । ममार्जतुः[7] । ममृजतुः । मार्जिता । मार्ष्टा । केप्यमागममिच्छन्ति[9] । म्रष्टा । म्रक्ष्यति तन्मते[10] ।

---

सा चैवं मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते इति । अत्र यस्मिन् विधिस्तदादावल्ग्रहण इत्येवाजादाविति लब्धेप्यादिग्रहणं मुख्येजादौ निषेधो विकल्पो वा यथा स्यात् । व्यपदेशिवद्भावेनाजादौ मा भूत् तुन्द परिमृज इति यूयं ममृज त्वया ममृज इति । संक्रमो गुणवृद्धिनिषेधविषयः[11] । मार्क्षीति । सिपि वृद्धिः । षत्वम् । कत्वम् । मृष्टम् । मृष्ट । मार्ज्मि । मृज्वः । मार्ष्टु इति । वृद्धिः । मृड्ढि इति । षत्वम् । 'हुझल्भ्यो हेर्धिः' । जश्त्वम् । ष्टुत्वम् । अमार्ट् । अमार्ड् इति । लङ् । ति । वृद्धिः । षत्वम् । 'हल्ङ्याब्—' इति [12]लोपः । जश्त्वचर्त्वे । अमार्क्षीदिति । 'स्वरतिसूति—' इतीडभावे । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जिथ । ममृजथुः । ममार्जथुः । ममृज । इत्यादि । मार्जिता । मार्ष्टा । म्रष्टा[13] । मृज्यात् ।

---

१. C drops मृष्टात् वा. २. $B_1$, $B_2$ have before it—षस्य जश्त्वेन डः. ३. अमार्ड् अमार्ट् $N_1$. ४. वृद्धिः स्यादेव $D_1$. ५. After it—अम्राक्षीत् $D_4$. ६. अनुदात्तेषु पाठात् for क्वचि°...वा in C; अम्राष्टाम् । अमार्ष्टाम् । अम्राक्षीत् । अमार्जिष्टाम् । ममार्ज for क्वचिदस्य···तन्मते. ७. Dropped $D_2$, $D_3$, $D_4$. ८. From ममार्जतुः...to तन्मते dropped $D_4$, N. ९. केचिदमा° P. १०. तन्मतम् $D_2$, $D_3$. ११. °प्रतिषेधनियमः $Dc_3$ १२. सिलोपः $Dc_3$. १३. Dropped $Dc_3$.

वच परिभाषणे । वक्ति । कित्त्वाभावात् 'वचिस्वपि—' इति नोत्वम् । वक्तः । न[1] हि वचिरन्तिपरः प्रयुज्यते । वच्यात् । वक्तु । वग्धि ।

अवक्-ग् । 'अस्यतिवक्ति—' इत्यङ् ।

**वच उम् ॥ ७।४।२० ॥**

वचोऽङ्गस्य उमागमः स्यादङि ॥ 'आद्गुणः' । अवोचत् । उवाच । ऊचतुः[3] । उवचिथ । उवक्थ । ऊचिव[4] । वक्ता[5] । उच्यात् ।

रुदिर् अश्रुविमोचने ।

**रुदादिभ्यः सार्वधातुके ॥ ७।२।७६ ॥**

रुद् स्वप् श्वस् अन् जक्ष[6] एभ्यः परस्य वलादेः सार्वधातुकस्येट् स्यात् ॥ रोदिति । रुदितः[7] ।

---

वच । अनिट् । वक्ति । 'चोः कुः' । वचन्तीति न प्रयोगार्हम् । यथाह क्षीरस्वामी क्षीरतरङ्गिण्याम् । 'वचन्तीति नेष्यते अनभिधानात्' इति । वग्धि इति । 'हुझल्भ्यो हेर्धिः' ।

उवाचेति । 'लिटि—' इति संप्रसारणम् । ऊचतुरिति । 'वचिस्वपि—' इति संप्रसारणम् । उवचिथ । उवक्थेति । 'ऋतो भारद्वाज—' इति पक्षे इट् । वक्तेति । कुत्वम् । उच्यादिति । संप्रसारणम् । वक्ष्यति । अवक्ष्यत् ।

रुदिर् । सेट् ।

रुदादिभ्यः । रुदिर् अश्रुविमोचने । ञिष्वप शयने । श्वस प्राणने । अन च । जक्ष भक्षहसनयोः । रोदिति । गुणः । रुदितः ।

---

१. From न हि to प्रयुज्यते dropped $D_2$, $D_3$, $D_4$, N. २. प्रयोक्तव्यः $D_1$; $B_2$ has प्रयोगाभावात् after it. ३. ऊचतुः । ऊचुः । $D_1$. ४. ऊचिव । ऊचिम $D_1$, $D_3$, $D_4$. ५. वक्ता । वक्ष्यति $B_2$. ६. जक्ष् N. ७. After it—रुदन्ति $D_2$.

रुद्यात् । रोदितु । रुदिताद्[1]वा । रुदिहि । रोदाव[2] ।

**रुदश्च पञ्चभ्यः ॥ ७।३।९८ ॥**

रुदादेरपृक्तस्य[3] प्रत्ययस्य ईडागमः स्यात् ॥[4] अरोदीत् ।

**अड् गार्ग्यगालवयोः ॥ ७।३।९९ ॥**

रुदादेरपृक्तस्य[5] अडागमः स्याद्गार्ग्यगालवयोर्मतेन ॥ अरोदत् । अरुदिताम् । अरुदन्[6] । अरोदीः । अरोदः । अरुदिम[7] । इरित्वादङ्[8] । अरुदत् । अरोदीत् ।[9]

ञिष्वप् शये । स्वपिति । स्वपितः । स्वप्यात् । स्वपितु । अस्वपीत् । अस्वपत्[10] । अस्वाप्सीत् ।[11]

---

रुदन्ति । रोदिषि । रुद्यादिति । पूर्वविप्रतिषेधेन इडटौ बाधित्वा यासुट् । रुदिहीति । इट् । 'हुझल्भ्यो हेर्धिः' इत्यत्र हलीत्यनुवर्तते[12] । धित्वं न ।

अरोदीदिति । लङ् । अरुदितामित्यत्र 'रुदादिभ्यः—' इतीट् । अरोदीरिति । सिप् । अरुदितम् । अरुदित । अरोदम् । अरुदिव । इरित्वादिति । 'इरितो वा' इति । अरोदीदिति । लुङ् । सिच् । 'इट ईटि' इति सलोपः । अट् । रुरोद । रोदिता । रुद्यात् । रोदिष्यति ।

ञिष्वप् । स्वपितीति । 'रुदादिभ्यः— ' इतीट् । अस्वपीदिति । लङ् । 'इतश्च' । 'रुदश्च पञ्चभ्यः' इतीट् । अस्वपदिति । 'अड् गार्ग्यगालवयोः' इत्यट् । अस्वाप्सीदिति । लुङ् । सिच् । 'वदव्रज— ' इति वृद्धिः । अस्वाप्ताम् ।

---

१. Dropped P. २. रोदानि । रोदाव । रोदाम । D₃. ३. After it—सार्वधातुकस्य D₄. ४. After it—सार्वधातुके D₃. ५. °पृक्तप्रत्ययस्य सार्वधातुकस्य D₁, D₄. ६. Dropped D₃. ७. Dropped D₁ ; before it—अरुदिव D₂, N₁; in place of it अरुदिव D₃. ८. °दङ् वा D₁; D₄, D₃ वा अङ् N. ९. After it—रुरोद । रुरुदतुः । रुद्यात् । रोदिता । रोदिष्यति B₂. १०. Dropped D₄. ११. After it—अस्वाप्ताम् । अस्वाप्सुः B₂. १२. °वृत्तेर्धित्वं न । Bc₂.

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८।३।८८ ॥

एभ्यः [1]सुप्यादेः षः स्यात् । [2]कृतसंप्रसारणे [3]स्वपि सुपिरित्युच्यते । पूर्वत्रासिद्धीय[4]मद्वित्वे इति [5]षत्वे कृते द्वित्वम् । विषुषुपतुः । दुःषुषुपतुः[6] । सुपेरभावान्न षः । विसुष्वाप । कृतसंप्रसारणत्वात् षोत्रेति केचित् । [7]विषुष्वाप । [8]सुषुप्यात् । सुपीति किम् । [9]निः स्वप्ता । श्वस प्राणने । श्वसिति । [10]श्वसितः ।

---

सुवि । सूतीति क्तिन्नन्तस्य सूतेर्ग्रहणम् । समेत्यपि स्वरूपग्रहणमेव । न सम वैक्लव्य इति धातुः । इक्स्तिपोरन्यतरस्याभावात् । **पूर्वत्रासिद्धीयमिति** । 'पूर्वत्रासिद्धम्' इति सूत्रोक्तमसिद्धत्वं द्वित्वे कार्ये नेष्यते इति परत्वात् कृते षत्वे षु इत्यस्य द्वित्वमित्यर्थः । तथोक्तं वार्तिककृता ।

'सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न ।
हलादिशेषान्न सुपिरिष्टं पूर्वं [11]प्रसारणम् ॥
स्थादीनां नियमो नात्र प्राक् सितादुत्तरः सुपिः ।
अनर्थके विषुषुपुः षुपि भूतो द्विरुच्यते' ॥

केन नेत्यत्र केचनेति क्वचित् पाठः श्रूयते तमाश्रित्याह । **कृतसंप्रसारणत्वादित्यादि** । **सुषुप्यादिति** । आशीर्लिङ् । यासुटः 'किदाशिषि' इति किच्चात् संप्रसारणम् । सु इत्युपसर्गः । **निःस्वप्तेति** । लुट् । कृतसंप्रसारणत्वाभावात् षत्वं न । स्वप्स्यति ।

---

१. स्वप्यादेः सस्य $B_1$, $D_2$, $D_3$. २. कृतसंप्रसारणः सुपिरित्युच्यते C; कृतसंप्रसारणः स्वपिः $D_1$, $D_3$. ३. स्वपिः $B_2$, $D_4$. ४. °मसिद्धत्वे C. ५. कृते षत्वे C, $D_2$, $D_3$, N ; द्वित्वे इति वक्तव्यं तेन कृते षत्वे द्वित्वम् $D_1$. ६. After it—दुःषुषुपुः $D_2$ ; in its place दुःषुषुपुः N. ७. C drops विषुष्वाप । सुषुप्यात् । ८. विषुप्यात् N; सुप्यात $D_4$. ९. After it—स्वप्स्यति $B_2$. १०. Dropped C, $D_2$. ११. संप्रसारणम् $Dc_3$.

श्वस्यात् । [1]श्वसितु । [2]न्यश्वसीत् । न्यश्वसत् । [3]न्यश्वसिताम् । [4]अश्वसीत् । [5]निशश्वास । [6]श्वसिता ॥

अन च ।[7]

अनितेः ॥ ८।४।१९ ॥

उपसर्गस्थान्निमित्तात् परस्यानितेर्[8]णत्वं स्यात् । प्राणिति । विभाषानुवृत्तेति केचित् । प्रानिति ।[9]

जक्ष भक्षहसनयोः । जक्षिति । जक्षितः ।

---

अन च । चकारात् प्राणने जीवने वर्तत इत्यर्थः । इत आरभ्य शीङन्ताश्चतुर्दश सेट्काः ।

अनितेः । प्राणितीति । 'रुदादिभ्यः—' इतीट् । विभाषेति । अर्वाचीनमतमेतत् । एतदेवाभिप्रेत्य [10]प्रदीपे उक्तम् । 'अनादेर्नस्य वा णत्वं प्राणिति प्रानिति' इति । अनितः । अनन्ति । अन्यात् । अनितु । आनीत् । आनत् । आनीत् । आनिष्टाम् । आन । अनिता । अन्यात् । अनिष्यति ।

जक्ष । जक्षितीति । इट् ।

---

१. After it—श्वसिताद्वा । $D_2$. २. Dropped N. ३. Dropped $D_3$. ४. Before it—'ह्म्यन्तक्षण—' इति वृद्धिनिषेधः $B_1$ 'ह्म्यन्तक्षण—' इति न वृद्धिः $B_2$, $D_4$. ५. शश्वास $D_2$, $D_3$. ६. $B_1$ has विशश्वास in place of it and C has after it—श्वस्यात् । श्वासिष्यति । अश्वसिष्यत्; $B_2$ has श्वस्यात् । श्वसिष्यति after it; $D_3$ drops श्वसिता. ७. प्राणने for च $D_2$, $D_3$. ८. °र्नस्य णत्वं $D_1$, N; नस्य णः स्यात् $B_2$, $D_3$, $D_4$; °नितेर्णः स्यात् $D_2$. ९. After it—प्राण्यात् । प्राणितु $B_2$. १०. उक्तं प्रदीपे $Dc_3$.

**अदभ्यस्तात् ॥ ७।१।४ ॥**

अभ्यस्तात् परस्य झस्य[1] अत् स्यात् ॥ अन्तापवादः । जक्षति[2] । जक्षितु[3] । 'सिजभ्यस्त—' इति झेर्जुस्[4] । अजक्षुः । जजक्ष ।

जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । जागृयात् । जागर्तु । गुणः । 'हल्ङ्याब्—' इति लोपः । विसर्गः । अजागः । अजागृताम् । अभ्यस्तत्वात् झेर्जुस्[5] ।

**जुसि च ॥ ७।३।८३ ॥**

जुसि[6] परे इको गुणः स्यात् ॥ अजागरुः । शृणुयुरित्यादौ[7] यासुटो[8] ङित्वान्न गुणः ।

---

अद । जक्षतीति । 'जक्षित्यादिभ्यः षट्' इत्यभ्यस्तसंज्ञा । अजक्षीत् । अजक्षत् । अजक्षिताम् । अजक्षीत् । अजक्षिष्टाम् । जजक्षेति । णल् । जक्षिता ।

जागृ । जागर्तीति । गुणः । रपरः । जागृत इति । ङित्त्वाद्गुणाभावः । जाग्रतीति । 'अदभ्यस्तात्' इत्यत् ।

जुसि । ननु शृणुयुरित्यादौ गुणः कस्मान्न । उच्यते । 'जुसि च' इति गुणः सार्वधातुकाश्रयङित्त्वनिमित्तप्रतिषेधे प्राप्त एवारभ्यते । सर्वस्मिन्नपि जुसि तस्य प्राप्तत्वात् । अतो येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायात् तस्यैव बाधकः न तु यासुटाश्रयङित्वनिमित्तस्य निषेधस्य तस्मिन्नप्राप्ते प्राप्ते चारभ्यमाणत्वात् । अतः शृणुयुरित्यादौ यासुटाश्रयङित्त्वनिमित्तः प्रतिषेधो भवत्येव । एतदभिप्रेत्यानन्तरमेवाह । यासुडित्यादि । अजागरुरित्यादि । ननु चात्र

---

१. झस्य अन्ता° $B_1$; झोन्ता° $B_2$. २. After it—जक्ष्यात् $B_2$. ३. जक्षतु $N_1$. ४. झेः dropped $D_2$, $D_4$, $N_1$. ५. झेः dropped $N_1$, $D_4$. ६. जुसि च परे C, $N_1$. ७. जागृयु° $D_1$; शृणुयुर्जागृयु° $D_3$. ८. शृणुयादि° $Dc_1$.

वृद्धौ प्राप्तायाम् ।

**जाग्रोऽविचिण्णल्ङित्सु ॥ ७।३।८५ ॥**

जागर्तेर्गुणः स्यात् सर्वत्र न तु विचिण्णल्ङित्सु ॥

---

'विचिण्णल्ङित्सु' इति गुणप्रतिषेधः स्यात् । ङित्त्वात् । न । अस्य पर्युदासत्वात् । विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते नात्र प्रतिषिध्यते । अथवा जाग्र इति या प्राप्तिः सा प्रतिषिध्यते तेन 'जुसि च' 'सार्वधातुकार्धधातुकयोः' इति गुणो भवत्येव । तेनोत्तमे णलि जजागरेत्यपि सिद्धं स्यात् । वृद्धौ प्राप्तायामिति । 'सिचि वृद्धिः—' इति । ननु च सा 'ह्म्यन्तक्षण—' इत्यादिना निषिध्यते । तद् व्यर्थं वृद्धौ प्राप्तायामिति । मैवम् । सार्थकमेतत् इति 'ह्म्यन्तक्षण—' इत्यत्रैव प्रतिपादितम् ।

जाग्रो । वृद्धिविषये प्रतिषेधविषये च जागर्तेरयं गुणो विधीयते । अस्मिन् कृते 'अतः—' इति प्राप्ता वृद्धिः सापि न । यदि स्यात् व्यर्थो गुणः स्यात् चि[3] नलोपप्रतिषेधो व्यर्थः स्यात् ।

---

१. After this P, $D_1$ have—जागर्तेः सिचि वृद्धिरिति वृद्धिप्राप्तौ ह्म्यन्तक्षणेति निषेधः । पुनः सार्वधातुकार्धधातुकयोरिति गुणे कृते अतोल्रान्तस्येति वृद्धिप्राप्तौ जाग्रोरिति बाध्यते ।. २. Dropped $D_1$. ३. चिण्णलोपश्च प्रतिषेधो व्यर्थः स्यात् । $Bo_2$; चिण्णलोपश्च प्रतिषेधो व्यर्थः स्यात् $Dc_3$.

अजागरीत्। 'उषविद्–' इत्याम् वा। जागरामास। जजागार[2]। 'जाग्रोविचिण्–' इति गुणः। जजागरतुः। जजागरिथ।[3] जागरिता। जागर्यात्[4]।

दरिद्रा दुर्गतौ। दरिद्राति[5]।

इद्दरिद्रस्य॥ ६।४।११४॥

दरिद्रातेरात ईकारः स्यात् सार्वधातुके क्ङिति हलि[6]॥ दरिद्रितः।

---

**अजागरीदिति**। अत्र सूत्रप्राप्तिक्रमः। जागृ ईत् इति स्थिते पूर्वं यण् प्राप्तः। तं सार्वधातुकगुणो बाधते। तं सिचि वृद्धिः। तां जागर्तिगुणः। तत्र कृते हलन्तलक्षणा वृद्धिः। सा 'नेटि' इति प्रतिषिध्यते। 'अतो हलादेः—' इति विकल्पः। तं बाधित्वा 'अतो ल्रान्तस्य' इति नित्यवृद्धिः[7]। तां 'ह्म्यन्तक्षण—' इति निषेधो बाधते। तथोक्तम्।

'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्।
पुनर्वृद्धिर्निषेधोतो[8] यण्पूर्वाः प्राप्तयो नव'॥ इति।

**जागरामासेति**। अस्तेरनुप्रयोगः। **जजागारेति**। 'णल्—' इति गुणाभावः। 'अचो ञ्णिति' इति वृद्धिः। **जागरितेति**। इट्। **जागर्यादिति**। गुणः। जागरिष्यति। अजागरिष्यत्।

**दरिद्रा**।

**इद्द**। दरिद्रस्येति छान्दसो ह्रस्वः।

---

१, C has—जागृविः। चिण्। अजागरि। णल्। जजागार। ङित्। जागतः before अजागरीत्. २. जजागर P. ३. C, $B_2$, $D_1$, $D_2$, $D_3$, $D_4$ have जजागरिव before it. ४. After it—जागरिष्यति $B_2$. ५. इत् $D_4$. ६. क्ङिति सार्वधातुके हलि $D_1$. ७. नित्या वृद्धिः। $Bc_2$. ८. °र्निषेधश्च $Bc_2$.

## श्नाभ्यस्तयोरातः ॥ ६।४।११२ ॥

अनयोरा[1]तो लोपः स्यात् क्ङिति सार्वधातुके ॥ दरिद्रति । दरिद्रियात् । दरिद्रातु । दरिद्रितात् वा । अ[2]दरिद्रात् । अद[3]रिद्रुः ।

दरिद्रातेरार्धधातुके आलोपो वाच्यः । लुङि वा । सनि ण्वुलि ल्युटि च न ॥* अदरिद्रीत् । अदरिद्रासीत् ।

[4]अनेकाच आम् वक्तव्यः ॥* दरिद्रामास ।

---

श्नाभ्य । दरिद्रतीति । 'अदभ्यस्तात्' इत्यत् । दरिद्रासि । दरिद्रिथः । दरिद्रामि । दरिद्रिवः । दरिद्रातु । दरिद्रिहि । दरिद्राणि । दरिद्राव । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुरिति । 'सिजभ्यस्त—' इति जुस् । दरिद्रातेरिति । सिद्धश्च वाच्यः । लुङीत्यादि । तदुक्तं भाष्यकृता ।

'न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा[5]' ॥ इति ।

अद्यतन्यां वे[6]ति वक्तव्यमिति च । अदरिद्रीदिति । आलोपपक्षे रूपम् । सिद्धवचनादसिद्धवदित्यसिद्धत्वेनेट्सकौ न । अदरिद्रासीदिति । 'यमरम—' इतीट्सकौ । दरिद्रातेरिति । केचिदिति । वृत्तिकारादयः । तथा च वृत्तौ 'वस्वेकाच्—' इति सूत्रे उक्तम् । 'दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चु[7]लुम्पाद्यर्थमित्यामा भवितव्यम् ।

---

१. °शलोपः $N_1$. २. Dropped $N_1$. ३. C drops it; $D_1$ has in place of it अदरिद्राः; $D_4$ has before it—अदरिद्रिताम् ।. ४. Before it—'यमरम—' इति सक् इट् च $D_1$. ५. च $Bc_2$. ६. चेति $Bc_2$. ७. त्वलुम्पा° $Bc_2$.

दरिद्रातेराम्वेति केचित् । ददरिद्र । दरिद्र्यात् ।

चकासृ दीप्तौ । चकास्ति । चकास्तः । चकासति । चकास्मि । हेर्धित्वम् । सस्य जश्त्वेन दः । चकाद्धि । भाष्यकारमतेन 'धि च' इति सलोपः । चकाधि ।

**तिप्यनस्तेः ॥८।२।७३॥**

पदान्तस्य सस्य दः स्यात् तिपि परे न त्वस्तेः ॥ अचकात्–द् ।

**सिपि धातोरुर्वा ॥८।२।७४॥**

पदान्तस्य धातोः सस्य रुः स्याद्वा सिपि । पक्षे दः ।

---

दरिद्रां चकृवानिति । अथाम् न क्रियते तथापि' इत्यादि । तेन तेषां मते वा आम्प्रत्यय इत्यर्थः । ददरिद्रेति । आलोपादौत्वं न । पदमञ्जरीकारमते अत्राप्यौत्वम् । दरिद्रिता । दरिद्रिष्यति । अदरिद्रिष्यत् ।

**चकासृ** । चकासतीति । अत् । चकास्यात् । चकास्तु । हेर्धित्वमिति । 'हुझल्भ्यः—' इति ।

**तिप्यं** । तिपि इति किम् । चकास्तेः क्विप् । चकाः । अनस्तेः किम् । आप एवेदं सलिलं सर्वमाः । आ इत्येतदस्ते रूपम् । लङि तिपि 'बहुलं छन्दसि' इति इट् न भवति । **अचकादिति** । सलोपः । 'वावसाने' ।

**सिपि** । सिपि परे धातोरन्यस्यासंभवाद्धातुग्रहो व्यर्थः । यथा द इत्यनुवृत्तेस्तस्यैव विकल्पे पक्षे सान्तत्वादेव रुः सिद्ध इति रुग्रहोपि व्यर्थ इति चेत् । नैष दोषः । 'दश्च' आदिषूत्तरसूत्रेषु उभयोः

---

१. P has दरिद्रिता before it; $B_2$ has दरिद्रिता । दरिद्रिष्यति after it. २. चकास्सि $D_3$. ३. सिपि परे $B_1$, $B_2$, $N_1$. ४. तिपि $Bc_2$. ५. आप ये एवं $Dc_3$.

अचकाः । अचकात्–द् । अचकासीत् । चकासामास ।[१]

शासु अनुशिष्टौ । शास्ति ।

**शास इदङ्हलोः ॥ ६।४।३४॥**

शास उपधाया इकारः स्यादङि हलादौ च क्ङिति ॥ 'शासिवसि–' इति षः । शिष्टः । शासति । शास्सि[३] । शिष्यात्[४] ।

---

सार्थकत्वात् । अचकासीदिति । लुङ् । इट् । ईट् । चकासामासेति । अनेकाच आम् वक्तव्यः । चकासिता । चकास्यात् । चकासिष्यति । अचकासिष्यत् ।

शासु । अनुशिष्टिर्नियोगः ।

शासः । अत्र अङा संबन्धात् यस्माच्छासोङ् विहितस्तस्य ग्रहणम् । अङ् च 'सर्तिशास्ति—' इत्यत्र परस्मैपदग्रहणानुवृत्तेः परस्मैपदिनः शासु अनुशिष्टौ इत्यस्माद्विहितस्तेन आङ् शासु इच्छायामित्यस्य न भवति । आशास्ते । शिष्ट इति । ष्टुत्वम् । शासतीति । 'जक्षित्यादयः—' इत्यभ्यस्तसंज्ञा । 'अदभ्यस्तात्' इत्यत् । शास्मि । शिष्वः । शिष्मः । शिष्यादिति । लिङ् । यासुट् । इकार उपधायाः । 'शासिवसि—' इति षः । शिष्याताम् । शिष्युः । शास्तु । शिष्टाद्वा । शिष्टाम् । शासतु ।

---

१. After it—चकासिता । चकासिष्यति $B_2$. २. शास् $D_1$, $D_4$, $B_2$.
३. C and P have शास्मि after it; $D_4$ has शास्मि in place of it.
४. After it—शास्तु । शिष्टाद्वा $D_2$, $B_1$, P, C. ५. योगात् $Bc_2$.

**शा हौ ॥६।४।३५॥**

शास्तेर्हौ परे शादेशः स्यात् ॥ शाभावस्यासिद्धत्वाद्धेर्धिः[1] । शाधि । शासानि । शासाव[2] । अशात्–द् । अशिष्टाम् । अशासुः । अशाः । अशात्[3] । अशिष्म[4] । 'सर्तिशास्ति–' इत्यङ् । अशिषत् । अशिषताम् । शशास । शासिता । शिष्यात्[5] ।

इति परस्मैपदप्रक्रिया ।

---

शा हौ । 'उपधायाः' इति निवृत्तम् । ततः शास इति स्थानेयोगा षष्ठी भवति । क्ङिति इति निवृत्तम् । तेन यदा 'वा छन्दसि' इति पित्वं हिशब्दस्य तदाप्यादेशो भवत्येव । शाधीत्याद्युदात्तमपि छन्दसि दृश्यते । **शासानीति** । 'मेर्निः' । 'आडुत्तमस्य' इत्याड् । **अशादिति** । लङ् । तकारलोपः । 'हलङ्याब्—' इति लोपः[7] । 'तिप्यनस्तेः' इति सस्य दः । 'वावसाने' । **अशिष्टामिति** । इत्वम् । षत्वम् । ष्टुत्वम् । **अशासुरिति** । 'सिजभ्यस्त—' इति झेर्जुस् । **अशाः** । **अशादिति** । 'सिपि धातोः' इति वा रुः । पक्षे दः । अशासम् । अशिष्व । **अशिषदिति** । लुङ् । च्लिः । इत्वम् । षत्वम् । **शशासेति** । लिट् । द्वित्वम् । ह्रस्वः । **शासितेति** । लुट् । शिष्यात् । शिष्यास्ताम् । शिष्यासुः । शासिष्यति ।

---

१. °धित्वम् $N_1$. २. After it—शासाम $D_2$, $B_1$, P, C; शासाव dropped $D_4$. ३. After it- अशाद् $D_4$. ४. After it—अशिष्ट $D_2$, $B_1$, P, C. ५. शासिष्यति $B_2$; $N_1$, $D_3$, $D_4$ drop शिष्यात्. ६. Dropped P, C, $D_1$, $D_3$, N. ७. तिलोपः । $Dc_3$.

चाक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । 'स्कोः संयोग—'[1] इति कलोपः । चष्टे । चक्षाते[2] । चक्षे[3] । चड्ढ्वे । चक्षीत[4] । चष्टाम् । अचष्ट ।

---

चक्षिङ् । इत आरभ्य वेवीङन्ता एकादश आत्मनेपदिनः । इकार इत्यादि । न नुमर्थ इत्यर्थः । ङित्करणात् 'इदितो नुम् धातोः' इत्यत्र हि 'गोः पादान्ते' इत्यन्तग्रहणमनुवर्तते । तेनान्तो य इदितः तेषामेव नुम् नान्येषामित्यभिप्रायः । स च इकारोनुदात्तः । 'अनुदात्तेतश्च हलादेः' इति विचक्षण इत्यत्र युच् यथा स्यात् । एवं च ङकारोनुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थः । तेन 'स एवायं नागः सहति कलभेभ्यः परिभवम्' । इत्यादि सिद्धम् । चष्टे इति । ष्टुत्वम् । चक्षते इति । झ । 'आत्मनेपदेष्वनतः' इत्यदादेशः । चक्षे इति । 'थासः से' । 'स्कोः—' इति कलोपः । 'षढोः कः सि' । इति कः । 'आदेशप्रत्यययोः' इति षः । चक्षाथे । चड्ढ्वे इति । कलोपः । 'झलां जश् झशि' इति जश्त्वेन डः । ष्टुत्वम् । चक्षे । चक्ष्वहे । चक्ष्महे । चक्षीयाताम् । चक्षीरन् । चष्टामिति । लोट् । 'आमेतः' । कलोपः । ष्टुत्वम् । चक्षाताम् । चक्षताम् । चक्ष्व । चड्ढ्वम् । चक्षै । चक्षावहै । चक्षामहै । अचष्टेति । लङ् । ष्टुत्वम् । अट् । अचक्षत ।

---

१. संयोगाद्योरिति C. २. C, $B_2$, $D_1$ have चक्षते after it; $D_3$ has चक्षते for चक्षे ।. ३. After it—जश्त्वम् $D_4$. ४. $B_1$ चक्षीयाताम् in place of it; $D_2$, $N_1$ have चक्षीयाताम् after it.

चक्षिङः ख्याञ् ॥२।४।५४॥

चक्षिङ आर्धधातुके[1] ख्याञादेशः स्यात् ॥ ञित्वादुभयपदम् । अ[2]ख्यत् । अख्यत । क्साञ[3]पीष्टः । अक्सासीत् । अक्सास्त । वर्जने निषेधः । समचाक्षिष्ट ।[4]

वा लिटि ॥२।४।५५॥

च[5]क्षिङः ख्याञ्[6]क्साञौ वा[7]स्तो लिटि ॥ चख्यौ । चख्ये । चक्सौ । चक्से । चचक्षे । ख्या[8]ता । क्सा[9]ता ॥[10]

---

चक्षिङः । ख्याञः स्थानिवत्त्वान्नित्यमात्मनेपदं न भवति । ङकारानुबन्धकरणसामर्थ्यादित्यभिप्रेत्याह । ञित्वादिति । अख्यदिति । 'अस्यतिवक्ति—' इत्यङ् । 'आतो लोपः—' अख्यतेत्यात्मनेपदम् । अङ् । अक्सासीदिति । 'यमरम—' इतीट्सकौ । अक्सास्तेत्यात्मनेपदम् । समचाक्षिष्टेति । 'आर्धधातुकस्य—' इतीट् । षत्वष्टुत्वे । न्यषेधीदित्यर्थः ।

चख्याविति । 'आत औ णलः' । द्वित्वम् । हलादिशेषः । चर्त्वम् । चुत्वम् । चख्ये । चख्याते । चक्साविति । पूर्ववत् । ख्याता । क्साता । ख्यातासे । क्सातासे । ख्यायात् । ख्येयात् । क्सायात् । क्सेयात् । ख्यासीष्ट । क्सासीष्ट । ख्यास्यति । ख्यास्यते । क्सास्यति । क्सास्यते ।

---

१. After it-परे $D_1$. २. Dropped $N_1$; before it—' अस्यातिवक्ति ' इत्यङ् । 'आतो लोप इटि च' इत्यालोपः । $D_4$. ३. °पीष्टिः $B_1$ ; क्सापीष्टः । $D_3$ ; क्साञपीष्टः । $D_4$. ४. After it—न्यषेधीदित्यर्थः $B_2$. ५. The Vṛitti is dropped $D_1$. ६. °क्सादेशौ C. ७. स्तो वा $D_3$. ८. Dropped $B_2$, $N_1$, $D_3$. ९. Dropped $B_2$, $N_1$, $D_3$. १०. After it—ख्येयात् । ख्यायात् । क्सेयात् । क्सायात् । ख्यास्यति । क्सास्यति $D_1$, $D_4$.

ईड स्तुतौ । ईट्टे[1] ।

**ईडजनोर्ध्वे च ॥७।२।७८॥**

आभ्यां परस्य सस्य ध्वे[2]स्य च सार्वधातुकस्येडागमः स्यात् ॥ ईडिषे । [3]ईडिध्वे । ईड्वहे ।[4]

ईश ऐश्वर्ये । ईष्टे ।

**ईशः से ॥७।२।७७॥**

ईशः[5] सस्य सार्वधातुस्येट्[6] स्यात् ॥ ईशिषे । 'ईडजनोर्ध्वे च' इत्यत्र ईशोप्यनुकर्षः । ईशिध्वे[7] । ऐशिष्ट[8] ।

---

ईड । ईट्टे इति । ष्टुत्वम् । 'खरि च' इति चर्त्वम् । ईड स्तुतौ ।

जनी प्रादुर्भावे । जन जनने । उभयोरपि ग्रहणम् । तत्र पूर्वस्य श्यन्विकरणस्य जनेश्छान्दसत्वात् श्यनो लुक् उपधालोपाभावश्च । जनिध्वे । जनिषे । श्लुविकरणस्योत्तरस्य व्यतिजज्ञिषे । व्यतिजज्ञिध्वे इति स्यात् । ध्वे इति कृतटेरेत्वस्य ग्रहणात् लङि न । लोटि तु 'एकदेशविकृतमनन्यवद्भवति' इति स्यादेव । ईडीत । ईट्टाम् । ईडिध्वम् । ऐट्ट । ऐडाताम् । ऐडत । ऐडिष्ट । ईडांचक्रे । ईडिता । ईडिषीष्ट । ईडिष्यते ।

ईश । ईष्टे इति । 'व्रश्च—' इति षः । ष्टुत्वम् ।

ईशः । 'ईडजन—' इति चकारादिति भावः । ततश्च ध्वेपि परत इट् स्यात् । ईशीत । ईष्टाम् । ईशिध्वम् । ऐष्ट । ऐशत । ऐष्ठाः । ऐशिष्ट । ईशांचक्रे । ईशिता ।

---

१. ईडे C; after it—ऐडिष्ट । ईडांचक्रे । ईडिषीष्ट । ईडिता । ईडिष्यते $B_2$; $D_2$ drops ईट्टे. २. ध्वे-इत्यस्य C. ३. C drops it. ४. After it—ईड्महे । $D_4$. ५. परस्य $B_1$, $D_1$, $D_3$. ६. °स्येडागमः $B_1$; सस्य इडागमः $D_1$. ७. After it—ईशिष्व $B_2$, $D_4$, P. ८. Dropped P, C, $D_4$.

आस उपवेशने । आस्ते[1] । [2]आंस्से । आध्वे । [3]आद्ध्वे । 'दयाया—' इत्याम् । आसांचक्रे ।

[4]वस आच्छादने । वस्ते ।[5] [6]वसिता । वस्ता[7] ।

णिसि चुम्बने ।[8] प्रणिंस्ते । [9]प्रनिंस्ते ।

षूङ् प्राणिगर्भविमोचने । 'भूसुवोस्तिङि' [10]इति न गुणः । [11]सुवै । सुवावहै । सुवामहै । 'स्वरतिसूति—' इति वेट् । असविष्ट । असोष्ट ॥[12]

---

आस । आद्ध्वे इति । जश्त्वेन सस्य दः । आध्वे इति । भाष्यकारमते सलोपः । आसीत । आस्ताम् । आस्त । आसिष्ट । आसांचक्रे इति । 'आम्प्रत्ययवत्—' इत्यात्मनेपदम् । आसिता ।

वस । वस्से । वद्ध्वे । वध्वे । वसीत । वस्ताम् । अवस्त । अवसिष्ट । 'न शश—' इत्येत्वाभ्यासलोपौ न । ववसे । वसिता इति । इट् । 'भृस्तुशुच्वसतशभ्यः' इति केषांचिन्मतेन वेट् । वस्ता ।

णिसि । प्रणिंस्ते । प्रनिंस्ते इति । नुम् । 'वा निंस—' इति वा णत्वम् । निंसीत । निंस्ताम् । अनिंस्त । अनिंसिष्ट । निनिंसे । निंसिता ।

षूङ् । सूते । सुवाते । सुवते । सुवीत । सूताम् । सुवै इति । 'आडुत्तमस्य पिच्च' इत्याट् । स पित् । पिच्च ङिन्न भवतीति गुणः प्राप्तः । असूत । असविड्ढम् । असविध्वम् । सुषुवे । सविता । सोता ।

---

१. After it—आसाते C. २. Dropped $D_4$. ३. Before it—भाष्यकारमते सलोपः $B_2$; आद्ध्वे dropped $D_2$. ४. वस् N. ५. केषांचिन्मते वेट् after it—$D_2$, C. ६. After it—भृस्त्वादित्वादिड् वा । भृस्तुसुस्त्यशभ्यः परस्य तादेरार्धधातुकस्येड् वेति केचित् । वस्ता $B_2$. ७. Dropped $D_4$. ८. After it—इदितो नुम् धातोः C. ९. Dropped $D_3$. १०. इति dropped C. ११. Before it— 'आडुत्तमस्य–' इत्याट् $D_4$. १२. After it—सविता । सोता । सविषीष्ट । सोषीष्ट $D_1$.

शीङ् स्वप्ने ।

**शीङः सार्वधातुके गुणः ॥७।४।२१॥**

शीङो गुणः स्यात् सार्वधातुके ॥ 'क्ङिति च' इत्यस्यापवादः । शेते । शयाते ।

**शीङो रुट् ॥७।१।६॥**

शीङो झादेशस्यातो रुडागमः स्यात् ॥ शेरते । अशयिष्ट [1] । इङ् अध्ययने । अधीते । अजादावियङ् । अधीयाते । अधीयते । अधीयीत [2] । अधीयीयाताम् [3] । [4] अध्ययै ।

---

**शीङ्** । सानुबन्धग्रहणं यङ्लुङ्निवृत्त्यर्थम् । शेशीशयादेश इति अयादेशः ।

**शीङः** । अत्रापि ङकारो यङ्लुङ्निवृत्त्यर्थः । व्यतिशेश्यते । अदित्यत्रानुवर्तते तच्च प्रथमान्तमप्यर्थात् षष्ठ्यन्तं जायते । रुडयं परादिः क्रियते । स यदि झस्यैव स्यात् अत् न स्यात् तेन व्यवधानात् इत्यत् एवायमागम इत्यभिप्रेत्याह । झादेशस्यात इति । शयीत । शेताम् । अशेत । अशयिष्टेति । लुङ् । सिच् । इट् । अशयिध्वम् । अशयिढ्वम् । शिश्ये । शयिता । शयिषीष्ट । इङ् । अयमनिट् । अधीते इति । इङिकावध्युपसर्गतो न व्यभिचरत इत्यधेः प्राक् प्रयोगः । सवर्णदीर्घः । अजादावियङिति । 'अचि श्नुधातु—' इति । अध्ययै इति ।

---

१. After it—शिश्ये । शयिषीष्ट । शयिता $B_2$ ; शिश्ये । शयिता । शयिषीष्ट । शयिष्यते । अशयिष्यत $D_1$. २. Dropped $B_2$, $D_3$, $D_4$. ३. Dropped $D_3$, $D_4$, $B_2$ ; अधीताम् $D_1$. ४, P has गुणः before it.

अध्यैत । परत्वादियङि कृते पश्चादाट् । अध्यैयाताम् । अध्यैयत ।[1][2]

**विभाषा लुङ्लृङोः ॥२।४।५०॥**

इङो गाङादेशो वा स्यात् लुङ्लृङोः परयोः ॥

**गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥१।२।१॥**

गाङादेशात् कुटादिभ्यश्च[4] परे ञ्णितः प्रत्यया ङितः स्युः॥

**घुमास्थागापाजहातिसां हलि ॥६।४।६६॥**

एषामात ईत् स्याद्धलादौ क्ङिति[5] ॥

---

लोडुत्तमैकवचनम् । इट् । एत्वम् । 'एत ऐ' इत्यैत्वम् । 'आडुत्तमस्य' इत्याट् । गुणायादेशौ । उपसर्गेकारस्य यण् । अध्यैतेति । लङ् । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । यणादेशः । अध्यैयाताम् । अध्यैयत ।

**विभाषा** ।

**गाङ्कुटादिभ्यः** । गाङिति गादेशो गृह्यते न गाङ् गताविति धातुः । गाङो ङकारस्यानन्यार्थत्वादित्यभिप्रेत्याह । **गाङादेशादिति** । कुटादयस्तु

कुट्पुट्कुच्व्यच्गुजगुडः डिप्छुर्स्फुट्मुट्तुटत्रुटः ।
चुट्छुट्जुड्कड्लुट्कृडः कुड्पुड्घुट्तुड्थुडस्थुडः ॥
खुड्छुड्स्फुर्स्फुल्स्फरस्फुडः चुडवुडक्रुडोपि च ।
भृडगुरी णूधूश्चैव गुध्रुकूश्च कुटादयः ॥

**ङितः स्युरिति** । ङिद्वत् स्युः । ङित इव कार्यं स्यादित्यतिदेशः ।

**घुमा** । घुसंज्ञकाः । मेङ् प्रणिदाने । माङ् माने । मा माने इति त्रयाणां मा इति ग्रहणम् । ष्ठा गतिनिवृत्तौ । गा इति गाङ् गतौ गै शब्दे गाङ् स्तुतौ 'इणो गा लुङि' 'इकोपि गा' 'गाङ् लिटि' 'विभाषा लुङ्लृङोः' इति सर्वेषां ग्रहणम् । गामादाग्रहणेष्वविशेष इति ।

---

१. $B_1$, $B_2$, $D_2$, $D_3$ drop पर°...°दाट्; $D_1$, $D_4$ drop from पर° to अध्यैयत. २. $B_1$, $B_2$, $D_2$, $D_3$ drop it. ३. After it—अध्यैयि $N_1$. ४. कुटादेश्च परे N. ५. After it–आर्धधातुके $D_1$.

अध्यगीष्ट । अध्यैष्ट[१] ।

**गाङ् लिटि ॥२।४।४९॥**

इङो गाङ् स्याल्लिटि[२] परे ॥ अधिजगे[३] । अध्येता । अध्येषीष्ट । अध्येष्यते । अध्यगीष्यत । अध्यैष्यत ।

दीधीङ् दीप्तिदेवनयोः । दीधीते । 'एरनेकाचः—' इति यण् । दीध्याते ।

**यीवर्णयोर्दीधीवेव्योः ॥७।४।५३॥**

दीधीवेव्योरन्तस्य लोपः स्याद्यकारे[४] इवर्णे च परे ॥

---

पा इति पिबतेरेव ग्रहणम् । न पातेः । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति परिभाषया । ओहाक् त्यागे । षोन्तकर्माणि । हलि किम् । ददतुः । ददुः । आलोपाद्धि परत्वादीकारः स्यात् ।

अध्यैष्टेति । आट् । 'आटश्च' इति वृद्धिः ।

गाङ् । ङिलकारको निर्देशः लिटि लकारादाविति । तेनादेशेभ्यः प्रागेव लावस्थायां गाङादेशः । ततश्च अधिजगे इत्यत्र 'द्विर्वचनेचि' इति स्थानिवत्त्वेन द्वित्वम् । गाङित्यनुबन्धो गाङ्कुटेत्यत्र विशेषणार्थः । न हि स्थानिवत्त्वेन गाङिति रूपं लभ्यते । अधिजगे इति । एश् । 'आतो लोपः—'[५] । स्थानिवत्त्वाद् द्वित्वम् । श्चुत्वम्[६] ।

दीधीङ् । देवनं क्रीडा । इतो द्वौ सेट्कौ । दीध्यते ।

यीवर्ण । यकारे इकार उच्चारणार्थः । यीवर्णयोः किम् ।

---

१. After it—वा P, C. २. °ल्लिटि (परे dropped) $D_1$, P, C. ३. After it—अधिजगाते $B_2$; before it—'आतो लोपः' $D_4$. ४. यकारे परे इवर्णे च C. ५. अधिजगे इति द्विर्वचने स्थानिवत्त्वं न । $Bc_2$, $Dc_3$. ६. चुत्वम् $Bc_2$.

दीधीत ।[१] दीधीयाताम् । 'दीधीवेवीटाम्' इति न गुणः दीध्यै । अदीधीत । अदीधीष्ट । दीध्यांचक्रे ।

[२]एवं वेविङ् वेतिना तुल्ये ।[३]

[४]इत्यात्मनेपदप्रक्रिया ।

---

आदीध्यकः । वर्णग्रहणमाँदीधयते ण्वुल् आदीध्यकः । अत्र सत्येव णौ ण्वुलुत्पत्तेः प्रागेव प्राप्तोपि लोपो नेत्येवमर्थम् । दीधीतेति । लिङ् । दीधीयाताम् । दीधीतामिति । लोट् । दीध्याताम् । दीध्यताम् । दीध्यै इति । लोडुत्तमैकवचनम् । अदीधीतेति । लङ् । अदीधिष्टेति । लुङ् । सिच् । इट् । अन्तलोपः । दीध्यांचक्रे इति । अनेकाच आम् वक्तव्यमित्याम् । 'आम्प्रत्ययवत्—' इत्यात्मनेपदम् । दीधिता । दीधिषीष्ट । दीधिष्यते ।

एवं ववाङ् चेति । वी गतिप्रजनकान्त्यशनखादनेषु । अनेन समानार्थे वर्तते इत्यर्थः । वेवीते । वेव्याते । वेवीत । वेवीयाताम् । वेवीताम् । वेव्याताम् । अवेवीत । अवेविष्ट । वेव्यांचक्रे । वेविता । वेविषीष्ट । वेविष्यते ।

---

१. दीधीताम् $N_1$; दीधीयाताम् dropped $D_3$. २. C drops एवम्. ३. After this-वीधातुः गतिप्रजनकान्त्यशनखादनेषु C. ४. P and C, $D_1$, $D_3$, $N_1$, drop this. ५. °मादीध्यते ण्वुलि आदीध्यकाः । $Dc_3$.

द्विषे[1] अप्रीतौ । द्वेष्टि[2] । द्विष्टे[3] । द्विड्ढि । अद्वेट्-ड् ।

**द्विषश्च** ॥३।४।११२॥

द्विषो लङो झेर्जुस् वा[4] स्यात् ॥ अद्विषुः । अद्विषन् । अद्विष्ट । अद्विक्षत् । अद्विक्षत[5] ।

दुह प्रपूरणे । दोदेग्धः[6] । दोग्धि । धोक्षि[7] । दुग्धि[8] ।[9]

---

द्विष । इतश्चत्वारोऽनिट उभयपदिनश्च षट् । द्वेष्टि । द्विष्टः । द्विषन्ति । द्विष्टे । द्विष्यात् । द्विषीत । द्वेष्टु । द्विड्ढीति । 'हुझल्भ्यः—' इति हेर्धिः । जश्त्वं डः । ष्टुत्वम् । द्वेषाणि । द्विषाम् । अद्वेडिति । लङ् । तिलोपः । जश्त्वम् । 'वावसाने' । अद्विष्टेति । लङ् । आत्मनेपदम् । अद्विक्षदिति । लुङ् । परस्मैपदम् । च्लिः । 'शल इगुपधा—' इति क्सः । कत्वम् । षत्वम् । अद्विक्षतेति । आत्मनेपदम् । क्सः । अद्विक्षाताम् । अद्विक्षन्त । दिद्वेष । दिद्विषे । द्वेष्टासि । द्वेष्टासे । द्विष्यात् । द्विष्यास्ताम् । द्विक्षीष्ट । द्वेक्ष्यति । द्वेक्ष्यते ।

दुह[10] । प्रपूरणं पूराणाभावः क्षरणमिति यावत् । उपसर्गो[11] धात्वर्थं बाधते प्रस्थानवत् । यदाहुः ।

'धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।
तमेव विशिनष्टयन्योऽनर्थकोऽन्यः प्रयुज्यते' ॥ इति ।

दोग्धीति । तिप् । गुणः । 'झषस्तथोः—' इति धः । 'झलां जश् झशि' इति जश्त्वम् । दुग्धः । दुहन्ति । धोक्षिति । सिप् । घत्वम् । 'एकाचो बशो—' इति भष् । चर्त्वम् । षत्वम् । कषयोगे क्षः । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः । दुग्धे । दुहाते । दुह्यात् । दुहीत । दोग्धु । दुग्धि इति । लोट् । मध्यमैकवचनम् । हेर्धिः ।

---

१. द्विष् N. २. द्वेष्टि । द्विष्टे dropped N, $D_3$. ३. In its place द्विष्यात् । द्वेष्टु । द्विषाद्वा । द्विड्ढि &c. $D_1$, $D_4$. ४. स्याद्वा N. ५. Dropped $D_3$. ६. दादेर्घातोर्घः $D_3$; दादेर्घः after धोक्षि $D_4$. ७. Before it–दुग्ध $B_2$; dropped $D_3$. ८. After it—दुग्धे C, N. ९. Dropped $D_1$, $D_3$, $D_4$, N. १०. दुह प्रपूरणे $Bc_2$. ११. उपसर्गोऽत्र $Bc_2$.

धुक्ष्व । धुग्ध्वम् । दोहे । अधोक् । अधुक्षत् । अधुक्षत । 'लुग्वा दुह—' इति क्सस्य वा लुक् । अदुग्ध ।[3] 'क्सस्याचि' ।[4] अधुक्षाताम् । धुक्षीष्ट ।[5]

एवं दिह उपचये ।[6] प्रणिदेग्धि । अधिक्षत् ।[7]

---

दुग्धाम् । धुक्ष्वेति । मध्यमैकवचनम् । आत्मनेपदम् । षत्वम् । भष्भावः । धुग्ध्वमिति तत्रैव बहुवचनम् । भष् । दोहे इति । उत्तमैकवचनम् । गुणः । अधोक् इति । लङ् । तिप् । गुणः । घत्वं भष् चर्त्वं हल्ङ्यादि-लोपः । अडागमः । अदुग्ध । अदुहाताम् । अदुहत । अधुक्षदिति । लुङ् । परस्मैपदम् । तिप् । 'शल—' इति क्सः । घत्वम् । भष्भावः । षत्वम् । अधुक्षत इति । आत्मनेपदम् । अदुग्धेति । घत्वं जश्त्वम् । दुदोह । दुदुहतुः । दुदोहिथ । दुदुहे । दोग्धासि । दोग्धासे । दुह्यात् । धुक्षीष्टेति । आशीर्लिङ् । सीयुट् । घत्वभष्भावचर्त्वषत्वानि । धोक्ष्यति । धोक्ष्यते ।

एवं दिह उपचये । उपचयो लोपः । प्रणिदेग्धीति । 'नेर्गद—' इति णत्वम् । दिग्धे । दिह्यात् । दिहीत । देग्धु । दिग्धाम् । अधेक् । अदिग्ध । अदिहाताम् । अधिक्षत् । इति लुङ् । क्सः । अधिक्षत । अदिग्ध । अधिक्षाताम् । दिदेह । दिदिहे । देग्धा । दिह्यात् । धिक्षीष्ट । धेक्ष्यति । धेक्ष्यते ।

---

१. Before it—प्रथमपुरुषे $D_2$. २. Dropped $D_2$. ३. After it—झलन्तत्वात् 'झषस्तथोः—' इति धः $D_4$. ४. After it—इति क्सान्तलोपः. ५. After it—धोक्ष्यति । धोक्ष्यते $D_1$. ६. उपलेपे $B_1$. ७. After it—अदिग्ध । अधिक्षत । धिक्षीष्ट । धेक्ष्यति $D_1$.

लिह आस्वादने । ढत्वधत्वादि । लेढि ।[1] इत्यादि दुहवत् ।[2]

ऊर्णुञ् आच्छादने ।

ऊर्णोतेर्विभाषा ॥७।३।९०॥

ऊर्णोतेर्वा वृद्धिःस्याद्धलि पिति[3] सार्वधातुके ॥ ऊर्णौति । ऊर्णोति । ऊर्णुतः ।

गुणोपृक्ते ॥७।३।९१॥

ऊर्णोतेरपृक्ते पिति हलि सार्वधातुके गुणः स्यात् । वृद्धेरपवादः । और्णोत् । औ[4]र्णोः ।

---

लिह । ढत्वधत्वादीति । ढत्वं 'हो ढः' इति । धत्वं 'झषस्तथोः—' इति । आदिशब्दात् ष्टुत्वम् । ढलोपः । लेढि इति । लट् । तिप् । लीढे । लिह्यात् । लिहीत । लेढु । लीढि । लीढाम् । अलेट् । अलीढ । अलिक्षत् । अलिक्षत । अलीढ । लिलेह । लिलिहे । लेढा । लिह्यात् । लिक्षीष्ट ।

ऊर्णुञ् । अयं नकारोपध एव 'रषाभ्याम्—' इति कृतणत्वः पठ्यते सेट्कः ।

ऊर्णोतेः । हलीत्यादि । हलादौ पिति सार्वधातुके इत्यर्थः । ऊर्णोतीति ।

गुणः । ऊर्णुत इति । ङित्त्वाद्गुणाभावः । ऊर्णुवन्ति । ऊर्णुते । और्णोदिति । 'आटश्च' इति वृद्धिः ।

---

१. Before it—लीढे $B_1$. २. इत्यादि दुहवत् dropped $D_4$. ३. पिति हलि $D_2$, $D_3$. ४. Dropped $D_1$.

**ऊर्णोतेर्विभाषा॥७।२।६॥**

इडादौ सिचि परे ऊर्णोतेर्वा वृद्धिः स्यात् परस्मैपदेषु ॥ और्णावीत् । और्णवीत् ।

**विभाषोर्णोः ॥१।२।३॥**

ऊर्णोतेरिडादिप्रत्ययो वा ङित् स्यात् ॥ और्णुवीत् । और्णविष्ट । और्णुविष्ट । ऊर्णोतेराम्निषेधो वक्तव्यः ।

**अजादेर्द्वितीयस्य ॥६।१।२॥**

अजादेर्धातोर्द्वितीयस्यावयवस्यैकाचो[4] द्वे स्तः ॥

---

ऊर्णोतेः । विभाषा ऊर्णोरिति यदा ङित्त्वं नास्ति तदायं विकल्पः । ङित्त्वपक्षे तूवङ् च । और्णावीदिति । लुङ् । सिच् । 'इट ईटि' इति सलोपः । सवर्णदीर्घः । आट् । और्णविदिति । वृद्धयभावे रूपम् । ङित्त्वाभावपक्षे गुणः ।

और्णुवीदिति । ङित्त्वपक्षे उवङ् । और्णविष्ट । और्णुविष्टेति । लुङ् । आत्मनेपदम् । ङित्त्वं वा । ङित्त्वाभावे गुणः । ङित्त्वे उवङ् ।

'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात्' ॥ इति ।

अजादेः । 'एकाचो द्वे' इति प्राप्तप्रथमद्विर्वचनापवादोयम् ।

---

१. और्णुविष्ट । और्णविष्ट $D_3$. २. Dropped $D_4$. ३. वाच्यः $D_1$. ४. द्वितीयावयवस्यै° $B_1$, $B_2$, P, $D_4$.

न न्द्राः संयोगादयः ॥६।१।३॥

द्वितीयस्यैकाचोवयवाः संयोगादयो नदरा द्विर्नोच्यन्ते। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनविथ। ऊर्णुनुविथ। ऊर्णुनुविव। ऊर्णविता। ऊर्णुविता।[६]

ष्टुञ् स्तुतौ।

तुरुस्तुशम्यमः सार्वधातुके ॥७।३।९५॥

एभ्यः पितो हलः सार्वधातुकस्य ईडागमो वा स्यात् ॥

---

न न्द्राः। द्वितीयस्यैकाचोवयवाना न्द्राणां तदन्तर्भावाद्विर्वचनं प्राप्तं प्रतिषिध्यते। नदरा। इति। नकारदकाररेफा इत्यर्थः। ऊर्णुनावेति। नकारस्य द्वित्वम्। ऊर्णुनविथ। ऊर्णुनुविथेति। 'विभाषोर्णोः' इति वा ङित्त्वम्। ऊर्णुनुवे। ऊर्णविता। ऊर्णुवितेति। वा ङित्त्वाद्गुणो-वङौ। ऊर्णुयात्। ऊर्णविषीष्ट। ऊर्णुविषीष्ट। ऊर्णविष्यति। ऊर्णु-विष्यति। ऊर्णविष्यते। ऊर्णुविष्यते।

ष्टुञ्। अनिट्।

तु। तुरिति सौत्रो धातुः। वृत्तिहिंसापूर्तिषु वर्तते। रु शब्दे। ष्टुञ् स्तुतौ। शम उपशमे। अम गतौ। शम्यमोः 'बहुलं छन्दसि' विकरणलुकि हलादिसार्वधातुकमनन्तरं स्यात्। शमीध्वम्। अभ्य-मिति। आपिशलास्तुरुस्तुशम्यमः सार्वधातुकाग्रहोपिदर्थस्तु छन्दसि इति पठन्ति। तन्मतेयं विधिः सर्वेषां छन्दस्येव स्यात्। 'नाभ्यस्त-स्याचि पिति सार्वधातुके' इत्यनुवृत्तावपि पुनः सार्वधातुकग्रहो पिदर्थः। स्तुवीतः। स्तुवीध्वम्। यद् वृत्तौ पितो हल इत्युक्तं तदर्वाचीनमतेन।

---

१. नकारदकाररेफाः संयोगादयो $D_1$. २. ऊर्णुनुविथ। ऊर्णुनविथ $D_3$. ३. Dropped $D_2$. ४. ऊर्णुविता। ऊर्णविता। $D_3$. ५. After it—ऊर्णुविष्यति। ऊर्णविष्यति $D_1$; ऊर्णुविता। ऊर्णविता $N_1$. ६. स्याद्वा C, $D_4$.

स्तवीति । [1]स्तौति । [2]अभिष्टौति । [3]अस्तवीत् । [4]अस्तौत् । न्यस्तावीत् । न्यष्टावीत् । [5]अस्तोष्ट । तुष्टोथ । तुष्टुव । स्तोता । [6] स्तो[7]षीष्ट ।

टुक्षु शब्दे । [8]क्षविता ।

---

तथोक्तं मुग्धबोधे । 'पिद्वस्यैम् ब्रुवो यङ्लुग्तुस्तोस्तुवा' इति । स्तवीति इति । गुणावादेशौ । स्तौतीति । 'उतो वृद्धिः—' इति वृद्धिः । अभिष्टौतीति । 'उपसर्गात् सुनोति—' इत्यादिना षत्वम् । स्तुतः । स्तुवन्ति । स्तुते । स्तुयात् । स्तुवीत । स्तौतु । स्तवीतु । स्तुताम् । अस्तवीत् । अस्तौत् । अस्तुत । न्यस्तावीत् । न्यष्टावीदिति । लुङ् । सिच् । 'स्तुसुधूञ्—' इति सिच् । इट् । सिचि वृद्धिः । 'सिवादीनाम्—' इति अड्व्यवायेपि वा षत्वमिति । अस्तोष्टेति । लुङ् । सिच् । आत्मनेपदत्वादिडभावः । तुष्टाव । तुष्टोथ । तुष्टुवेति । क्रादित्वादिडभावः । तुष्टुवे । स्तूयात् । स्तोष्यति । स्तोष्यते ।

टुक्षु । इतस्त्रयः परस्मैपदिनश्चत्वारः सेट्काः । क्षौति । अक्षावीत् । चुक्षाव । क्षूयात् । क्षविष्यति ।

---

१. Before it— 'उतो वृद्धिर्लुकि' $D_3$, $D_4$. २. 'उपसर्गात् सुनोति—' इति षः । अभिष्टौति । 'सिवादीनां वाड्व्यवायेपि' । न्यष्टौत् । अस्तौत् । अस्तवीत् । 'स्तुसुधूञ्भ्यः—' इतीट् । न्यस्तावीत् &c. $D_4$. ३. This and the next form dropped $D_1$, $D_3$, N. ४. In its place अस्तुत $D_2$. ५. अस्तोष्ट । तुष्टाव । स्तोषीष्ट $B_2$. ६. After this C has on the margin स्तविता । 'भूस्तुशुचि' इति वेट् ; स्तोता । स्तविता । स्तोषीष्ट । स्तोष्यति $D_1$; after स्तोता—'भूस्तुशुच्वस्त्यशूभ्यः परस्य तादेरार्धधातुकस्येडेति केचित् । स्तविता । स्तोषीष्ट N. ७. Dropped $D_3$. ८. क्षौति । क्षविता $D_1$.

रु शब्दे ।[1] रौति । रवीति । अरावीत्[2] । रविता । इड्वेत्येके ।[3] रोता ।[4]

णु स्तुतौ । नुरुस्त्विति[5] पाठाश्रयणादीड्वात्रेति केचित् । नौति । नवीति । नविता । एकीयमते वेट् । नोता ।[6]

ब्रूञ् व्यक्तायां वाचि ।

**ब्रुव ईट् ॥७।३।९३॥**

ब्रुवः परस्य पितो हलः सार्वधातुकस्य ईडागमः स्यात् ॥

---

रु । रौतीति । वृद्धिः । रवीतीति । 'तुरुस्तु—' इति वेट् । रुयात् । रौतु । रवीतु । अरौत् । अरवीत् । अरावीदिति । इट् । सिचि वृद्धिः । 'रुदुस्तु—' इति वेट् । अरौषीत् । रुराव । इड्वेत्येके इति । रुदुसुतुधातूनां लिटं विना इड्वेति केचिदिति । रोता । रूयात् । रविष्यति । रोष्यति ।

णु । पठितोप्ययं धातुः पुनः पठ्यते सार्वधातुके हलि केषांचिन्मतेनेड् भवतीति दर्शयितुम्[7] । नौतु । नवीतु । अनौत् । अनवीत् ।

ब्रूञ् ।

ब्रुवः । पित इत्यादि । पितो हलादेरित्यर्थः ।

---

१. 'उतो वृद्धिर्लुकि हलि' before it in C. २. अरौषीत् after it in $B_1$, $B_2$, $D_4$. ३. रोता इत्येके $B_1$, $B_2$, $D_2$. ४. रोता dropped $D_1$, $D_3$, $D_4$, $N_1$. ५. नुस्त्विति° $B_1$. ६. नोता dropped $D_1$, $D_2$, $D_4$; नोता before एकीयमते वेट् । $D_3$. ७. प्रदर्शयितुम् । $Bc_2$.

ब्रवीति[१] । ब्रूते ।

**ब्रुवः पञ्चानामादित आहो ब्रुवः ॥३।४।८४॥**

ब्रुवो लँडादिपञ्चानां[२] णलादि पञ्चादेशा वा स्युः ब्रुव आहादेशश्च ॥

आह । आहतुः । आहुः ।

**आहः स्थः ॥८।२।३५॥**

आहो हस्य थः स्यात् झलि ॥ चर्त्वम् । ब्रुव ईडिति[४] प्राप्ते आहो ब्रुव ईट् न । आत्थ । आहथुः । पक्षे सुगमम् ।

---

ब्रुवः । स्थानिषु लडादेशेषु तिबादिषु पञ्चानामादित इति संबन्धादादेशेष्वपि णलादिषु पञ्चत्वमादित्वं च स्यादित्यभिप्रेत्याह । **णलादि पञ्चादेशा** इति । ब्रुव आहादेशश्चेति संनियोगेनेति शेषः । ब्रुव इति पुनर्वचनं स्थान्यर्थमन्यथा हि प्रकृतत्वाण्णलादीनामेवाहादेशः स्यात् ।

आह । 'नहो धः' इति प्रकृतं धत्वं विहाय आदेशान्तरकरणं 'झषस्तथोर्धो धः' इत्यस्य निवृत्त्यर्थम् । **चर्त्वमिति** । 'खरि च' इति । **पक्षे सुगममिति** । प्रक्रियाविशेषाभावादित्यभिप्रायः ।

ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रवीषि । ब्रूथः । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः । ब्रूते । ब्रूयात् । ब्रुवीत । ब्रवीतु । ब्रूहि । अब्रवीत् । अब्रूत ।

---

१. After it—ब्रूते $B_1$, P; C; ब्रूते । ब्रुतः $D_4$. २. लडादेशानां पञ्चानां C; $B_2$, $D_2$. ३. आहश्चादेशः $D_1$. ४. ईडितीटि $D_1$. ५. ब्रुवश्च $B_1$, $D_1$, $D_3$.

## ब्रुवो वचिः ॥२।४।५३॥

ब्रुवो वे[1]च्यादेशः स्यादार्धधातुके ॥ इकार इत् । [2]अवोचत् । अवोचते[3] । उवाच ।[4] ऊचे ।

इत्यदादिप्रक्रिया ।

---

ब्रुवः । इकार इदिति । इदिव इत् । उच्चारणार्थ इति भावः । अवोचदिति । 'अस्यतिवक्ति—' इत्यङ् । 'वच उम्' इत्युमागमः । 'आद्गुणः' । अवोचतेति । आत्मनेपदे । उवाचेति । 'लिट्यभ्यासस्य' इति संप्रसारणम् । ऊचे इति । 'वचिस्वपि—' इति । वक्तासि । वक्तासे । उच्यात् । वक्षीष्ट । वक्ष्यति । वक्ष्यते ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलोदादिसंज्ञो गणोयम् ॥

---

१. वाचिरादेशः $D_1$. २. Before it—'अस्यतिवक्ति-' इत्यङ् । $D_4$. ३. After it—अवोचेताम् । अवोचन्त $D_1$; dropped $D_3$. ४. After it—उवाच $D_3$.

हु दानादनयोः ।

**जुहोत्यादिभ्यः श्लुः ॥२।४।७५॥**

जुहोत्यादेः परस्य शपः श्लुः स्यात् ॥ लुकोपवादः ।

**श्लौ ॥६।१।१०॥**

श्लौ सत्यनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः ॥ जुहोति । जुहुतः । 'अदभ्यस्तात्' । 'हुश्नुवोः—' इति यण् । जुह्वति । जुहुधि । जुहवाव । 'जुसि च' इति गुणः । अजुहवुः । अहौषीत् ।

---

हु । दानमत्र हविःप्रक्षेपः । अदनं भक्षणम् । इत आरभ्य ऋपर्यन्ताः षट् परस्मैपदिनः । त्रयोऽनिटः ।

**जुहोत्यादिभ्यः** । शबनुवर्तते । न यङ् । यङोऽनुवृत्तौ हि श्लु न । तत्र लुप्तेऽपि 'सन्यङोः' इति द्वित्वे सिद्धे 'श्लौ' इति व्यर्थं स्यात् । अतः शबेवानुवर्तत इत्यभिप्रेत्याह । शपः श्लुः स्यादिति । श्लुरिति प्रत्ययादर्शनस्य संज्ञा । 'प्रत्ययस्य लुक्श्लुलुपः' इति । **लुकोपवाद** इति । 'अदिप्रभृति—' इति प्राप्तस्य । **जुहोतीति** । गुणः । जुत्वम् । **जुहुत** इति । ङित्त्वाद्गुणाभावः । जुहोषि । जुहुथः । जुहुथ । जुहोमि । जुहुवः । जुहुमः । जुहुयात् । जुहोतु । **जुहुधीति** । 'हुझल्भ्यः—' इति हेर्धिः । **जुहवावेति** । लोडुत्तमद्विवचनम् । वस् । सलोपः । आट् । गुणावादेशौ । अजुहोत् । **अजुहवुरिति** । 'सिजभ्यस्त—' इति जुस् । **अहौषीदिति** । 'सिचि वृद्धिः—' इति वृद्धिः ।

---

१. जुहोषि । जुहोतु $B_2$. २. अजुहोत् । अजुहवुः $B_2$. ३. °नुवृत्तेः $Dc_1$, $Dc_3$, $Dc_4$.

**भीह्रीभृहुवां श्लुवच्च ॥३।१।३९॥**

एभ्यो लिट्याम् वा स्यात् आमि श्लाविव कार्यं च[१] ॥ जुहवामास । जुहाव । उवङ्[२] । जुहुवतुः ।

ञिभी भये । बिभेति[३] ।

**भियोन्यतरस्याम् ॥६।४।११५॥**

भिय ईकारान्तादेशो[४] वा स्यात् सार्वधातुके क्ङिति हलि ॥ बिभीतः[५] । बिभितः । बिभ्यति । बिभियात्[६] । बिभीयात् ।

---

**भीह्री** । ञिभी भये । ह्री लज्जायाम् । डुभृञ् धारणपोषणयोः । हु दानादानयोः । **हुवामिति** । सुपां सुपो भवन्ति । षष्ठी पञ्चम्यर्थे । **श्लुवदिति** । श्लाविव । 'तत्र तस्येव' इति सप्तमीसमर्थाद्वतिः । कार्यातिदेशश्चायम् । अत एवाह । **श्लाविव कार्यं चेति** । किं पुनस्तत् कार्यम् । द्वित्वमित्वं च । **जुहवामासेति** । 'कृञ्च—' इत्यस्त्यनुप्रयोगः । **जुहावेति** । आमभावे वृद्ध्यावादेशौ । द्वित्वम् । चुत्वम् । जुहोथ । जुहविथ । होता । हूयात् । होष्यति । अहोष्यत् ।

**ञिभी** । **बिभेतीति** । गुणः । द्वित्वम् । ह्रस्वः । 'अभ्यासे चर्च' इति भकारस्य बकारः ।

**भियः** । **क्ङितीति किम्** । बिभेति । ननु चात्रेत्वे जातेपि किं न स्यात् उच्यते । इत्वसामर्थ्याद् गुणो न भवेत् । **हलीति किम्** । **बिभ्यति** । अत्रापि इत्वविधानसामर्थ्यात् 'एरनेकाचः—' इति यण् न स्यात् । **बिभियात्** । **बिभीयादिति** । इत्वं वा । बिभेतु । बिभितात् । बिभीतात् ।

---

१. Dropped $D_3$. २. उवङ् dropped $D_1$. ३. Dropped $N_1$. ४. इकारान्ता° $D_4$. ५. बिभितः । बिभीतः $D_3$, $D_4$. ६. नश्यैत् $Dc_1$, $Dc_3$.

अबिभयुः । बिभयामास । बिभाय ।

ह्री लज्जायाम् । जिह्रेति[1] । जिह्रियति[2] । जिह्रयामास । जिह्राय ।[4]

पॄ पालनपूरणयोः ।

**अर्तिपिपर्त्योश्च ॥७।४।७७॥**

अनयोरभ्यासस्य इदन्तादेशः स्यात् श्लौ ॥[6] पिपर्ति ।

**उदोष्ठ्यपूर्वस्य ॥७।१।१०२॥**

ओष्ठ्यपूर्वस्य ऋत उत् स्यात् क्ङिति ॥ रपरत्वम् ।

---

अबिभेत् । अबिभिताम् । अबिभीताम् । अबिभयुरिति । 'सिजभ्यस्त—' इति झेर्जुस् । 'जुसि च' इति गुणः । अभैषीत् । बिभयामासेति । 'भीह्री—' इत्याम् । श्लुवत् कार्यं च । भेता । भीयात् । भेष्यति ।

ह्री । जिह्रेति । गुणः । द्वित्वम् । ह्रस्वत्वहलादिशेषचुत्वानि । जिह्रीतः । जिह्रियतीति । संयोगादित्वान्न यण् । इयङ् । जिह्रीयात् । जिह्रेतु । अजिह्रेत् । अजिह्रयुः । अह्रैषीत् । जिह्रयामास । आम् । श्लुवच्च । ह्रेता । ह्रीयात् । ह्रेष्यति । ऋ । सेट्कः ।

पॄ पालनपूरणयोः । अच्छन्दोर्थं वचनम् । छन्दसि तु 'बहुलं छन्दसि' इत्युत्तरसूत्रेण सिद्धत्वात् ।

अर्ति । ऋ गतौ ।

उदोष्ठ्य । ओष्ठ्यः पूर्वो यस्माद् ऋतस्तदन्तस्य धातोरङ्गस्योकारः स्यादित्यर्थः । ओष्ठ्योऽत्र धात्ववयव एव गृह्यते । तेन ऋ गतावित्यस्य समीर्णमिति स्यात् । पिपर्तीति । श्लुः । गुणः । रपरः । द्वित्वम् । इत्वम् । रपरत्वमिति । 'उरण् रपरः' इति ।

---

१. Before it—अबिभेत् $B_2$. २. C, $D_4$ have जिह्रीतः after it. ३. After it—जिह्रीयात् $D_4$. ४. After it—अह्रैषीत् $B_2$. ५. C has सति after it. ६. Dropped $Dc_1$. ७. आमि श्लुवच्च । $Bc_2$.

'ह[1]लि च' इति दीर्घः । पिपूर्तः । पिपुरति । पिपूर्यात् । [2]अपिपः । अपिपरुः । [3]अपारीत् । पपार । '[4]ऋच्छत्यताम्' ।[5] पपरतुः ।[6] [7]गुणत्वान्नैत्वम् ।[8] परिता । परीता । [9]पूर्यात् । ह्रस्वोपि पिपर्तिरस्ति । पिपृतः । पि[10]प्रति । पिपृयात् । पि[11]प्रतु । पर्ता । प्रि[12]यात् । 'रिङ्शयग्लिङ्क्षु' ।

---

दीर्घः । 'हलि च' इति । पिपूर्तः इति । इत्वम् । पिपुरतीति । उत्वे । 'अदभ्यस्तात् ।' पिपर्षि । पिपूर्थः । पिपूर्यादिति । लिङ् । पिपर्तु । पिपूर्ताद्वा । पिपूर्हि । अपिप इति । गुणः । रपरद्वित्वेत्वाडागमहल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यादि... 

---

ओहाक् त्यागे । जहा[1]ति ।

**जहातेश्च ॥६।४।११६॥**

जहातेरात ई[2]द्वा स्यात् सार्वधातुके क्ङिति हलि । जहितः ।

**ई हल्यघोः ॥६।४।११३॥**

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलि न तु घुसंज्ञ[3]स्य ॥ जहीतः ॥ 'श्नाभ्यस्तयोः–' इत्या[4]तो लोपः । जहति ।

**लोपो यि ॥६।४।११८॥**

जहातेरातो लोपः स्यात् सार्वधातुके ये[5] परे ॥ जह्यात् ।

---

ओहाक् । ककारः 'इश्च व्रीहि—' इति सामान्यग्रहणाविघातार्थः । अङ्कित इति । अभ्यासस्य दीर्घनिषेधार्थ इत्येके । इत आरभ्य चत्वारोऽनिटः । जहातीति श्लुः । द्वित्वम् । ह्रस्वः । चुत्वम् ।

जहातेः । इत्वापवाद ईत्वमारभ्यते । जहातेरिति निर्देशाज्जिहीतेर्न ।

ई हलि । ननु हल्ग्रहणे असत्यपि 'श्नाभ्यस्तयोरातः' इत्यालोपस्यानवकाशत्वादेवाचि आ[6]लोप ईत्वं बाधिष्यत इति व्यर्थो हल्ग्रहः । नैवम् । असति हल्ग्रहणे वचनाद् द्वयं न स्यात् । घुसंज्ञकेष्वेवा[7]लोपः स्यात् । तस्माद्धलीति वाच्यम् । जहित इति । इत्वम् । जहीतः । द्वित्वादि । जहतीति । 'अदभ्यस्तात्' । जहासि । जहिथः । जहीथः । जह्यादिति । विधिलिङ् ।

**जहातु** । जहितात् । जहीताद्वा । जहतु ।

---

१. Dropped $D_4$. २. इत् स्याद्वा $D_3$. ३. °संज्ञकस्य $D_3$, $D_4$. ४. °त्यालापः $D_3$, $D_4$. ५. यकारे $D_3$. ६. आल्लोप $Bc_2$, ७. °वाल्लोप $Bc_2$.

**आ च हौ ॥६।४।११७॥**

जहातेर्हौ परे आकारान्तादेशो [1]स्याद्वा । पक्षे [2]ईच । जहाहि । जहिहि । जहीहि ।[3] [4]हेयात् ।

ऋ गतौ । 'अर्तिपिपर्त्योः' इतीत्वम् । अभ्यासस्यासवर्णे । इयर्ति । [5]ईयृतः । [6]इ्यति । [7]ईयृवः । इयृयात् । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । ऐयरम् । आर्षीत् । [8]आरत् । [9]आर ।

---

आ च हौ । चकार इत्वान्यतरस्यांग्रहणयोरनुकर्षणार्थ इत्यभिप्रेत्याह । जहातेरित्यादि । जहितम् । जहीतम् । अजहात् । अजहिताम् । अजहीताम् । अजहुः । अहासीत् । जहौ । हाता । हेयादिति । 'एर्लिङि' इत्येत्वम् । हास्यति । अहास्यत् ।

ऋ । इयर्तीति । गुणः । रपरः । द्वित्वम् । इयृतः । गुणाभावः । इय्रति । 'अदभ्यस्तात्' । इयर्षि । इयृथः । इयृथ । इयर्मि । इयृवः । इयृमः । इयृयात् । इयृयाताम् । इयर्तु । इयृताद्वा । इयराणीति । लोडुत्तमैकवचनम् । 'मेर्निः' । आट् । गुणः । रपरः । इयराव । ऐय इति । लङि ऋत् इति स्थिते । गुणः । द्वित्वम् । इय् । आट् । वृद्धिः । हलङ्यादिलोपः । विसर्गः । ऐयरुरिति । जुस् । गुणः । ऐयः । ऐयृतम् । ऐयृत । ऐयरम् । ऐयृव । आर्षीदिति । ऋसृभ्यामङ् वेति केचिदिति । अङभावे सिचि वृद्धिः । आरदिति । 'सर्तिशास्ति–' इत्यङ् ।

---

१. वा स्यात् $D_4$, N, P, C. २. इ ; ई च $D_2$ $D_4$ ; पक्षे ई च $D_3$. ३. After it–अहासीत् P, N. ४. Before it—'एर्लिङि' $D_4$. ५. Dropped $D_3$, $N_1$. ६. Dropped $D_1$, $D_3$, $N_1$. ७. Before it—इयर्षि । इयृथः । and after it इयृमः $D_2$. ८. Before it C has 'ऋसृभ्यामङ्' इति अङ् ; after it—अर्यात् । अर्तात् । अर्ता । अरिष्यति । आरिष्यत् $B_2$; before it—'सर्तिशास्ति—' इत्यङ् । 'ऋदृशोऽङि गुणः' । $D_3$; before it सृऋभ्यामङ् वेति केचित् । $D_4$; and has आरतः after it $D_4$. ९. Dropped $D_1$, $D_3$, $D_4$, $N_1$.

णिजिर् शौचपोषणयोः ।

**णिजां त्रयाणां गुणः श्लौ ॥७।४।७५॥**

निजविजविषामभ्यासस्य गुणः स्यात् श्लौ ॥ नेनेक्ति । नेनिक्ते[1] । नेनिक्तः । नेनिग्धि ।

**नाभ्यस्तस्याचि पिति सार्वधातुके ॥७।३।८७॥**

लघूपधस्याभ्यस्तस्य गुणो न स्यादचि पिति सार्वधातुके[2] ॥ नेनिजानि । नेनिजाव । नेनिजाम[3] । अनेनेक् । अनेनिजुः ।

---

'ऋदृशोऽङि गुणः' । आर । 'ऋच्छति—' इति गुणः । आरुः । 'इडत्त्यर्ति—' इतीट् । आरिथ । अर्ता । 'गुणोर्ति—' इति गुणः । अर्यात् । अरिष्यति ।

णिजिर् । इत आरभ्य त्रावुभयपदिनौ । णिजाम् । णिजिर् शौचपोषणयोः ।

विजिर् पृथग्भावे । विष्ऌ व्याप्तौ । त्रिग्रहणं 'भृञामित्' इत्येवमर्थम् । एषां हि समाप्त्यर्थं वृदिति पठ्यत एव । नेनेक्तीति । श्लुः । द्वित्वम् । 'चोः कुः ।' नेनिजति । नेनेक्षि । नेनिक्ते । नेनिजाते । नेनिज्यात् । नेनिजीत । नेनेक्तु । नेनिग्धीति । 'हुझल्भ्यो हेर्धिः ।

नाभ्यस्तस्य । अभ्यस्तस्येति किम् । वेदानि । अचीति किम् । नेनेक्ति । अनेनेक् । लङ् । गुणः । द्वित्वम् । अभ्यासगुणः । हल्ङ्यादिलोपः । अट् । 'चोः कुः' । 'वावसाने' । अनेनिजुरिति ।

---

१. नेनिक्ताम् $N_1$, after it नेनिजाति $D_3$. २. सार्वधातुकेऽचि पिति । $D_3$, $D_4$. ३. $B_1$ and P, $D_1$, $D_4$ drop it.

अनेनिजम् । अनिजत् । 'इरितो वा' इति अङ् वा । अनैक्षीत् ।[1] एवं विजिर् पृथग्भावे । वेवेक्ति । वेविक्तः ।[2][3]

विष्लृ व्याप्तौ । वेवेष्टि । वेविष्टे । लृदित्वादङ् । वेति केचित् ।[4] अविषत् । अविक्षत् ।

जन जनने । जजन्ति ।

**जनसनखनां सञ्झलोः ॥६।४।४२॥**

एषामाकारोऽन्तादेशः स्यात् झलादौ सनि क्ङिति च झलि ॥

---

'सिजभ्यस्त—' इति जुस् । **अनेनिजमिति** । 'नाभ्यस्तस्य—' इति गुणाभावः । अनेनिक्त । अनेनिजत । अनैक्षीत् । आनिक्त । निनेज । निनिजे । नेक्ता । निज्यात् । निक्षीष्ट । नेक्ष्यति । नेक्ष्यते ।

**विष्लृ** । **वेवेष्टीति** । श्लुः । गुणः । द्वित्वम् । अभ्यासगुणः । ष्टुत्वम् । वेविष्टे । वेविष्यात् । वेविषीत । वेवेष्टु । वेविड्ढि । वेविष्टाम् । अवेवेट् । अवेविष्ट । **लृदित्वादङिति** । 'पुषादि—' इत्यनेन । **वेति केचिदिति** । विषिरयमुदित् न लृदित् तेन विषेर्नाङिति केचित् प्रतिपन्ना इत्यर्थः । यथाह **क्षीरतरङ्गिण्यां क्षीरस्वामी** । अविषत् । ऊदिदित्येके । **अविक्षदिति** । क्सः । अविक्षत । विवेष । विविषे । वेष्टा । विष्यात् । विक्षीष्ट । वेक्ष्यति । वेक्ष्यते । अवेक्ष्यत् । अवेक्ष्यत ।

**जन** । अयं परस्मैपदी सेट्कश्च । **जजन्तीति** । श्लुः । द्वित्वम् ।

**जनसन** । क्ङितीत्यनुवर्तते । झल्ग्रहणं च सन्विशेषणार्थमनुवर्तत इत्यभिप्रेत्याह । **झलादौ सनि क्ङिति च** । **झलीति** । 'सनीवन्तर्ध—' इति पक्षे इडागमः । तस्मादत्र सनोऽत्यर्थमेव सन्ग्रहणम् । अन्ययोस्तु

---

१. अनैक्षीत् । अनिजत् P ; $B_1$ drops from 'इरितो वा' इति to अनैक्षीत् ; $D_1$, $D_4$ drop from अनिजत् to अनैक्षीत् ; $D_2$ has 'इरितो वा' । अनैक्षीत् । अनिजत् । ; $N_1$ drops 'इरितो वा–' इति अङ् वा । ; $D_3$ has 'वदव्रज—' इति वृद्धिः । अनैक्षीत् । अनैक्ताम् । अनैक्षुः ।. २. From एवं to वेविक्तः dropped $D_1$, $D_3$, $D_4$. ३. वेविक्ते $D_2$. ४. Dropped $B_2$, $D_1$, $D_3$, $D_4$.

जजातः । 'गमहन–' इत्युपधालोपः । जज्ञति । 'ईड्जनोर्ध्वे च' इतीट् । जजनिषे । जजन्मि । जजन्वः[1] । 'ये विभाषा' । जजन्यात् । जजायात् ।[2]

डुदाञ् दाने । 'नेर्गद–'[3] इति णत्वम् । प्रणिददाति । 'श्नाभ्यस्त–' इत्यातो[4] लोपः । दत्तः । ददति । दद्वः । दत्ते[5] ।

---

झलादौ क्ङित्येव सनोतेर्विप्रतिषेधात् । आत्वेन नलोपो बाध्यते । सिषासति । आभाच्छास्त्रीये असिद्धत्वे विप्रतिषेधः स्यादिति हल्ग्रहणेन ज्ञापितम् । जज्ञतीति । द्वित्वम् । 'अदभ्यस्तात्' । 'स्तोश्चुना श्चुः' । जञोर्ज्ञः । जजाथ । जजन्व । इति अझलादित्वान्नाकारः । जजन्तु । जजाताद्वा । जज्ञतु । जजाहि । जजनानि । अजजन् । अजजाताम् । अजज्ञुः । अजनीत् । अजानीत् । जजान । जज्ञतुः । जनिता । जन्यात् । जायात् । जनिष्यति । अजनिष्यत् ।

डुदाञ् । इत आरभ्य गणान्ता अनिटः । भृञन्ता उभयपदिनः । प्रणिददातीति । श्लुः । द्वित्वम् । ह्रस्वः । 'नेर्गदनद–' इति णत्वम् । दत्त इति । 'खरि च' इति चर्त्वम् । ददतीति । 'अदभ्यस्तात्' इत्यत् । ददासि । दत्थः । दत्थ । ददामि । दद्वः । दद्मः । दत्ते इति । 'श्नाभ्यस्तयोः–' इत्यातो लोपः । दद्यात् । ददीत । ददातु । दत्ताम् ।

---

१. जजन्मः N. २. After this—अजानीत् । अजनीत् । जजान । जन्यात् । जनिता $B_2$. ३. नेर्ग°—णत्वम् dropped $D_2$, $D_3$, $D_4$, $N_1$. ४. ... लोपः $N_1$, $D_3$. ५. C has दद्मः after it; $D_4$ drops दद्वः.

'ध्वसोः[1]—' इत्येत्वाभ्यासलोपौ । देहि । अददात् । अदात्[2] । 'स्थाघ्वोरिच्च[3]'। अदित[4] । अदिषाताम् । देयात् ॥

डुधाञ् धारणपोषणयोः । प्रणिदधाति[5] । अन्तर्दधाति । श्रद्दधाति[6] ।

**दधस्तथोश्च** ॥८।२।३८॥

द्विरुक्तस्य झषन्तस्य धातोर्बशो भष् स्यात् तथयोः स्ध्वोश्च परतः । वचनसामर्थ्यादालोपस्य न स्थानिवत्ता[7] ।

---

अददादिति । लङ् । अदत्त । अदात् । लुङ् । 'गातिस्था—' इति सिचो लुक् । अदितेति । लुङ् । त । सिच् । ददौ । ददे । दाता । देयादिति । 'एर्लिङि' इत्येत्वम् । दासीष्ट । दास्यति । दास्यते । अदास्यत् । अदास्यत ।

डुधाञ् । प्रणिदधातीति । 'नेर्गद—' इति णत्वम् । श्रद्धधातीत्यादि । श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्येति उपसर्गत्वात् प्राक् प्रयोगः ।

दधः । दध इति कृतद्विर्वचनस्य धाञो निर्देशान्न[8] दध धारणे इत्यस्य । व्याख्यानतो विशेषप्रतिपत्तिः । स्ध्वोरिति । सकारे ध्वशब्दे च परत इत्यर्थः । वचनसामर्थ्यादिति । दधा तस् इति स्थिते 'श्नाभ्यस्तयोः—' इत्यालोपे सति 'दधस्तथोः—' इति भष्भावे क्रियमाणे 'अचः परस्मिन्—' इत्यालोपस्य स्थानिवद्भावः प्राप्नोति । तस्मिंश्च सति वचनमनर्थकं स्यात् । न ह्यालोपं विना झषन्तो धाञस्ति । अतः 'दधस्तथोश्च' इति वचनसामर्थ्यात् स्थानिवत्त्वं नेत्यभिप्रायः । ननु 'झलो झलि' इत्यतः 'झलि' इति वर्तते । 'झषन्तस्य' इति च । न च धाञस्तथाभ्यामन्यो झलस्ति । तस्मात् 'तयोः' इति न वक्तव्यम् ।

---

१. 'ध्वसोरेत्वा°' $N_1$. २. Dropped $D_1$, $D_3$; before it—'गातिस्था—' इति सिचो लुक् । $D_4$. ३. Before it—सिचि $D_1$. ४. Before it—'ह्रस्वादङ्गात्' $B_2$. ५. श्रद्दधाति । प्रणिदधाति $D_4$. ६. Dropped P, C, $B_1$, $B_2$. ७. स्थानिवत्त्वम् $B_2$, $D_4$. ८. निर्देशो न दध $Bc_2$.

धत्तः ।[1] धत्थः । धत्से । धद्ध्वे । धेहि । अधित । धेयात् ॥

डुभृञ् धारणपोषणयोः ।

**भृञामित्** ॥७।४।७६॥

भृञ् माङ् हाङ् एषामभ्यासस्येत् स्यात् श्लौ ॥ बिभर्ति । बिभृतः ।[2] बिभृध्वे[3] । अबिभः । अबिभरुः । अभार्षीत् ।

---

उच्यते । स्ध्वोरित्यस्यानन्तर्यात् स्ध्वोरेव परतोयमादेशो विज्ञायेतेति तथोरित्युक्तम् । चकारः स्ध्वोरनुकर्षणार्थः । झष इति किमनुवर्तते । दधाति । धत्त इति । तस् । द्वित्वम् । आलोपः । दधति । दधासि । धत्थ इति । थसि पूर्ववत् । **धत्से** इति । आत्मनेपदम् । आलोपः । भष् । धद्ध्वे इति । भष् । दध्यात् । दधीत । दधातु । धत्ताद्वा । **धेहीति** । 'घ्वसोरेत्—' इत्येत्वाभ्यासलोपौ । अदधात् । अधत्त । अधात् । **अधितेति** । लुङ् । 'स्थाघ्वोरिच्च' । इतीदन्तादेशः । सिचः कित्त्वम् । 'ह्रस्वादङ्गात्' इति सिचो लोपः । दधौ । दधे । धाता । **धेयादिति** । 'एर्लिङि' इत्येत्वम् । धासीष्ट । धास्यति । धास्यते ।

**डुभृञ्** ।

**भृञा** । डुभृञ् धारणपोषणयोः । माङ् माने । ओहाङ् गतौ । एतेषामेव ग्रहः त्रयाणामित्यनुवृत्तेर्लभ्यते । **बिभर्तीति** । लट् । श्लुः । गुणः । रपरः । द्वित्वम् । इत्वम् । 'अभ्यासे चर्च' इति भस्य बः । **बिभृत** इति । ङित्त्वाद्गुणाभावः । **बिभ्रतीति** । 'अदभ्यस्तात्—' इत्यत् । बिभृते । **बिभृध्वे** इति । लडात्मनेपदस्य मध्यमबहुवचनम् । एत्वम् । बिभृयात् । बिभ्रीत । बिभर्तु । बिभृताम् । **अबिभः** इति । लङ् । श्लुः । गुणः । रपरः । द्वित्वम् । अभ्यासेत्वम् । 'हल्ङ्याब्' इति तिलोपः । अट् । **अबिभरुरिति** । 'सिजभ्यस्त—' इति झेर्जुस् । 'जुसि च' इति गुणः । रपरः । अबिभृत । **अभार्षीदिति** । लुङ् ।

---

१. After it—दधाति । दधासि $D_3$. २. After it—बिभ्रति । बिभृथः P, C, $B_1$, $B_2$. ३. Dropped C.

अभृत । बिभरामास । बभार । बभर्थ । बभृव ।[२] भर्ता ।[३]

माङ् माने शब्दे च । ईत्वम्[४] । प्रणिमिमीते[५] । अचि[६] आलोपः । मिमाते । मिमते । अमास्त । एवं[७] ओहाङ् गतौ ।

इति ह्वादिप्रक्रिया ।

---

सिच् । सिचि वृद्धिः । अभृतेति । आत्मनेपदम् । 'ह्रस्वादङ्गात्' इति सिचो लुक् । बिभरामासेति । 'भीह्रीभृहुवाम्—' इत्याम् । श्लुवच्च । बभारेति । आमाभावे द्वित्वादि । बभर्थ । बभृवेति । क्रादित्वादिडभावः । भ्रियात् । भृषीष्ट । भरिष्यति । भरिष्यते ।

माङ् । इतो द्वावात्मनेपदिनौ । ईत्वमिति । 'ई हल्यघोः' इत्यनेन । प्रणिमिमीते इति । द्वित्वम् । अभ्यासेत्वम् । 'नेर्गद—' इति णत्वम् । अचि आलोपः । 'श्नाभ्यस्तयोः—' इत्यनेन । मिमीत । मिमीताम् । अमिमीत । अमास्तेति । लुङ् । इडभावः । ममे । माता । मासीष्ट । मास्यते । एवं ओहाङ् । जिहीते । जिहाते । जिहते । जिहीत । जिहीताम् । अजिहीत । अहास्त । जहे । हाता । हासीष्ट । हास्यते । अहास्यत ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ॥
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलो ह्वादिसंज्ञो गणोयम् ॥

---

१. Dropped $D_1$, $D_3$, P, C, $B_1$, $B_2$. २. After it— भृम D ३. P has भृषीष्ट after it; $D_1$ has after it—भ्रियात् । भरिष्यति. ४. 'ई हल्यघोः' इतीत्वम् $D_1$. ५. मिमीते $D_4$. ६. आचि लोपः $N_1$. ७. Dropped $N_1$. ८. आल्लोपः $Bc_2$.

[1]दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुति[2]मोदमदस्वप्नकान्तिगतिषु ।

**दिवादिभ्यः श्यन् ॥३।१।६९॥**

दिवादिभ्यः श्यन्प्रत्ययः स्यात् कर्तरि सार्वधातुके । शपोपवादः । श्नावितौ । 'हलि च' इति दीर्घः । दीव्यति ।[3]

षिवु तन्तुसन्ताने । निषीव्यति । न्यषेवीत्[4] । 'सिवादीनाम्—' इति वा षत्वम्[5] । न्यसेवीत् ।

---

**दिवु** । व्यवहारः क्रयादिः ।

इत आरभ्य ञिमिदन्ताश्चतुर्विंशतिः परस्मैपदिनः । पञ्च सेट्काः । **दिवादिभ्यः** । **शपोपवाद** इति । तस्य प्राप्तावेवास्यारम्भात् । **श्नावितावि**ति । शकारः सार्वधातुकसंज्ञार्थः । 'लशक्वतद्धिते' इतीत् । नकारः 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तार्थः । 'हलन्त्यम्' इतीत् । **दीव्यतीति** । लट् । तिप् । दीव्येत् । दीव्यतु । अदीव्यत् । अदेवीत् । दिदेव । देविता । दीव्यात् । देविष्यति । अदेविष्यत् ।

**षिवु** । **निषीव्यतीति** । 'धात्वादेः षः सः' । तिप् । श्यन् । 'हलि च' इति दीर्घः । 'परिनिविभ्यः सेव—' इति षत्वम् । सीव्येत् । सीव्यतु । असीव्यत् । **न्यषेवीत्** । **न्यसेवीदिति** । लुङ् । सिच् । इट् । ईट् । **सिवादीनामिति** । अड्व्यवायेपि वा षः । सिषेव । सेविता । सीव्यात् । सेविष्यति । असेविष्यत् ।

---

१. दिव् $D_2$. २. °स्तुतिकान्तिगतिषु $D_1$, $D_3$, $D_4$, $N_1$. ३. After it— अदेवीत् $B_2$, $D_1$. ४. Before it— 'सिवादीनामड्व्यवायेपि' $D_4$. ५. P and $B_1$, $D_2$, $D_3$, $N_1$ drop 'सिवादीनाम्—' इति वा षत्वम्.

नृती गात्रविक्षेपे । नृत्यति । ङित्वान्न गुणः ।

**सेसिचि कृतचृतच्छृदतृदनृतः ॥७।२।५७॥**

एभ्यः परस्य सकारादेरार्धधातुकस्य सिज्वर्जितस्येड्वा स्यात् ॥ नर्तिष्यति । नर्त्स्यति । सिचि तु अनर्तीत् ।

त्रसी उद्वेगे । 'वा भ्राश—' इति श्यन्वा । त्रस्यति । त्रसति । तत्रास । 'वा जॄभ्रमु—' इत्येत्वं वा । तत्रसतुः । त्रेसतुः ।

---

**नृती** । गात्रविक्षेपे । गात्रे विक्षेपो नाट्यम् । 'यस्य विभाषा' इति निष्ठायामनिट्त्वे सिद्धे ईदित्वं यङ्लुगन्तार्थम् । नरीनृतः । नृत्यतीति । श्यन् । ङिन्त्वान्न गुण इति । 'सार्वधातुमपित्' इति । श्यनो ङिन्त्वात् 'क्ङिति च' इति लघूपधगुणनिषेधे इत्यर्थः । नृत्येदित्यादि । ननर्त । ननृततुः । नर्तिता । नृत्यात् ।

**सेसिचि** । सइत्यकार उच्चारणार्थः । 'असिचि' इति निषेधात् । तेन स्येऽपि स्यात् । कृती छेदने । तुदादिः । कृती वेष्टने । रुधादिः । द्वयोरपि ग्रहणम् । विशेषानुपादानात् । चृती हिंसाग्रन्थयोः । उछृदिर् दीप्तिदेवनयोः । उतृदिर् हिंसानादरयोः । नृती गात्रविक्षेपे । सर्वेषां नित्यमिटि प्राप्ते विकल्पः । नर्तिष्यतीति । लृट् । 'स्यतासि' इति स्यः । गुणः । इट् । नर्त्स्यतीति । इडभावे रूपम् । गुणः । अनर्तीदिति । लुङ् । सिच् । 'आर्धधातुकस्य' इतीट् । ईट् । सिलोपः ।

**त्रसी** । उद्वेगो भयम् । त्रसतीति । शप् । त्रस्येत् । त्रसेदित्यादि । अत्रासीत् । अत्रसीत् । तत्रासेति । णल् । वृद्धिः । द्वित्वम् । 'हलादिः शेषः' । त्रेसिथ । तत्रसिथ । त्रसिता । त्रस्यात् । त्रसिष्यति ।

---

१. प्रनृत्यति P, C, N, $B_1$, $B_2$. २. सिज्वर्ज° $D_3$, $D_4$. ३. C, $D_3$ drop सिचि तु. ४. After it—ननर्त $B_2$. ५. भ्राशेति $D_1$, $D_2$. ६. यङ्लुगर्थम् $Bc_2$, $Dc_3$. ७. सेपि $Dc_3$. ८. मन्थयोः $Bc_2$; ग्रन्थनयोः $Dc_3$.

जॄष् वयोहानौ । 'ऋत इद्धातोः' । जीर्यति । 'जॄस्तम्भु–' इत्यङ् वा । अजरत् । अजारीत् । जजरतुः । जेरतुः । जरिता । जरीता ।[4]

शो तनूकरणे ।

**ओतः श्यनि ॥७।३।७१॥**

श्यनि परे ओकारस्य लोपः स्यात् ॥ श्यति । 'विभाषा घ्राधेट्–' इति सिचो वा लुक् । अशात् । अशासीत्[6] । शायात् । एवं छो छेदने । षोन्तकर्मणि । अध्यवस्यति । प्रणिष्यति ।

---

जॄष्[1] । जीर्यतीति । 'हलि च' इति दीर्घः । जीर्येत् । अजरदिति । 'ऋदृशोऽङि गुणः' इति गुणः । अजारीदिति । अङभावे रूपम् । सिचि वृद्धिः । जजार । जजरतुरिति । 'ऋच्छत्यॄताम्' इति गुणः । जेरतुरिति । 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपौ वा । जरिता । जरीतेति । लुट् । तासिः । इट् । गुणः । रपरः । 'वॄतो वा' इति वा इटो दीर्घः । जीर्यात् । जरिष्यति । जरीष्यति । अजरिष्यत् । अजरीष्यत् ।

शो ।

इत आरभ्य श्लिषन्ता अष्टावनिटः । श्यतीति । लट् । तिप् । श्यन् । श्येत् । श्यतु । अश्यत् । अशासीदिति । 'आदेच उपदेशेऽशिति' इत्यात्वम् । 'यमरम—' इतीट्सकौ । शशौ ।[7] शाता । शायादिति । आशीर्लिङ् । शास्यति । अशास्यत् । एवं छो । 'ओतः श्यनि' इति लोपः । छ्यति । छ्येत् । छ्यतु । अच्छ्यत् । 'विभाषा घ्राधेट्—' इति वा सिचो लुक् । अच्छात् । 'यमरम—' इतीट्सकौ । अच्छासीत् । चच्छौ । छाता । छास्यति । अच्छास्यत् । षो । अन्तकर्म विनाशः । प्रणिष्यतीति । ओलोपः । 'उपसर्गात् सुनोति—' इत्यादिना

---

१. जृष N₁. २. Before it—'ऋदृशोऽङि गुणः' D₁. ३. Before it—'वॄतो वा' इति दीर्घो वा D₁. ४. After it—जीर्यात् D₁. ५. C drops it. ६. Dropped D₁, D₃, D₄. ७. After it—शशिथ । शशाथ Bc₂.

न्यषात् । न्यषासीत् । सेयात् ॥ दोवखण्डने । प्रण्यदात् । देयात् ।[१]

राध संसिद्धौ । राध्यति । अरात्सीत् । [२]अराद्धाम् ।

**राधो हिंसायाम् ॥६।४।१२३॥**

हिंसार्थस्य राधेरेत्वाभ्यासलोपौ स्तः[३] किति लिटि सेटि थलि परे । विकल्पोत्रेति केचित् । रे[५]धतुः । रराधतुः । रेधिथ । [६]रराधिथ । हिंसायां किम् । आ[७]रराधतुः ।

---

षः। 'नेर्गद—' इति णत्वम् । न्यषादिति । एच आत्वम् । लुङ् । सिच् । 'विभाषा घ्रा—' इति वा सिचो लुक् । 'प्राक् सितादड्व्यवायेपि' इति वा षः । न्यषासीदिति । इट्सकौ । ससौ । साता । सेयादिति । 'एर्लिङि' इत्येत्वम् । सास्यति । दो । द्यति । प्रण्यदादिति । 'गातिस्था—' इति सिचो लुक् । 'नेर्गद—' इति णत्वम् । ददौ । दाता । देयादिति । 'एर्लिङि' इत्येत्वम् । दास्यति ।

राध । राध्यतीति । राधोकर्मकावृद्धावेवेति धातुसूत्रात् वृद्धयर्थे श्यन् । अन्यत्र श्नुरेव । राध्नोत्योदनमित्यादौ । अरात्सीदिति । लुङ् । सिच् । 'खरि च' इति चर्त्वम् । अराद्धामित्यादि । रराध ।

राधः । यद्यप्ययं हिंसायां न पठ्यते तथाप्यनेकार्थत्वाद्धिंसायाम् । अत इत्येतदिहोपस्थितं तपरत्वकृतं कालविशेषमपास्य । संभवादवर्णमात्रं बोधयति । अथवा 'आभ्यस्तयोरातः' इत्यतः 'आतः' इत्यनुवर्तते । अथवा एकहल्मध्ये यः स स्थानी भविष्यतीति व्याख्येयम् । विकल्प इति । तथोक्तं मुग्धबोधे । 'जॄ वमभ्रमत्रसफणादिर्विधार्थराधां तु वा' इति । रेधिथेति । क्रादिनियमादिट् । राद्धा । राध्यात् । रात्स्यति । अरात्स्यत् ।

---

१. Dropped $D_1$, $D_2$, $D_4$. २. Dropped $D_3$; before it—'झषस्तथोर्धोधः' $D_1$. ३. वा स्तः C. ४. थलि च परे $D_3$, $D_4$, N. ५. Dropped $D_1$, $B_1$, N. ६. For it—रराध । रेधतुः $B_2$. ७. रराधतुः N. ८. बाधार्थं $Dc_3$.

व्यध ताडने । 'ग्रहिज्या–' इति संप्रसारणम् । विध्यति । विव्याध । विविधतुः ।[1]

पुष पुष्टौ । 'पुषादि–' इत्यङ् । अपुषत् ।

श्लिष आलिङ्गने । पुषाद्यङ् । अश्लिषत् ।

**श्लिष आलिङ्गने ॥३।१।४६॥**

श्लि[3]षश्च्लेः[2] क्सः स्यादालिङ्गनेर्थे ॥ अश्लिक्षत् कन्यां[4] देवदत्तः । आलिङ्गने किम् । अश्लिषज्[5]जतु काष्ठम् ।

रध हिंसायाम् । रध्यति । पुषादित्वादङ् । 'रधिजभोः–' इति नुम् । अरन्धत् । ररन्ध[6] । ररन्धतुः ।

---

**व्यध** । विध्यतीति । तिप् । श्यन् । 'संप्रसारणाच्च' इति पूर्वरूपत्वम् । विध्येत् । विध्यतु । अविध्यत् । अव्यात्सीत् । **विव्याधेति** । लिट् । द्वित्वम् । 'लिट्यभ्यासस्य' इति संप्रसारणम् । **विविधतुरिति** । 'ग्रहिज्या—' इति संप्रसारणम् । व्यद्धा । विध्यात् । व्यत्स्यति । अव्यत्स्यत् ।

**पुष** । पुष्यति । पुष्येत् । पुष्यतु । अपुष्यत् । पुपोष । पोष्टा । पुष्यात् । पोक्ष्यति । अपोक्ष्यत् ।

**श्लिष** । श्लिष्यति । श्लिष्येत् । श्लिष्यतु । अश्लिष्यत् । **अश्लिषदिति** । जतु काष्ठेनेति शेषः ।

**श्लिषः** । आलिङ्गनमुपगूहनम् । प्राण्याश्लेष इति यावत् । **अश्लिक्षदिति** । कन्यां देवदत्त इति शेषः । शिश्लेष । श्लेष्टा । श्लिष्यात् । श्लेक्ष्यति । अश्लेक्ष्यत् ।

**रध** । चकारात् संराद्धौ पाके इत्यर्थः । रध्येत् । **ररन्धतुरिति** । नुमि कृते संयोगान्तत्वात् कित्त्वं नेति नलोपो न ।

---

१. After this B and $D_2$ have विव्यधिथ । विव्यध; $D_1$ has in its place व्यद्धा । व्यत्स्यति ।. २. Before it–आलिङ्ग्यते इत्यालिङ्गनं सचेतनानामाश्लेषस्तस्मिन् $D_2$. ३. C, $N_1$ drop च्लेः; आलिङ्गनेर्थे च्लेः क्सः स्यात् $D_1$. ४. कन्यकां $B_1$ ; $D_1$, $D_3$, $D_4$ drop from कन्याम् to काष्ठम्. ५. °ज्जतु च काष्ठम् $N_1$. ६. Dropped $B_2$, $N_1$. ७. काष्ठं चेति $Bc_2$ ; जतुना काष्ठं चेति $Dc_3$.

**रधादिभ्यश्च ॥७।२।४५॥**

रधनशतृपदृपद्रुहमुहस्नु[1]हस्निह एभ्यो वलादेरार्धधातुकस्य इड्वा स्यात् ॥

**नेड्यलिटि रधेः ॥७।१।६२॥**

लिड्वर्जे इटि रधेर्नुम् न स्यात् ॥ रधिता । रद्धा । अलिटि किम् । ररन्धिव । रेध्व । अत्र परत्वादिड्वा[2] । केचित्तु[3] क्रादिनियमात् नित्यमाहुः ।

तृप[4] प्रीणने । तृप्यति । अतृप्यत्[5] । अतर्पीत् । अताप्सीत् ।

---

रधादिभ्यः । रधि[6] हिंसासंराध्योः । णश अदर्शने । तृप प्रीतौ[7] । दृप हर्षणमोचनयोः । द्रुह जिघांसायाम् । मुह वैचित्त्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । तृप्यतिदृप्यत्योरनिट्त्वात् इण्निषेधे[8] शेषाणां नित्यमिटि प्राप्ते विकल्पार्थं वचनम् । रेध्वेति । लिडुत्तमः द्विवचनं च । 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ । अत्रेत्यादि । तथोक्तं काशिकायां वृत्तौ । 'क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्ति । अपरे पुनराहुः । पूर्वं विधेरिट्प्रतिषेधविधानसामर्थ्यात् बलीयस्त्वं प्रतिषेधनियमस्येति नित्यमिट् भविष्यति । ररन्धिमेत्येव' इति । रध्यात् । रत्स्यति । रन्धिष्यति ।

---

१. °ष्णुहष्णिह $D_3$. २. After it—इति $D_4$. ३. तु dropped $D_4$. ४. तृप् $N_1$. ५. $B_1$ has अतृपत् । अताप्सीत् । अत्राप्सीत् । ततर्पिथ for अतृप्यत्··अतृपत्; $D_1$, $D_3$, N, have अतृपत् for अतृप्यत्; 'पुषादि-' इत्यङ् । अतृपत् । अतर्पीत् । अत्राप्सीत् । अताप्सीत् । तृपदृपो° $D_4$. ६. रध $Bc_2$, $Dc_3$. ७. प्रीणने $Dc_3$. ८. After it—प्राप्ते $Bc_2$.

अ[१]तृपत् । 'अनु[२]दात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यम्वा । अत्राप्सीत् । ततर्प । [३]ततृपतुः । [४]तृपदृपोरनिट्त्व पाठः 'अनुदात्तस्य चर्दुपधस्य' इत्यम्विकल्पार्थः । त्रप्ता । तर्प्ता । तर्पिता ॥ एवं दृप हर्षणमोहनयोः । मुह वैचित्त्ये । [५]अमुहत् । 'वा द्रुहमुह—' इति धत्वढत्वे । मोग्धा । मोढा । मोहिता ॥[६]

---

अरत्स्यत् । अरन्धिष्यत् । तृप । प्रीणनं सौहित्यम् । अतृपदिति । पुषा[७]द्यङ् । अतर्पीदिति । [८]कृशस्पृशातृपच्लेः सिचि वा । 'रधादिभ्यश्च' इति वेट् । 'नेटि' इति वृद्धिप्रतिषेधः । लघूपधगुणः । अत्राप्सीदिति । इडभावपक्षे । 'अनुदात्तस्य—' इत्यम् वा । यण् । 'वदव्रज—' इति वृद्धिः । अतार्प्सीदिति अमभावपक्षे । ततर्प्थ । त्रप्ता । तर्प्तेति । लुट् । तासिः । 'अनुदात्तस्य—' इत्यम् वा । तर्पितेति । रधादित्वादिट् । तृप्यात् । त्रप्स्यति । तर्प्स्यति । तर्पिष्यति । अत्रप्स्यत् । अतर्प्स्यत् । अतर्पिष्यत् । एवं दृप । मोहनं गर्वः । दृप्यति । दृप्येत् । अदृप्यत् । अदर्पीत् । अद्राप्सीत् । अदार्प्सीत् । ददर्प । द्रप्ता । दर्प्ता । दर्पिता । द्रप्स्यति । दर्प्स्यति । दर्पिष्यति । मुह । वैचित्त्यमविवेकः । मुह्यति । अमुहदित्यङ् । मुमोह । मोग्धा मोढेति । इडभावपक्षे 'झषस्तथोः—' इति धत्वम् । घत्वपक्षे 'झलां जश् झशि' इति गत्वम् । ढत्वपक्षे ष्टुत्वम् । 'ढो ढे लोपः' । मोहितेति । इट्पक्षे । मोक्ष्यति । मोहिष्यति ।

---

१. Dropped N ; अतार्प्सीत् $D_3$. २. 'अनुदात्तस्य...त्यम् वा dropped N, $D_1$, $D_2$. ३. From अनु... to ततृपतुः dropped $D_3$; ततर्प । ततृपतुः dropped $D_1$, $D_2$ ($D_2$ has ततर्पिथ instead). ४. तृपदृपयोर° $B_1$. ५. Dropped $D_1$. ६. After it—मोक्ष्यति । मोहिष्यति $B_2$. ७. पुषादित्वादङ् $Dc_3$. ८. कृशमृशस्पृशतृपादयः । च्लेः सिच् वा । $Dc_3$.

[1]णश अदर्शने । [2]प्रणश्यति । नशेरत एत्वमङि वा[3] । अनेशत् । [4]अनशत् । [5]नेशतुः ।

**नशेः षान्तस्य ॥८।४।३६॥**

षान्तस्य नशेर्णत्वं न स्यात् ॥

**मस्जिनशोर्झलि ॥७।१।६०॥**

अनयोर्नुमागमः स्याज्झलि ॥ प्रनंष्टा । 'नशेर्वा' इति [6]झल्यपि वा कुत्वम् । णत्वं तु नेति केचित् । [7]प्रनङ्ग्धा ।

---

णश । अदर्शनमनुपलब्धिः । प्रणश्यतीति । 'उपसर्गादसमासे' । इति णत्वम् । अनेशादिति । पुषाद्यङ् । अनशादिति । एत्वाभावे । ननाश । नेशतुरिति । 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ । मस्जि । [8]टुमस्जो शुद्धौ । णश अदर्शने । मित्वादन्त्यादचः परः । 'नशेर्वा' । इति झल्यपि वा कुत्वम् । णत्वं तु नेति केचिदिति । बोपदेवपण्डिताः । तथा हि रामव्याकरणे तैरुक्तम् ।

'नशेः षान्तस्य नो मस्जिनशोः षान्ते । प्रनङ्क्ष्यति । नंष्टा । नङ्ग्धा । नशेर्वा कुः । बुध युध् नाशयेत् फलम्' इति । कुत्वमिति धत्वस्याप्युपलक्षणम् । ते हि मुहां घंङ् भौ इति घमेव विहितवन्तः । ततश्च तन्मते ढत्वाभावात्तथोर्धोर्ध इति धत्वं स्यात् । तेन प्रनङ्ग्धेत्यत्र शस्य कुत्वम् । ततः परस्य तस्य धकारः सिद्धो भवति । क्वचित् प्रनङ्क्तेति पाठः । तदा ढत्वं नैव स्यात् । णत्वं तु नेति तथा । तत्रैवोक्तम् । अशान्तत्वात् न ण इति प्रनङ्ग्ध इति । रधादित्वादिड् ।

---

१. णश् $N_1$. २. Before it—'उपसर्गादसमासेऽपि णोपदेशस्य' $D_4$. ३. वा वक्तव्यम् $D_1$. ४. Dropped $N_1$. ५. ननाश । नेशतुः $B_2$, $D_3$. ६. कल्पयित्वा for झल्यपि $B_1$, P, C, N. ७. प्रनङ्क्ता N. ८. मस्जो $Bc_2$, $Dc_1$, $Dc_4$. ९. घेङ्भौ $Bc_2$.

[1]प्रणशिता । भूतपूर्वषान्तस्यापि णत्वं न । प्रनङ्क्ष्यति । नशिष्यति ॥

शमु उपशमे ।

**शमामष्टानां दीर्घः श्यनि ॥७।३।७४॥**

शम् दम् [2]श्रम् तम् भ्रम् [3]क्षम् क्लम् मद् एषां दीर्घः स्यात् श्यनि ॥ [4]प्रणिशाम्यति । [5]अशमत् । [6]अशमीत् ॥

क्लमु ग्लानौ । क्लाम्यति ।[7] [8]क्लामति । [9]अक्लमत् ।

---

प्रणशितेति । इट्पक्षे । भूतपूर्वस्येति । 'नशेः षान्तस्य' इत्यन्तग्रहणात् । प्रनङ्क्ष्यतीति । इडभावे 'व्रश्च—' इति षः । कत्वषत्वे । नुम् ।

शमु । इतः षूङन्ताः सप्त सेटाः ।

शमा । शमुदमु उपशमे । श्रमु तपसि खेदे च । तमु काङ्-क्षायाम् । भ्रमु अनवस्थाने । क्षमूष् सहने । क्लमु ग्लानौ । मदी हर्षे । प्रणिशाम्यतीति । 'नेर्गद—' इति णत्वम् । शमादयः पुषादय इति केचित् । ते अशमीदित्युदाहरन्ति । अन्ये त्वागणान्ताः पुषादय इत्याहुः । तेन अशमदित्यत्राङ् । शशाम । शमिता । शम्यात् । शमिष्यति । अशमिष्यत् ।

क्लमु । क्लाम्यतीति । 'वा भ्राश—' इति श्यन् वा । 'शमाम्—' इति दीर्घः । क्लामतीति । श्यन्नभावे शप् । 'ष्ठिवुक्लमु—' इति दीर्घः ।

---

१. Before it–नश्यात् $B_2$. २. तम्श्रम् P, C, N. ३. क्लम्क्षम् $B_2$. ४. शाम्यति alone in place of प्रणि...शमीत् $D_3$. ५. Dropped $D_1$, $D_4$, N. ६. शशाम । शम्यात् । शमिता । शमिष्यति $B_2$; dropped $D_1$, $D_2$, $D_4$, N. ७. After it—'ष्ठिवुक्लम्वाचमाम्' इति दीर्घः । $D_1$, P, C. ८. $D_3$ and $D_4$ drop क्लामति । अक्लमत् ।. ९. Dropped $D_1$; अक्लमीत् N. १०. भ्रास $Bc_2$.

भौवादिकस्य तु क्रमति ।[1]

अस्रु क्षेपणे । [2]अभ्यस्यति । 'अस्यतिवक्ति—' इत्यङ् ।

**अस्यतेस्थुक् ॥७।४।१७॥**

अस्यतेरङि परे थुगागमः स्यात् ॥ आस्थत् ।[3] [4]आसिथ ।

[5]यसु प्रयत्ने ।

**यसोनुपसर्गात् ॥३।१।७१।**

अनुपसर्गाद्यसो वा श्यन् स्यात् कर्तरि सार्वधातुके[6] ॥ यस्याति । [7]यसति । [8]अयसत् ।[9] अनुपसर्गात् किम् । प्रयस्यति ।

---

**भौवादिकस्येति** । 'ष्ठिवुक्रमु—' इति अत्र दिवादिकस्यैव क्रमो ग्रहणात् भौवादिकस्य दीर्घो न । **क्रमतीति** । भवतीत्यर्थः । अक्रमत् । मतान्तरे अक्रमीत् । चक्राम । क्रमिता ।

**असु** । 'अस्यतिवक्ति—' इत्यङ् । येषां शमावधयः पुषादयः तेषां मते परस्मैपदार्थमपि । आसीदित्यपि केचिदिच्छन्ति । तथा च **कविकल्पद्रुमे** ।

[10]अस्यु [11]ईक्षेपे इति । **कामधेनौ** च प्रकटयन्ति स्म । इट् । [12]आस्यत् । आसीदिति । आस । असिता ।

**यसु** ।

**यसः** । नित्यं श्यनि प्राप्ते विकल्पार्थं वचनम् ।

---

१. After this $B_1$ has श्यन्यस्यापि क्राम्यति । 'वा भ्राश—' इति श्यन् वा ।; श्यन्यस्यापि क्राम्यति $B_2$; after it—चक्राम $D_2$; 'वा भ्राश—' इति श्यन् । पक्षे क्रम्यति N. २. अस्यति $D_1$, $D_4$, N; dropped $D_3$. ३. After it-आस P, C, $B_1$, $B_2$. ४. आसिता । अस्यात् । आसिष्यति $B_2$; dropped $D_1$, $D_2$, $D_3$, $D_4$. ५. यस् $D_1$, $D_2$. ६. सार्वधातुके परे $B_1$, N, P, C. ७. यस्येत । अयसत् । ययास । येसतुः । यस्यात् । यासिता । यासिष्यति । अनुपसर्गात् किम् । प्रयस्यति $B_2$. ८. Dropped $N_1$, $D_3$, $D_4$. ९. After it—अयसीत् $D_1$. १०. यथाहुः स्म बोपदेवपाण्डिताः अस् इर क्षेप इति कामधेनौ च प्रकटयति स्म । $Dc_3$. ११. अस्फुक्षेप इति $Bc_2$. १२. आस्थत् $Bc_2$, $Dc_3$.

**संयसश्च ॥३।१।७२॥**

संपूर्वाद्यसः श्यन् वा[1] ॥ संयस्यति । संयसति ।

लुभ गार्ध्ये ।[2] लुभ्यति । अलुभत् ।[3] 'तीषसह—' इति वेट् । लोब्धा । लोभिता ।

ञिमिदा स्नेहने ।[4]

**मिदेर्गुणः ॥७।३।८२॥**

मिदेः शिति परे गुणः स्यात् ॥ मेद्यति । अमिदत् ।[5]

षूङ् प्राणिप्रसवे । सूयते । 'स्वरतिसूति—' इति वेट् । असविष्ट । असोष्ट ।

---

संयसः । सोपसर्गार्थोयमारम्भः । अयसत् । अयासीत् । ययास यसिता ।

लुभ । गार्ध्यमभिकाङ्क्षा[6] । लुभ्यति । अलुभ्यत् । अलोभीदिति मतभेदेन । लोब्धेति । 'झषस्तथोः—' इति धः । लोभिष्यति ।

ञिमिदा ।

मिदेः । 'इको गुणवृद्धी' इति इकः स्थाने । मिद्येत् । अमिदत् । अमेदीत् । मिमेद । मेदिता । मेदिष्यति । पुषादयः समाप्ताः ।

षूङ् इत्यायुधान्ताः सप्तात्मनेपदिनः । सूयते । सूयताम् । असूयत । असविढ्वम् । असविध्वम् । सुषुवे । सविता । सोता । सविषीष्ट । सोषीष्ट । सविष्यते । सोष्यते ।

---

१. वा स्यात् $D_2$, $N_1$. २. After it—गार्ध्यं तृष्णा $B_2$, $D_2$. ३. लुभ्यति । अलुभत् dropped $D_3$, $D_4$. ४. After it—लुलोभ $B_2$. ५. After it—मिमेद $B_2$ ; after it—परस्मैभाषा $D_2$ ; dropped $D_3$, $D_4$. ६. °मभिकाङ्क्षायाम् $Bc_2$.

दीङ् क्षये । दीयते ।

**मीनातिमिनोतिदीङां ल्यपि च ॥६।१।५०॥**

एषामात्वं स्यात् ल्यपि ॥ चकारादशित्येज्निमित्ते[1] ॥ अदास्त ।

**दीङो युडचि क्ङिति ॥६।४।६३॥**

दीङः परस्याजादेः क्ङितो युडागमः स्यात् ॥ दिदीये । दाता ।[2]

जनी प्रादुर्भावे ।

---

दाङ् । अनिट् । दीयते ।

**मीनाति** । मीञ् हिंसायाम् । डुमिञ् क्षेपणे । दीङ् क्षये । **एज्निमित्ते** गुणवृद्धिनिमित्ते इत्यर्थः ।

**दीङः** । दीङः इति पञ्चमीनिर्देशात् अजादेर्युडागमो भवतीत्यभिप्रेत्याह । **दीङः परस्याजादेरिति** । **दिदीये** इति । 'वुग्युटावुवङ्यणोः सिद्धौ भवतः' इति वक्तव्यात् । विधानसामर्थ्याद् वा युडागमस्य 'एरनेकाचः—' इति यणं प्रत्यसिद्धत्वं न । दिदीयिढ्वे । दिदीयिध्वे । ननु चात्र युटा व्यवधानाद् ढत्वं न स्यात् । उच्यते । अत्र पक्षद्वयमस्ति । तथा **काशिकायां वामनेनोक्तम्** । 'विभाषेटः' इत्यत्र । 'अथेह कथं भवितव्यम् उपदिदीयिध्वे इति । केचिदाहुः । इणन्तादङ्गादानन्तर्यमिटो युटाव्यवहितमिति न भवितव्यं ढत्वेनेति । अपरेषां दर्शन अङ्गादिति निवृत्तमिण इत्यनुवर्तते । ततश्च यकारादेव इणः परोनन्तर इडिति पक्षे भवितव्यं मूर्धन्येन' इति । **दातेति** । आत्वम् । दासीष्ट । दास्यते ।

**जनी** । प्रादुर्भाव उत्पत्तिः । इतस्त्रयः सेट्काः ।

---

१. Dropped $D_1$, $D_2$, $D_3$, $D_4$. २. °देज्निमित्तेशिति $D_3$. ३. After it—दासीष्ट । दास्यते $B_2$.

ज्ञाजनोर्जा ॥७।३।७९॥

अनयोर्जादेशः स्यात् शिति ॥ जायते । 'दीपजन–' इति वा चिण् ।

जनिवध्योश्च ॥७।३।३५॥

अनयोरुपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति च ॥[1] अजनि । अजनिष्ट । जज्ञे ।

दीपी दीप्तौ । अदीपि । अदीपिष्ट । एवं पूरी आप्यायने । पद गतौ । पद्यते ।[2][3]

---

ज्ञा । ज्ञा अवबोधने । जनेर्दैवादिकस्य ग्रहणं न जौहोत्यादिकस्य शितोसंभवात् । 'अतो दीर्घो यञि' इति जा इति सिद्धे दीर्घोच्चारणं प्वादीनां ह्रस्व इति मा भूदिति । जायते इति । श्यनि कृते जादेशो 'ये विभाषा—' इत्यात्वं च प्राप्तं तत्रानवकाशत्वाज्जादेश एव भवति ।

जनि । जनी प्रादुर्भावे । जन जनने । वध हिंसायामिति प्रकृत्यन्तरमस्ति वधिः । भक्षकश्चेन्न विद्यतेथ वधकोपि न विद्यते इति प्रयोगात् । तस्य ग्रहणम् । न हनादेशस्य वधेः । तस्यादन्तत्वादेव वृद्ध्यभावः सिद्धः । अजनीति । 'चिणो लुक्' इति तलोपः । अजनिष्टेति । चिणभावे इट् । जज्ञे इति । 'गमहन—' इत्युपधालोपः । चुत्वम् । जनिता । जनिषीष्ट । जनिष्यते ।

दीपी । दीप्यते । अदीपीति । 'दीपजन—' इति वा चिण् । दिदीपे । दीपिता । दीपिषीष्ट । एवं पूरी । आप्यायनं वृद्धिः । पूर्यते । अपूरि । अपूरिष्ट । पुपूरे । पूरिता । पूरिषीष्ट । पद । गतिर्यानं ज्ञानं च । इतस्त्रयोनिटः ।

---

१. च कृति $B_1$, $D_1$; कृति P. २. C has चिणो लुक् before it.
३ After it—आपद्यते $D_4$.

**च्चिण् ते पदः ॥३।१।६०॥**

पदश्लेश्चिण् स्या[1]देकवचने तशब्दे प[2]रे ॥ प्रे[3]ण्यपादि ।
अपत्साताम् । पेदे[4] ।

बुध अवगमने । अबोधि । 'लिङ्सिचौ–' इति कित्त्वम् ।
अबुद्ध । अभुत्साताम् । [5]बुबुधे । बोद्धा । भुत्सीष्ट । भोत्स्यते ।

णह बन्धने । 'नहो धः' । अनात्सीत् ।[6] अनद्ध ।[7]

इति दिवादिप्रक्रिया ।

---

च्चिण् ते । अस्य धातोरात्मनेपदित्वात् परस्मैपदबहुवचनंत-शब्दो न संभवतीत्यात्मनेपदैकवचनस्य ग्रहणमित्याह । **एकवचने तशब्दे** इति । **प्रण्यपादीति** । णित्त्वात् 'अत उपधायाः' इति वृद्धिः । चिणो लुक् । 'नेर्गद—' इति णत्वम् । अपत्सत । अपत्थाः । पेदे । पत्ता । पत्सीष्ट । पत्स्यते ।

बुध । बुध्यते । **अबोधीति** । 'दीपजन—' इति वा चिण् । अबुद्ध । 'झलो झलि' इति सिचो लोपः । **अभुत्सातामिति** । 'एकाचः—' इति भष्भावः । बुबुधे । बोद्धा । भुत्सीष्ट । भोत्स्यते ।

णह । उभयपदी । नह्यति । नह्यते । **अनात्सीदिति** । हलन्त-लक्षणा वृद्धिः । **अनद्धेति** । 'झलो झलि' इति सिचो लोपः । ननाह । नेहे । नद्धा । नह्यात् । नत्सीष्ट । नत्स्यति । नत्स्यते ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला **प्रक्रियेयं दिवादेः** ॥

---

१. $B_1$, $B_2$ drop स्यात्. २. $B_1$, $B_2$ drop परे; परे कर्तरि $D_1$. ३ Before it—प्रत्यपादि $B_2$. ४. Dropped $D_1$, $D_3$, $D_4$. ५. C, $D_1$, $D_2$, $D_3$, $D_4$ and P drop from बुबुधे to भोत्स्यते; $B_2$ drops this and has उभयपदी instead. ६. After it—अनाद्धाम् । अनात्सुः $D_1$, $D_4$. ७. After it—॥ विभाषिता ॥ $D_2$.

षुञ् अभिषवे ।

## स्वादिभ्यः श्नुः ॥३।१।७३॥

स्वादेः श्नुः[2] प्रत्ययः[3] स्यात् कर्तरि सार्वधातुके[4] ॥ शपोपवादः । अभिषुणोति । सुनुतः । सुन्वन्ति[5] । सुन्वः[6] । सुनुवहे[7] । सुन्वहे । व्यषावीत् । असोष्ट[8] । सुषुविव ।

---

षुञ्[9] । अभिषवः क्लेदनं संधानाख्यम् ।

इत आरभ्य धून्अन्ताः षडुभयपदिनःस्तृञन्ताश्चत्वारोनिटः । अभिषुणोति । 'धात्वादेः षः सः' । 'उपसर्गात् सुनोति—' इति षत्वम् । श्नोः 'सार्वधातुकमपित्' इति ङित्त्वात् धातोर्गुणो न । श्नोस्तिपि गुणः । सुनुत इति । ङित्त्वान्न गुणः । सुन्वन्तीति । 'हुश्नुवोः—' इति यण् । सुनोषि । सुन्वः । सुनुवः इति । 'लोपश्चान्यतरस्यां म्वोः' इति वा उलोपः । सुनुते । सुन्वाते । सुन्वहे । सुनुवहे इति । उलोपो वा । सुनुयात् । सुन्वीत । सुनोतु । सुनुताद्वा । 'उतश्च' इति हेर्लुक् । सुनु । सुनवानि । सुन्वताम् । असुनोत् । असुनुत । व्यषावीदिति[10] । 'स्तुसुधूञ्भ्यः—' इति सिच इट् । सिचि वृद्धिः । 'प्राक्सिताद्ड्व्यवायेपि' । इति षः । असोष्टेति । रुदुस्नुनुधातूनां लिटं विना इड् वा इति केचित् । असविष्ट । सुषुवे । सविता । सोता । सूयात् । सविषीष्ट ।

---

१. $D_2$ gives it before अभिषुणोति. २. श्नुप्रत्ययः $D_2$. ३. C drops प्रत्ययः. ४. सार्वधातुके परे $N_1$, $D_3$. ५. Before it $D_2$, $B_1$, $B_2$ have—हुश्नुवोरिति यण्. ६. Before it C has—लोपश्चान्यतरस्यां म्वोः ।. ७. सुनुवहे । सुन्वहे dropped $B_2$; सुन्वहे । सुनुवहे $N_1$. ८. After it—असविष्ट $D_2$. ९. षुञ् अभिषवे । अभिषवः क्लेदनं &c. $Dc_3$. १०. न्यषावीदिति $Dc_3$.

**सुनोतेः स्यसनोः ॥८।३।११७॥**

स्ये सनि च परे [1]सुञः षो न स्यात् ॥ विसोष्यति । [2]मतभेदे वेट् ।

डुमिञ् प्रक्षेपणे । 'मीनातिमिनोति—' इत्यात्वम् । अमासीत् । अमास्त । [3]ममौ । मिम्यतुः ।

चिञ् चयने । [4]अचैषीत् । अचेष्ट ।

**विभाषा चेः ॥७।३।५८॥**

अभ्यासात् परस्य चिञः कुत्वं वा स्यात् सनि लिटि च[5] ॥ प्रणिचिकाय । चि[6]चाय । चि[7]क्ये ।

---

**सुनोतेः** । सनि किमुदाहरणम् । सुसूषति । न । 'स्तौतिण्योरेव—' इति नियमान्न स्यात् । इदं तर्हि । अभिसुसूषति । इदमपि न । 'स्थादिष्वभ्यासेन—' इति नियमात् । इदं तर्हि । सुसूषतेः क्विप् । सुसूः । अत्र रुत्वं प्रति षत्वस्यासिद्धत्वात् सन् षभूतो नेत्यभ्यासात् प्राप्तिरस्ति ।

**डुमिञ्** । मिनोति । मिनुते । **अमासीदिति** । 'यमरम—' इतीट्सकौ । **ममौ** इति । आत्वम् । णल् । **मिम्यतुरिति** । एज्निमित्ताभावादात्वं न । यणादेशः । मिम्ये । माता । मीयात् । मासीष्ट । मास्यति । मास्यते ।

**चिञ्** । चिनोति । चिनुते । अचैषीत् । अचेष्ट ।

**विभाषा** । **प्रणिचिकायेति** । 'नेर्गद—' इति णत्वम् । चिक्यतुः ।

---

१. षुञः $D_2$. २. मतभेदे तु वेट् P ; रुदुसुन्विति मतभेदे वेट् C. ३. Dropped $D_3$, $D_4$. ४. Before it—चिनोति । चिनुते $B_2$; $D_1$, $D_3$, $D_4$ drop अचैषीत् । अचेष्ट ; $D_2$ drops अचैषीत्. ५. Dropped $N_1$. ६. C, $N_1$ drop it. ७. चिच्ये । चिक्ये । $D_4$.

चिच्ये । चेषीष्ट ।

स्तृञ् आच्छादने ।[२]

**ऋतश्च संयोगादेः ॥७।२।४३॥**

ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात् तङि ॥ अस्तरिष्ट । अस्तृत । स्तरिषीष्ट । स्तृषीष्ट ।

वृञ् वरणे[३] । अवारीत् ।

**लिङ्सिचोरात्मनेपदेषु ॥७।२।४२॥**

वृङ्वृञोर्ऋतश्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि ॥ 'वॄतो वा' इति वा[४] दीर्घः । अवरिष्ट । अवरीष्ट । अवृत ।

---

चिच्यतुः । चिच्ये । चिक्ये इति । वा कुत्वम् । चेता । चीयात् । चेषीष्ट । चेष्यति । अचेष्यत् ।

स्तृञ् । स्तृणोति । स्तृणुते । अस्तार्षीत् ।

ऋतः । अस्तृतेति । 'ह्रस्वादङ्गात्' इति सिचो लुक् । तस्तार । 'ऋतश्च संयोगादेः' इति गुणः । तस्तरतुः । तस्तरे । स्तर्ता । 'गुणोर्त्ति—' इति गुणः । स्तर्यात् । स्तरिषीष्ट । स्तृषीष्टेति । वेट्[५] । इडभावे 'उश्च' इति कित्त्वम् । स्तरिष्यति । स्तरिष्यते ।

वृञ् । इतो द्वौ सेट्कौ । वृणोति । वृणुते । अवारीदिति । लुङ् । सिच् । 'इट ईटि' इति सलोपः । 'सिचि वृद्धिः—' । अट् । 'सिचि च परस्मैपदेषु' । इतीटो दीर्घो न । अवारिष्टाम् ।

लिङ् । उदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थ आरम्भः । अवरिष्ट । अवरीष्टेति । इट् । गुणः । अवृतेति । इडभावे रूपम् ।

---

१. Dropped $D_1$, $D_3$, $D_4$. २. After it—अस्तार्षीत् । स्तर्ता $D_2$, $B_1$, $B_2$. ३. आवरणे $N_1$, $B_2$, $D_1$, $D_4$. ४. दीर्घो वा $D_1$, $D_4$. ५. 'ऋतश्च' इति वेट् $Bc_2$.

[1]तासौ सेट्कत्वात् थलीट् । ववरिथ ।[2] क्रादित्वान्नेट् । ववृव । 'न लिङि' ।[3] वरिषीष्ट । वृषीष्ट ॥ धूञ् कम्पने । [4]अधावीत् । [5]अधविष्ट । अधोष्ट ।[6]

---

'ह्रस्वादङ्गात्' इति सिचो लुक् । ववार । वव्रतुः । सेट्कत्वादिति । अयं भावः । क्रादित्वादेव थलीडभावे सिद्धेपि 'बभूथाततन्थजगृम्भववर्थेति निगमे' इति छन्दसि वृञस्थलीडभावो निपात्यत इति नियमार्थं छन्दस्येवेति ववर्थेतीडभावः साधुस्तेन भाषायां सेट्कत्वात् थलीडिति । वव्रे । वरिता । वरीता । व्रियात् । 'न लिङि' इति इटो दीर्घो नेति शेषः । **वरिषीष्टेति** । 'लिङ्सिचोः—' इति वेट् । **वृषीष्टेति** । 'उश्च' इति कित्त्वान्न गुणः । वरिष्यति । वरीष्यति । वरिष्यते । वरीष्यते । धूञ् । [7]**क्षीरस्वामी** दीर्घमाह । [8]अन्ये ह्रस्वम् । धूनोति । धूनुते । धुनोति । धुनुते । **अधावीदिति** । 'स्तुसुधूञ्भ्यः—' इति सिच इट् । सिचि वृद्धिः । **अधविष्ट** । **अधोष्टेति** । 'स्वरति—' इति वेट् । गुणः । षत्वष्टुत्वे । दुधाव । दुधुवे । धविता । धोता । धूयात् । धविषीष्ट । धोषीष्ट ।

---

१. $B_1$ has—तासौ सेट्त्वात् थलीट् । क्रादित्वेन थल्यपि इट्प्रतिषेधः प्राप्तः स न भवति तस्य 'ऋतो भारद्वाजस्य' इति तासावनिट् एवोपादानात् इट् । ववर्थेति निगमे निपातनात् भाषायामिट् इति वा । ववरिथ for तासौ...ववरिथ ; $D_1$, $D_3$, $D_4$ drop तासौ only. २. After this—ववर्थ इति छन्दसि निगमे निपातनात् $B_2$; ववर्थेति निगमे निपातनात् भाषायां थलीट् । $D_4$. ३. After it—इति दीर्घनिषेधः $B_1$; न दीर्घत्वम् $D_4$. ४. Before it— धुनोति $B_1$, $B_2$. ५. अधोष्ट । अधविष्ट $D_4$. ६. After it—धुमस्तु अधौषीत् । अधोष्ट $D_2$, $B_1$, C, P, N ($D_2$ has उभयतो भाषा after अधोष्ट). ७. शिवस्वामी $Dc_1$, $Dc_3$, $Dc_4$. ८. अन्येषां $Bc_2$.

हि गतौ वृद्धौ च ।

**हिनुमीना ॥८।४।१५॥**

उपसर्गस्थान्निमित्तात् परस्य हिनुमीना एतयोर्नस्यणः स्यात् ॥ प्रहिणोति ।[1]

**हेरचङि ॥७।३।५६॥**

अभ्यासात्परस्य हिनोतेर्हस्य[2] कुत्वं स्यान्न तु चङि ॥ जिघाय[3] । अचङि[4] किम् । अजीहयत् । जिघ्यतुः ।

कृवि जिघांसायाम् । इदित्वान्नुम् ।

---

हि । इतश्चत्वारः परस्मैपदिनो दम्भन्ताः । एकोनिट् । हि गतौ वृद्धौ च । स्वादिः । मीञ् हिंसायाम् । त्र्यादिः ।

हिनुमीनाग्रहणे विकृतस्यापि भवति । 'अचः परस्मिन्—' इत्यजादेशस्य स्थानिवद्भावात् । अतः प्रहिणोतीति सिद्धम् । अहैषीत् ।

हेरचङि । घोषवत्त्वादिगुणवतो[5] वर्गचतुर्थो हस्य सवर्णः । जिघायेति । वृद्धिः । चुत्वम् । अचङीति किम् । अजीहयत् । ननु च 'अचङि' इति व्यर्थम् । यतोऽङ्गाधिकारेणाभ्यासेन च प्रत्ययस्याक्षेपादभ्यासनिमित्ते प्रत्यये परतो यदङ्गं हिस्तस्येति सूत्रार्थः[6] स्यात् । चङि चानभ्यासनिमित्ते णौ परे हिरङ्गं तस्मान्न प्राप्नोत्येव । सत्यम् । तथापि ज्ञापकार्थमचङीत्युच्यते । इदं हि ज्ञापयति । हिनोतेश्चङोन्यत्र ण्यधिकस्यापि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धम् । जिघ्यतुः । हेता । हीयात् । हेष्यति ।

कृवि । इत आगणान्तात् सेटः । अयमग्रिमश्च भौवादिकावप्यर्वाचीनमतेन स्वादी इत्यत्र पठितौ तन्मतोपसंग्रहाय । इदित्वादिति 'इदितो नुम् धातोः' इति ।

---

१. After it–अहैषीत् $B_1$, $B_2$. २. हेः for हिनोतेर्हस्य $B_1$, P; C. ३. प्रजिघाय $B_2$, $D_1$, $D_3$, P, C, N. ४. अचङीति $D_2$, $D_4$, N; From अचङि to जिघ्यतुः dropped $D_3$. ५. गुणात् $Dc_1$, $Dc_4$. ६. सूत्रार्थत्वात् $Dc_1$.

धिन्विकृण्व्योर[1] च ॥३।१।८०॥

आभ्यामुप्रत्ययः [2]स्यादकारोन्तादेशश्च कर्तरि सार्वधातुके ॥

उप्रत्ययस्याशित्त्वादतो लोपः। अल्लोपस्य स्थानिवत्त्वान्नो[3]पधागुणः। कृणोति। अकृण्वीत्। चकृण्व। कृण्विता। कृण्व्यात्।

धिवि प्रीणने। धिनोति। अधिन्वीत्।[4]

दम्भु दम्भने। दभ्नोति॥

श्रन्थिग्रन्थिदम्भिभ्यः परो लिडपित् किद्वक्तव्यः ॥*

'असिद्धवदत्र—' इति [5]नलोपस्यासिद्धत्वादेत्वाभ्यासौ किति लिटि [6]दम्भ एत्वं [7]वक्तव्यम्।* देभतुः। देभुः। ददम्भिथ।

---

धिन्वि। उप्रत्ययस्येति। शित्त्वाभावादार्धधातुकत्वं तेनातो लोप इत्यर्थः। ननु च कृणोतीत्यत्र लघूपधगुणः कस्मान्नेत्यत आह। अल्लोपस्येति। 'अचः परस्मिन्—' इत्यल्लोपस्य स्थानिवत्त्वादनुपधात्वादृकारस्य गुणो नेत्यर्थः। कृणोतीति। ऋवर्णान्नस्य णत्वं वाच्यम्। कृणुतः। कृण्वन्ति। कृण्विष्यति। अकृण्विष्यत्।

धिवि। धिनोतीति। इदित्वान्नुम्। 'धिन्वि—' इत्युप्रत्ययोकारान्तादेशश्च। गुणः। दिधिन्व। धिन्विता। धिन्व्यात्। धिन्विष्यति। अधिन्विष्यत्।

दम्भु। दभ्नोतीति। 'अनिदिताम्—' इति न्लोपः। संयोगादित्वान्नोलोपहिलोपौ। दभ्नुवः। दभ्नुहि। अदम्भीत्। ददम्भ।

श्रन्थीति। श्रन्थ ग्रन्थसंदर्भे। दम्भु दम्भे। न पिदपित्।

---

१. °रच P, C, N. २. स्यात्कर्तरि सार्वधातुकेकारो° $D_3$. ३. °न्नोपधाया गुणः P. ४. After it—दिधिन्व। दिधिन्वतुः $B_2$. ५. न्लोप° $D_3$, $D_4$. ६. दम्भेरेत्वं $D_1$. ७. वाच्यम्। ददम्भ। देभतुः। देभुः। ददम्भिथ $B_2$, $D_3$, $D_4$. ८. Dropped $B_1$, P, C.

केषांचिन्मते ददम्भतुः । देदम्भुः । श्रन्थग्रन्थदम्भां थलि लोपैत्वे वेति केचित् । देभिथ । दभ्यात् ॥

अशूङ् व्याप्तौ । अश्नुते । संयोगपूर्वत्वादुलोपो न । अश्नुवहे । आशिष्ट । आष्ट । आक्षाताम् । अत आदेः ।

**अश्नोतेश्च** ॥७।४।७२॥

दीर्घादभ्यासावर्णात् परस्याश्नोतेर्नुडागमः स्यात् लिटि ॥ आनशे ।

इति स्वादिप्रक्रिया ।

---

**केषांचिदिति** । तथोदाहृतं **मुग्धबोधे** । दम्भु । ददम्भतुः । देभतुरिति । **श्रन्थेत्यादि** । तथोक्तं तत्रैव । श्रन्थग्रन्थदम्भां थलि न्लोपो वेति । न्लोपपक्षे तन्मते 'तॄफलभजत्रपश्रन्थग्रन्थदम्भ–' इत्यादिनैत्वम् । दम्भिता । दभ्यादिति । न्लोपः । दम्भिष्यति ।

अशू । आत्मनेपदी । अश्नुते । **संयोगेति** । 'लोपश्चास्यान्यतरस्याम्' इत्यनेन । अश्नुवीत । अश्नुताम् । आश्नुत । **आशिष्ट** । **आष्टेति** । 'स्वरति–' इत्यूदित्त्वाद्वेट् । आशिषाताम् । **आक्षातामिति** । 'व्रश्च–' इति षः । कत्वम् । षत्वम् । अशिता । अष्टा । अशिषीष्ट । अक्षीष्ट । अशिष्यते । अक्ष्यते । आशिष्यत । आक्ष्यत ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—<br>
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।<br>
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—<br>
व्याख्यानेस्मिन् प्रसादे निरगमदमलः स्वादिसंज्ञो गणोयम् ॥

---

१. Dropped $D_1$. २. लोपत्वमेत्वं P, $D_1$; न्लोपैत्वे $D_3$, $D_4$. ३. After it–दम्भिता $B_2$; $D_2$ has परस्मैभाषा after it. ४. अशू $D_3$. ५. °दुल्लोपो $B_2$ P, C, N. ६. ऊदित्वादिड्वा before it in $B_1$, $D_2$ ७. लिटि परे $N_1$. ८. After it— ॥ आत्मनेभाषा ॥ $D_2$.

तुद व्यथने ।

तुदादिभ्यः शः ॥३।१।७७॥

तुदादेः शः प्रत्ययः स्यात् कर्तरि सार्वधातुके ॥ शपोपवादः । ङित्त्वान्न गुणः । तुदति । तुदते ।[2]

भ्रस्ज पाके । 'ग्रहिज्या—' इति संप्रसारणम् । सस्य जश्त्वेन दः । श्चुत्वम् । भृज्जति[3] । 'व्रश्च—' इति षत्वम् । संयोगादिलोपः । अभ्राक्षीत् । अभ्रष्ट ।

---

तुद । इतः षिचन्ताः पञ्चानिट उभयपदिनश्च । ङित्त्वान्न गुण इति । 'सार्वधातुकमपित्' इति ङित्त्वात् 'क्ङिति च' इति लघूपधगुणो नेत्यर्थः । तुदति । तुदेत् । तुदतु । अतुदत् । तोत्ता । तुद्यात् । तोत्स्यति । अतोत्स्यत् । तुदते । तुदेत । तुदताम् । अतुदत । अतुत्त । तुतुदे । तोत्ता । तुत्सीष्ट । तोत्स्यत । अतोत्स्यत ।

भ्रस्ज । सस्य जश्त्वेनेति । 'झलां जश् झशि' इति । श्चुत्वमिति । 'स्तोः श्चुना श्चुः' इति । असिद्धत्वं तु जश्त्वस्य न । 'न मुने' इत्यत्र 'न' इति योगविभागात् । तथा 'भृज्जतीनां ङिति च' इति निर्देशः । भृज्जेत् । भृज्जतु । अभृज्जत् । भृज्जते । भृज्जेत । भृज्जताम् । अभृज्जत । संयोगादिलोप इति । 'स्कोः संयोगाद्योः' इत्यनेन । अभ्राक्षीदिति । च्लिः । सिच् । 'वदव्रज—' इति वृद्धिः । षत्वम् । कत्वम् । षत्वम् । ईट् । 'भ्रस्जोरोपधयोः—' इति रमि । अभ्राक्षीत् । अभ्राष्टाम् । अभ्राक्षुः । अभ्रष्टेति । लुङ् । आत्मनेपदम् । त । सिच् । 'झलो झलि' इति सिचो लोपः । 'व्रश्च—' इति षः । 'स्कोः—' इति सलोपः । ष्टुत्वम् ।

---

१. तुदादिभ्यः शः स्यात् $D_4$. २. After it—अतौत्सीत् । अतुत्त $D_1$. ३. भृज्जाति । भृज्जते $B_2$.

## भ्रस्जो रोपधयोरमन्यतरस्याम् ॥६।४।४७॥

भ्रस्जो रेफस्य उपधायाः सकारस्य च स्थाने [1]रमागमो वा स्यादार्धधातुके ॥ 'मिदचोन्त्यात् परः' । रोपधयोः स्थाने विहितत्वात्तयोर्निवृत्तिः ।[2] [3]अभार्क्षीत् । क्ङिति तु संप्रसारणं बाधकम् ।[4] अभ्यासस्य संप्रसारणम् । उरत् । बभर्ज्ज । [5]बभ्रज्ज । संयोगात् परस्य लिटोकित्त्वादतुसादौ न संप्रसारणम् ॥ बभर्जतुः । बभ्रज्जतुः ।[6] [7]बभर्जे । बभ्रज्जे ।

---

भ्रस्ज । ननु रमागमः किं रोपधयोः स्थाने स्यादन्त्यादचः परो वा । नाद्यः । मित्त्वानर्थक्यप्रसङ्गात् । न द्वितीयः । रोपधयोः श्रवणप्राप्तेरित्याशङ्कामपाकर्तुमाह । 'मिदचोन्त्यात्परः' इति । रोपधयोरिति । अयमभिप्रायः । मित्त्वादवश्यमन्त्यादचः परोयं स्यात् । अन्यथा मित्त्वमनर्थकं स्यात् । यदि च रेफसकारयोः श्रवणं स्यात् 'रोपधयोः' इति स्थानषष्ठीनिर्देशोनर्थकः स्यात् । स्थानषष्ठ्या ह्येतदेव प्रयोजनम् । यत् षष्ठ्या निर्दिश्यमानस्य निवृत्तिः स्यादिति । तस्मान्मित्त्वादन्त्यादचः परः षष्ठीनिर्देशात् रोपधयोर्निवृत्तिरिति । क्ङितीति । पूर्वविप्रतिषेधादित्यभिप्रायः । बभर्ज्जेति । णल् । द्वित्वम् । 'लिट्यभ्यासस्य' इति संप्रसारणम् । 'उरत्' । रम् । रोपधयोर्निवृत्तिः । बभ्रज्जेति । रमभावे द्वित्वम् । जश्त्वेन सस्य दः । चुत्वम् । बभर्जतुरिति । द्वित्वम् । अभ्यासस्य संप्रसारणम् । अत्वम् । रम् रेफयोर्निवृत्तिः । बभ्रज्जतुरिति । रमभावे । बभर्जे ।

---

१. रमागमः स्याद्वा $D_1$, $D_4$. २. After this $B_1$ has—रोपधयोरिति षष्ठीनिर्देशात् उपधा रेफश्च निवर्तते ।; $N_1$ has अभार्क्षीत् । अभर्ष्ट after it. ३. Dropped $D_3$, $D_4$. ४. After this—अभार्क्षीत् । अभर्ष्ट । $D_2$. ५. Dropped $D_3$. ६. After it—बभर्जिथ । बभ्रज्जिथ । बभ्रष्ठ । बभर्ष्ठ $D_3$, $D_4$. ७. Dropped N. ८. रमभावात् $Dc_1$, $Dc_4$. ९. अभ्यासस्सं° $Dc_1$, $Dc_4$.

भ्रष्टा । भ्रष्टा । भृज्यात्।[1]

मुच्लृ मोक्षणे ।

**शे मुचादीनाम् ॥७।१।५९॥**

मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एषां नुमागमः स्यात् शे परे ॥ मुञ्चति ।[2] लृदित्त्वादङ् । अमुचत् । अमुक्त ।[3] लिप उपदेहे । लिम्पति । 'लिपिसिचि—' इत्यङ् । अलिपत । 'आत्मनेपदेष्वन्यतरस्याम्' ।[4] अलिपत । अलिपेताम् । अलिप्त । अलिप्साताम् ।[5]

---

**भर्ष्टा** । **भ्रष्टेति** । वा रम् । भृज्यात् । भ्रक्ष्यति । भर्क्ष्यति ।

**मुच्लृ** ।

**शे मुच** । मुच्लृ मोक्षणे । लुपॢ छेदने । विद्लृ लाभे । लिप उपदेहे । षिच क्षरणे । कृती छेदने । पिश अवयवे । खिद परितापे । मुञ्चते । **लृदित्वादिति** । लृदित्वात् 'पुषादि—' इत्यनेनाङित्यर्थः । **अमुक्तेति** । 'झलो झलि' इति सिचो लोपः । मुमोच । मुमुचे । मोक्ता । मुच्यात् । मुक्षीष्ट । मोक्ष्यति । मोक्ष्यते । **लिप** । उपदेहो वृद्धिः । **लिम्पतीति** । शः । नुम् । लिम्पते । **अलिपेतामिति** । 'आतो ङितः' । इतीय् । यलोपः । **अलिप्तेति** । अङभावे 'झलो झलि' इति सिचो लोपः । लिलेप । लिलिपे । लेप्ता । लिप्यात् । लिप्सीष्ट । लेप्स्यते ।

---

१. भ्रष्टा । भर्ष्टा N; $D_4$ (After it 'व्रश्चभ्रस्ज—' इति षत्वम् $D_4$). २. After it—मुञ्चते $B_2$. ३. After it—मुक्षीष्ट $B_1$; अमुक्षाताम् । मुच्यात् । मोक्ता । मोक्ष्यति । मोक्ष्यते । मुक्षीष्ट $B_2$. ४. After it—लिपिसिचिह्वाभ्यश्च्लेरङ् वा स्यादात्मनेपदेषु $D_1$. ५. After it—लेप्ता । लेप्स्यति $D_1$, $D_4$.

षिचँ क्षरणे। निषिञ्चति। अभिषिञ्चति[3]। न्यषिञ्चत्। न्यषिचत्। न्यषिचत। न्यषिक्त। निषिषेच ॥[4]

कृती छेदने। कृन्तति।[5] 'सेसिचि कृत—' इति वेट्। कर्तिष्यति। कर्त्स्यति॥ षू प्रेरणे।[6] विषुवति। व्यषावीत्।[7]

---

षिच। निषिञ्चतीति। नुम्। 'उपसर्गात् सुनोति—' इति षत्वम्। सिञ्चते। न्यषिञ्चदिति। 'लिपिसिचि—' इत्यङ्। 'प्राक्-सित—' इत्यड्व्यवायेपि षः। न्यषिचतेति 'आत्मनेपदेष्वन्यतर-स्याम्' इति वाङ्। न्यषिक्तेति वा। अङभावे सिचो लोपः। निषिषेचेति। 'स्थादिषु—' इत्यभ्यासव्यवायेपि षः। सिषिचे। सेक्ता। सिच्यात्। सिक्षीष्ट।

कृती। ईदित्वं यङ्लुगर्थम्। चरीकृतः। इत एकविंशतिः णूपर्यन्ताः परस्मैपदिनः। सप्त तृपन्ताः सेट्काः। कृन्ततीति। 'शे मुच—' इति नुम्। कृन्तेत्। अकर्तीत्। चकर्त। कर्तिता। कृत्यात्। अकर्तिष्यत्। अकर्त्स्यत्। षू। विषुवतीति। 'अचि श्नुधातु—' इत्युवङ्। 'उपसर्गात् सुनोतिसुवति—' इति षत्वम्। व्यषावीत्। 'इट ईटि' इति सिचो लोपः। सिचि वृद्धिः। 'प्राक् सितादड्-व्यवायेपि' इति षः। सुषाव। सविता। सूयात्। साविष्यति।

---

१. षिचिर् $D_2$, $D_4$, $B_1$; सिचिर् N. २. Dropped $D_1$, $D_2$, $D_3$, $D_4$. ३. $B_1$ has निषिञ्चेत् before it; dropped $D_1$, $D_3$. ४. After it—उभयतो भाषा $D_2$. ५. After it—अकर्तीत् $B_2$. ६. After it—सेट् $B_2$. ७. After it—दीर्घत्वान्नित्यमिट् $B_1$, $B_2$, $D_2$.

ओव्रश्चू[1] छेदने । 'ग्रहिज्या[2]—' । वृश्चति । अव्रश्चीत् । अव्राक्षीत् ।[3] अभ्यासरेफस्य ऋत्वम् । 'उरत्' । अत्त्वस्य स्थानिवत्त्वान्न संप्रसारण इति वस्योत्वं न । [4]वव्रश्च । वव्रश्चतु ॥[5]

ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु । 'छे च' इति तुक् । ऋच्छति ।[6] अनृछ इत्युक्तेर्नाम् । 'तस्मान्नुड्[7]—' इति नुट् । आनर्च्छ ।

---

ओव्रश्चू । 'ग्रहिज्या----' इति । संप्रसारणमिति शेषः । वृश्चतीति । पूर्वरूपत्वम् । अव्रश्चीत् । अव्राक्षीत् । ऊदित्त्वादिड् वा । इडभावे 'वदव्रज---' इति वृद्धिः । 'व्रश्च—' इति षः । 'स्कोः—' इति सलोपः । 'षढोः कः सि' इति कत्वम् । षत्वम् । अभ्यासरेफस्येति । व्रश्च णल् इति स्थिते द्वित्वम् । तस्मिन् सति 'लिट्यभ्यासस्य—' इति संप्रसारणेन ऋत्वमित्यर्थः । ननु च वकारस्यापि संप्रसारणं प्राप्नोति । न च वाच्यं 'न संप्रसारणम्' इति निषेध इति । संप्रसारणस्य ऋकारस्य स्थाने अत्त्वस्य जातत्वादित्याशङ्कापाकरणायाह । अत्त्वस्येति । 'अचः परस्मिन्' इत्यत्त्वस्य स्थानिवत्त्वात् 'न संप्रसारणे संप्रसारणम्' इति वस्य संप्रसारणं नेत्यर्थः । वव्रश्चतुरिति । संयोगाल्लिटोकित्त्वात् 'ग्रहिज्या—' इति संप्रसारणं न । व्रश्चिता । व्रष्टा । वृश्च्यात् । व्रक्ष्यति । व्रश्चिष्यति ।

ऋछ । इन्द्रियप्रलयो मोहः । ऋच्छतीति । तुकि 'स्तोश्चुना–' इति चुत्वम् । आर्च्छतु । आर्च्छीत् । आनर्च्छेति । अत्र वृद्धिप्राप्त्यभावात् 'ऋच्छत्यॄताम्' इति गुण इत्यभिप्रेत्याह ।

---

१. व्रश्चू $D_1$, $D_2$, P, C. २. 'ग्रहिज्या–' इति $B_2$, 'ग्रहिज्या–' इति संप्रसारणम् $D_1$, N. ३. After it—व्रश्चिता । व्रष्टा । वृश्च्यात् । व्रश्चिष्यति । व्रक्ष्यति । अव्रश्चिष्यत् । अव्रक्ष्यत् । 'स्वरतिसूति—' इति वेट् । अभ्यासरेफस्य &c. $B_2$. ४. Dropped $D_2$. ५. After it $B_1$, $B_2$ have—संयोगात् परस्य लिटः कित्त्वाभावान्न द्वितीयस्य संप्रसारणम्; Before वव्रश्चतुः—संयोगाल्लिटः कित्त्वपक्षेपि प्रच्छभ्रज्जव्रश्च एषां लिटि न संप्रसारणम् $D_1$; before वव्रश्च—संयोगाल्लिटः कित्त्वेपि प्रच्छभ्रस्जव्रश्चां लिटि न संप्रसारणम् $D_3$. ६. After it—आर्च्छेत् $B_2$. ७. °न्नुडाचि नुट् C.

'ऋच्छत्यॄताम्' । आनर्च्छतुः । तुक् संयोगान्नोपधागुणः । ऋच्छिता ।[1]

कॄ विक्षेपे । 'ॠत इद्धातोः' । किरति । [2]अकारीत् । [3]चकरतुः । करिता । करीता ।[4]

**किरतौ लवने ॥६।१।१४०॥**

उपात् परस्य किरतेः सुडागमः [5]स्याच्छेदेर्थे ॥ उपस्किरति ।

**अड्भ्यासव्यवायेपि ॥६।१।१३६॥**

अड्व्यवाये[6]भ्यासव्यवायेपि सुट् कात्पूर्व एव स्यात् ॥

---

**ऋच्छत्यॄतामिति** । गुण इति शेषः । एतत्तु मध्यप्रदीपिकान्यायेन आनर्च्छ आनर्च्छतुरिति उभयत्र संबध्यते । द्वित्वम् । 'उरत्' । 'अत आदेः' इति दीर्घः । ऋच्छ्यात् । ऋच्छिष्यति ।

**कॄ** । किरतीति । ॠत इति । रपरः । अकारीत् । चकार । चकरतुरिति । 'ऋच्छत्यॄताम्' इति गुणः । करिता । करीतेति । 'वॄतो वा' इति वेटो दीर्घः ।

**किरतौ** । छेद इति विषयसप्तमी । छेदविषयो यः किरतेरर्थः तस्मिन्नर्थे इत्यर्थः न तु छेदः किरतेरर्थः । उपस्किरतीति । तथा विक्षिपति यथा विच्छेदो भवतीत्यर्थः । उपस्कारं मद्रका लुनन्ति । विक्षिप्य लुनन्तीत्यर्थः । णमुलत्र वक्तव्यः । इत्येवमादीन्युदाहर्तव्यानि ।

**अड्भ्यास** । किमर्थमिदमुच्यते । यावता पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन । तत्र धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं सुट् पश्चात् अड्भ्यासौ स्याताम् । अतोभिमतसिद्ध्यर्थमिदं सूत्रम् । उच्यते । 'सुट् कात् पूर्वः' इति सूत्रेण कात् पूर्वग्रहणात् सुटो

१. After it—ऋच्छ्यात् $B_2$. २. Dropped $D_1$, $N_1$; चकार $D_2$, $D_3$, $D_4$. ३. $B_1$ has before it—चकार. ४. After it—कीर्यात् । करिष्यति । करीष्यति $B_2$; कीर्यात् P, C. ५. लवने $D_1$; छेदार्थे $D_2$. ६. °भ्यासस्य $D_4$. ७. तस्मात् $Dc_1$. ८. सुटो न वक्तव्यं प्रत्ययादि $Dc_1$.

उपास्किरत् । उपचस्कार ।

**हिंसायां प्रतेश्च ॥६।१।१४१॥**

उपात् प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् ॥ उपस्किराति । प्रतिस्किराति ।

**गॄ निगरणे ।**

**अचि विभाषा ॥८।२।२१॥**

गॄ इत्यस्य रो लत्वं वास्यादजादौ परे ॥

---

भक्तत्वं प्रत्ययादि । तथा हि टित्त्वादेव सुट् कात् पूर्वत्वे सिद्धेपि कात्पूर्वग्रहणमभक्तत्वज्ञापनार्थम् । तेन संस्कृषीष्ट । संस्क्रियत इति संयोगादिलक्षणाविट्गुणौ न भवत इति । एवं च सति सुटि जाते पश्चाद्भाविनावडभ्यासौ सकारात् परौ स्याताम् । धातुभक्तत्वात् सुटः । एवं चानिष्टं रूपं स्यात् । अत एतत् सूत्रम् । अस्मिंश्च सत्यस्मादेव वचनात् कृतयोरडभ्यासयोस्तद्व्यवाये सुट् कात्पूर्वं क्रियेत इति सिद्धमिष्टम् । सुटष्टकारः सुट्स्तुस्वञ्जामिति विशेषणार्थः । **उपास्किरदिति**। लुङ् । ऋत इत् । उपचस्कारेति । वृद्धिः । द्वित्वम् । चुत्वम् ।

**हिंसायाम्** । हिंसायां विषये इत्यर्थः । **उस्पास्किरति** । **प्रतिस्किरतीति** । हिंसानुबन्धं विक्षिपतीत्यर्थः । कीर्यात् । करिष्यति । करीष्यति ।

**गॄ ।**

**अचि** । धातोः स्वरूपग्रहे तत्प्रत्यये कार्यविज्ञानात् प्रत्ययः संनिधापितस्तस्य च विशेषणात् तदादिविधिरित्यभिप्रेत्याह । **अजादाविति** । व्यवस्थितविभाषेयम् । तेन गल इति कण्ठे नित्यं गर इति विषे ।[5] निगार्यते । निगाल्यते । इत्यत्र णिलोपस्य स्थानिवत्त्वात् लत्वविकल्पः । पूर्वत्रासिद्धे न स्थानिवदिति सापवादमेव । तस्य दोषः

---

१. सुडागमः $N_1$, $D_3$, $D_4$. २. °दजादौ $B_1$, $B_2$, $D_2$; विभाषाचि परे $D_1$; °दचि C. ३. °यादिः $Dc_3$, प्रत्ययादि $Dc_1$. ४. °ग्रहणे $Dc_3$. ५. After it—अयनं $Bc_2$; $Dc_3$ has विषं येन निगार्यते । निगाल्यते &c.

गिरति । गिलति ।[1]

तृम्प तृ[2]प्तौ । 'अनिदिताम्—' इति न्[3]लोपः । तृपति ।[4] [5]तृम्पतुम्पतृम्फतृ[6]म्फगुम्फतुम्भशुम्भां शे वा नुम् वाच्यः ।* नुम्विधिसा[7]मर्थ्याल्लो[8]पो न । तृम्पति । [9]अतृम्पीत् ।

---

संयोगादिलोपलत्वणत्वेष्विति वचनात् । **गिरति । गिलतीति** । ऋत इद् । रपरः । अगारीत् । अगालीत् । जगाल । जगार । गालिता । गलीता । गरिता । गरीता ।

**तृम्प** । तृम्पति । तृम्पादयो ये नुमनुषक्ता धातुपाठे पठ्यन्ते ते गृह्यन्ते । ननु तृम्पतुम्प इति पकारान्तौ न पठ्येते तत् कथमनयोर्ग्रहः । उच्यते । फकारान्तौ यौ पठ्येते तयोः स्थाने केचित् पकारान्तौ पठन्ति तन्मतोपसंग्रहार्थं पकारान्तावपि पठितौ । तथा चाह **क्षीरतरङ्गिणीकारः**[10] । 'तृ[11]म्प तुम्पेत्येके । तृम्फ तुम्फेत्येके' इति । तृम्पतुम्पेति । तृम्फ तृप्तौ । तुम्फ तृम्फ क्लेशे । गुम्फ ग्रन्थे । तुभ ग्रन्थे । शुम्भ शोभार्थः । तृम्पति । अतृम्पत् । अतृपत् । तृम्पेत् । तृम्पतु । ननु च नुमि कृते 'अनिदिताम्—' इति नलोपः कुतो न स्यादित्यत आह । **नुम्विधिसामर्थ्यादिति** । अतृम्पीत् । ततृम्प । तृम्पिता । तृप्यात् । तृम्पिष्यति ।

---

१. After it—अगारीत् । जगार $B_2$. २. प्रीतौ $B_2$. ३. नलोपः C. ४. After it—तृपतु N. ५. तृपतृम्पतुपतुम्पतृफतृम्फदृफदृम्फगुफगुम्फतुभ-तुम्भशुभशुम्भां $D_2$, $B_1$, $B_2$ ; तृम्पतृम्फदृपदृम्फगुफगुम्फतुभतुम्भशुभशुम्भां शे नुम् वाच्यः N. ६. दृम्प $D_1$, $D_4$. ७. सामर्थ्यान्नलोपो न $B_1$. ८. °त् न्लोपो न $D_1$, $D_2$. ९. अतृम्पत् । अतृम्पीत् । ततृम्प । तृम्पिता । तृम्प्यात् । तृम्पिष्यति $B_1$, $B_2$; $D_1$, $D_3$, $D_4$ drop अतृम्पीत्; $D_2$ has अतृम्पत् for अतृम्पीत् $D_2$. १०. क्षीरतरङ्गिण्यां क्षीरस्वामी $Dc_3$. ११. तृपतृम्पेत्येके । तुपतुम्पेत्येके इति । तृप तृप्तौ । तृम्फ तृप्तौ । दृफ दृम्फ उत्क्लेशे । गुफगुम्फ ग्रन्थे । $Dc_3$.

स्पृश संस्पर्शने । अस्प्राक्षीत् । अस्पार्क्षीत् ।[2] अस्पृक्षत् ।[3]

चृती ग्रन्थे हिंसायां च । 'सेसिचि—' इति वेट् । चर्तिष्यति । चर्त्स्यति ।[4]

प्रछ ज्ञीप्सायाम् । 'ग्रहिज्या—'[5] इति संप्रसारणम् । पृच्छति । अप्राक्षीत् ।[6] पप्रच्छ[7] । पप्रच्छतुः ।[8]

---

**स्पृश** । अनिट् । स्पृशति । **अस्प्राक्षीदिति** । कृषमृशस्पृशतृपदृपः च्लेः सिज्वा । 'अनुदात्तस्य—' इत्यम् वा । हलन्तलक्षणा वृद्धिः । 'व्रश्च—' इति षः । कत्वम् । षत्वम् । **अस्पार्क्षीदिति** । अमभावे । **अस्पृक्षादिति** । सिजभावे रूपम् । 'शल इगुपध—' इति क्सः । षत्वकत्वक्षत्वानि । पस्पर्श । स्पर्ष्टा । स्प्रष्टा । स्पृश्यात् । स्प्रक्ष्यति । स्पर्क्ष्यति ।

**चृती** । सेट्कः । चृतति । चृतेत् । अचर्तीत् । चचर्त । चर्तिता । चृत्यात् । अचर्तिष्यत् । अचर्त्स्यत् ।

**प्रच्छ** । ज्ञीप्सा जिज्ञासा । इतस्त्रयोऽनिटः । **पृच्छतीति** । पूर्वरूपत्वम् । **अप्राक्षीदिति** । 'व्रश्च—' इति षः । 'वदव्रज—' इति वृद्धिः । पप्रच्छ । **पप्रच्छतुरिति** । अभ्यासस्य संप्रसारणम् । तुक् । संयोगाल्लिटोऽकित्त्वाद् 'ग्रहिज्या—' इति संप्रसारणं न । प्रष्टा । पृच्छ्यात् । प्रक्ष्यति ।

---

१. स्पर्शने $D_4$. २. अस्पार्क्षीत् । अस्प्राक्षीत् $D_4$. ३. Before it—'शल इगुपधात्—' इति च्लेः क्सः C; after it—पस्पर्श । पस्पृशतुः । स्पृश्यात् । स्प्रष्टा $B_2$. ४. After it—अचर्तिष्यत् । अचर्त्स्यत् । चचर्त । चर्तिता । चृत्यात् $B_2$. ५. 'ग्रहिज्यावयि—' $D_1$, $D_4$; ग्रह्यादि संप्र° $D_3$. ६. After it—पृच्छ्यात् । प्रष्टा $B_2$. ७. Dropped $D_3$, $D_4$. ८. After it—$B_2$ has पप्रच्छिथ । पप्रष्ठ । प्रष्टा । पृच्छयात् ।; पप्रच्छिथ । पप्रष्ठ for पप्रच्छतुः $D_2$.

सृज विसर्गे। 'सृजिदृशोर्झलि—' इत्यम्।[१] अस्राक्षीत्। अस्राष्टाम्। 'विभाषा सृजिदृशोः'। ससर्जिथ। सस्रष्ठ।

टुमस्जो शुद्धौ। मज्जति। 'मस्जिनशोः—' इति नुम्। मस्जेरन्त्यात् पूर्वं नुममिच्छन्ति।[२] संयोगादिलोपः। 'चोः कुः'। अमाङ्क्षीत्। [३]ममज्जिथ। ममङ्क्थ।[४]

विछ गतौ। 'गुपूधूप—' इत्यायः। [५]तुग्योगान्न गुणः। विच्छायति। विच्छेरायो वेति केचित्। विच्छति। अविच्छायीत्। अविच्छीत्।[६]

---

**सृज** | सृजति | **अस्राक्षीदिति** | वृद्धिः | 'व्रश्च—' इति षः | कत्वषत्वे | **अस्राष्टामिति** | 'झलो झलि' इति सिचो लोपः | ससर्ज | स्रष्टा | सृज्यात् | स्रक्ष्यति |

**टुमस्जो** | शुद्धिः स्नानम् | ब्रुडनं च लक्ष्यते | **मज्जतीति** | सस्य जश्त्वेन दः | चुत्वम् | **मस्जेरिति** | नुमोन्त्यात् पूर्वत्वे प्रयोजनं 'स्कोः—' इति संयोगादेः सस्य लोप इत्यभिप्रेत्याह | **संयोगादिलोप** इति | तथा मग्न इत्यादावुपधानलोपोपि प्रयोजनम् | **अमाङ्क्षीदिति** | लुङ् | सिच् | हलन्तलक्षणा वृद्धिः | ममज्ज | **ममज्जिथ** | **ममङ्क्थेति** | 'उपदेशेत्वतः' इति इडभावः | 'ऋतो भारद्वाज—' इति वेट् | इडभावे नुम् | मङ्क्ता | मज्यात् | मङ्क्ष्यति |

**विच्छ** | सेट्कः | **विच्छेरिति** | यथाह **क्षीरस्वामी** **क्षीरतरङ्गिण्यां** विच्छेस्तुदादिपाठः सार्वधातुकेप्यायानित्यत्वार्थः | तथा च शपि नित्यमिति **भाष्यम्** | अथ विच्छेर्विकल्प इति | विच्छायांचकार विविच्छ | विच्छायिता | विच्छिता |

---

१. नित्यम् after °त्यम् in $B_1$. २. After it—एक $B_2$. ३. C has ममज्ज before it. ४. C, N have ममज्जयुः after it; after it—मङ्क्ता मङ्क्ष्यति | अमङ्क्ष्यत् $B_2$. ५. तुक्संयोगोपधात्र $D_3$. ६. After it—विच्छायांचकार | विविच्छ | विच्छायिता | विच्छिता | विच्छाय्यात् | विच्छयात् | विच्छायिष्यति | विच्छिष्यति $B_2$.

मृश आमर्शने । अम्राक्षीत् । [1]अमार्क्षीत् । अमृक्षत् ।[2]

इषु इच्छायाम् । 'इषुगमियमां छः' । इच्छति ।[3] इयेष । 'तीषसह—' इति वेट् । एषिता । एष्टा ।

कुट कौटिल्ये ।[4] 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' । ङित्वान्न गुणः । अकुटीत् । अञ्णिति किम् । चुकोट । चुकुटिथ । कुटिता ।

व्यच व्याजीकरणे । ग्रहि[5]ज्या । विचति । व्यचेः [6]कुटादित्वमनसि वक्तव्यम् । अविचीत् । वि[7]व्याच । विविचतुः ।

---

**मृश** । आमर्शनं स्पर्शः । मृशति । **अम्राक्षीत्** । **अमार्क्षीदिति** । 'कृषमृश—' इति वा सिच् । 'अनुदात्तस्य—' इत्यम् वा । 'वदव्रज—' इति वृद्धिः । 'व्रश्च—' इति षः । कत्वम् । षत्वम् । **अमृक्षदिति** । सिजभावे 'शल इगुपधात्—' इति क्सः । ममर्श । मर्ष्टा । मृश्यात् । मर्क्ष्यति । मक्ष्यति ।

**इषु** । इतः सप्त सेट्काः णूपर्यन्ताः । ऐच्छत् । ऐषीत् । इयेषेति । लिट् । णल् । गुणः । द्वित्वम् । 'अभ्यासस्यासवर्णे' इतीयङ् । इष्यात् । एषिता । एषिष्यति । ऐषिष्यत् ।

**कुट** । कुटति । **अकुटीदिति** । सिच् । इट् । ईट् । सलोपः । **चुकोटेति** । द्वित्वम् । चुत्वम् । **चुकुटिथेति** । 'गाङ्कुट—' इति ङित्त्वान्न गुणः । कुटिता । कुट्यात् । कुटिष्यति ।

**व्यच** । **व्यचेरिति** । **पदमञ्जरीकारमते** अनसीति पर्युदास इति असूसदृशे कृत्येव कुटादित्वम् । तेन अव्यचीत् । विव्यचिथेत्यादीनि रूपाणि । कुटादित्वाभावात् । अनसीति प्रसज्यप्रतिषेध इति मत्वाह ग्रन्थकारः । **अविचीदिति** । ङित्त्वात् संप्रसारणम् । **विव्याचेति** ।

---

१. Dropped $N_1$. २. After it—मृश्यात् । म्रष्टा । मर्ष्टा । म्रक्ष्यति । मर्क्ष्यति $B_2$. ३. After it—ऐषीत् । अभ्यासस्यासवर्णे P, C; ऐषीत् N. ४. After it—कुटति P, C, $B_1$, $B_2$. ५. °ज्येति संप्रसारणम् P; ग्रहिज्या dropped $N_1$. ६. कुटादित्वादित्व° $B_2$. ७. Dropped $D_2$.

विचिता ।[१] असुप्रत्यये[२] तु[३] उरुव्यचाः[४] ।

त्रुट[५] छेदने । 'वा आश[६]–' इति श्यन्वा । त्रुट्यति । त्रुटति । अत्रुटीत् ।[७]

स्फुर स्फुरणे ।

**स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥८।३।७६॥**

निर् नि विभ्यः परयोरनयोः सस्य षो वा स्यात् ॥ निस्फुरति । निष्फुरति । अस्फुरीत् । पुस्फोर । एवं स्फुल[८] संचये च ।

णू स्तवने । नुवति । अनुवीत् । नुनाव ॥[९]

---

अभ्यासस्य संप्रसारणम् । विचितेति । ङित्वेत्वे । विच्यात् । विचिष्यति । उरुव्यचा इति । असुन् ।

त्रुट । अत्रुटीदिति । ङित्त्वाद्गुणाभावः । तुत्रोट । त्रुटिता । त्रुट्यात् । त्रुटिष्यति ।

स्फुट । अस्फुटीदिति । ङित्त्वाद्गुणाभावः । स्फुटिता । स्फुट्यात् । स्फुटिष्यति । एवं स्फुल । स्फुलति । निस्फुलति । अस्फुलीत् । पुस्फोल । स्फुलिता ।

णू । नुवतीति । 'अचि श्नु—' इत्युवङ् । अनुवीदिति । कुटादित्वात् ङित्वम् । उवङ् । नुविता । नूयात् । नुविष्यति ।

---

१. $B_1$, $D_2$ have after it—विच्यात्; $B_2$—विच्यात् । विचिष्यति। २. अस् $B_2$. ३. $B_1$ drops तु. ४. उरयचाः $D_4$. ५. त्रुटी $D_3$, $D_4$. ६. आशेति $D_1$, $D_2$. ७. After it $B_1$ has—त्रुटिता । त्रुट्यात् । त्रुटिष्यति । तुत्रोट । त्रुटिता । त्रुटिष्यति $B_2$. ८. पुल्लने संचये च $B_1$; च dropped $D_1$, $D_3$. ९. After it—नुविता । नूयात् । नुविष्यति $B_1$; परस्मैभाषा $D_2$; नुविता । नुविष्यति $B_2$. १०. स्फुर । अस्फुरीदिति । स्फुरिता &c. $Bc_2$.

मृङ् प्राणत्यागे ।[१]

म्रियतेर्लुङ्लिङोश्च ॥१।३।६१॥

म्रियतेः शिदन्ताच्च[२] लुङ्लिङोश्चात्मनेपदं स्यान्नान्यत्र । रिङियङादेशौ[३] । म्रियते ।[४]

अमृत ।[५] मृषीष्ट । एषु किम् । मरिष्यति ।

---

मृङ् । द्वावात्मनेपदिनौ । एकोनिट् ।

म्रियतेः । शिद्भावी शिदन्तः । नियमार्थवचनं म्रियतेर्लुङ्लिङोः शिदन्तस्यैवेति । एतदाह । नान्यत्रेति । यद्येवं ङित्करणं किमर्थं यावतान्यत्रात्मनेपदेन भवितव्यमेव । उच्यते । स्वरार्थम् । मा हि मृतेत्यत्र 'तास्यनुदात्त—' इत्यादिना लसार्वधातुकस्यानुदात्तत्वं ङिल्लक्षणेन[६] भाव्यम् । तत्र तु कृते धातोरन्तोदात्तत्वं स्यात् । 'तिङ्ङतिङः' इति निघातो 'हि च' इति प्रतिषिध्यते । अडागमोपि 'न माङ्योगे' इति । रिङियङादेशाविति । 'रिङ्शयग्लिङ्क्षु' इति रिङ् । 'अचि श्नुधातु—' इतीयङ् । म्रियते ।

अमृतेति । 'उश्च' इति किंत्त्वान्न गुणः । 'ह्रस्वादङ्गात्' इति सिचो लुक् । ममार । मर्तासि । मृषीष्टेति । तङ् । किंत्त्वान्न गुणः । मरिष्यतीति । 'ऋद्धनोः स्ये' इतीट् ।

---

१. After it—अत्र ङित्करणं स्वरार्थम् $B_1$. २. च dropped $D_3$, $D_4$. ३. रिङ् शयङिति रिङ् । इयङादेशः P, C ($D_2$, $B_2$, and N have रिङियङादेशौ for इयङादेशः). ४. After it—'ह्रस्वादङ्गात्' इति सिचो लुक् P, C. ५. After it—अम्रियत $D_2$. ६. ङिल्लक्षणं $Bc_2$; ङिल्लक्षणं वाच्यम् । $Dc_3$.

ओविजी भयचलनयोः । विजते ।

विज इट् ॥१।२।२॥

[1]विजेः परो [2]ञ्णिद्वर्ज इडादिप्रत्ययो ङिद्वत् स्यात् ॥ [3]अविजिष्ट । विजिता ।[4]

इति तुदादिप्रक्रिया ।

---

ओविजी । विजते ।

विजः । 'वृद्धिर्यस्याचाम्—' इत्यतः 'यस्यादिः' इत्यनुवर्तते । तेनेड् विशेष्यते । यस्यादिरिति । तेनोक्तमैकवचनमिड् न गृह्यते । आगममात्रं वा न गृह्यते । किं त्विडादिप्रत्यय इत्यभिप्रेत्याह । इडादिः प्रत्यय इति । अविजिष्टेति । इट् । षत्वम् । ष्टुत्वम् । विविजे । विजितेति । ङित्त्वान्न गुणः । विजिषीष्ट । विजिष्यते ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं तुदादेः ॥

---

१. विजेरपि परो $D_1$. २. ङित् $D_3$, $D_4$. ३. Before it—विविजे $B_2$.
४. $B_1$, $B_2$ have after it—विजिष्यते; after it—आत्मनेभाषा ॥ $D_2$.

रुधिर् आवरणे ।

**रुधादिभ्यः श्नम् ॥३।१।७८॥**

रुधादिभ्यः श्नम् प्रत्ययः स्यात् कर्तरि सार्वधातुके ।[१] नैशप् । मित्त्वादन्त्यादचः परः ।[२] रुणद्धि ।[४] 'श्नसोरल्लोपः' । धत्वम् । 'झरो झरि सवर्णे' । [५]परत्वात् कृतस्यापि णत्वस्यासिद्धत्वादनुस्वारः । [६]तदादेशस्य परसवर्णस्यासिद्धत्वान्न णत्वम् । [७]अनुस्वारपरसवर्णौ प्रति श्नस्याल्लोपो न स्थानिवत् । रुन्द्धः । रुन्धन्ति । रुन्ध्यात् । अरुणत् । 'दश्च' इति वा

---

**रुधिर्** । आवरणं व्याप्तिः । इतस्त्रय उभयपदिनः । एकोनिट् । **न शबिति** । श्नमा बाधितत्वात् । कथं पुनर्भिन्नदेशेन श्नमा बाध्यते । न ह्यभिन्नदेशमेव बाधकारणमपि त्वेकप्रयोजनमपि । विकरणा हि सार्वधातुकस्य धातोश्चार्थाभिधाने सहायास्तत्साहाय्यं श्नमैव कृतमिति शपा न भाव्यम् । **रुणद्धीति** । रुनध् ति इति स्थिते **धत्वमिति** । 'झषस्तथोः---' इति धत्वम् । 'झलां जश् झशि' इति दत्वम् । रुन्ध् तस् इति स्थिते **धत्वमिति** । 'झषस्तथोः—' इति । 'झरो झरि सवर्णे' इति पूर्वधकारस्य लोपः । 'नश्चापदान्त---' इत्यनुस्वारः । 'अनुस्वारस्य ययि परसवर्णः' । 'अट्कुप्वाङ्---' इति नस्य णत्वे प्राप्ते आह । **परसवर्णस्येति** । 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वादिति भावः । ननु चात्रानुस्वारपरसवर्णाविव न स्याताम् । यतः 'अचः परस्मिन्—' इत्यल्लोपस्य स्थानिवत्त्वमित्याशङ्क्याह । **अनुस्वारपरसवर्णावित्यादि** । 'न पदान्त---' इत्यनेनेति ज्ञेयम् । **रुन्धन्तीति** । श्नम् । अल्लोपः । अनुस्वारपरसवर्णौ । रुणत्सि । रुणद्धि । रुन्द्धि । **अरुणदिति** । लङ् । श्नम् । 'हल्ङ्याब्---' इति लोपः । 'वावसाने' । 'दश्च' इति वा

---

१. After it—परे $D_3$. २. शपापवादः $D_1$. ३. After it—'झषस्तथोर्धोधः' । C. ४. After it—रुन्द्धे C; N has रुन्द्धः । रुन्द्धे. ५. From परत्वात् to तदादेशस्य dropped $D_3$. ६. तदादेशस्य dropped $D_4$. ७. From अनुस्वार...to रुत्वम् dropped $B_1$.

रुत्वम् । अरुणद् । अरुणः । अरुधत् । अरौत्सीत् । एवं[1] भिदिर्[2] छिदिर् रिचिर् विचिर् क्षुधिर् युजिर् ।

उछृदिर् दीप्तिदेवनयोः । छृणत्ति[3] । छृन्ते । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट । 'सेसिचि—' इति वेट् । छर्दिष्यति । छर्त्स्यति । एवं तृदिर्[4] हिंसानादरयोः ।[5] शिष्लृ विशेषणे । विशिनष्टि[6] । हेर्धिः । षस्य[7] जश्त्वेन डः । ष्टुत्वम्[8] । 'झरो झरि—'

---

त्वमिति । 'सिपि' इति ज्ञेयम् । अरुधदिति । 'इरितो वा' इति वा च्लेरङ् । अरौत्सीदिति । अङभावे सिच् । 'वदव्रज—' इति वृद्धिः । चर्त्वम् । रुरोध । रोद्धा । रुध्यात् । रोत्स्यति । अरोत्स्यत् । रुन्द्धे । रुन्धीत । रुन्द्धाम् । अरुन्द्ध । अरुद्ध । रुरुधे । रोद्धा । रुत्सीष्ट । रोत्स्यते । अनुरुध कामे । अनुपूर्वो रुधिरिच्छार्थो दिवादिः । अनुरुध्यते ।

उछृदिर् । द्वौ सेट्कौ । छृणत्ति । छृन्ते । इरित्वादङ् वा । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट । चच्छर्द । चच्छृदे । छर्दिता । छृद्यात् । छर्दिषीष्ट । छृत्सीष्ट । एवमुतृदिर् । तृणत्ति । तृन्ते । अतृदत् । अतर्दीत् । अतर्दिष्ट । ततर्द । ततृदे । तर्दिता । तृद्यात् । तर्दिषीष्ट । तृत्सीष्ट । तर्दिष्यति । तर्दिष्यते । तर्त्स्यति । शिष्लृ । इतश्चत्वारः परस्मैपदिनः । एकोनिट् । शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिंष्यात् । शिनष्टु । शिनष् हि इति स्थिते 'श्नसोरल्लोपः । हेर्धिः इति । 'हुझल्भ्यः—' इति । षस्येति । 'झलां जश् झशि' इति । आन्तरतम्यादित्यर्थः । ष्टुत्वमिति । 'ष्टुना ष्टुः' इति । 'नश्चापदान्तस्य' इत्यनुस्वारः ।

---

१. From एवं to युजिर् dropped $D_1$, $D_3$, $D_4$. २. भिदिर् विदारणे । छिदिर् द्वैधीकरणे । रिचिर् पृथग्भावे । क्षुदिर् संचूर्णे । युजिर् संयोगे । $D_2$. ३. From छृणत्ति to अच्छर्दिष्ट dropped $D_1$, $D_3$. ४. उद्दृदिर् N. ५. After it—तृणत्ति । तृन्ते $B_1$, $B_2$; after it—उभयतो भाषा $D_2$. ६. Dropped $D_1$, $D_3$ ; शिनष्टि $D_4$. ७. 'हुझल्भ्यः—' इति हेर्धिः $B_1$, $B_2$ P, C. ८. षस्य चर्त्वं जश्त्वं डः $D_2$. ९. जश्त्वम् $B_1$, $D_3$, $D_4$.

इति ढलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । [1]अशिनट् । [2]अशिषत् । शे[3]ष्टा । एवं पिष्लृ संचूर्णने । [4]तृह हिंसायाम् ।

तृणह इम् ॥७।३।९२॥

तृहः श्नमि कृते इमागमः स्यात् पिति हलि सार्वधातुके । तृणेढि । तृण्ढः । तृहन्ति । तृणेक्षि । [5]तृणेह्मि । तृंह्वः । तृंह्मः । तृणेढु । अतृणेट् । अतर्हीत् ॥

---

'अनुस्वारस्य ययि परसवर्णः' । अशिनट् इति । लङ् । 'हल्ङ्याब्—' इति लोपः । जश्त्वचर्त्वे । लृदित्वादङ् । अशिषत् । शिशेष । शेष्टा । शेक्ष्यति । तृह । इतश्चत्वारः सेट्काः ।

तृणहः । तृणह इत्यागतश्नमुकस्य ग्रहणम् । श्नमि कृते इमागमो यथा स्यात् । ततश्च तौदादिकस्य तृहेर्ग्रहणं न । अस्यापि यङ्लुगन्तस्यापि ग्रहणं न भवति । तृणेढीति । श्नम् तृणह इति स्थिते इमागमो मित्त्वादन्त्यादचः परः । 'हो ढः' । 'झषस्तथोः—' इति तकारस्य धकारः । ष्टुत्वम् । 'ढो ढे लोपः' । तृण्ढ इति । 'श्नसोरल्लोपः' । ढत्वम् । ष्टुत्वम् । ढलोपः । अनुस्वारपरसवर्णौ । तृणेक्षीति । श्नम् । ढत्वम् । 'षढोः—' इति कत्वम् । तृण्ढः । तृणेह्मि । तृंह्वः । तृंह्मः । तृंह्यात् । तृणेढु । तृण्ढि । तिपि लोपे कृते हलादाविति सवर्णाश्रयेप्यत्र प्रत्ययलक्षणा परिभाषेष्यत इतीम् । अतृणेट् । अतर्हीदिति । लुङ् । सिच् । इट् । गुणः । ततर्ह । तर्हिता । तृह्यात् । तर्हिष्यति ।

---

१. After it—अशिंष्टाम् C. २. From आशिषत् to संचूर्णने dropped $D_1$, $D_4$. ३. In place of it C has शिशेष । शिशिषतुः । शिष्यात्; dropped $D_3$. ४. Before it—भञ्जो आमर्दने । श्नान्नलोपः । श्न इति श्नमयमुच्छिष्टानुबन्धो गृह्यते । तत उत्तरस्य नकारस्य लोपः स्यात् । भनक्ति । अभाङ्क्षीत् । बभञ्ज । भङ्क्ता । भुज पालनाभ्यवहारयोः । भुनक्ति । अभौक्षीत् । भोक्ता । उन्दी क्लेदने । उनत्ति । उन्दांचकार । तञ्चु संकोचने । तनक्ति । वृजी वर्जने । वृणक्ति । अवर्जीत् । ववर्ज । एवं वृचीपृची संपर्के । पृणक्ति । कृती चेष्टिते । कृणत्ति $B_2$, $D_2$ ($D_2$ has भनक्ति । भङ्क्ता and पृची for वृचीपृची). ५. From तृणेह्मि to अतृणेट् dropped $D_1$, $D_2$, $D_3$, $D_4$ ($D_2$ has अतृणेट्); तृणेह्मि । तृंह्व । तृंह्मः dropped N.

[1]हिसि हिंसायाम् । इदित्त्वान्नुम् ।[2]

**श्नान्नलोपः ॥६।४।२३॥**

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति ।[3] अहिंसीत् ।

अञ्जू व्यक्ति [4]म्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अङ्ग्धि ।

---

हिसि । इदित्वान्नुमिति । 'इदितो नुम् धातोः' इति । श्नात् । श्नमयमुत्सृष्टमकारानुबन्धो गृह्यते इत्यभिप्रेत्याह ।

श्नमः परस्येति । शकारवतो ग्रहणं किम् । यज्ञानाम् । 'सुपि च' इति दीर्घे कृतेपि स्थानिवत्त्वान्नलोपः स्यादेव । विश्नानां प्रश्नानामित्यत्र लक्षणप्रतिपदोक्तपरिभाषया न भवति । लाक्षणिकत्वादस्य । हिंस्तः । हिंसन्ति । हिंस्यात् । हिनस्तु । 'धि च' इति सलोपः । हिन्धि । 'तिप्यनस्तेः' इति दः । अहिनत् । अहिनद् । 'सिपि धातोः' इति वा रुः । अहिनत् । अहिनः । अहिनद् । जिहिंस । हिंसिता । हिंस्यात् । हिंसिष्यति ।

अञ्जू । व्यक्तिः प्रकटना । म्रक्षणं घृतादिसेकः । कान्तिर्दीप्तिः । अनक्तीति । श्नम् । श्नान्नलोपः । अञ्जन्ति । अनक्षि । अञ्ज्यात् । अनक्तु । अङ्ग्धीति । 'हुझल्भ्यो हेर्धिः' । 'चोः कुः' । जश्त्वम् । आनक् । आनग् ।

---

१. Before it—वृह वृद्धौ । वृण्ढि । अवर्हीत् $B_1$, P, C, N (N drops वृण्ढि). २. 'इदितो नुम् धातोः' $D_1$. ३. After it—अहिनत् । 'तिप्यनस्तेः' । अहिनः । अहिनत् । 'सिपि धातोरुर्वा' । अहिंसीत् । $B_2$, $D_2$. ४. व्यक्तिम्रक्षण° $D_3$, $B_2$.

अञ्जेः सिचि ॥७।२।७१॥

अञ्जेः सिचो नित्यमिट् स्यात्[1] ॥ आञ्जीत् । आनञ्ज । आनञ्जतुः । अङ्क्ता । अञ्जिता ।[2]

ञिइन्धी दीप्तौ[3] । इन्द्धे । इन्धाते । इन्धांचक्रे[4] ।

विद[5] विचारे[6] । विन्त्ते । एवं खिद दैन्ये ।[7]

इति रुधादिप्रक्रिया ॥

---

आनञ्जेति । 'अत आदेः' । 'तस्मान्नुड् द्विहलः' इति नुट् ।

अङ्क्ता अञ्जितेति । ऊदित्वादिड्वा । अञ्ज्यात् । अञ्जिष्यति । अङ्क्ष्यति ।

ञीन्धी । आत्मनेपदी । इन्धे इति । त । टेरेत्वम् । श्नम् । श्नान्नलोपः । 'झषस्तथोः—' इति धः । 'झरो झरि सवर्णे' इति पूर्वधलोपः । इन्धते । इन्धीत । इन्धाम् । इन्त्स्व । इन्ध्वम् । ऐन्द्ध । ऐन्धिष्ट । इन्धांचक्रे इति । 'इजादेः—' इत्याम् । 'आम्प्रत्ययवत्—' इत्यात्मनेपदं कृञः । इन्धिता । इन्धिषीष्ट । इन्धिष्यते । ऐन्धिष्यत ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं रुधादेः ॥

---

१. Dropped $D_1$, $D_2$, $D_3$, $D_4$; after it आनञ्जुः N. २. After it—अञ्ज्यात् । अञ्जिष्यति $B_2$; परस्मैभाषा $D_2$. ३. इन्धी P, C, $B_1$, $B_2$. ४. Dropped $D_4$. ५. From विद to दैन्ये dropped P, $D_1$, $D_3$, $D_4$. ६. विचारणे $D_2$, N. ७. After it—खिन्त्ते । विखेद $B_2$; आत्मनेभाषा । $D_2$; after it-खिन्त्ते N.

तनु विस्तारे ।

**तनादिकृञ्भ्य उः ॥३।१।७९॥**

तनादिभ्य उः स्यात् ॥ तनोति । तनुतः ।[2] तन्वन्ति । तन्वः । तनुवः । अतानीत् ।[4] अतनीत् ।

**तनादिभ्यस्तथासोः ॥२।४।७९॥**

तनादेः सिचो वा लुक् स्यात् तथासोः परयोः[6] ॥ 'अनुदात्तोपदेश—' इति अनुनासिकलोपः । अतत । अतनिष्ट अतथाः । अतनिष्ठाः ।[7]

षणु दाने । सनोति[8] । 'जनसनखनां सञ्झलोः' ।[9] असात ।

---

तनु । इत आरभ्य आगणान्ताः षडुभयपदिनः । पञ्च सेट्काः । तनोतीति । गुणः । तनुते इति । सार्वधातुकमपिदिति ङित्त्वाद्गुणाभावः तन्वन्ति । तनोषि । तन्वः । तनुव इति । 'लोपश्चास्यान्यतरस्यां म्वोः ।' इति वा उलोपः । तन्मः । तनुमः । तनुयात् । तनोतु । 'उतश्च' इति हेर्लुक् । तनु । अतनोत् । तनुते । तन्वीत । तनुताम् । अतनुत । अतानीत् । अतनीदिति । 'अतो हलादेः' इति वा वृद्धिः ।

तनादिभ्यः । तथासोः साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम् । परस्मैपदे न भवति । अतनिष्ट यूयमिति । ततान । तेने । तनिता । तन्यात् । तनिषीष्ट । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत ।

षणु । सनोतीति । 'धात्वादेः षः सः' । उः । गुणः । सनुते । असानीत् । असनीत् । असातेति । 'तनादिभ्यः' इति सिचो वा लुक् ।

---

१. वृत्ति dropped $D_1$, $D_2$, $D_4$, $N_1$. २. Dropped $D_1$, $D_3$. ३. Dropped $D_2$, $D_4$ तनुवः dropped $N_1$. ४. After it—'अतो हलादेर्लघोः' C, $B_1$, $B_2$. ५. अतनीत् dropped $D_2$. ६. परतः $B_1$, $D_1$, $D_4$, $N_1$. ७. After it—ततान । तन्यात् । तनिता $B_2$. ८. Dropped $D_1$, $D_4$. ९. P has before it—असनीत् । असानीत्.

असनिष्ट । असाथाः । असनिष्ठाः[१] । 'ये विभाषा' । सायात् । सन्यात् ।[२]

क्षणु हिंसायाम् । क्षणोति । 'ह्ययन्तक्षण–' इति न वृद्धिः । अक्षणीत् । अक्षत[३] । अक्षणिष्ट[४] ।

क्षिणु हिंसायाम् । उप्रत्यये तनादेर्नोपधाया[५] गुणः । उपधा ऋकारस्य तु वा । क्षिणोति । अक्षेणीत्[६] । अक्षित । अक्षेणिष्ट ।

---

असनिष्ट । सिचो लुगभावे इट् । असाथाः । असनिष्ठाः । इति पूर्ववत् । ससान । सेने । सनिता । सनिषीष्ट । सनिष्यति । सनिष्यते ।

क्षणु । क्षणोति । क्षणुते । अक्षणीदिति । 'ह्ययन्तक्षण—' इति न वृद्धिः । अक्षत । अक्षणिष्टेति । वा सिचो लुक् । पक्षे 'अनुदात्तोपदेश—' इति अनुनासिकलोपः । चक्षाण । चक्षणे । क्षणिता । क्षण्यात् । क्षणिषीष्ट ।

क्षिणु । इमं धातुं दुर्गः पठति पूर्वस्य स्थाने । तन्मतोपसंग्रहार्थः पाठोऽत्रास्य । उप्रत्यये तनादेरिति । एतदपि दुर्गमतम् । तथा च विकरण इति शप्येव गुणं विदधाति । उपधा ऋकारस्य तु वेति । तथोक्तं क्षीरतरङ्गिण्याम् । एते सार्वधातुके संदिग्धगुणाः । ऋणोति । अर्णोति । इत्यादि । क्षिणुते । अक्षेणीत् । अक्षेणिष्ट । अक्षिणेति । वा सिचो लुक् । अनुनासिकलोपः । ङित्त्वान्न गुणः । चिक्षेण । चिक्षिणे । क्षेणिता । क्षिण्यात् । क्षेणिषीष्ट ।

---

१. Dropped $D_3$. २. After it-सनिष्यति $B_2$; सन्यात् before ये विभाषा $D_4$. ३. Dropped $N_1$. ४. Dropped $D_3$. ५. नोपधाया गुणः P. ६. Dropped $D_1$, $D_3$, $D_4$; अक्षिणोत् $D_2$

ऋण गतौ । ऋणोति । अर्णोति । ऋणुयात् । अर्णुयात् । ऋणोतु । अर्णोतु । आर्णोत् । आर्णोत् । आर्णिष्टाम् । आर्त । आर्णिष्ट । आनर्ण । आनृणतुः ।

डुकृञ् करणे । करोति । 'अत उत्सार्वधातुके'। कुरुतः । यणादेशः । 'न भकुर्छुराम्' इति न दीर्घः । कुर्वन्ति ।

---

ऋणु । ऋणोति । अर्णोतीति । 'उपधा ऋकारस्य तु वा' इति वोपधागुणः । ऋणुते । आर्णोत् । आर्त । आर्णिष्टेति । वा सिचो लुक् । लुक्पक्षे अनुनासिकलोपः । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । आनर्णेति । 'अत आदेः' इत्यभ्यासदीर्घः । ऋकारैकदेशो रेफोपि नुड्विधिं प्रति हल् । तेन 'तस्मान्नुड् द्विहलः' इति नुट् । आनृणे । अर्णिता । ऋण्यात् । अर्णिषीष्ट । आर्णिष्यत् । आर्णिष्यत ।

डुकृञ् । अनिट् । करोतीति । 'तनादिकृञ्भ्य उः' । तनादित्वादेव सिद्धे कृञो ग्रहणमन्यत् तनादिकार्यं नास्येति ज्ञापयतीति तनादेर्नोपधागुण इति गुणनिषेधो नेति गुणो रपरः । उकारस्य गुणः । कुरुत इति । उत्वम् । यणादेश इति । कुरु अन्ति इति स्थिते 'इको यणचि' इति यणादेशः । 'न भ च्छुराम्' इति न दीर्घः । 'हलि च' इति प्राप्तः । एतच्च कुर्व इत्येतस्मात् प्राक् स्थितं लेखकदोषादत्र पतितं ज्ञेयम् । यतः कुर्वन्तीत्यत्र 'अचः परस्मिन्—' इति यणः स्थानिवत्त्वादेव दीर्घाप्राप्तेः । 'न पदान्त—' इत्यत्र दीर्घयलोपयोर्लोपाजादेशस्यैव स्थानिवत्वानिषेधात् ।

---

१. ऋणु D3, D4. २. Dropped C. ३. From ऋणोतु to आर्णिष्टाम् dropped D1; From ऋणुयात् to आर्णिष्टाम् dropped D2, D3, D4. ४. Dropped N. ५. Dropped C; after it—आर्णिषुः N. ६. Dropped D1, D3, D4; after it—तृणु अदने । तृणोति । तर्णोति । तृणुते एवं घृणु दीप्तौ । वनु याचने । वनुते । मनु अवबोधने । मनुते B2, D2.

**नित्यं करोतेः ॥७।४।१०८॥**

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः ॥[1] कुर्वः । कुर्मः ।

**ये च ॥६।४।१०९॥**

कृञः उल्लोपः[2] स्याद्यादौ प्रत्यये ॥ कुर्यात् ।[3] कृञ-स्तनादित्वेपि [4]सिचो वा लुग् न । अकृत ।

**संपर्युपेभ्यः करोतेर्भूषणे ॥६।१।१३७॥**

एभ्यः [5]करोतेः सुडागमः स्याद् भूषणेर्थे ॥ संस्करोति ।

---

**नित्यम्** । नित्यग्रहणं पष्टार्थम् । कुर्व इति वसि उकारलोपस्य दीर्घविधौ स्थानिवत्त्वाभावात् 'हलि च' इति [6]दीर्घे प्राप्ते भवति निषेधः ।

**ये च** । चकारो लोपानुकर्षणार्थः । कुर्यात् । करोतु । अकरोत् । कुरुते । कुर्वीत । कुरुताम् । अकुरुत । अकार्षीत् । कृञस्तनादि । व्याख्यातप्रायम् । अकृतेति । 'ह्रस्वादङ्गात्' इति सिचो लुक् । चकार । चक्रे । कर्ता । क्रियात् । कृषीष्ट । करिष्यति । करिष्यते ।

**संपरि** । संस्करोतीति । 'समः सुटि' इति रुः । 'अत्रानु-नासिक—' इति पूर्वाकारः सानुनासिकः । संपुंकानां सो वक्तव्यः । संपूर्वस्य क्वचिदभूषणेपीष्यते संस्कृतमन्नमित्यत्र तच्च 'संस्कृतं भँक्षाः[7]' इति निर्देशात् । ननु च समस्कृषातामित्यादिषु 'ऋतश्च संयोगादेः' इतीट् कस्मान्न भवति । यतोत्र सुटि कृते करोतिः संयोगादिर्भवतीत्या-शङ्कानिराकरणायाह । सुट उपदेशेत्यादि । अयमभिप्रायः ।

---

१. उप्रत्ययस्य लोपः $D_3$; उलोपः $D_4$. २. प्रत्यये परे $N_1$, $D_3$. ३ After ३-अकार्षीत् $B_2$. ४. वा सिचो $N_1$. ५. करोतौ भूषणे सुडागमः स्यात् $D_1$. ६. दीर्घप्राप्तेर्न इति निषेधः $Bc_2$. ७. भक्ष्याः $Bc_2$.

अडभ्यासव्यवायेपि सुट्। [1]उपदेशाधिकारत्वात् 'ऋतश्च संयोगादेः–' इति लिङ्सिचोर्नेट्। समस्कृषाताम्। [2]संचस्कार। 'ऋतश्च संयोगादेर्गुणः' इत्यत्र संयोगोपधग्रहणं कर्तव्यम्। कृञर्थमिति गुणः। संचस्करतुः। कृसृभृवृ [3]इति सूत्रे ऋतो भारद्वाजेति[4] सूत्रे च कृञोसुट इति वक्तव्यमिति नियमात्[5] ससुट्कस्येट्। संचस्करिथ। संचस्करिव। सुटो बहिरङ्गत्वात् 'गुणोर्तिसंयोगाद्योः' इति [6]गुणो न। [7]संस्क्रियात्। संस्कृषीष्ट। 'परिनिविभ्यः—' इति षः।

---

'ऋतश्च संयोगादेः' इत्यत्र 'एकाच उपदेशेनुदात्तात्' इत्यत उपदेशग्रहणमनुवर्तते। तेनोपदेशावस्थायां यः संयोगादिस्तत एव स्यादिति। न च करोतिरुपदेशावस्थायां संयोगादिः। किं तर्हि। उपदेशोत्तरकालम्। अतोत्र न भवतीति। संचस्कारेति। अडभ्यासव्यवायेपि सुट्। 'ऋतश्च संयोगादेर्गुणः' इत्यत्र संयोगोपधग्रहणं कर्तव्यम्। कृञर्थमिति गुण इति। ननु अनेकाल्त्वात् संयोगस्योपधात्वं न संभवत्येवेति कथं [8]संयोगोपधग्रहणं कर्तव्यमित्युक्तम्। उच्यते। अवयवस्योपधात्वमवयविनि संयोगे उपचर्यते। यथाढ्यमिदं नगरमिति। अथवा संयोगोपधग्रहणेनान्त्यात् पूर्वत्वमुपलक्ष्यते। सुटो बहिरङ्गत्वादित्यादि। अत्र धातूपसर्गयोर्योगे द्वे दर्शने। एकं तावत्। पूर्वं धातुः साधनेन युज्येत पश्चात् सिद्धरूपं उपसर्गेणेति। द्वितीयं तु। पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति। तत्र पूर्वस्मिन् पक्षे संस्क्रियात् संस्कृषीष्टेत्यत्र 'गुणोर्त्ति—' इत्यन्तरङ्गे गुणे क्रियमाणे उपसर्गयोगे-भाविनः सुटो बहिरङ्गत्वादसिद्धत्वात् [9]संयोगादित्वाभावात् गुणो नेत्यभिप्रायः। द्वितीये तु दर्शने सुटो [10]भक्तत्वात् संयोगादित्वं नास्तीति

---

१. उपदेशाधिकत्वात् in Mss. other than $D_4$. २. P drops it. ३. Dropped $D_4$ $N_1$; कृसृभृसूत्रे $D_3$. ४. °द्वाजस्येति $D_1$. ५. निपातनात् $D_3$. ६. न गुणः $B_1$, P, C, N. ७. संस्कृयात् P. ८. तद्ग्रहणं कार्यमित्युक्तम्। $Bc_2$. ९. संयोग $Bc_2$. १०. अभक्तत्वात् $Bc_2$.

परिष्करोति । 'सिवादीनाम्—' इति षत्वं वा । पर्यष्कार्षीत् । पर्यस्कार्षीत् । उपस्करोति ।[2]

उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ ६।१।१३९॥

उपात् कृञः सुट् स्यात् पुनर्गुणाधाने विकारेऽध्याहारेर्थे ।[4] उपस्कुरुते ॥

इति तनादिप्रक्रिया ।

---

गुणो न । सुटोभक्तत्वं च कॄ विक्षेपे इत्यत्र धातौ निपुणतरं प्रत्यपादि । समवाये । समवयनं समवायः । 'एरच्' इतीणोच् । समुदाय इत्यर्थः । अत एवाह । सङ्घेर्थे इति ।

उपात् । प्रतियत्नस्य व्याख्यानं गुणाधानमिति । सतोर्थस्य पूर्वगुणेभ्यो योन्यो गुणस्तस्याधानं गुणाधानं तस्मिन्नर्थे । विकृत इत्यस्य व्याख्या विकार इति । विकृतमेव वैकृतम् । प्रज्ञादित्वादण् इत्यभिप्रायः । वाक्याध्याहारे इत्येकदेशेनानूदितमध्याहारे इति । गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्याध्याहारः । भूषणार्थेषु क्रमेणोदाहरणानि । उपस्कृता कन्या । अलंकृतेत्यर्थः । उपस्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधोदकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं जल्पति । वाक्याध्याहारेण जल्पतीत्यर्थः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं तनादेः ॥

---

१. पर्यस्कार्षीत् । पर्यष्कार्षीत । N: पर्यष्कार्षीत् dropped $D_4$. २. After it—समवाये च ॥६।१।१३८॥ संपर्युपेभ्यः कृञः सुट् स्यात् सङ्घेर्थे । उपस्करोति $B_2$, $D_1$, $D_2$ (उपस्कृता ब्राह्मणा समुदिता इत्यर्थः $D_1$); $D_3$, $D_4$, $N_1$ give the Sûtra and the Vṛitti up to सङ्घेर्थे. ४. After it—उपस्करोति $B_2$.

डुक्रीञ् द्रव्यविनिमये

क्र्यादिभ्यः श्ना ॥३।१।८१॥

क्र्यादिभ्यः श्नाप्रत्ययः स्यात् कर्तरि सार्वधातुके । शपोपवादः । क्रीणाति । 'ई हल्यघोः' । क्रीणीतः । 'श्नाभ्यस्तयोरातः' । क्रीणन्ति । क्रीणीते ।[2]

स्कुञ् आप्रवणे ।[3]

स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः[4] श्नुश्च ॥ ३।१।८२॥

एभ्यः श्नुः स्यात् श्ना च कर्तरि सार्वधातुके ।[5] स्कुनोति । स्कुनाति ॥[6]

स्तम्भुस्तुम्भुस्कम्भु स्कुम्भु रोधने। एते सौत्राः। 'अनिदिताम्–'[6]

---

डुक्रीञ् । द्रव्यविनिमयः परिवर्तः । द्वावुभयपदिनावनिटौ च । क्रीणन्तीति । 'श्नोन्तः' । आलोपः । क्रीणीते इति । टेरेत्वम् । 'ई हल्यघोः' । क्रीणाते । क्रीणते । क्रीणीयात् । क्रीणातु । अक्रीणात् । अक्रैषीत् । चिक्राय । क्रेता । क्रीयात् । क्रेष्यति । अक्रेष्यत् । क्रीणीते । क्रीणीताम् । अक्रीणीत । अक्रेष्ट । चिक्रिये । क्रेषीष्ट ।

स्कुञ् । आप्रवणमुद्धरणम् ।

सौत्रोयमिति केचिदाचार्याः । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भु रोधने । एते चत्वारः सौत्राः । उदित्त्वप्रतिज्ञानात् श्नुश्नाव्यतिरिक्त-विषयेपि सर्वस्मिन् एतेषां धातुत्वमिति ज्ञायते । स्कुनाति । स्कुनीते । स्कुनोति । स्कुनुते । अस्कौषीत् । अस्कोष्ट ।

---

१. °रातो लोपः $B_2$. २. After it—अक्रैषीत् । चिक्राय । क्रीयात् । क्रेषीष्ट । क्रेता । क्रेष्यति । क्रेष्यते $B_2$; अक्रैषीत् for क्रीणीते $D_2$. ३. आप्रवणमागम-नमुद्धरणं वा $B_2$; आवरणे $D_2$, $D_3$, $B_1$, N, P, C. ४. °स्कुभ्यः N, $D_4$. ५. After it—अस्कौषीत् $D_2$. ६. अनिदितां लोपः C.

इति नलोपः[१] । विष्टभ्नोति । अवष्टभ्नोति[२] । 'जृस्तम्भु—' इत्यङ् वा । व्यष्टभत् । व्यष्टम्भीत् । अवतष्टम्भ । स्तुभ्नोति । स्कभ्नोति[३] ।

वेः स्कभ्नातेर्नित्यम् ॥८।३।७७॥

[४]वेः परस्य स्कभ्नातेः सस्य षः स्यान्नित्यम्[५] ॥ विष्कभ्नाति । स्कभ्नातेरित्युक्तेः स्कभ्नोतेर्न[६] । विस्कभ्नोति[७] । स्कुभ्नोति[८] ।

मीञ् हिंसायाम् । 'हिनुमीना' । प्रमीणाति[९] ।

---

चुस्काव । चुस्कुवे । स्कोता । स्कूयात् । स्कोषीष्ट । स्तम्भित्यादि । सर्वे परस्मैपदिनः सेट्काश्च । विष्टभ्नोतीति । 'स्तम्भुस्तुम्भु' इत्यादिना श्नुः । 'स्तन्भेः' इति षः । अवष्टभ्नातीति । श्ना । 'अवाच्च—' इति षः । व्यष्टभत् । व्यष्टम्भीदिति । 'प्राक् सितादड्व्यवायेपि' इति षः । अङ्पक्षे न्लोपः । अङभावे सिच् । इट् । ईट् । अवतष्टम्भेति । 'अड्भ्यासव्यवायेपि' इति षः । स्तम्भिता । स्तुभ्नोति स्तुभ्नातीति । श्नुः श्ना च । 'अनिदिताम्—' इति न्लोपः । अस्तुम्भीत् । तुस्तुम्भ । स्तुम्भिता । स्तुभ्यात् । स्तुम्भिष्यति ।

मीञ् । उभयपदी अनिट् च । 'हिनुमीना' इत्यनेन ण इत्यर्थः ।

---

१. नलोपः $D_2$, C, $B_1$, $B_2$. २. After it—विष्टभ्नाति $D_1$; before it—अवष्टभ्नोति N. ३. C, $D_2$ drop it; स्तुभ्नाति $D_1$, $D_3$, $D_4$, N. ४. नित्यं वेः परस्य $B_2$. ५. Dropped $B_2$. ६. न षत्वम् $B_2$. ७. विस्कभ्नाति । स्कभ्नाति $B_2$. ८. स्कुभ्नाति । अस्कुंभीत् $D_2$; स्कुभ्नोति dropped $D_2$: after it—स्कुभ्नाति $D_4$. ९. After it—मीनीते $B_2$.

'मीनातिमिनोति—' इत्यात्वम् । अमासीत् । अमास्त । ममौ । मिम्यतुः ।[1]

पूञ् पवने ।

**प्वादीनां ह्रस्वः ॥७।३।८०॥**

प्वादीनां द्वाविंशतेर्ह्रस्वः स्यात् शिति परे ॥ प्वादीना ह्रस्वो वेति केचित् । पुनाति । पुनीते । अपावीत् । अपविष्ट ।

---

मीनीते । अमासीदिति । 'यमरम—' इतीट्सकौ । अमास्तेति । आत्वम् । ममाविति । 'आत औ णलः' । मिम्यतुरिति । एजुनिमित्ताभावादात्वं न । यणादेशः । मिम्ये । माता । मीयात् । मासीष्ट । मास्यति । मास्यते ।

पूञ् । पवनं शुद्धिः ।

इत आरभ्य सप्त सेट्काः[3] । चत्वार उभयपदिनः । प्वादीनाम् । अत्र च मतद्वयमस्ति । केषांचिन्मते ली श्लेषणे वृत्[4] इति प्वादयः । केषांचिन्मते आगणान्ताः । तत्र येषां मते आगणान्तास्तेषां वृत्करणं ल्वादिसमाप्त्यर्थम् । तन्मते जानातीत्यत्रापि ह्रस्वो न[5] जा इति दीर्घोच्चारणसामर्थ्यात् । तत्र पूर्वमतमाश्रित्याह । प्वादीनां द्वाविंशतेरिति । पूञ् पवने । लूञ् छेदने । धूञ् कम्पने । स्तॄञ् आच्छादने । कॄञ् हिंसायाम् । वॄञ् वरणे । शॄ कॄ मॄ हिंसायाम् । वॄ वरणे । भॄ भर्त्सने । पॄ पालनपूरणयोः । दॄ विदारणे । जॄँ वयोहानौ । नॄँ[7] तपे । ॠ गतौ । गॄ शब्दे । ज्या[6] वयोहानौ । प्ली[10] वरणे । री[9] गतिरेषयोः । क्ली गतौ । ली श्लेषणे । एते प्वादयः । प्वादीनामिति । अयं भावः । यन्मतेनागणान्तात्[11] प्वादयस्तन्मतेन ह्रस्वः । अन्येषां तु नेति । पुनाति । पुनीते । इति । ह्रस्वः । 'ई हल्यघोः' । अपावीदिति । लुङ् । सिच् । इट ईट् । अपविष्ट । पुपाव । पुपुवे । पविता । पूयात् । पविषीष्ट ।

---

१. After it– मिम्ये । मीयात् $B_2$. २. Dropped $D_1$, $D_3$, $D_4$. ३. सेटः । $Bc_2$. ४. वृत् यावत् प्वादयः । केषांचिन्मते आगणान्तात् । येषां मते वृत्करणं $Dc_3$. ५. न is after °सामर्थ्यात् $Dc_3$. ६. ज्या $Dc_3$. ७. नॄ नये । स्तॄ गतौ । $Dc_3$. ८. जॄ $Dc_3$. ९. री गतिरेषणयोः । $Dc_3$. १०. ल्ली $Bc_3$; ल्वी $Dc_3$. ११. °गणान्ताः $Dc_3$.

कॄञ् हिंसायाम् । [1]अकारीत् । [2]अकरीष्ट । अकरिष्ट । '[3]लिङ्सिचोः—' इति वेट् । अकीर्ष्ट । करिषीष्ट । कीर्षीष्ट ।

धञ कम्पने । अधावीत् । अधौषीत् इत्यपि केचित् । तासौ नित्यानित्वाभावात् थलि नित्यमिट् ।[4] दुधविथ ।

ग्रह उपादाने । '[5]ग्रहिज्या—' इति संप्रसारणम् । गृह्णाति

---

कॄञ् । कृणाति । कृणीते । अकारीत् । अकरिष्ट । अकरीष्टेति । 'लिङ्सिचोरात्मनेपदेषु' इति वेट् । 'वॄतो वा' इति वा इटो दीर्घः । इडभावे इति । 'लिङ्सिचोः—' इतीडभावपक्षे इत्यर्थः । अकीर्ष्टेति । 'उश्च' इति कित्त्वम् । 'ॠत इद्धातोः' । रपरः । दीर्घः । चकार । 'ऋच्छत्यॄताम्' इति गुणः । चकरतुः । चकरे । करिता । करीता । करिषीष्ट । कीर्षीष्टेति । 'लिङ्सिचोः—' इति वेट् । इट्पक्षे 'न लिङि' इति न दीर्घः । [6]अन्यदित्वम् । करिष्यति । करीष्यति ।

धूञ् । 'प्वादीनां ह्रस्वः' । धुनाति । धुनीते । अधावीदिति । 'स्तुसुधूञ्भ्यः' इतीट् । अधौषीदित्यपीति । तथोदाहृतं मुग्धबोधे । धूञ् । अधावीत् । अधविष्ट । अधोष्ट । दुधाव । दुधविथेति । गुणः । द्वित्वम् । ह्रस्वः । 'अभ्यासे चर्च' । दुधुवे । धविता । धूयात् । धविषीष्ट । धोषीष्ट ।

ग्रह । 'ग्रहिज्या—' इति संप्रसारणमिति विशेषः । गृह्णाति । गृह्णीते ।

---

१ Dropped $D_1$, $D_3$, $D_4$. २. अकरिष्ट । अकरीष्ट N, $D_4$. ३. इडभावे अकीर्ष्ट P, N, इडभावे 'उश्च' इति लिङ् सिचोः कित्त्वाद्गुणाभावे 'ॠतइद्धातोः' । अकीर्ष्ट $B_2$; $D_2$ ('हलिच' इतिदीर्घः । अकीर्ष्ट $D_2$); इडभावे $D_1$, $D_3$, $D_4$. ४. After it—ये तु पाक्षिकानिटस्तेषां थलिकस्यापि मते नास्त्येवेट्प्रतिषेधः । दुधविथ । $B_1$, P, C, N. ५. C, $B_2$, $D_1$, $D_4$ have ग्रहिज्या for ग्रहि°... संप्रसारणम्; ग्रहज्यादित्वात् $D_3$. ६. अत्वे दीर्घत्वम् । $Dc_3$.

## हलः श्नः शानज्झौ ॥३।१।८३॥

हलः परस्य श्नः शानजादेशः स्यात् हौ परे ॥ गृहाण ।
[1]अगृह्णात् । अग्रहीत् । हान्तत्वान्न वृद्धिः[2] । जग्राह । [3]जगृहतुः ।
जग्रहिथ ।

## ग्रहोलिटि दीर्घः ॥७।२।३७॥

ग्रहेरिटो दीर्घः स्यान्न तु लिटि ॥ ग्रहीता ।[4]

---

हलः श्नः । 'क्र्यादिभ्यः श्ना' इति श्ने प्रकृतेपि श्न इति ग्रहणमादेशसंप्रत्ययार्थम् । अन्यथा प्रत्ययान्तरं स्यादिति मनसि कृत्वाह । शानजादेश इति । चकारोन्तोदात्तार्थः । स्थानिवद्भावेन शित्त्वे सिद्धेपि पुनः शित्करणं श्नमिदो 'व्यत्ययो बहुलम्' इति श्नाप्रत्ययो यदा भवति तदा तस्य शानजादेशे 'मिदेर्गुणः' इति गुणो मा भूत । इतरथा ह्ययं गुणः प्रतिषेधविषये आरभ्यमाणो यथा मेद्यतीत्यत्र भवति तथेहापि स्यात् । मिदानेति पुनः शित्त्वेपि ङित्त्वमपि पुनर्भवति । तेन गुणो न । गृहाणेति । 'अतो हेः' इति हेर्लुक् । संप्रसारणम् । हान्तत्वान्न वृद्धिरिति । 'ह्यन्तक्षण---' इति निषेधः । अग्रहीष्ट । जग्राहेति । संप्रसारणम् । जगृहे ।

ग्रहः । प्रकृतस्येटो दीर्घत्वमिदं चिण्वदिटो न । ग्राहिता । ग्राहिष्यते । गृह्यात् । ग्रहीषीष्ट । ग्रहीष्यति । ग्रहीष्यते ।

---

१. Dropped N, $D_1$, $D_3$, $D_4$. २. दीर्घः for वृद्धिः $B_1$, $D_1$, P, C. ३. C $B_2$ drop it. ४. After it—उभयतोभाषा । $D_2$.

शॄ हिंसायाम् । शृणाति ।[1]

**शॄदॄप्रां ह्रस्वो वा ॥७।४।१२॥**

एषां ह्रस्वो वा स्यात् क्ङिति[2] लिटि ॥[3] शशार ।[4] ह्रस्वाभावे 'ऋच्छत्यॄताम्' इति गुणः । शशरतुः । शश्रतुः ।[5] शशरिथ ।[6] शरिता । शरीता । शीर्यात् । शरिष्यति । शरीष्यति ॥

एवं दॄ विदारणे पॄ पालने ।

ज्या वयोहानौ । '[7]ग्रहिज्या—' ।

**हलः ॥६।४।२॥**

अङ्गावयवाद्धलः परं यत् संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् ॥ इति दीर्घत्वे कृते[8] प्वादीनां ह्रस्वः । जिनाति ।

---

शॄ । इत आरभ्य दश परस्मैपदिनः । शृणोति । क्षीरस्वामिपक्षेयमुभयपदी । अशारीत् ।

शॄ । शॄ हिंसायाम् । दॄ विदारणे । पॄ पालने । शशार । शशरतुः । शश्रतुरिति । ह्रस्वाभावे 'ऋच्छत्यॄताम्' इति गुणः । ह्रस्वत्वे यणादेशः । शरिता । शरीता । शीर्यात् ।

एवं दॄ । दृणाति । अदारीत् । ददार । ददरतुः । दद्रतुः । दरिता । दरीता । पॄ । पृणाति । अपारीत् । पपार । पपरतुः । पप्रतुः ।

ज्या । द्वावनिटौ ।

हलः । हल इति किम् । उतः । अङ्गावयवादिति किम् । निरुतम् । दुरुतम् । तदन्तस्येति किम् । विद्धः । विचितः । अथ तृतीयमित्यत्र कथं दीर्घो न । तृतीयेति निपातनात् । अज्यासीत् ।

---

१. After it—अशारीत् P, C, $B_1$, $B_2$. २. क्किति $D_3$, $D_4$. ३. After it—शशरतुः । शश्रतुः for शशार to शरीष्यति $D_1$, $D_3$, $D_4$ ; शशरतुः । शश्रतुः । शशरिथ । शशरिव । शश्रिव । शश्रिम । शीर्यात् $D_2$. ४. From ह्रस्वाभावे to गुणः dropped N, $D_4$. ५. After it—शशरुः । शश्रुः P, N, $B_2$. ६. Dropped N. ७. 'ग्रहिज्या—' इति संप्रसारणम् $D_3$, $B_1$, C, N. ८. कृते or प्राप्ते $D_2$, N, $B_2$ प्राप्ते dropped $D_4$.

[1]जिज्यौ । जिज्यतुः । [2]जीयात् ।

व्री वरणे । व्रीणाति ।[3] ज्ञा अवबोधने । ज्ञाजनोर्जा । जानाति ।[4] श्रन्थग्रन्थसंदर्भे । श्रथ्नाति । श्रन्थिग्रन्थ्योः किति लिटि सेटि थलि च एत्वं वक्तव्यम् ॥* वेति केचित् । [5]श्रेथतुः । शश्रन्थतुः । [6]श्रेथिथ । शश्रन्थिथ । एवं [7]ग्रन्थ । कुष निष्कर्षे । कुष्णाति । कुषाण ।

---

जिज्याविति । 'आत औ णलः' । 'लिट्यभ्यासस्य' इति अभ्याससंप्रसारणम् । जिज्यतुरिति । संप्रसारणं 'ग्रहिज्या—' इति । 'हलः' इति दीर्घः । ननु च संप्रसारणे कृते 'सन्लिटोर्जेः' इति कुत्वं कस्मान्नेति चेत् । मैवम् । लाक्षणिकत्वान्नेति पूर्वमेव प्रत्यपादि । ज्याता । जीयात् । ज्यास्यते ।

व्री । व्रीणाति । व्रिणाति । ज्यादीनां ह्रस्वो वेति केचित् । अव्रैषीत् । विव्राय । व्रेता । व्रीयात् । व्रेष्यति । ज्ञा । जानाति । अज्ञासीत् । जज्ञौ । ज्ञाता । ज्ञायात् । ज्ञेयात् । ज्ञास्यति । श्रन्थ । इतो गणान्ताः सेट्काः । श्रथ्नातीति । 'अनिदिताम्—' इति न्लोपः । अश्रन्थीत् । शश्रन्थ । वेति केचिदिति । तथा च पदमञ्जर्यामुक्तम् । अत्र केचिद्वेति पठन्ति । शश्रन्थतुरित्याद्यपि यथा स्यादिति । श्रन्थिता । श्रन्थ्यात् । श्रन्थिष्यति । एवं ग्रन्थ । ग्रथ्नाति । अग्रन्थीत् । जग्रन्थ । जग्रन्थतुः । ग्रेथतुः । ग्रन्थिता । ग्रथ्यात् । कुष । कुष्णातीति । 'रषाभ्यां नो णः समानपदे' । कुषाणेति । 'हलः श्नः शानज्झौ' ।

---

१. Before it—अज्यासीत् $B_2$. २. $D_1$, $D_3$, $D_4$ drop it; $D_2$ has जिज्युः for it. ३. $D_1$, $D_2$, $D_3$, $N_1$ have व्रिणाति after it; after it—अव्रैषीत् । विव्राय । व्रीयात् । व्रेता । व्रेष्यति $B_2$. ४. After it—जानीते । अज्ञासीत् । जज्ञौ । जज्ञे । ज्ञेयात् । ज्ञायात् । ज्ञासीष्ट । ज्ञाता । ज्ञास्यति । ज्ञास्यते $B_2$. ५. Dropped $N_1$. ६. Dropped $N_1$. ७. ग्रन्थे $D_2$.

**निरः कुषः ॥७।२।४६॥**

निरः परात् कुषो वलादेरार्धधातुकस्येड्वा स्यात् । निरकोषीत् । निरकुक्षत् । निरः किम् । कोषिता ।

अश भोजने । अश्नाति । अशान । आशिता । अशिष्यति ।[1] वृङ् संभक्तौ । अवरिष्ट । अवरीष्ट ।[2] अवृत ।[3] ववृषे । वरिषीष्ट । वृषीष्ट ।[4]

इति क्र्यादिप्रक्रिया ॥ इति नवगणाः ।

---

**निरः** । निस इति वाच्ये निर इति निर्देशेन रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते । तस्य निलयनमिति 'उपसर्गस्यायतौ' इति लत्वं स्यात् । निसो रुत्वस्यासिद्धत्वान्न स्यात् । **निरकुक्षदिति** । 'शल इगुपध—' इति क्सः । कत्वषत्वे । चुकोष । कोषिता । कुष्यात् । कोषिष्यति ।

**अश** । **अशानेति** । शानच् । आशीत् । आश । **अशितेति** । इट् । अश्यात् । **वृङ्** । आत्मनेपदी । वृणीते । **अवरिष्ट** । **अवरीष्टेति** । 'लिङ्सिचोः—' इति वेट् । 'वृतो वा' इति वेटो दीर्घः । **अवृतेति** । इडभावे 'उश्च' इति कित्त्वान्न गुणः । 'ह्रस्वादङ्गात्' इति सिचो लोपः । वव्रे । **ववृषे इति** । क्रादित्वान्नेट् । वरिता । वरीता । **वरिषीष्ट** । **वृषीष्टेति** । 'लिङ्सिचोः—' इति वेट् । 'न लिङि' इति नेटो दीर्घः । इडभावे कित्त्वम् । वरिष्यते । वरीष्यते । अवरिष्यत । अवरीष्यत ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योर्य माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलः क्र्यादिसंज्ञो गणोयम् ॥

---

१. After it—'शल इगुपधात्' इति क्सः $B_1$, P, C. २. $D_2$ has परस्मैभाषा after it. ३. After it—'ह्रस्वादङ्गात्—' $B_1$, P, C. ४. $D_2$ has अवृषि after it; N, $D_3$, Com. have ववृषे after it. ५. $D_2$ has आत्मनेभाषा after it.

चुर स्तेये ।

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥३।१।२५॥**

एभ्यश्चुरादिभ्यः स्वार्थे णिच्प्रत्ययः स्यात् । णकारो वृद्ध्यर्थः । चकारः 'चितः' इत्यन्तोदात्तार्थः । उपधागुणः । धातुसंज्ञायां शप्तिबादि । गुणायादेशौ । चोरयति ।

---

एवं नव गणा यथाकथंचिद् व्याख्याताः । अधुना चुरादिरारभ्यते । धातुप्रक्रियाकथने धाष्टर्यमेव कारणं सम्यग्ज्ञानाभावात् । अत एवाह **क्षीरस्वामी** ।

'व्याख्यातेयं नवगणी कुशकाशावलम्बनात् ।
चुरादिरधुनारब्धो यत्र भग्ना महारथाः ॥
पाठेर्थे चागमभ्रंशान्महतामपि मोहतः ।
न विद्मः किं वा जहिमः किं वात्रादध्महे वयम् ॥' इति ।

**चुर** । चुरादयः सर्वे सेट्काः एव । इतः पञ्चोभयपदिनः ।

**सत्याप** । चुरादिभ्योन्येषामिह ग्रहणं प्रपञ्चार्थम् । 'प्रातिपदिकाद्धात्वर्थे' इत्यनेनैव धातुसूत्रेण सिद्धत्वात् । **उपधागुण** इति । 'पुगन्त—' इति । **धातुसंज्ञायामित्यादि** । 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां चोरि इत्यस्मात् 'लः कर्मणि च' इति कर्तरि लकारः । वर्तमाने लट् । लस्य तिबादयः । 'शेषात् कर्तरि परस्मैपदम्' । 'शेषे प्रथमः' इति प्रथमः । तत्राप्येकत्वविवक्षायामेकवचनम् । तिप् । कर्तरि शप् । **गुणायादेशाविति** । 'सार्वधातुक—'

---

१. °श्चुरादिभ्यश्च $D_1$, $D_2$, $D_3$. २. $D_1$, $D_3$, $D_4$ drop from णकारो to °न्तोदात्तार्थः. ३. उपधाया गुणः $D_2$. ४. °तिबादिः $D_1$. ५. वागम° $Bc_2$, $Dc_3$. ६. मत्र $Bc_2$. ७. 'कर्तरि' इति परस्मैपदम् $Bc_2$. ८. After it—इति भावः $Bc_2$, $Dc_3$.

**णिचश्च ॥१।३।७४॥**

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ॥ चोरयते । णिश्रीति चङ् । द्वित्वम् । उपाधाह्रस्वः । अभ्यासदीर्घः । णिलोपः । अचूचुरत् ।

---

इति गुणः । 'एचोयवायावः' इति अय् । चोरयति । चोरयेत् । चोरयतु । अचोरयत् ।

णिचः । चोरयते इति । ननु च

'स्वरितेत् स्याद्ग्रहिः क्र्यादौ लक्षिश्चैक[२]श्चुरादिषु' इति लक्षेः स्वरितेत्त्वस्मरणात् कर्त्रभिप्राये क्रियाफले चुरादेः तङ् नास्ति । नैतत् । भाष्यकारादिभिरनुक्तत्वात् । हेतुमण्णिच एव 'णिचश्च' इत्यत्र ग्रहणमिति चेत् नैवं वाच्यम् । यत एतदाशङ्क्य परिहृतं पदमञ्जर्याम् ।

एष विधिर्न चुरादिणिजन्तात् स्यादिति कश्चन निश्चिनुते स्म ।
आप्तवचोत्र न किंचन दृष्टं लक्षयतेः स्वरितेत्त्वमनार्षम् ॥ इति ।

चोरयते । चोरयेत । चोरयताम् । अचोरयत । 'णिश्रि—' इति चङिति । चोरि लुङ् । तस्य तिप् । 'च्लि लुङि' इति च्लिः । तस्य चङित्यर्थः । द्वित्वमिति । 'चङि' इति । उपधाह्रस्व इति । 'णौ चङ्युपधायाः—' इति । 'एच इग्घ्रस्वादेशे' इति ओकारस्योकारः । अभ्यासस्य ह्रस्वः । अभ्यासदीर्घ इति । 'दीर्घो लघोः' इति । णिलोप इति । 'णेरनिटि' इति । अडागमः । प्रक्रियास्मरणार्थमेवानेन क्रमेण प्रक्रिया लिखिता । क्रमस्त्वेवं ज्ञेयः । परत्वात् द्वित्वात् पूर्वं णिलोपः । ततः परत्वाद् द्वित्वात् पूर्वमुपधाह्रस्वः । ततो द्वित्वम् । ततः सन्वद्भावादभ्यासदीर्घ इति । अचूचुरत् । अचूचुरताम् । अचूचुरन् । अचूचुरत । अचूचुरेताम् । अचूचुरन्त ।

---

१. अभ्यासस्य $D_3$. २. °श्चैव $Bc_2$. ३. स्वरितेत्करणम् । क° $Bc_2$. ४. अत for नैतत् $Dc_3$. ५. तस्य चङ् इत्यस्य त्वर्थः । द्वित्वमिति । $Bc_2$. ६. उपधाया $Bc_2$.

चोरयामास । चोरयिता । चोर्यात्[1] । चुरादे[2]र्णिज्वेति[3] केचित् । पक्षे चोरतीत्यादि[4] ।

कृत संशब्दने[5] ।

---

**चोरयामासेति** । 'कास्प्रत्यय—' इत्याम् । 'अयामन्त—' इत्ययादेशः । 'कृञ्चा—' इति लिट्परस्य कृञोऽनुप्रयोगः । चोरयांचक्रे । **चोरयितेति** । लुट् । तासिः । इट् । **चोर्यादिति** । णिलोपः । चोरयिषीष्ट । चोरयिष्यति । चोरयिष्यते । अचोरयिष्यत् । अचोरयिष्यत । **चुरादेरिति** । तथा चिति स्मृत्या[6]मित्यादीनामिदित्पाठादनित्यण्यन्ताश्चुरादय इति **भीमसेनोऽपि**[7] ज्ञापयति । अन्यथा णिलोपस्य स्थानिवत्त्वात् 'अनिदिताम्—' इति न्लोपस्याप्रसङ्गाच्चित्यादयो नुमनुषक्ता एव पठ्येरन् । तथा **क्षीरस्वामिना** 'बहुलमेतन्निदर्शनम्' इति सूत्रे[8] उक्तम् । चुरादेर्णिचो बहुलं निदर्शनं वा इत्यपरे । तेन पक्षे चोरति चिन्ततीत्यादि सिद्धमिति । तथा महीपतिवचः श्रुत्वा जुघुषुः पुष्पमाणवा इत्यादि लक्ष्यम्[9] । 'अत एकहल्मध्ये—' इत्यत्र **वृत्तिकृदपि** जगणतुरित्या-द्युदाहरन्[10] ज्ञापयति । तत्र **न्यासकृतोक्तम्** । अनित्यण्यन्ताश्चुरादय इत्यदोषः । अनित्यण्यन्तत्वं संभ्रमे[11] ज्ञापयिष्यत इति । **पक्षे चोरतीत्यादि** । शप् । उपधागुणः । आदिशब्दात् । चोरेत् । चोरतु । अचोरत् । अचोरीत् । चुचोर । चोरिता । चूर्यात् । चोरिष्यति । अचोरिष्यत् ।

**कृत** । संशब्दनमुद्घोषः ।

---

१. After it—चोरयिष्यति । चोरयिष्यते $B_2$ २. चौरादे° P. ३. °र्णिचेति P, C, $B_1$. ४. चोरीत् इत्यादि $D_1$. ५. संशब्दे $D_1$. ६. स्मृत्यादीनामिदित्पाठा° $Bc_2$; स्मृत्यामित्यादीनामिद्पाठाद° $Dc_3$. ७. अपि dropped $Dc_3$. ८. नलोप° $Dc_3$. ९. व्याख्याने $Bc_2$; सूत्रव्याख्याने $Dc_3$. १०. So $Bc_2$; others लक्षणम् । ११. °दाहरन् ज्ञाप° $Dc_3$. १२. समासौ $Bc_2$.

**उपधायाश्च ॥७।१।१०१॥**

धातोरुपधाया ॠकारस्य ईदादेशः प्रत्यये परे ॥ कीर्तयति । आचिकीर्तत् ।[2]

अथ अदन्ताः । गण संख्याने ॥ अतो लोपः । तस्य स्थानिवत्त्वान्नोपधावृद्धिः । गणयति ।[3]

**ई च गणः ॥७।४।९७॥**

गणयतेर्[4]भ्यासाकारस्य वा[5] [6]ई स्यात् चङ्परे णौ[7] ॥

---

**उपधायाः** । कीर्तयतीति । उपधाॠकारस्य इत् । रपरः । 'र्हलि च' इति दीर्घः । धातुसंज्ञायां शप्तिबादि । गुणायादेशौ । कीर्तयेत् । **अचिकीर्तदिति** । कीर्ति तिप् । च्लिः । 'णिश्रि—' इति चङ् । णिलोपः । द्वित्वम् । 'कुहोश्चुः' । अट् । कीर्तयामास । कीर्तयिता । कीर्त्यात् । कीर्तयिष्यति । कर्तृगामिनि क्रियाफले कीर्तयते । णिज्विकल्पात् णिजभावे कीर्ततीत्यादि ।

**अथ अदन्ता इति** । इत आरभ्यागणान्तादित्संज्ञानिषेधार्थमदन्तत्वं विधीयते अनेन धातुसूत्रेण । ततश्च अतो लोपस्य स्थानिवत्त्वात् वृद्ध्याद्यभावः[10] । **स्थानिवत्त्वादिति** । 'अचः परस्मिन्—' इति । गणयेदित्यादि ।

**ई च** । अस्याग्लोपित्वादप्राप्तयोः सन्[11]द्भावदीर्घत्वयोरिदमीत्व-

---

१. इत्स्यात् $B_1$, P, C ; ईदादेशः $D_3$. २. After it—पक्षे कीर्तति $B_2$. ३. गणयते after it $B_2$. ४. °रभ्यासस्या° $D_4$. ५. ई वा $D_1$. ६. ईत् $D_2$, $N_1$, ईकारः $D_3$. ७. णौ परे $D_2$. ८. 'उपधायां च' इति दीर्घः । $Bc_2$. ९. इतः प्रभृति $Dc_3$. १०. After it—गणतः । $Bc_2$. ११. सन्वद्भावाद्° $Dc_3$.

अजीगणत् । अग्लोपित्वान्न[1] सन्वद्भावः । अजगणत् ।[2] कथ वाक्यप्रबन्धे[3] । कथयति । कथोभ्यासस्य ईत्वं वेति केचित् । अचीकथत् । अचकथत् ।

अङ्क पदे लक्षे[4] च । अङ्कयति[5] । चङि तु ओः पुयण्ज्यपरे इति ज्ञापकात् अद्वित्वनिमित्तेपि[6] णौ[7] कृतमभ्यासस्य स्थानिवद्[8]

---

मारभ्यते । अजीगणदिति । चङ् । द्वित्वम् । चुत्वम् । अजगणदिति । ईत्वाभावे । गणयामास । गणयिता । गण्यात् । गणयते । गणयेत । गणतीत्यादि । कथ । कथयतीति । अतो लोपः । कथ इति । केचिदिति अर्वाचीनाः । अत एवाह क्षीरस्वामी क्षीरतरङ्गिण्याम् । कथमचीकथत् । प्रकृत्यन्तरमन्वेष्यमिति । मुग्धबोधे तूक्तम्[9] । 'वेङ्गणकथः खेर्ङ्यङि ।' इति । अचकथदिति । अग्लोपित्वान्न सन्वद्भावः । कथयामासेत्यादि ।

अङ्क । अङ्कापयति । चङि त्विति । अङ्कि अस्मात् परस्य च्लेः 'णिश्रि–' इति चङि सति 'चङि' इति द्वित्वे प्राप्ते 'अजादेर्द्वितीयस्य' इति 'नन्द्राः संयोगादयः' इति च ककारस्य साच्कस्य द्वित्वे प्राप्ते किं सणिच्कस्य द्वित्वमुताकारसहितस्येति[10] संशये आह– ओः पुयण्ज्यपरे इत्यादि । अस्यार्थः । यतः कारणादेवं

---

१. °न्नास्य $D_1$. २. After this $D_1$ has—गणयामास । गणयिता । गण्यात् । णेरनिटीति णिलोपो न । गणयिष्यति । अगणयिष्यत् ।. ३. बन्धे $N_1$. ४. लक्ष्माणि $D_1$; लक्षणे $D_2$; $B_2$, $D_3$, $D_4$. ५. After it—अङ्कयते $B_2$. ६. $D_1$ drops अपि. ७. अंचि णौ $B_2$. ८. स्थानवत् $D_2$. ९. °त्युक्तम् $Dc_3$. १०. °स्येत्याशङ्क्याह । $Dc_3$.

भवतीति ज्ञायते । तेनाल्लोपस्यस्थानिवत्त्वात् अकारवतः ककारस्य द्वित्वम् । अग्लोपित्वान्न सन्वद्भावः । आञ्चकत् । केचिदेवमाहुः । ओः पुयण् इत्युवर्णनिर्देशाण्णौ कृत उवर्णादेशे

---

ज्ञायते तेन कारणेनाकारवतः अकारसहितस्य ककारस्य द्वित्वमित्यन्वयः। ननु अल्लोपस्य जातत्वात् कथमकारसहितस्येत्याशङ्क्याह-अल्लोपस्य स्थानिवत्त्वादिति । 'द्विर्वचनेचि' इति द्वित्वे कर्तव्ये स्थानिवत्त्वात् । ननु च द्वित्वनिमित्तेचि योजादेशः स स्थानिवत् । न च णिर्द्वित्वनिमित्तं किं तु चङ् । अतो णौ परतो योल्लोपस्तस्य कथं स्थानिवत्त्वमित्यत आह—ओः पुयण्ज्यपरे इत्यादि । ओः पुयण्ज्यपरे इति ज्ञापकादद्वित्वनिमित्ते णौ परे यत् कृतं तदभ्यासस्याभ्याससंबन्धि सत् स्थानिवद् भवतीति ज्ञायते यतः कारणात् । तथा हि ओः पुयण् इति अभ्यासोवर्णस्य सनि परे पवर्गयण्-जकारेष्ववर्णपरेषु परत इत्वं विधीयते । तच्च पकारयकाराभ्यामन्येषां सर्वेषामेव णिचमन्तरेणावर्णपरता न संभवतीति णिच्येवेत्त्वम् । णिचि च सति जिजावयिषतीत्यादौ वृद्ध्यावादेशयोः कृतयोरभ्यासोवर्ण एव नास्ति। अत एतत् सूत्रं न प्रवर्तते । सर्वरूपसिद्धिश्च । सन्यत इतीत्त्वे सिध्यत्येव एतत् सूत्रं विनापि । अत इदमेव ओः पुयणिति वचनं व्यर्थं सत् ज्ञापयति णौ कृतं स्थानिवद्भवतीति । तेनाकारवतः ककारस्य द्वित्वमित्यर्थः । ज्ञापकाच्च नुनावयिषति इत्यादि सिद्धं स्यात् । एतच्च मतं काशिकाकारादेः । अग्लोपित्वान्न सन्वद्भाव इति । 'सन्वल्लघुनि' इत्यनेन । आञ्चकदिति । णिलोपः । केचिदेवमाहुरित्यादि । अन्येषां त्वयं पक्षः । 'ओः पुयण्ज्यपरे' इत्येतस्मिन् सूत्रे ओरित्युवर्णनिर्देशाण्णौ परतः कृतो य उवर्णस्यादेशः

---

१. विज्ञायते $D_3$. २. परतः कृत° $B_2$. ३. °देशः $D_2$. ४. °मित्यर्थः $Dc_3$. ५. After it—स्यात् $Dc_3$. ६. परतो $Bc_2$.

आकार आवादेशश्चाभ्यासस्य स्थानिवत् स्यान्नान्य[1] इति नियमादजादित्वेन सणिच्कस्यैव ककारस्य द्वित्वम् । आञ्चिकत् । न चास्मिन्मते दन्तत्वं व्यर्थम् । यतोग्लोपित्वं स्थानिवत्त्वं चादन्तत्वप्रयोजनम् । यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम् । अदन्तत्वसार्थकत्वाय वा[2] अल्लोप इत्यर्थः । अङ्कयति । अल्लोपाभावे[3] । अचो ञ्णितीति वृद्धिः[4] ।

---

आकार आवादेश एवाभ्यासस्येति अभ्याससंबन्धी सन् स्थानिवत् स्यान्नान्य इति नियमात् अजादित्वेनाङ्कः कस्याजादेर्द्वितीयस्य 'नन्द्राः संयोगादयः' इति णिच्सहितस्य ककारस्यैव द्वित्वमित्यर्थः[5] । अस्मिंश्च पक्षे पुंस्फोरयिषति[6] चुक्षावयिषति इत्याद्येव सिध्यति । नौजढदित्यादि । अयं च पक्षो बोपदेवपण्डितैः काव्यकामधेनौ महता प्रबन्धेन प्रमाणपदवीमारोहितः ततः सम्यगवगन्तव्यः । ननु चास्मिन् पक्षे अल्लोपस्य नित्यत्वाददन्तत्वं व्यर्थम् । पूर्वस्मिंस्तु पक्षेग्लोपित्वमदन्तत्वप्रयोजनमित्याशङ्कां निराकरोति–न चास्मिन्नित्यादि । कुत इत्यत आह–यत इत्यादि । अल्लोपित्वमदन्तत्वप्रयोजनम् । अचकथदित्यादौ । अत्र हि अतो लोपे कृते अग्लोपित्वान्न सन्वद्भावदीर्घौ । स्थानिवत्त्वं चादन्तत्वप्रयोजनं कथयति गणयतीत्यादौ । अत्रापि अतो लोपे कृते 'अत उपधायाः' इति वृद्धौ प्राप्तायाम् 'अचः परस्मिन्—' इत्यल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः । यत्र तु अङ्कयति आञ्चिकदित्यादौ एते अग्लोपित्वस्थानिवत्त्वे न स्तः अङ्कयतीत्यत्र हि स्थानिवद्भावमन्तरेणापि उपधावृद्धिर्न प्राप्नोति उपधायामकाराभावात् । आञ्चिकदित्यत्रापि हि नाग्लोपित्वस्य प्रयोजनम् । एवंविधे स्थले अल्लोपविकल्पनम् । अदन्तत्वसामर्थ्यात् तत्राल्लोपविकल्पनम् । अस्य तात्पर्यार्थमाह–अदन्तत्वेत्यादि ।

---

१. °न्नान्यत्र $D_1$, $B_1$, P, C. २. च $D_4$, $B_1$, P, C. ३. °भावपक्षे P, $D_3$, $D_4$. ४. °वृद्धिराकारः P. ५. °मिति । $Bc_2$. ६. पुस्फारयिषति $Bc_2$, $Dc_3$.

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ॥७।३।३६॥[1]

अर्त्यादेरादन्तानां च[2] पुगागमः स्यात् णौ परे ॥[3] अङ्कापयति ।[4]

अर्थ उपयाच्ञायाम् । अर्थयते[5] । अर्थापयते । आर्तथत[6] । आर्तिथत । इत्यादि[7] ।

इति चुरादिप्रक्रिया ।

---

अर्तिह्री । अर्तीति श्तिपा निर्देशः 'ऋदृशोऽङि गुणः' इतिवदृकारान्तग्रहणं मा विज्ञायीति । अर्तीति ऋ गतिप्रापणयोः ऋ गताविति द्वयोरपि ग्रहणम् । ह्री लज्जायाम् । व्ली गत्याम् । री गतिशोषणयोः । रीङ् श्रवणे । उभयोरपि ग्रहणम् । क्नूयी शब्दे । क्ष्मायी विधूनने । पुकः पूर्वान्तकरणमदीदपदित्युपधाया ह्रस्वो यथा स्यादिति सिद्धमाञ्चिकपदित्यादि ज्ञेयम्[8] ।

अर्थ । अयमात्मनेपद्येव । अर्थयते इति । अल्लोपः । अर्थापयते । अल्लोपाभावे 'अचो ञ्णिति' इति वृद्धिः । 'अर्तिह्री—' इति पुक् । आर्तथतेति । अर्थि अस्माल्लुङ् । त । च्लिः । 'णिश्रि—' इति चङ् । अल्लोपस्य स्थानिवत्त्वादकारवतस्थकारस्य द्वित्वम् । 'अभ्यासे चर्च' इति थकारस्य तकारः । णिलोपः । आडागमः । आर्तिथतेति । णौ कृताल्लोपस्य स्थानिवत्त्वा-

---

१. पुग्णौ $D_1$, $D_4$, $N_1$. २. Dropped $N_1$. ३. Dropped $D_4$. ४. $D_1$, $D_2$, $B_2$ have after it—आञ्चिकपत्. ५. अर्थयति $D_1$. ६. $D_1$ has in place of आर्तथत...इत्यादि—आर्थापयत । आर्थपत । अर्थापयामास । अर्थयामास । इत्यादि; आर्तथत dropped $D_4$. ७. आर्तिथपत् । इत्यादि $D_2$; आर्तिथपत $B_2$ ; आर्तिथपत । इत्यादि $N_1$. ८. सिद्धम् dropped $Dc_3$.

भाववादिनां मते सणिच्कस्य थिशब्दस्य द्वित्वम् । पूर्ववच्छेषः । अर्थयांचक्रे । इत्यादिशब्दादेव शिष्टानां सर्वेषां पाठस्थितानां धातूनां रूपाणि ज्ञेयानि । तथा च सूत्रलोकागमस्थितानामपि । तथा च धातुसूत्रं 'बहुलमेतन्निदर्शनम्' इति । यदेतद्भवत्यादि-धातुपरिगणनं तद् बाहुलकेन निदर्शनत्वेन ज्ञेयम् । तेनापठिता अपि सौत्रलौकिकवैदिकाः ज्ञेयाः । वर्धते हि धातुगणः । एतदेव सूत्रमन्ये एवं व्याचक्षते । भ्वादिनवगणोक्ता अपि स्वार्थणिजन्ताः स्युः । चुरादिपाठस्तु निदर्शनार्थं रामो राज्यमकारयत् । तथोक्तम् ।

'निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजिष्यते' ।

तथा ।

'धात्वर्थानुप्रवेशोपि बुद्ध्यारोपाण्णिचं विना' ॥ इति । अन्ये तु धातूनामर्थनिर्देशोयं निदर्शनार्थ इति व्याचक्षते । यदाहुः ।

'क्रियावाचित्वमाख्यातुमेकैकोर्थो निर्दर्शितः[1] ।
प्रयोगतोनुगन्तव्या अनेकार्था हि धातवः' ॥ इति ।

सर्वेपि सूत्रव्याख्यानपक्षाः प्रामाणिकत्वादिष्टाः ॥[2]

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला **प्रक्रियेयं चुरादेः** ॥

दशापि गणाः समाप्ताः ॥

---

१. प्रदर्शितः $Dc_3$. २. After it—अशिष्टा न ज्ञेयाः । $Bc_2$.

# अथ ण्यन्तप्रक्रिया ।

हेतुमति च ॥३।१।२६॥

हेतुः प्रयोजकः तद्व्यापारः प्रेषणादिर्हेतुमान् तस्मिन् वाच्ये धातोर्णिच् स्यात् ॥ कुर्वन्तं प्रेरयति

---

स्याच्छुद्धा प्रकृतिर्ण्यन्ता सनन्ता णिचि सन्परा ।
यङन्ता यङ्लुगन्ता च नातोन्या निःप्रयोजना ॥ इति

क्रममभिप्रेत्य शुद्धप्रकृतिरूपाण्यभिधाय ण्यन्ताया रूपाण्याख्यातुमारभते[1]।

हेतुमति । 'फलयोग्योपि[2] पदार्थो हेतुरुच्यते' । तस्य चेद् ग्रहणं स्यादिहापि प्रसज्येत । अध्ययनेन वसतीति । तस्मात् तत्प्रयोजको हेतुश्चेति पारिभाषिकस्य हेतोरिदं ग्रहणमिति दर्शयितुमाह– हेतुः प्रयोजक इति । स्वतन्त्रस्य कर्तुः प्रयोजकः[3]। तद्व्यापारस्तस्य प्रयोजकस्य यो व्यापारः क्रिया । कः पुनरसावित्याह–प्रेषणादि-रिति । भृत्यादेर्निकृष्टस्य क्वचिदर्थे नियोजनं प्रेषणम् । आदिशब्देन अध्येषणतत्समर्थाचरणग्रहणम् । तत्र हीनेनोत्तमप्रेरणमध्येषणम् । प्रयोज्यस्य यो विषयस्तत्र ये समर्था योग्यास्तेषामाचरणं तत्समर्थाचरणम् । अत्र[4] येन प्रकारेण पारिभाषिक एव हेतुर्गृह्यते प्रयोज्यादिषु हेतुमत्सु सत्सु च प्रयोजकव्यापार एव हेतुमानित्यादि भाष्ये[5] न्यासादावाक्षिप्य समर्थितम् । नेह विस्तरभयाल्लिख्यते[6] । कुर्वन्तं प्रेरयतीति[7] । इदं कुरु ईदृशं कुर्विति स्वाभिप्रायेवस्थापयतीत्यर्थः[8] ।

१. °ख्यातुं प्रारभते । Dc3. २. फलसाधनयोग्योपि Bc1. ३. Dropped Bc2. ४. अत्र च Bc2, Dc3. ५. भाष्य Dc3. ६. °ल्लिखितम् Bc2. ७. कारयती° Bc1. ८. कुर्विति स्वाभिप्राये Dc1.

कारयति ।[1] अचीकरत् । णिजन्ताण्णिच् । चोरयन्तं प्रेरयति [2]चोरयति ।

**नाग्लोपिशास्वृदिताम् ॥७।४।२॥**

अग्लोपिनः शास ऋदितश्चो[3]पधाह्रस्वो न स्याच्चङ्परे णौ ॥ इति ह्रस्वाप्राप्तौ णेर्णिचि [4]लोपे नाग्लोपित्वमिति[5] ह्र[6]स्वादि ।

---

एतत् प्रेषणाध्येषणयोर्द्वयोरप्युदाहृणं संभवति । तत्समर्थाचरणस्य तु भिक्षा वासयतीति । भिक्षा[7] हि[8] लभ्यमाना वासानुकूलं तृप्तिविशेषं जनयति । कारयतीति । डुकृञ् करणे । 'अचो ञ्णिति' इति वृद्धिः । 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां शप् तिबादि । गुणायादेशौ । कारयेत् । कारयतु । अकारयत् । अचीकरदिति । लुङ् । च्लिः । 'णिश्रि—' इति चङ् । 'णेरनिटि' इति णिलोपः । णौ चङ्युपधाया ह्रस्वः । द्वित्वम् । 'चङि' इति । चुत्वम् । 'सन्वल्लघुनि—' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । '[9]दीर्घो लघोः' इति दीर्घः । कारयामास । कारयिता । कार्यात् । कारयिष्यति । अकारयिष्यत् । 'कर्तृगामिनि क्रियाफले णिचश्च' इत्यात्मनेपदम् । कारयते इत्यादि । एवं रूपाणि सर्वत्र ण्यन्ते ज्ञेयानि । विशेषस्तत्र तत्र कथयिष्यते । चोरयतीति चुर स्तेये अस्मात् स्वार्थे णिजन्ताद्धेतुमण्णिच् । 'णेरनिटि' इति पूर्वणिलोपः । पूर्ववच्छप्तिबादि ।

**नाग्लोपि** । अगिति प्रत्याहारस्तस्य लोपोस्ति यस्य तदग्लोपि । शासु अनुशिष्टौ । ऋकार इद्यस्य तत् ऋदित् । इह हि द्विविधमग्लोप्यङ्गम् । क्वचिदगेव लुप्यते । मालामाख्यत् [10]अममालदित्यादौ । क्वचिद्धलचौ । राजानमतिक्रान्तवान् अत्यरराजदित्यादौ । अत्र

---

१. After it—कारयते । कार्यात् $B_2$. २. After it—चुर स्तेये $D_4$. ३. °श्चोपधाया $D_1$, $D_2$, $D_3$, $B_2$, ४. C, $D_3$, $D_4$ drop लोपे. ५. केचित् after it in $D_2$. ६. ह्रस्वादिः $D_2$. ७. एतद्भिक्षा $Dc_1$. ८. Dropped $Bc_2$. ९. 'दीर्घः—' इति $Bc_2$. १०. अमामलदित्यादौ $Dc_3$.

अचूचुरत् । णिलोपेऽग्लोपित्वमिति केचित् । अचुचोरत् । अशशासत्[1] । ऋदितः ।[2] अडुढौकत् ।

**णौ च संश्चङोः ॥६।१।३१॥**

सन्परे चङ्परे[3] च णौ श्वयतेः संप्रसारणं वा[4] स्यात् ।

---

'प्रातिपदिकाद्धात्वर्थे' इति णिच् । 'णाविष्ठवत्' इति टिलोपः । स हलचोः । तत्र यत्रागेव केवलो लुप्यते तत्र 'अचः परस्मिन्—' इति स्थानिवत्त्वादकारव्यवधानादेवोपधाह्रस्वो न स्यात् । यत्र तु[5] हलचौ लुप्येते तत्र न सिध्यति । स्थानिवत्त्वाभावात् । अजादेशस्य हि[6] स्थानिवद्भाव उक्तः । न तु हलजादेशस्य । तस्माद्यत्र हलचोरादेशस्तदर्थमग्लोपित्ववचनम् । अचूचुरदिति । चोरि अस्मात् च्लेश्चङ् । 'णौ चङ्युपधाया ह्रस्वः' । 'एच इग्घ्रस्वादेशे' । द्वित्वम् । 'दीर्घो लघोः' इत्यभ्यासदीर्घः । णिलोप इति । तथोक्तं मुग्धबोधे । 'पुनर्नावग्लोपित्वान्न ह्रस्वः' इति । अचुचोरदिति । द्वित्वम् । अभ्यासह्रस्वः । अग्लोपित्वादुपधाह्रस्वाभ्यासदीर्घौ न । अशशासदिति । शासु अनुशिष्टौ । णिच् । लुङ् । तिप् । च्लिः । चङ् । द्वित्वम् । ह्रस्वः । णेर्लोपः । अडुढौकदिति । ढौकृ गतौ । 'अभ्यासे चर्च' इति जश्त्वेन डः ।

णौ च । णौ च संश्चङोरिति भिन्नाधिकरणे सप्तम्यौ इति दर्शयति–सन्परे चङ्परे च णाविति । सन् परो यस्मात् स सन्परः । चङ् परो यस्मात् स चङ्परः । एवंविधे णौ परत इत्यर्थः । ननु श्वयतेर्णिचि तदन्ताच्च सनि कृते चङि चान्तरङ्गत्वादादौ वृद्ध्यायादेशे

---

१. Before it—शासु अनुशिष्टौ $D_4$. २. $D_1$ and $D_2$, $D_4$ have ढौकृ गतौ before it. ३. Dropped $D_3$. ४. स्याद्वा $D_2$. ५. Dropped $Bc_2$. ६. Dropped $Bc_1$. ७. च ङः $Dc_1$.

संप्रसारणं तदाश्रयं च कार्यं बलवदिति वचनादादौ संप्रसारणम्। वृद्ध्यावादेशौ । द्वित्वम् । आवादेशस्याभ्यासे[2] स्थानिवत्त्वा-दुकारदीर्घः[3] । अशूशवत् । [4]अलघुत्वान्न दीर्घः । अशिश्वयत् ।

**स्तम्भुसिवुसहां चङि ॥८।३।११६॥**

एषां षो न स्याच्चङि । उपसर्गादिति वाच्यम् ॥* एषा-मुपसर्गनिमित्तः षो नेष्यते नाभ्यासकृत इत्यर्थः । अवातस्तम्भत् ।

---

स्यातां ततः संप्रसारणमित्याशङ्क्याह—**संप्रसारणमित्यादि** । **वचनादिति** । वार्तिककृद्वचनादित्यर्थः । तदाश्रयं संप्रसारणाश्रयं च कार्यं 'संप्रसारणाच्च' इति पूर्वरूपत्वादि । **आवादेशस्येति** । आवादेशस्याभ्यासे क्रियमाणे 'ओः पुयण्' इति ज्ञापकादद्वित्व-निमित्तेपि णौ परतः स्थानिवत्त्वादुकारस्तस्य दीर्घ इत्यर्थः । **अशूशवदिति** । टुओश्वि गतिवृद्ध्योरित्यस्माण्णिचि लुङ् । च्लेश्चङ् । णिलोपः । 'णौ चङ्युपधाया ह्रस्वः' । 'चङि' इति द्वित्वम् । शु इत्यस्य 'दीर्घो लघोः' । अट् । **अशिश्वयदिति** । संप्रसारणाभावे रूपम् । वृद्ध्यायादेशौ । उपधाह्रस्वः । 'ओः पुयण्' इति ज्ञापकाद् द्वित्वं श्वि इत्यस्य । हलादिः शेषः । येषां पक्षे उवर्णादेश एव स्थानिवत्तेषां पक्षे 'सन्वल्लघुनि' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । अलघुत्वात् 'दीर्घो लघोः' इति न दीर्घः ।

**स्तम्भु** । स्तम्भु रोधने । षिवु तन्तुसन्ताने । षह मर्षणे । 'स्तम्भेः' इति 'परिनिविभ्यः' इति प्राप्तस्य प्रतिषेधः । **उपसर्गादित्यादि** । व्याकरोति । **एषामिति** । **अवातस्तम्भदिति** । स्तम्भेर्णिचि लुङि चङि सति णिलोपः । द्वित्वम् । 'शर्पूर्वाः खयः' इति तकारः शेषः ।

---

१. उवर्णनिर्देशात् णौकृत आवा° N. २. $D_2$ has कर्तव्ये after it. ३. °दुकारो दीर्घः $D_1$, N. ४. Before it $D_1$, $D_2$, $D_3$, $D_4$, N have सन्वद्भावः.

[1]पर्यसीषिवत् । [2]व्यसीषहत् । सुब्धातोरनेकाचश्च सन्वद्भावो वेति केचित् । अचचकासत् । [3]अचीचकासत् । नन्द्राः [4]संयोगेति नदराणां न द्वित्वम् । [5]उन्दी क्लेदने । औन्दिदत् । [6]अड्ड अभियोगे । आड्डिडत् । आर्चिचत् ।

---

अडागमः । **पर्यसीषिवदिति** । सिवश्चङ्परे णौ लघूपधागुणे कृते 'णौ चङि' इत्युपधाह्रस्वः । द्वित्वम् । 'दीर्घो लघोः' इति दीर्घः ।[7] **पर्यसीषहदिति** । सहेरपि 'अत उपधायाः' इति वृद्धौ उपधाह्रस्वः । 'सन्वल्लघुनि' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । दीर्घः । शेषं पूर्ववत् । **सुब्धातोरिति** । सन्वद्भावो दीर्घस्याप्युपलक्षकः । तथोक्तं मुग्धबोधे । 'खेः सन्वद् घौ घोर्हसादेर्घश्च ल्यनेकाचोस्त्वकलिहलेर्वा' इति । **अचचकासत्** । **अचीचकासदिति** । चकासृ दीप्तौ । णौ चङि सति ऋदित्वादुपधाह्रस्वो न । अनेकाच्त्वाद्वा सन्वद्भावो दीर्घश्चेति केचित् । **औन्दिददिति** । उन्दी क्लेदने । णिच् । चङ् । 'अजादेर्द्वितीयस्य' इत्युकारस्य न द्वित्वम् । 'नन्द्राः' इति न नकारस्य । अतः सणिच्कस्य दकारस्य द्वित्वम् । अजादित्वाद् 'दीर्घो लघोः' इति दीर्घो नार्वाचीनमते । स्वमते स्यात् । आट् । 'आटश्च' इति वृद्धिः । **आड्डिडदिति** । अड्ड् उद्यमने । दकारस्य न द्वित्वम् । णिच्सहितस्य डकारस्यैव द्वित्वम् । **आर्चिचदिति** । अर्च पूजायाम् । रस्य न द्वित्वम् । सणिच्कस्य चस्यैव द्वित्वम् ।

---

१. C has पर्यसीषहत् for पर्यसीषिवत् । व्यसीषहत्; पर्यसीषहत् Com. २. न्यसीषहत् $D_3$. ३. Before it—अप्राप्ते नित्यप्राप्तेयमपि विकल्पः अनग्लोपिविषय एव $B_2$. ४. °संयोगादय इति $D_1$. ५. $D_2$, $D_3$, $D_4$ drop उन्दी क्लेदने. ६. अड्ड उद्यमने । आड्डिडत् given after औञ्जिजत् $B_1$, P, C; अड्ड अभियोगे dropped $D_1$, $D_3$, $D_4$. ७. After it–षत्वम् । $Dc_3$. ८. सुब्धातोरनेकाश्चेति । तथोक्तं &c. $Bc_2$.

बकारस्यापि न द्वित्वम् । [1]उब्ज आर्जवे । औब्जिजत् । अजादेरित्येव । नेह । [2]अदिद्रपत् ।

**रभेरशब्लिटोः ॥७।१।६३॥**

रभे[3]र्नुमागमः स्यादचि न तु शब्लिटोः ॥ [4]लघुनीत्युक्तेर्न सन्वत् । अररम्भत् ।

---

औब्जिजदिति । उब्ज आर्जवे । बकारस्य न द्वित्वम् । सणिच्कस्य जस्यैव द्वित्वम् । येषां पक्षे बकारोपधस्तेषामयं प्रतिषेधः । येषां दकारोपधस्तेषां मते तु बत्वं विधातव्यम् । बकारोपदेशस्य प्रयोजनमौब्जिजदित्यादि । दकारोपधस्य समुद्र इत्यादि । अजादेरित्येवेति । 'अजादेः' इत्यनुवर्तत इत्यर्थः । अदिद्रपदिति । द्रा कुत्सायां गतौ । णिच् । 'अर्तिह्री—' इति पुक् । लुङि चङ् । णौ चङ्युपधाया ह्रस्वत्वम् । द्वित्वम् । सन्वद्भाव इत्वम् । ननु च द्वितीयस्येत्यनुवृत्तेरेवात्र न प्राप्नोति किमर्थमजादेरित्यस्यानुवृत्तिः क्रियत इति चेदुच्यते । वृत्तिकारादिमते तु द्वितीयस्येत्यनेनैवात्र निषेधः । ये तु इन्दिद्रीयिषतीत्यादिसिद्ध्यर्थमजादेरिति पञ्चम्यन्तं कर्मधारयमनुवर्तयन्ति तत्पक्षमाश्रित्योक्तमजादेरित्येवेति । एतदर्थमजादेरित्यनुवर्तनीयमेव तदन्यार्थमपि भवति । तत्पक्षे तु द्वितीयस्येति विस्पष्टार्थमेव । इन्द्रमिच्छतीति क्यच् । तदन्तादिन्द्रीयितुमिच्छतीति सन् । पञ्चम्यन्तस्याजादेरित्यस्यानुवृत्तौ 'तस्मादित्युत्तरस्य' इत्यनन्तराणामेव न्द्राणां प्रतिषेधः । अतो नकारस्यैव न द्वित्वम् । दकारस्त्वत्र यद्यपि रेफदकारसंयोगादिभूतस्तथापि नकारेण व्यवहितत्वात् द्विरुच्यते एव ।

रभेः । रभ राभस्ये । अचि किम् । आरब्धा । अशब्लिटोरिति किम् । आरभते । आरेभे । अररम्भादिति । चङ् । पूर्ववत् प्रक्रिया ।

---

१. उब्ज आर्जवे dropped $D_1$, $D_3$ $D_4$. २. अदुद्रवत् । द्रा कुत्सायां गतौ च । अदिद्रपत् $D_2$, $B_1$, P, C. ३. नुम् $D_1$, $D_2$, $D_4$. ४. लघुन्युक्ते... सन्वत् after अररम्भत् P. ५. सन्वद्भावः $B_2$.

**लभेश्च ॥७।१।६४॥**

[1]लभेर्नुम्[2] स्यादचि न तु शब्लिटोः । अललम्भत् ।
[4]अचङीत्युक्तेर्न कुत्वम् । अजीहयत् ।

**नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥३।१।५१॥**

एभ्यश्च्लेश्चङ् न स्याच्छन्दसि ॥[5] औनयीत् । अध्वनयीत् । ऐलयीत् ।[6] आर्दयीत् । लोके तु । औनिनत् । अदध्वनत् ।

---

**लभेः** । डुलभष प्राप्तौ । अचि किम् । लब्धा । अशब्लिटोरिति किम् । लभते । लेभे । **अचङीत्युक्तेरिति** । 'हेरचङि' इत्यत्र । **अजीहयदिति** । हि गतौ वृद्धौ च । णिच् । वृद्धिः । चङ् । उपधाह्रस्वः । द्वित्वम् । सन्वद्भावः । इत्वम् । दीर्घः । चुत्वम् ।

**नोनयति** । ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अर्द गतौ याचने च । एतेभ्यो ण्यन्तेभ्यो धातुभ्यो 'णिश्रि—' इत्यादिना च्लेश्चङादेशः प्राप्तः प्रतिषिध्यते छन्दसि विषये । **औनयीदिति** । सिच् । 'इट ईटि' इति सिचो लोपः । तस्यासिद्धत्वाद् वृद्धौ प्राप्तायां 'ह्यन्तक्षण—' इति निषेधः । गुणायादेशौ । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । **अध्वनयीदिति** । ध्वनयतीत्येतस्मादेव निपातनाददन्तत्वम् । अतो लोपः । तस्य स्थानिवत्त्वात् 'अत उपधायाः' इति वृद्धिर्न । **ऐलयीत्** । [5]**यीदिति** । पूर्ववत् प्रक्रिया । **औनिनदिति** । चङ् । 'अजादेर्द्वितीयस्य' इति निशब्दस्य [7]द्विर्वचनम् । **अदध्वनदिति** । अभ्यासस्य जश्त्वम् । अग्लोपित्वान्न सन्वद्भावः ।

---

१. Before it—डुलभष् प्राप्तौ $B_2$. २. C drops रभे°.. °लिटोः ३. °र्नुमाग- गमः $D_3$. ४. Before it—हेरचङीत्यत्र $D_1$; हेरचङीति $B_1$; हेरचङीत्यनेन $B_2$. ५. After it $D_1$ has—सिच् इट् ईट् गुणः । सिच्लोपः । दीर्घः ६. एलन प्रेरणे after it in $D_2$; एलनं प्रेरणम् $B_2$. ७. द्वित्वम् $Bc_2$, $Dc_3$.

ऐलिलत् । आर्दिदत् । द्वयमपि लोक इति केचित् ।

**अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ॥७।४।९५॥**

एषामभ्यासस्य [1]अकारोन्तादेशः स्याच्चङ्परे णौ ॥ इत्वापवादः । असस्मरत् । [2]अदद्रत् । तपरत्वसामर्थ्यादत्र लघोन दीर्घः । [3]अतत्वरत् । [4]अपप्रथत् । [5]अमम्रदत् । अतस्तरत् । [6]अपस्पशत् ।

**विभाषा वेष्टिचेष्ट्योः ॥७।४।९६॥**

अनयोरभ्यासस्याद्वा[7] स्यात् चङ्परे णौ ॥ अववेष्टत् ।[8] [9]अविवेष्टत् । एच इग्घ्रस्वादेशे । [10]अचचेष्टत् । अचिचेष्टत् ।

---

ऐलिलदिति । 'अजादेः—' इति लिशब्दस्य द्वित्वम् । आट् । वृद्धिः । आर्दिददिति । इहापि पूर्ववत् दिशब्दस्य[11] द्विर्वचनं रेफस्य न द्वित्वम् । 'नन्द्राः—'इति निषेधात् । आट् । वृद्धिः ।

अत्स्मृ । स्मृ चिन्तायाम् । दृ भये । ञित्वरा संभ्रमे । प्रथ प्रख्याने । म्रद मर्दने । स्तृञ् आच्छादने । स्पश बाधनस्पर्शनयोः । असस्मरदिति । स्मारि । अस्माच्चङ् । उपधाह्रस्वः । द्वित्वम् । अथाददरदित्यत्र 'दीर्घो लघोः' इति दीर्घत्वं कस्मान्न भवतीत्याह—तपरत्वसामर्थ्यादिति । अत्र यदि 'दीर्घो लघोः' इति दीर्घः स्यात् तपरकरणमनर्थकं स्यात् । अथैवमुच्यते सवर्णग्रहणाभावार्थं तपरत्वमिति । तन्न । भाव्यमानेनाणा सवर्णानामग्रहणात् । अतत्वरदित्यादि । पूर्ववत् ।

विभाषा । वेष्ट वेष्टने । चेष्ट चेष्टायाम् । एतयोरभ्यासो लघुपरो नास्तीत्यप्राप्त एव सन्वद्भावे विभाषयाकारो विधीयते ।

---

१. अकारान्तादेशः $D_1$, $B_2$. २. P has before it—दॄ विदारे भये च । ३. P has before it—ञित्वरा संभ्रमे ।. ४. Before it P has-प्रथ क्षिप्तौ. ५. Before it—म्रद क्षोदे P. ६. अपस्पशत् $D_1$, $D_2$, $D_4$, $B_2$, $N_1$. ७. °स्यात्वं वा $D_3$, $D_4$. ८. After it—अचचेष्टत् $D_3$. ९. C, $B_2$, $N_1$ have अविवेष्टत् after एच इग्घ्रस्वादेशे. १०. $D_1$ and $D_2$ have अचिचेष्टत् । अचचेष्टत्. ११, °शब्दाद्वि° $Bc_2$.

**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥७।४।३॥**

एषामुपधाया[1] ह्रस्वो वा स्यात् चङ्परे णौ ॥ अबिभ्रजत् । अबभ्राजत् । अदीदिपत्[2] । अदिदीपत् । इत्यादि । कणरणवणभणश्रणह्वेञ्लपलुपलुठहेठां[3] च । अचीकणत् । अचकाणत्[4] ।

---

**भ्राज** । भ्राजृ दीप्तौ । भासृ दीप्तौ । भाष व्यक्तायां वाचि । दीपी दीप्तौ । जीव प्राणधारणे । मील [5]निमेषणे । पीड [6]अवबाधने । एतेषां नित्यं ह्रस्वे प्राप्ते विभाषेयमारभ्यते । भ्राजभासोर्हि ऋदित्करणमपाणिनीयम् । **अबिभ्रजदिति** । अस्माच्चङ् । यदा ह्रस्वस्तदा सन्वद्भावेनेत्वम् । हलादिः शेषः । अभ्यासजश्त्वम् । **अबभ्राजदिति** । ह्रस्वाभावे रूपम् । आदिशब्दात् । अबीभसत् । अबभासत् । अबीभषत् । अबभाषत् । अदीदिपत् । अदिदीपत् । अजीजिवत् । अजिजीवत् । अमीमिलत् । अमिमीलत् । अपीपिडत् । अपिपीडत् । इति । **कणेत्यादि** । उपधाह्रस्वत्वं वा वक्तव्यमिति शेषः । कण आर्तस्वरे । रण शब्दे । वण शब्दे । भण शब्दे । श्रण दाने । ह्वेञ् स्पर्धायां शब्दे च । लप परिभाषणे । लुप लोपने । लुठ लोठने । हेठँ[7] बाधे । **अचीकणदिति** । ह्रस्वत्वपक्षे सन्वद्भावादित्वम् । 'दीर्घो लघोः' इति दीर्घः । **अचकाणदिति** ।

---

१. °मुपधाह्रस्वो $D_2$. २. $D_1$, $D_3$ drop अदीदिपत् । अदिदीपत्; $N_1$, $D_4$ have अदिदीपत् । अदीदिपत् ।. ३. लप्लुप्लुट $N_1$. ४. इत्यादि after it, dropping all forms $D_3$. ५. निमेलने $Bc_2$; निमीषणे $Dc_3$. ६. अवबाधने $Bc_2$. ७. हठ $Dc_3$.

अरीरणत् । अरराणत् । अवीवणत् । अववाणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अजूहवत् । अजुहावत् । अलीलपत् । अललापत् । अलूलुपत् । अलुलोपत् ।[1] अलूलुठत् । अलुलोठत् । अजीहिठत् । अजिहेठत् ।[2]

उर्ऋत् ॥७।४।७॥

उपधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ ॥[3] अचीकृतत् । [4]अवीवृतत् । अमीमृजत् । [5]पक्षे इद्गुणवृद्धयः । अचिकीर्तत् । [6]अववर्तत् । अममार्जत् ॥

---

ह्रस्वाभावे रूपम् । आदिशब्दात् अरीरणत् । अरराणत् । अवीवणत् । अववाणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अजूहवत् । अजुहावत् । अलीलपत् । अललापत् । अलूलुपत् । अलुलोपत् । अलूलुठत् । अलुलोठत् । अजीहिठत् । अजिहेठत् ।

उर्ऋत् । ईर्ँ । गुणवृद्धीनामपवादः । अचीकृतदिति । कॄत संशब्दने । चुरादि णिच् । चङ् । द्वित्वम् । उर्ऋत् । सन्वद्भावेनेत्वम् । चुत्वम् । [8]दीर्घः । अवीवृतत् । अमीमृजदिति । वृतु वर्तने । मृजूष् शुद्धौ । हेतुमण्णिच् । शेषं पूर्ववत् । पक्षे इद्गुणवृद्धय इति । 'उपधायाश्च' इतीत्वम् । रपरः । 'उपधायां च' इति दीर्घः । अयमित् कॄतः 'पुगन्त–' इति गुणो वृतः 'मृजेर्वृद्धिः' इति मृजेर्वृद्धिरित्यर्थः । तपरकरणं दीर्घेपि स्थानिनि ह्रस्व एव यथा स्यात् । अचीकृतदिति । न चायं भाव्यमानः । आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते ।

---

१. $B_2$ has इत्यादि after it and drops the remaining forms. २. After it—इत्यादि $N_1$. ३. After it—इग्वृद्धीनामपवादः $B_1$, $B_2$, $D_2$, $D_4$. ४. अवीवृधत् C. ५. पक्षे 'ऋत इद्धातोः' इति इत् । 'पुगन्त—' इति गुणः । 'मृजेर्वृद्धिः' इति वृद्धिः । C, $D_2$, $D_3$, $D_4$, $B_1$, $B_2$. ६. अववर्धत् C. ७. इति $Dc_1$; इद्गुण° $Dc_3$. ८. दीर्घः dropped $Dc_1$.

**स्वापेश्चङि ॥६।१।१८॥**

ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात् ॥ असूषुपत् ॥

**शाच्छासाह्वाव्यावेपां युक् ॥७।३।३७॥**

एषां युगागमः स्यात् णौ ॥ शाययति[1] । अशीशयत् । छाययति । अचिच्छयत्[2] । साययति । असीसयत् । ह्वाययति ॥

---

**स्वापेः** । आप्ऌ व्याप्तावित्यस्य सुपूर्वस्यैष निर्देशः संभवस्यतस्तद्ग्रहणशङ्कानिरासार्थमाह–**ण्यन्तस्य स्वापेरिति** । असूषुपदिति । 'हेतुमति च' इति णिच् । चङ् । द्विर्वचनात् पूर्वमत्र संप्रसारणं बलीयस्त्वात् । तत्र कृते लघूपधगुणः । तस्य 'णौ चङि' इति ह्रस्वः[3] । ततो द्वित्वम् । 'दीर्घो लघोः' इति दीर्घः । षत्वम् । चङीति किम् । स्वाप्यते ।

**शाच्छा** । शो तनूकरणे । छो छेदने । षोन्तकर्मणि । ह्वेञ् आह्वाने । व्येञ् संवरणे । वेञ् तन्तुसन्ताने । पा पाने । पै शोषणे । इत्युभयोर्ग्रहणम् । पा रक्षणे इत्यस्य तु लुग्विकरणत्वान्न ग्रहणम् । **शाययतीति** । 'आदेच—' इत्यात्वम् । णिच् । शप् । तिबादि । गुणायादेशौ । आदिना छाययति । संव्याययति । वाययति । पाययति । शाछासाह्वाव्यापां कृतात्वानां ग्रहणं पुक्प्राप्तिख्यापनार्थम् । किमेतस्य ख्यापने प्रयोजनम् । एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीत्युपदेशः । अतः क्षापयतीत्यादि सिद्धं स्यात् । वे इत्यनात्वेन निर्देशो वातिवायत्योर्निवृत्त्यर्थः । अयं युक् पुकोपवादः । **ह्वाययतीति** । आत्वम् । युक् । शप् । तिबादि । गुणायादेशौ ।

---

१. शाययतीत्यादि for शाययति...ह्वाययति $D_1$, $D_4$, $B_1$, $B_2$; शाययति । इत्यादि । ह्वाययति $N_1$, $D_3$. २. P has छ्यु छेदने । छाययति । साययति for अचिच्छयत्. ३. इत्युपधाया ह्रस्वः । $Dc_3$.

**ह्वः संप्रसारणम् ॥६।१।३२॥**

सन्परे चङ्परे णौ[1] ह्वयतेः संप्रसारणं स्यान्नित्यम् ॥ संप्रसारणस्य बलीयस्त्वान्न युक् । अजूहवत्[2] । [3]व्याययति । वाययति ।[4] पाययति ।

**लोपः पिबतेरीच्चाभ्यासस्य ॥७।४।४॥**

पिबतेरुपधाया लोपः स्यादभ्यासस्य[5] ईदन्तादेशश्च[6] चङ्परे

---

ह्वः । 'ष्यङः संप्रसारणम्' इत्यनुवर्तमानेपि पुनः संप्रसारणग्रहणं 'विभाषा' इत्यस्य निवृत्त्यर्थमित्यभिप्रेत्याह—नित्यमिति । अजूहवदिति । ह्वा इ अत् इति स्थिते बलीयस्त्वादादौ संप्रसारणम् । वृद्ध्यावादेशौ । उपधाह्रस्वः । द्वित्वम् । उँवर्णादेशस्य[7] स्थानिवत्त्वम् । 'दीर्घो लघोः' । 'कुहोश्चुः' इति चुत्वं झकारः । तस्य 'अभ्यासे चर्च' इति जश्त्वं जकारः । णिलोपः । ह्वः संप्रसारणमभ्यस्तस्य चेत्येकयोगे सिद्धे पृथग्योगकरणमभ्यस्तस्य निमित्तं यः प्रत्ययो न भवति तेन व्यवधाने संप्रसारणाभावज्ञापनार्थम् । ह्वायकमिच्छति ह्वायकीयति । ह्वायकीयतेः सन् । जिह्वायकीयिषतीत्यत्र । पाययतीति । 'शाच्छा—' इति युक् ।

लोपः इति । 'णौ चङ्युपधायाः' इति ह्रस्वे प्राप्ते तदपवादः पिबतेर्लोपो विधीयते ईकारश्चाभ्यासस्य । उपधाधिकारादुपधाया एव पर्यायेण लोपेकारौ मा भूतामित्येवमर्थमभ्यासग्रहणम् । तिपानिर्देशो यङ्लुङ्निवृत्त्यर्थः । अपपेयदिति । न पा रक्षणे पै शोषणे इत्यनयोर्निवृत्त्यर्थः । तयोर्हि एकस्य लुग्विकरणत्वादेव न । अपरस्य

---

१. णौ परे $N_1$. २. अजूहवत् । अजुहावत् $D_3$. ३. $D_1$, $D_2$, $D_3$, $D_4$ and $B_2$ drop व्याययति । वाययति. ४. P, $N_1$ have अवीययत् after it. ५. °चाभ्यासस्य $D_1$, $N_1$. ६. $D_1$ drops च. ७. उवर्णादेशः । स्थानिवत्त्वम् $Bc_2$.

णौ ॥ अपीप्यत् । अर्तिह्रीव्लीति पुक् । पुगन्तेति गुणः । अर्पयति ।[1] ह्रेपयते । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति ।

**तिष्ठतेरित्** ॥७।४।५॥

तिष्ठतेरुपधाया इदादेशः स्यात् चङ्परे णौ ॥ अतिष्ठिपत् ।

---

लाक्षणिकत्वात् । **अपीप्यदिति** । पा पाने अस्मात् 'शाच्छा—' इति युक् । णिलोपः । उपधालोपः । ओः पुयण्वचनं ज्ञापकं णौ स्थानिवद्भावस्येति स्थानिवत्त्वाद्द्विर्वचनम् । अभ्यासस्येकारः । अट् । 'अर्तिह्री—' इति पूर्वमेव व्याख्यातम् । **अर्पयतीति** । ऋ गतौ । णिच् । **ह्रेपयतीति** । ह्री लज्जायाम् । **व्लेपयतीति** । व्ली वरणे । **रेपयतीति** । रीङ् क्षरणे ।[2] **यलोप इति** । 'लोपो व्योर्वलि' इत्यनेन । **क्नोपयतीति** । क्नूयी दुर्गन्धे आर्द्रत्वे शब्दे च । **क्ष्मापयतीति** । क्ष्मायी विधूनने । अत्रापि यलोपः । **स्थापयतीति** । ष्ठा गतिनिवृत्तौ । आकारान्तत्वात् पुक् ।

तिष्ठतेः । अयमपि ह्रस्वापवादः । 'ई चाभ्यासस्य' इति निवृत्तम् । तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः अतास्थपत् । **अतिष्ठिपदिति** । स्था इ इति स्थिते पुक् चङ् इकारोन्तादेशः । इत्वस्य स्थानिवत्त्वात् स्थाशब्दस्य द्वित्वम् । सन्वद्भावादभ्यासस्येत्वम् । 'शर्पूर्वाः खयः' इति खयः शिष्यन्ते । 'अभ्यासे चर्च' इति थकारस्य तकारः । षत्वम् ।

---

१. After it—आर्पिपत् $B_2$. २. रक्षणे $Dc_3$.

## जिघ्रतेर्वा ॥७।४।६॥

जिघ्रतेः प्रागुक्तं वा स्यात् ॥ अजिघ्रिपत् । [1]अजिघ्रपत् । पातेर्णौ लुगागमो [2]वक्तव्यः । पालयति ।[3]

## वो विधूनने जुक् ॥७।३।३८॥

[4]वातेर्जुक् स्यात् [5]णौ [6]कम्पनेर्थे ॥ वाजयति । [7]कम्पे किम् । केशान् वापयति । धूञ्प्रीञोर्नुग्वेति केचित् । धूनयति । धावयति । प्रीणयति । प्राययति ।[8]

---

जिघ्रतेः । अयमपि ह्रस्वापवादः । तिपा निर्देशो यङ्-लुङ्निवृत्त्यर्थः । अजिघ्रपत् । अजिघ्रिपदिति । घ्रा गन्धोपादाने । पालयतीति । पा रक्षणे । पाल रक्षणे इत्यनेन पालयतीति सिद्धे पातेः [9]पुग्बाधनार्थं लुग्विधिः ।

वो वि । वाजयतीति । कम्पयतीत्यर्थे । वा गतिगन्धनयोः । वज गतावित्यस्य णिचि वाजयतीति सिद्धे वातेः पुङ्निवृत्त्यर्थं जुको विधिः । [10]धूञ्प्रीञोरिति । धूञ् कम्पने । प्रीञ् तर्पणे । वेति केचिदिति । तथा च सरस्वतीकण्ठाभरणप्रक्रियायां पदसिन्धुसेता-[11]वित्युक्तं 'धावयतीत्येके [12]प्राययतीत्येके इति च । मुग्धबोधे च '[13]धूञ्प्रीञोर्नन्वा' इति ।

---

१. Dropped N. २. वाच्यः $B_2$. ३. After it—अपीपलत् $B_2$. ४. वातेर्णौ जुक्° $D_3$. ५. णौ परे $N_1$. ६. कम्पेर्थे $B_2$, P, C. ७. कम्पने $D_2$, $D_3$. ८. C drops from धूञ्प्रीञो°......प्राययति. ९. पुग्बाधनार्थं $Bc_2$. १०. धूञ् इति $Bc_2$. ११. इति dropped $Bc_2$. १२. प्रपञ्चयती° $Dc_3$. १३. 'प्रीधूञोर्नन् वा' मुग्ध.

**विभाषा लीयतेः ॥६।१।५१॥**

[1]लीलीङोरात्वं वा स्यात् ल्यपि एज्निमित्ते अशिति च ॥ वि[2]लापयति विलाययति वा घृतम् ।

**लीलोर्नुग्लुकावन्यतरस्यां स्नेह[3]निपातने ॥७।३।३९॥**

लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेह[4]द्रवे ॥ विलीनयति विलाययति विलालयति वि[5]लापयति वा घृतम् । स्नेह[6]द्रवे किम् । लोहं वि[7]लापयति ॥ प्रलम्भनाभिभवपूजासु लियो नित्यमात्वमशिति वाच्यम् ॥*

---

विभाषा । ली श्लेषणे इति क्र्यादिः । लीङ् श्लेषणे इति दिवादिः । उभयोरपि यका निर्देश इति स्मर्यत इत्यभिप्रेत्याह—लीलीङोरिति । विलापयतीति । पुक् ।

लीलो । लीयतेरिति लीलीङोर्ग्रहणम् । लातेरिति ला आदाने इत्यस्य कृतात्वस्य लीयतेश्च ग्रहणम् । ली ई इति इकारोत्र प्रश्लिष्यते । तत इकारान्तस्यैव नुग्विधिः न तु 'विभाषा लीयतेः' इति कृतात्वस्य[8] । विलीनयतीति । नुक् । वि[9]लाययतीति । नु[10]गभावे वृद्धिः । विलालयतीति । लुक् । विलापयतीति । लु[11]गभावे पुक् । घृतं द्रवीकरोतीत्यर्थः । प्रलम्भनेति । प्रलम्भनं मिथ्याफ[12]लाख्यानम् । वञ्चनमित्यर्थः । अभिभवः पराभवः ।

---

१. लिङ्लीङो° P., लीङोप्यात्वं C, $D_1$, $N_1$. २. विलापयति घृतम् $D_1$, $D_3$, $D_4$, $N_1$, $B_2$ ; विलाययति घृतम् $D_2$. ३. विपातने $D_2$, $D_3$, $D_4$, $N_1$. ४. स्नेहद्रावे C. ५. C drops it; $D_2$ drops it and also विलाययति वा घृतम् ; विलाययति विलापयति वा घृतम् $N_1$; $D_4$ (वा घृतम् dropped $D_4$.) ६. स्नेहद्रावे C. ७. विलाययति । विलापयति P; $D_2$, $D_3$, $D_4$, $B_2$; विलापयति । विलाययति $N_1$. ८. इति स्थिते $Bc_2$. ९. नुग् भवति $Dc_1$. १०. $Dc_1$ drops from विलाययतीति to वृद्धिः ११. नुग्भावे Ms. $Bc_3$, $Dc_3$. १२. नगभावे $Bc_2$. १३. °कथाख्यानम् $Dc_3$.

**लियः संमाननशालीनीकरणयोश्च ॥१।३।७०॥**

लीङ्लियोरात्मनेपदं स्याद[1]कर्तृगेपि फले पूजाभिभवयोः प्रलम्भने चार्थे ॥ जटाभि[2]र्लापयते । श्येनो वर्तिकामुल्लापयते । [3]बालमुल्लापयते ।[4]

**विभेतेर्हेतुभये ॥६।१।५६॥**

विभेतेरेच आत्वं [5]वा स्यात् प्रयोजकाद् [6]भयं चेद्वाच्यम् ॥

**भीस्म्योर्हेतुभये ॥१।३।६८॥**

आभ्यामात्मनेपदं स्याद् हेतुभये । पुगागमः[7] । मुण्डो भापयते ।

---

लियः । जटाभिर्लापयत इति । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । पराभवतीत्यर्थः । बालमुल्लापयते । मिथ्याफलाख्यानेन वञ्चयतीत्यर्थः । 'विभाषा लीयतेः' इति यदात्वं विधीयते तदस्मिन् विषये नित्यमन्यत्र विकल्पेन । व्यवस्थितविभाषा हि सा ।

विभेतेः । हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः । 'हेतुभये' इति 'पञ्चमी भयेन' इति समासः । एतद् हृदि मनसि कृत्वाह—**प्रयोजकाद् भयं चेद्वाच्यमिति** ।

**भीस्म्योः** । ञिभी भये । ष्मिङ् ईषद्धसने । **हेतुभये इति** । प्रयोजकाद्भयं चेद् वाच्यमित्यर्थः । भयग्रहणं धात्वर्थोपलक्षणार्थम् । तेन विस्मयोपि तत एव । **पुगागम** इति । 'अर्तिह्री—' इति । **मुण्डो भापयत इति** । मुण्डगुणोपेतत्वान्मुण्डः ।

---

१. °दकर्तृगामिफले $D_1$. २. °र्लापयते तापसः । पूजामधिगच्छति $B_2$. ३. $D_2$, $D_4$ have उल्लापनमभिभवनम् before it. ४. After it—अत्र प्रतारणम् $B_2$, $D_4$. ५. स्याद्वा $D_1$. ६. भये वाच्ये $D_1$. ७. $D_2$ has स्यात् after it. ८ °र्लापयतीति $Bc_2$. ९. हेतुभयमिति $Bc_2$.

**भियो हेतुभये षुक् ॥७।३।४०॥**

भियः षुक् स्यात् णौ हेतुभये ॥ इयन्तनिर्देशान्नात्वपक्षे षुक् । भीषयते ।

**नित्यं स्मयतेः ॥६।१।५७॥**

स्मयतेरेचो नित्यमात्वं स्यात् णौ हेतुभये ॥ जटिलो विस्मापयते । हेतुभये किम् । कुञ्चिकयैनं भाययति विस्माययति ।[1]

**स्फायो वः ॥७।३।४१॥**

अस्य वान्तादेशः[2] स्यात् णौ ॥ स्फावयति । अपिस्फवत् ।

**शदे[3]रगतौ तः ॥७।३।४२॥**

शदेर्णौ तान्तादेशः[4] स्यान्न तु गतौ ॥ शातयति ।

---

**नित्यम्** । हेतुभये इति भयशब्देनात्र[5] धात्वर्थसामान्यात् स्मयतेरर्थोऽभिधीयते । न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति । **कुञ्चिकयैनं भाययतीति** । अत्र कारणात्[6] कुञ्चिकातो भयं न हेतोः । अत आत्व[7]मात्मनेपदं पुग् च न । **विस्माययतीति** । रूपेणेति शेषः ।[8]

**स्फायो वः** । स्फायी वृद्धौ ।

**शदेः** । शद्लृ शातने । ननु किमर्थमिदमुच्यते यतः शद्लृ शातने इत्यस्मादेव निपातात्तः स्यात् । सत्यम् । ज्ञापनार्थम् । अबाधकान्यपि निपातनानि भवन्तीति । तेन पुराशब्दात् 'सायंचिरम्—' इत्युच्यमानयोष्ट्युट्युलोः 'पुराणप्रोक्तेषु' इति निपातेन बाधो नेति पुरातन इति सिद्धम् । **शातयतीति** । 'अत उपधायाः' इति वृद्धिः ।

---

१. After it—अबीभयत् । असिस्मयत् $B_2$. २. वान्तादेशः P; $D_2$, $D_3$, N. ३. $D_1$, $D_3$ drop it; after it—शद्लृ गतौ $B_2$. ४. तान्तादेशः C, $D_2$, $D_3$, $N_1$. ५. अत्र dropped $Bc_2$. ६. धारणात् $Dc_3$. ७. आत्वं dropped $Bc_2$. ८. Dropped $Bc_2$.

गतौ तु गाः शादयति गोविन्दः ।

**रुहः पोऽन्यतरस्याम् ॥७।३।४३॥**

रुहः पः स्याद्वा णौ ॥ रोपयति रोहयति ।[1]

**क्रीङ्जीनां णौ ॥६।१।४८॥**

[2]क्री इङ् जि एषामेच आत्वं स्याण्णौ ॥[3] [4]क्रापयति । [5]अध्यापयति । [6]जापयति ।

**णौ च संश्चङोः ॥२।४।५१॥**

सन्परे चङ्परे [7]च णौ [8]इङो गाङ् [9]वा स्यात् ॥

---

**गाः शादयतीति । गमयतीत्यर्थः ।**

**रुहः** । किमर्थमिदमुच्यते । यतो रुप परिमोहने इति दिवादिस्तस्य रोपयतीति स्यात् । रुह जन्मनीत्यस्य रोहयतीति चेत् सत्यम् । जन्मार्थस्य रोपयतीति प्रयोगार्थम् । धातूनामनेकार्थत्वात् स्यादिति चेत् अनेकार्था हि धातवो न सर्वे सर्वार्थाः । **रोपयतीति** । लघूपधगुणः ।

**क्रीङ्** । डुक्रीञ् द्रव्यविनिमये । इङ् अध्ययने । जि जये । **क्रापयतीति** । णौ परे वृद्धिः । पुक् ।

**णौ च** । णाविति चेयं परसप्तमी इङपेक्षया संश्चङोरिति सप्तमी ण्यपेक्षयेत्यभिप्रायेणाह—**सन्परे चङ्परे च णाविति** ।

---

१. After it—अरूरुपत् । अरूरुहत् । अरूरुहताम् $B_2$. २. क्री जि इङ् $D_2$, $D_4$. ३. एषामेवात्वं णौ । $D_4$. ४. After it—परे N. ५. जापयति । अध्यापयति $D_2$, $D_4$. ६. C, $B_2$, N drop it. ७. Dropped $B_2$. ८. C has इङो गाङ् वा स्यात् in the beginning of the Vritti before सन्परे°. ९. स्याद्वा $N_1$.

अध्यजीगपत् । अध्यापिपत् ।

**सिध्यतेरपारलौकिके ॥६।१।४९॥**

अस्यैच आत्वं स्याण्णौ न तु पारलौकिकेर्थे ॥ अन्नं साधयति । अदृष्टार्थे तु तपः सेधयति ।

---

अध्यजीगपदिति । इङ् अध्ययने । अधिपूर्वः । णिचि गाङादेशः । 'अर्तिह्री—' इति पुक् । 'णिश्रि—' इति चङ् । णिलोपः । 'णौ चङि—' इत्युपधाह्रस्वः । द्वित्वम् । 'सन्वत्' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । 'दीर्घो लघोः' इति दीर्घः । चुत्वम् । अध्यापिपदिति । गाङभावेरूपम् । 'क्रीङ्जि—' इत्यात्वम् । पुक् । 'अजादेर्द्वितीयस्य' इति पीत्यस्य द्वित्वम् ।

**सिध्यतेः** । षिधू संराद्धौ । **अन्नं साधयतीति** । निष्पादयतीत्यर्थः । **तपः सेधयतीति** । तापस इति शेषः । अत्र सिध्यतिः परलोकार्थे ज्ञानविशेषे वर्तते । तापसो ज्ञानविशेषमासादयति । तं तपः प्रयुङ्क्ते । स च ज्ञानविशेष उत्पन्नः परलोकाभ्युदयलक्षणं फलमुपसंहरन् परलोकप्रयोजनो भवति । इह कस्मान्न भवति पर्युदासः । अन्नं साधयति ब्राह्मणेभ्यो दास्यामीति । उच्यते । सिध्यतेरत्रार्थो निष्पत्तिः । तस्याः प्रयोजनमन्नं तस्य यद्दानं तत् पारलौकिकम् । न पुनः सिद्धेरेवेति पर्युदस्यते साक्षात् परलोकप्रयोजने सिद्ध्यर्थे कृतावकाशं वचनं नैवंविधे विषये प्रवर्तत इति । सिध्यतेरिति श्यना निर्देशः षिधु गत्यामित्येतस्य भौवादिकस्य निवृत्त्यर्थः ।

---

१. For it— ज्ञापयति $N_1$. २. °ण्णौ परे $N_1$; णौ dropped $D_4$. ३. $D_1$ drops it. ४. ईङ् $Dc_3$. ५. न पर्युदस्यते $Bc_2$.

**चिस्फुरोर्णौ ॥६।१।५४॥**

चिञः स्फुरश्चैच आत्वं वा स्याण्णौ ॥ चापयति । चाययति । स्फारयति । स्फोरयति । आत्वस्याभ्यासे स्थानिवत्त्वात् । अपुस्फरत् । अपुस्फुरत् ।

**प्रजने वीयतेः ॥६।१।५५॥**

अस्यैच आत्वं वा स्यात् णौ प्रजनेर्थे ॥ वापयति वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः । स्तावयति ।

---

**चिस्फुरोः** । चिञ् चयने । स्फुर स्फुरणे । चापयतीति । आत्वपक्षे पुक् । अन्यत्रायादेशः । आत्वस्येति । 'ओः पुयण्–' इत्युवर्णनिर्देशाण्णौ कृत उवर्णादेश आकार आवादेशश्चाभ्यासे स्थानिवदिति स्थानिवत्त्वादित्यर्थः । अपुस्फरदिति । स्फुर अस्माण्णिचि चङि च सति गुणः । उपधाया आत्वम् । उपधाया ह्रस्वः । द्वित्वम् आकारस्य स्थानिवत्त्वात् स्फु इत्येतस्य । अपुस्फुरदिति । आत्वाभावे ह्रस्वः । 'एच इग्घ्रस्वादेशे' ।

**प्रजने** । वी गतिप्रजनकान्त्यशनखादनेषु । प्रजनो जन्मन उपक्रमो गर्भग्रहणमित्यर्थः । अत एवाह—**गर्भं ग्राहयतीत्यर्थः** इति । यदि वा गतिगन्धनयोरयं धातुः प्रजने वर्तते तदा शक्योयं योगोकर्तुम् । वातेर्हि वापयतीति स्यात् वीयतेस्तु वाययतीति । स्तावयतीति ।

---

१. चिस्फुरो° $D_1$. २. स्याद्वा for वा स्याण्णौ N. ३. स्याद्वा णौ $D_1$. ४. $D_2$, $D_4$, $B_2$ drop णौ. ५. C has अपुस्फुरत् । अपस्फुरत् ; अपुस्फुरत् । अपुस्फरत् । $D_4$. ६. Dropped $N_1$, $D_4$. ७. उपधाह्रस्वः । $Bc_2$, $Dc_3$.

आवादेशस्य स्थानिवत्त्वात् अतुष्टवत् । भावयति । सन्वद्भावे ।

**ओः पुयण्ज्यपरे ॥७।४।८०॥**

अभ्यासोवर्णस्य सनि परे इत्वं स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः ॥ अबीभवत् । अयीयवत् । अजीजवत् ।[2]

---

ष्टुञ् स्तुतौ । अतुष्टवदिति । णिचि चङि वृद्ध्यावादेशौ । उपधाह्रस्वः । द्वित्वम् । अभ्यासावादेशस्य स्थानिवत्त्वम् । शर्पूर्वाः खयः शिष्यन्ते । षत्वष्टुत्वे । भावयतीति । भू सत्तायाम् । सन्वद्भाव इति । भू अस्माण्णिचि चङि वृद्ध्यावादेशोपधाह्रस्वद्वित्वेषु कृतेषु 'सन्वल्लघुनि' इति सन्वद्भावे सतीत्यर्थः ।

ओः पु । पुयण्जकाराणां समाहारद्वन्द्वे[3] सप्तम्येकवचनं 'पुयण्जि' इति । 'द्वन्द्वाच्चुदषहान्तात्—' इति समासान्तस्त्वनित्यत्वान्न भवति । अः परो यस्मात् पुयण्जः तदपरमिति सूत्रार्थमभिप्रेत्याह-अभ्यासोवर्णस्येत्यादि । अबीभवदिति । अत्रावर्णपरपवर्गपरोऽभ्यासः[4] । ननु चाबीभवदित्यादौ कथमुकारान्तताभ्यासस्य यावता णौ वृद्ध्यायादेशयोः कृतयोराकारान्तेनाभ्यासेन भवितव्यमिति चेत् । नैवम् । स्थानिवद्भावादूकारान्त एवाभ्यासो भवतीत्येतत् चुरादिगणे निपुणतरं प्रत्यपादि । 'दीर्घो लघोः' इति दीर्घः । अभ्यासस्य जत्वम्[5] । अयीयवदिति । यु मिश्रणे । णिचि चङि वृद्ध्यावादेशौ । स्थानिवत्त्वात् द्वित्वमुकारान्तस्य । यकारपरोयमभ्यासः । अजीजवदिति । जु गतौ । जकारपरोयमभ्यासः । अरीरवत् । अलीलवदिति ज्ञेयम् । रेफलकारपरेभ्यासे ।

---

१. Dropped $B_2$; before it—अपीपवत् $D_3$. २. After it—यु मिश्रणे । अयीयवत् $B_2$; अपीपवत् for अयीयवत् N. ३. °द्वन्द्वः $Dc_3$. ४. परोस्ति भकारः । $Dc_3$. ५. अभ्यासजइत्वम् $Dc_1$.

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥७।४।८१॥**

एषामभ्यासस्योकारस्येत्वं वा स्यात् सन्यवर्णपरे[1] धात्वक्षरे परे ।[2] असिस्रवत् । असुस्रवत् । इत्यादि ॥

गूहयति । अजूगुहत् ।

**दोषो णौ ॥६।४।९०॥**

दुष्यतेरुपधाया ऊदादेशः[4] स्यात् णौ ॥ दूषयति ।

---

स्रवति । पूर्वसूत्रे त्वनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम् । स्रु गतौ । श्रु श्रवणे । द्रु गतौ । च्युङ्प्रुङ्प्लुङ् गतौ । 'पुयण्ज्यपरे' इत्यनुवर्तते । तत्रैषां धातूनामवर्णपरता यण् च संभवति । स च यण् अत्राभ्यासोवर्णात् परः सकारादिभिर्व्यवहित एव नानन्तर इति वचनसामर्थ्यादेकेन वर्णेन व्यवधिराश्रीयत इत्यभिप्रेत्याह—अवर्णपरे धात्वक्षरे परे इति । व्यञ्जनसहितोजक्षरं धातोरक्षरं धात्वक्षरं तत्र । अवर्णः परः अन्तावयवो[5] यस्य तदवर्णपरम् । अवर्णान्ते धात्वक्षरे परे इत्यर्थः । असिस्रवदिति । पूर्ववत् प्रक्रिया । आदिशब्दात् । अशिश्रवत् । अशुश्रवत् । अदिद्रवत् । अदुद्रवत् । अपिप्रवत् । अपुप्रवत् । अपिप्लवत् । अपुप्लवत् । अचिच्यवत् । अचुच्यवत् । इति ज्ञेयम् ।

गूहयतीति । गुहू संवरणे । 'ऊदुपधाया गोहः' इति ऊत् । दोषः । दुष वैकृत्ये ।

---

१. अवर्णे परे N. २. परे सति N. ३. P and C, $D_3$ drop it. ४. ऊ आ° $D_3$. ५. अन्त्योवयवः $Dc_3$.

**वा चित्तविरागे ॥६।४।९१॥**

चित्तविरागेर्थे दुष्यतेर्वा ऊत् स्यात् णौ ॥ चित्तं दूषयति दोषयति वा ।

**मितां ह्रस्वः ॥६।४।९२॥**

घटादयो मित इति कृतसंज्ञानामुपधाया ह्रस्वः स्यात् णौ ॥ घटयति । व्यथयति । एवं पञ्चपञ्चाशतो रूपम् ।

---

**वा चित्त** । पूर्वेण नित्ये प्राप्ते विकल्पः । चित्तविरागश्चित्तस्याप्रीतता ।

**मिताम्** । **घटादय** इत्यादि । 'घटादयो मितः' इति धातुसूत्रेण कृतमित्संज्ञानामित्यर्थः । **घटयति** । **व्यथयती**ति । घट चेष्टायाम् । व्यथ भयचलनयोः । 'अत उपधायाः' इति वृद्धिः । पश्चाद्ध्रस्वः । **एवमि**ति । एवमनेन प्रकारेण प्रथ प्रख्याने इत्यादीनां ज्ञास्वनव्यतिरिक्तानां पञ्चपञ्चाशतो धातूनां रूपं ज्ञातव्यमित्यर्थः । ज्ञस्तु कथयिष्यति । स्वनं तु केचिदेव पठन्ति न सर्वे ।

घटव्यथप्रथाश्चैव पृथुप्रसम्रदस्खदाः ।
क्षजिदक्षिक्रपकदिक्रदिक्कादित्वादित्वराः ॥
गडिहेडी वटिभटी नटिश्चकिष्टकी स्तकिः ।
कखेरगेलगश्चैव ह्रगेल्हगेष्टगेस्थगः ॥
कगेकागः क्नुटिकणी रण्चण्शण्श्रण्श्रथिक्नथः ।
क्रथिक्लथी चनुवनू ज्वलह्वलम्हलस्मृदृ ॥
नॄश्राज्ञाचलूछदलडयो मद्ध्वनी स्वन इत्यपि ।
घटादयस्त्वमी ज्ञेया ऊनषष्टिर्हि धातवः ॥

---

१. विरागेर्थे N. २. दूषेर्वा ऊ $D_3$. ३. कृतमित्संज्ञाना° $B_2$, $D_4$.

जनीजॄष्क्नसुरञ्जोऽमन्ताश्च । जन्यादयोऽमन्ताश्च[1] मितो ज्ञेयाः ॥ जनयति । जरयति । क्नसयति । रञ्जेर्णौ मृगरमणे[2] रजयति मृगान् । अन्यत्र तु[3] रञ्जयति वस्त्रम् । दमयति । मारणतोषणनिशानेषु ज्ञा ॥* एष्वर्थेषु ज्ञा मित् स्यात् । ज्ञपयति[4][5] । अन्यत्र तु[6]

---

केचिदत्र वेत्यनुवर्तयन्ति । सा च व्यवस्थितविभाषा । तेन संक्रामयतीत्यादि सिध्येत्[7] । मित्संज्ञाविधायकान्यन्यान्यपि धातुसूत्राणि पठति—जनीत्यादि । व्याकरोति च जन्यादय इति । जनी प्रादुर्भावे । जन जनने । उभयोरपि ग्रहणम् । जॄष् वयोहानौ दिवादिर्न क्र्यादिरषित्त्वात् । क्नसु ह्वरणदीप्त्योः । रञ्ज रागे । अम् अन्ते येषां ते अमन्ताः । जनयतीत्यादिषु ह्रस्वः । जॄणातेस्तु जारयत्यभ्रकम् । दमयतीति । दम दान्तौ । अमन्तोऽयम् । मारणेति । घटादिगणान्तर्गतसूत्रम् । मारणं हिंसनम् । निशानं तीक्ष्णीकरणम् । निशामनमित्येके पेठुः । निशामनमालोकनम् । ज्ञेति । ज्ञा अवबोधने । ज्ञपयतीति । पुक् । मारणे । संज्ञपयति पशुम् । तोषणे । विष्णुं विज्ञपयाम्यहम् । निशाने । प्रज्ञपयति शस्त्रम् । चुरादौ ज्ञा नियोजने । तस्य 'आज्ञापय ज्ञातविशेषपुंसाम्' इत्यादयः प्रयोगाः । आज्ञप्त इत्यादयस्तु ज्ञानाङ्केः तोषणे प्रध्वंसाभावे वा । ज्ञीप्स्यत[10] इत्यादौ

---

१. Dropped $B_2$. २. मृगरमणेर्थे C; मृगरमणे लोपो वक्तव्यः $B_2$; मृगरमणे न्लोपो वक्तव्यः N, $D_3$, $D_4$. ३. Dropped N. ४. Before it—मारणं हिंसनम् $B_2$. ५. After it—पशुम् । पुगागमः । तोषणे । विष्णुं विज्ञपयाम्यहम् । निशानं तिक्ष्णीकरणम् । प्रज्ञपयति शस्त्रम् । अन्यत्र तु ज्ञापयति $B_2$. ६. Dropped $D_3$. ७. सिद्धिः $Bc_3$. ८. निशातनमाज्ञापनम् । $Dc_3$. ९. निशामने $Dc_1$. १०. ज्ञीप्सित $Bc_2$.

ज्ञापयति ॥ ज्वलह्वलह्मलनमोऽनुपसर्गा वा । ग्लास्नावनुवमश्च ॥ ज्वलादयो ग्लादयश्च मितो वा स्युः अनुपसर्गाः । ज्वलयति । ज्वालयति । ग्लपयति । ग्लापयति । स्नपयति । स्नापयति । अनुपसर्गाः किम् । प्रज्वालयति । प्रग्लापयति ॥ नकम्यमिचमः ॥* अमन्ता अप्येते मितो न स्युः ॥ कामयति । आमयति । चामयति । शमोऽदर्शने ॥* शमोऽदर्शने मित् स्यात् । शमयति । दर्शने तु निशामयति ॥ यमोऽपरिवेषणे ॥* यमयति । अन्यत्र तु यामयति ॥ स्खदिरवपरिभ्याम् ॥* अवस्खदयति । परिस्खदयति । सोपसर्गात् स्खदेः फणश्च मित्वं वेति केचित् । प्रस्खदयति । प्रस्खादयति । फणयति । फाणयति ।

---

'प्रच्छ ज्ञीप्सायाम्' इति ज्ञापकात् ह्रस्वः । ज्वलेति । ज्वल दीप्तौ । ह्वलह्मल चलने । णमु प्रह्वीभावे । एतेषां नित्यमित्वं प्राप्तमनुपसर्गाणां विकल्प्यते । अत्र **क्षीरस्वामी** चलिमपि पठति । अचार्यैस्तु दुर्गादिभिरत्रापठितत्वान्न पठितः । अतस्तदीयान्येवात्र सूत्राणि पेठुः । **ग्लास्नेति** । ग्लै हर्षक्षये । ष्णा शौचे । एतयोरप्राप्तम् । वनु संभक्तौ । टु वमु उद्गिरणे । एतयोः प्राप्तम् । **न कम्यमीति** । कमु कान्तौ । अम गतौ । चमु अदने । **शम इति** । शमु उपशमे इत्यस्य दर्शनादन्यत्र मित्संज्ञा । **यम इति** । यमु उपरमे । **स्खदिरिति** । स्खद खेदने । **सोपसर्गेति** । तथोक्तं **मुग्धबोधे** । 'वा शमयमफणगिस्खदाम्' इति ।

---

१. °वन° $D_1$, $B_2$. २. अनुपसर्गाश्चेत् $B_2$, $D_3$, $D_4$; अनुपसर्गे N. ३. After it–विग्लापयति ; dropped $D_3$, $D_4$, $B_2$. ४. °चमाम् P. ५. वामयति P. ६. शमो दर्शनेमित् । शमयति । $D_3$. ७. मित्संज्ञः $N_1$ ८. Dropped $B_2$. ९. After this P and $D_2$, $D_4$, $B_2$ have–अन्यस्मात्तु प्रस्खादयति ; N has अन्यस्मात्तु only after it. १०. $D_2$ has प्रस्कदयति । प्रस्कादयति । फणयति । फाणयति ; C has—अन्यस्मात्तु प्रस्खादयति । फण गतौ । फणयति । अन्यमते तु फाणयति ; P has प्रस्खदयति । फण गतौ । फणयति । अन्यमते तु फाणयति. ११. फण गतौ । फणयति । अन्यत्र तु फाणयति । $N_1$. १२. अत्र dropped $Dc_1$.

णौ गमिरबोधने ॥२।४।४६॥

इणो गमिः स्यात् णौ । गमयति । बोधने तु प्रत्याययति । इण्वदिक् । अधिगमयति ॥

हनस्तोऽचिण्णलोः ॥७।३।३२॥

हन्तेस्तकारोन्तादेशः स्यात् चिण्णल्वर्जे[1] ञ्णिति ॥ हो हन्तेरिति कुत्वम् । घातयति । ईर्ष्ययति । ईर्ष्यतेस्तृतीयस्य[3] द्वे ॥*[4] तृतीयव्यञ्जनस्यैकाचो वा । ऐर्षिष्ययत्[5] । ऐर्ष्यियत् ।

इति ण्यन्तप्रक्रिया ।

---

णौ गमि । इण गतौ । प्रत्याययतीति । णिच् । वृद्ध्यायादेशौ । बोधयतीत्यर्थः । इण्वदिति । इक् स्मरणे ।

हनः । हन हिंसागत्योः । घातयतीति । 'अत उपधायाः' इति वृद्धिः । अचिण्णलोरिति किम् । अघानि । जघान । अथेह कस्मान्न । वृत्रं हतवान् । 'ब्रह्मभ्रूण—' इति क्विप् । तदन्तात् 'तस्येदम्' इत्यण् । 'ष पूर्व—' इत्यल्लोपः । वार्त्रघ्न इत्युच्यते । धातोः कार्यमुच्यमानं धातुप्रत्यय एव भवति तेनात्र न भवति । एतच्च श्रौणहत्येति निपातेन ज्ञापितम् । ईर्ष्ययतीति । ईर्ष्य ईर्ष्यें । ईर्ष्यतेरिति वक्तव्यम् । तत्र कस्य तृतीयस्येत्याशङ्कायां केचिदाहुर्व्यञ्जनस्येति । अन्ये तु तृतीयस्यैकाच इति । तदुभयमाह—तृतीयेति । व्यञ्जनापेक्षया तृतीयव्यञ्जनस्य यकारस्य । अथवा तृतीयस्यैकाचः षकारस्येत्यर्थः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रिया ण्यन्तसंज्ञा ॥

---

१. वर्जे N. २. C, $N_1$ and $D_2$ drop it. ३. °स्तृतीयस्य द्वितीयस्य व्यञ्जनस्य एकाचो वा C ; °द्वितीयस्य द्वे । द्वितीयस्य व्यञ्जनस्यैकाचो वा P. ४. After it–द्वे स्तः $B_2$ ; द्वे स्तो वा N. ५. $D_2$ has ईर्ष्यें ईर्ष्यायाम् before it.

# अथ सन्नन्ताः ।

धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥३।१।७॥

इषिकर्मणो धातोरिषिणैककर्तृकात् सन्प्रत्ययो वा स्यादिच्छायाम् ॥ लुङ्सनोर्घस्लृ । [1]द्वित्वम् । सन्यतः । धातोर्विधेरिहार्धधातुकत्वम् । एकाच उपदेश इति नेट् । [2]धातुत्वाल्लडादयः । सस्य तत्त्वम् । अत्तुमिच्छति[3] जिघत्सति । अतो लोपः ।

---

धातोः कर्मणः । इषिकर्मण इत्यादि । इषेः कर्म इषिकर्म । एकः कर्ता यस्य स एककर्तृकः । य एव कर्ता इषेः स एव कर्ता यस्य तस्मात् सन्प्रत्ययो वा स्यादिच्छायामर्थ इत्यर्थः । कर्मत्वं समानकर्तृत्वं च धातोरर्थद्वारकम् । द्वित्वमिति । 'सन्यङोः' इति । धातुत्वाल्लडादय इति । 'सनाद्यन्ता धातवः' इति धातुत्वादित्यर्थः । सस्य तत्वमिति । 'सः स्यार्धधातुके' इति । जिघत्सतीति । अत्र भक्षणस्यार्थस्येच्छया व्याप्यमानत्वात् कर्मत्वम् । तद्द्वारादिरिषेः कर्म । तथा अदेः समानकर्तृत्वं चेषिणा । य एव कर्ता इषेरर्थस्य स एवाद्यर्थस्येत्यर्थद्वारेण । धातोरिति किम् । उपसर्गादुत्पत्तिर्मा भूत् । प्रकर्तुमैच्छत् प्राचिकीर्षत् । यदि धातोरिति नोच्येत तदा प्रकर्तुमित्यस्य संघातस्येषिकर्मत्वात् सोपसर्गादुत्पत्तिः स्यात् ततश्च प्र इत्यस्य द्वित्वं स्यात् । अट् च प्रशब्दात् पूर्वः स्यात् । कर्मण इति किम् । करणान्मा भूत् । गमनेनेच्छति । समानकर्तृकादिति किम् । देवदत्तस्य भोजनमिच्छति । इच्छायामिति किम् । कर्तुं जानाति । ननु चात्रेच्छा इषिकर्मत्वमिषिसमानकर्तृत्वमपि नास्ति

---

१. सन्यङोरिति द्वित्वम् $B_2$. २. $D_1$ has पक्षे वाक्यमपि before धातु° ३. P and C, $N_1$ have—उक्तार्थानामप्रयोगः before जिघत्सति ।

अजिघत्सीत् । पक्षे वाक्यमपि[1] ।

दीङः सन्यात्वं वेति केचित् । दिदासते ।[2] दिदीषते । द्युतिस्वाप्योः संप्रसारणम् ।

रलो व्युपधाद्धलादेः संश्च ॥१।२।२६॥

उश्च इश्च वी। उइवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः ॥ दिद्युतिषते । दिद्योतिषते

---

इत्यनेकाङ्गविकलता । मैवम् । सति हीच्छाग्रहणे इषिकर्मत्वमिषिसमानकर्तृकत्वं च लभ्यते । असति तु तस्मिन् यां कांचन क्रियां प्रति धातोः कर्मत्वं समानकर्तृकत्वं चेति युक्तम् । जिघत्सेत् । जिघत्सतु । अजिघत्सत् । अजिघत्सीदिति । लुङ् । सिच् । इट् । ईट् । सलोपः । अडागमः । जिघत्सामास । जिघत्सिता ॥ जिघत्स्यात् । जिघत्सिष्यति । अजिघत्सिष्यत् । इति रूपाणि सन्नन्ते ज्ञेयानि सर्वत्र । पक्षे वाक्यमपीति । वावचनादित्यर्थः ।

दीङ इति । दीङ् क्षये । तथोक्तं मुग्धबोधे । 'दीङष्टचां यत् यब् णौ ङा सनि तु वा' इति । दिदासत इति । 'पूर्ववत् सनः' इत्यात्मनेपदम् । दिदीषते इति । 'इको झल्' इति कित्त्वान्न गुणः । द्युतिस्वाप्योः संप्रसारणमिति । द्युत दीप्तौ । अस्मात् द्योतितुमिच्छतीत्येतस्मिन्नर्थे सन् । द्वित्वम् । पश्चादभ्यासस्य संप्रसारणमित्यर्थः । 'आर्धधातुकस्य' इतीट् ।

रलः । क्त्वाप्रत्ययस्य 'न क्त्वा सेट्—' इति कित्त्वे प्रतिषिद्धे सनोऽप्यकित्त्वे स्वभावत एव व्यवस्थिते उभयत्रेदं विधिमुखेनैव प्रवर्तते । पक्षे कित्त्वं भवतीति । दिद्युतिषते इति । 'क्ङिति च' इति गुणप्रतिषेधः । 'पूर्ववत् सनः' इत्यात्मनेपदम् ।

---

१. $D_1$ drops पक्षे.. मपि. २. After it—अदिदासिष्ट $B_2$. ३. विः $D_1$.

उच्छेस्तुकि द्वित्वे च कृते खर्पूर्वाः खयः शिष्यन्त इति वक्तव्यम् । इति तलोपः । चर्त्वम् । अभ्यासचर्त्वस्य तुकं प्रति सिद्धत्वात् [1]छे चेति न तुक् । उचिच्छिषति । तलोपो वेत्येके[2] । उतिच्छिषति ।

ण्यन्तात् सन् । णौ च संश्चङोरिति गाङ्[3] वा । [4]अधिजिगापयिषति । अध्यापिपयिषति । [5]णौ संश्चङोरिति वा संप्रसारणम् । [6]शुशावयिषति । शिश्वाययिषति । [7]अण्यन्तस्य तु

---

उछेरिति । उछ बन्धनसमापनवर्जनातिक्रमेषु । अस्मात् सनि कृते 'छे च' इति तुकि च इटि च 'सन्यङोः' इत्यजादित्वाद् द्वितीयस्य तकारसहितस्य छकारस्येट्सहितस्य द्वित्वे कृते इत्यर्थः । चर्त्वमिति 'अभ्यासे चर्च' इति चकारः। पूर्वत्रासिद्धन्यायेन पुनस्तुकि प्राप्ते आह—**अभ्यासचर्त्वस्येति** । अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वाच्ये इति वचनात् सिद्धत्वादित्यभिप्रायः । तलोप इति । तथोक्तं **रामव्याकरणे** ।

उचिच्छिषति चछोर्द्विरुतिच्छिषति तच्छयोः ।
द्विर्भावं शर्ववर्माह छस्य (?) च्छे पाणिनिस्तुकम् ॥ इति ।

**ण्यन्तात् सन्निति** । इङ् अध्ययने । अस्माद्धेतुमण्णिजन्तात् सन्नित्यर्थः । **अध्यापिपयिषतीति** । गाङभावे 'क्रीङ्जि—' इत्यात्वम् । 'अजादेर्द्वितीयस्य' इति एकाचः पीत्येतस्यावयवस्य द्वित्वम् । **शुशावयिषतीति** । टुओश्वि गतिवृद्ध्योः । हेतुमण्णिच् । सन् । संप्रसारणम् । वृद्ध्यावादेशौ । शु इत्यस्य द्वित्वम् । सन इट् । गुणः । अय् । षत्वम् । **शिश्वाययिषतीति** । णिच् सन् वृद्ध्यायादेशौ । द्वित्वम् । इत्वम् । सन इट् । गुणः । अय् । षत्वम् ।

---

१. न छे चेति तुक् $D_1$. २. वेति केचित् P. ३. वा गाङ् $D_1$. ४. इङ् अध्ययेन before अधिजिगापयिषति in $D_1$. ५. C drops णौ...°रणम्; णौ च सन्निति वा सं° $D_3$, $D_4$. ६. $D_1$ and $D_2$, $D_3$, $D_4$ have—शिश्वाययिषति । शुशावयिषति. ७. $D_2$, $D_3$ drop अण्य°...°यिषति. ८. च कृते $Bc_2$.

शिश्वयिषति । ह्वः संप्रसारणम् । जुहावयिषति । जुहोतेरप्येवं रूपम्।[1]

**उभौ साभ्यासस्य ॥८।४।२१॥**

अनितेः साभ्यासस्य उभौ नकारौ णत्वं प्राप्नुतः निमित्ते सति ॥ प्राणिणिषति । पराणिणत्[2] । न वृद्भ्यश्चतुर्भ्यः[3] ।

**हलन्ताच्च ॥१।२।१०॥**

इक्समीपाद्धलः परो झलादिः सन् कित् स्यात् ॥

---

जुहावयिषतीति । ह्वेञ् स्पर्धायां शब्दे च । णिच् । सन् । संप्रसारणम् । शेषमनन्तरवत् ।

उभौ । अन प्राणने । **निमित्ते सतीति** । उपसर्गस्थे निमित्ते सतीत्यर्थः । **प्राणिणिषतीति** । अनितेः सन् । इट् । 'अजादेः—' इति नीत्यस्य द्वित्वम् । **पराणिणदिति** । णिच् । चङ् । पूर्वत्रासिद्धीयमद्वित्वे इत्येतस्मिन् सति 'अनितेः' इत्यनेनैव कृतणत्वस्य द्वित्वे सिद्धमेतत् सूत्रं विनापि । तथापि पूर्वत्रासिद्धीयमिति वचनस्य नित्यत्वे चिक्लृप्सतीत्यत्र कृतलत्वस्य द्वित्वं प्राप्नोति तन्नाश्रयितव्यमित्येतस्य वचनस्यानित्यत्वज्ञापनार्थमिदं सूत्रमारभ्यते ।

हलन्ताच्च । यदीहान्तशब्दोवयववाची स्यादिको हला सह संबन्धो न स्यात् । न हीको हलवयवः संभवतीति । तस्मान्नायमन्तशब्दोवयववाची अपि तु समीपवाच्येव युक्त इति मत्वाह—

---

१. अण्यन्तस्य तु जुहूषति for जुहोते···रूपम् $B_2$, $D_4$; dropped from जुहो...रूपम् $D_3$. २. C has प्राणिणिषति for पराणिणत्. ३. °श्चतुर्भ्य इति नेद $B_2$.

विवृत्सति । ताङि तु विवर्तिषते । सेसिचीति वेट् । निनृत्सति । निनर्तिषति ।

**इट् सनि वा ॥७।२।४१॥**

वृङ्वृञ्भ्यामॄदन्ताच्च परस्य सन इड् वा स्यात् ॥

**इको झल् ॥१।२।९॥**

इगन्ताज्झलादिः सन् कित् स्यात् ॥ ॠत इद्धातोः ।

---

इक्समीपादिति । **विवृत्सतीति** । वृतु वर्तने । सन् । 'वृद्भ्यः स्यसनोः' इति परस्मैपदम् । ततः 'न वृद्भ्यः' इतीट् न । ततः कित्त्वम् । ततो गुणनिषेधः । द्वित्वम् । 'उरत्' इत्वम् । ताङि त्विति । यदा तु 'वृद्भ्यः स्यसनोः' इति परस्मैपदं न तदा 'न वृद्भ्यः--' इति निषेधोपि न । आत्मनेपदत्वात् । यदेट् तदा कित्त्वमपि न । अझलादित्वात् । अतो विवर्तिषते इत्यत्र गुणो भवतीति भावः । **निनृत्सतीति** । नृती गात्रविक्षेपे । कित्त्वम् । उरत् । इत्वम् । **निनर्तिषतीति** । इट्पक्षे अकित्त्वाद्गुणः ।

इट् । वृङ् संभक्तौ । वृञ् आवरणे ।

इकः । सन्ग्रहणं प्रथमान्तमिहानुवर्तते । तस्य च 'झल्' इत्यनेन सामानाधिकरण्यमनुपपन्नम् । अतः सामर्थ्यात् तदादिविधिर्विज्ञायत इत्यभिप्रेत्याह—**झलादिः सन्निति** । इगिति प्रत्याहारः । न इक् स्मरणे इति धातुः । झलिति प्रत्याहारेण साहचर्यात् । अन्यच्चेको धातोः परो हल् न संभवतीति हलन्ताच्चेत्यघटमानं स्यात् । ननु[1] किमर्थमिदं कित्त्वम् । गुणनिषेधार्थमिति चेत्तन्न । यतः 'अज्झनगमां सनि' इति दीर्घत्वमनवकाशं सद्गुणस्य बाधकं भविष्यतीति चेन्मैवम् । यदि कित्त्वं नोच्येत कृते दीर्घे[2] गुणः स्यात् । तदपि न ।

---

१. ननु च $Dc_1$, $Dc_3$, $Dc_4$. २ दीर्घत्वे $Dc_3$.

यदि कृतेपि दीर्घे गुणः स्यात् दीर्घशास्त्रमनर्थकं स्यात् । ननु चिचीषती-त्येवमादौ ह्रस्वानां कृतस्य दीर्घत्वस्य श्रवणं यथा स्यादित्येवमर्थं ततो नानर्थकं दीर्घत्वम् । दीर्घाणां तु गुणः स्यादेव । न हि तेषां दीर्घत्वमुच्यते । यतो दीर्घवचनसामर्थ्याद् गुणो न स्यात् । ततश्च तितीर्षतीति न सिध्येत् । नैतदस्ति । यथैव हि भुक्तवद्भिरपि भोजनविशेषात् नरपि भुज्यते तथा दीर्घाणामपि प्रयोजनत्वविशेषाद् गुणप्रतिषेधाद् दीर्घत्वं स्यात् । यथैव तर्हि दीर्घवचनसामर्थ्याद् गुणो न एवम् 'ॠत:–' इतीत्वमपि चिकीर्षतीत्यादौ न स्यात् । न । ॠदित्वं हि ह्रस्वानां दीर्घसंश्रयमिति न बाध्यते । तथोक्तम् । यं विधिं प्रत्युपदेशोनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । दीर्घाणामपि नाकृते दीर्घत्वे इत्वं स्यात् । गुणादि-बाधात् । तस्मात् ज्ञीप्सतीत्यत्र णिलोपः प्रयोजनं कित्त्वस्य । यथा हि गुणं बाधते दीर्घत्वं तथा णिलोपमपि बाधेत ज्ञीप्सतीत्यत्र । तस्मात् दीर्घत्वेन णिलोपस्य बाधो मा भूत् । गुणस्यैवेति गुणबाधार्थं कित्त्वम् । अतश्चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाध्यते । तथोक्तं वार्तिककृता ।

'इकः किल्त्वं गुणो मा भूद् दीर्घारम्भात् कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्' ॥ इति ।

१. ह्रस्वादीनां Dc3. २. कृतदीर्घ° Bc2. ३. ॠदित्वमपि Dc1, Dc3. ४. °त्यादौ Bc2. ५. वार्तिके Bc2.

तितीर्षति । तितरिषति । तितरीषति ।

अज्झनगमां सनि ॥६।४।१६॥

अजन्तानां हन्तेरिङादेशगमेश्च दीर्घः स्यात् सनि ॥ 'उदोष्ठ्यपूर्वस्य' । बुवूर्षति । विवरिषति । विवरीषति ।

'ऋतश्च संयोगादेः' इत्यत्र सनि इति पदमनुवर्त्य ऋदन्तात् संयोगादेः स्कृञ्वर्जात् सन इड्वेति केचित् ॥ स्कृञ्वर्जात्

---

तितीर्षतीति । तॄ प्लवनतरणयोः । सन् । यदेट् न तदा कित्त्वं गुणाभावः । 'ऋतः—' इतीत्वम् । रपरः । द्वित्वम् । 'हलि च' इति दीर्घः । 'इण्कोः' इति षत्वम् । तितरिषति । तितरीषतीति । इट्पक्षे कित्त्वाभावाद् गुणः । 'सन्यतः' इतीत्वम् । 'वॄतो वा' इतीटो वा दीर्घः ।

अज्झन । इहाज्ग्रहणं न कार्यम् । 'सनि' इत्येतावदेव सूत्रं कार्यम् । 'हनिगम्योः' इति द्वितीयम् । तत्राचश्चेति परिभाषया सनीत्यत्राजन्तस्यैव दीर्घः स्यात् । तदज्ग्रहणं क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम् । अजन्तस्य दीर्घः इङादेशगमेश्च दीर्घ इत्यभिप्रेत्याह—अजन्तानामित्यादि । बुवूर्षतीत्यादि । वृञ् आवरणे । सन् । 'इट् सनि वा' इतीडभावे रूपम् । दीर्घः । उत्वम् । रपरः । द्वित्वम् । 'हलि च' इति दीर्घः । इट्पक्षे वेटो दीर्घः ।

'ऋतश्च' इत्यादि । एतदेवाभिप्रेत्योक्तं मुग्धबोधे । 'स्याद्वृदृ-

---

१. P, $D_3$, and C drop it. २. °देशस्य $D_4$. ३. सादौ सनि $D_3$. ४. विवरीषति । विवरिषति N. ५. From 'ऋतश्च'...to अनुवर्त्य dropped C. ६. C So C; others सुड्वर्जात् । ७. C; So others सुड्वर्जात्; before it—धृ प्राणने । दिधरिषति । दुधूर्षति $B_1$. ८. नास्ति $Dc_1$, $Dc_3$. ९. इति वेटो दीर्घः $Bc_2$, $Dc_3$. १०. °तीति $Bc_2$. ११. वरणे $Bc_2$.

किम्[1] । संचिस्कीर्षति । दुधूर्षति । दिध्वरिषति ॥

**सन्लिटोर्जेः ॥७।३।५७॥**

जिगीषति ।[2] 'विभाषा चेः' । चिकीषति । चिचीषति ।[3] कुत्वम् । जिघांसति ।

**सनि च ॥२।४।४७॥**

सनि[4] परे इणो गमिः स्यान्न तु बोधने । जिगमिषति । बोधने तु शपोकारेण सिद्धेपि सन्यङोरकारोच्चारणमजादेरिति

---

द्वुरस्कुर्वेम् सन् मढी सेः' । इति । संचिस्कीर्षतीति । डुकृञ् करणे । सन् । 'अज्झन--' इति दीर्घः । ननु चात्र दीर्घतायाम् 'इट् सनि वा' इतीट् कस्मान्नेति चेत् तत्रोपदेशाधिकाराल्लाक्षणिकत्वाच्च न । ऋत इत् । रपरः । द्वित्वम् । चुत्वम् । 'संपरि—' इत्यभ्यासव्यवायेपि सुट् । स्कृ अयमितीट् न । 'हलि च' इति दीर्घः । दुधूर्षति । दिध्वरिषतीति । ध्वृ कौटिल्ये । सन् । मतान्तरे संयोगादित्वादिट् । यदेट् न तदा कित्त्वम् । दीर्घः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । रपरः । द्वित्वम् । दीर्घः । यदेट् तदा गुणः । इत्वम् ।

**जिगीषतीति** । जि जये । एकाच इति नेट् । दीर्घः । कुत्वम् । **चिकीषतीति** । चिञ् चयने । **कुत्वमिति** । **अभ्यासाच्चेति** । **जिघांसतीति** । हन हिंसागत्योः । दीर्घः । इत्वम् । चुत्वम् । अनुस्वारः ।

**सनि** । **जिगमिषतीति** । इण् गतौ । 'गमेरिट् परस्मैपदेषु' इतीट् । **प्रतीषिषतीत्यत्र सनो द्वित्वप्राप्तिमाह—शपोकारेणेति** । अयं भावः । सन्यङोरकारोच्चारणं व्यर्थम् । यतः सार्वधातुके शपोकारेण सिध्यति । आर्धधातुके तु अतो लोपेन भवितव्यम् ।

---

१. इति किम् $D_2$, $D_4$. २. After it—सन् लिटोरिति किम् । जेजयिते । C, P, N. ३. चिचीषति । चिकीषति । $D_4$. ४. सनि च परे $N_1$, $D_3$, $D_4$.

द्वित्वार्थम् । तेन सनो द्वित्वम् । अभ्यासस्य इत्वम् । प्रतीषिषति । ईङ्वदिक् । अधिजिगमिषति ।

**इङश्च** ॥२।४।४८॥

इङो गमिः स्यात् सनि ॥ अधिजिगांसते । ईर्ष्यतेः सनि यसनोर्वा द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति ।

**सनि ग्रहगुहोश्च** ॥७।२।१२॥

ग्रहेर्गुहेरुगन्ताच्च सन इट् न स्यात् ॥ बुभूषति ।

---

मैवम् । 'अजादेर्द्वितीयस्य' इति प्रतीषिषति अटाट्यत इत्यादौ द्वितीयस्य साच्कस्य सकारस्य यकारस्य च द्वित्वार्थमित्यर्थः । तथोक्तं न्यासे प्रतीषिषतीत्यत्र प्रतिपूर्वादिणः सनि विहिते यद्यकारोपदेशो न स्यात् 'अजादेर्द्वितीयस्य' इति द्वितीयस्यैकाचो विधीयमानं से इत्यस्य न स्यात् । अनच्कत्वात् सनः । अकारोपदेशे तु सति स इत्यस्य द्वितीयस्यैकाच्त्वाद् भवति द्विर्वचनं तदर्थमकारोपदेश इति । **तेन सनो द्वित्वमिति** । 'सन्यङोः' इति । **अभ्यासस्येति** । 'सन्यतः' इत्यनेन । **प्रतीषिषतीति** । उपसर्गेकारस्य धातुना सह अकः सवर्णे दीर्घः ।

**इङः** । **अधिजिगांसत इति** । इङ् अध्ययने । 'अज्झनगम—' इति दीर्घः । 'नश्चापदान्त—' इत्यनुस्वारः । 'पूर्ववत् सनः' इति तङ् । **ईर्ष्यतेरिति** । ईर्ष्य ईर्ष्ये ।

**सनि** । 'श्रिस्वृयूर्णु—' इति विकल्पविधानात् श्रयतिर्नानुवर्तते । उगेवानुवर्तत इत्यभिप्रेत्याह—**उगन्ताच्चेति** । **बुभूषतीति** । भू सत्तायाम् । ऊदन्तत्वादिटि प्राप्ते उगन्तत्वान्निषेधः । 'इको झल्—'

---

१. इण्वदिकः $D_2$. २. C drops ईर्ष्यतेः ˙˙ ईर्ष्यिषिषति. ३. $D_1$ drops सनि. ४. सन इत्यस्य $Dc_1$. ५. Dropped $Bc_2$. ६. सवर्णे $Bc_2$.

जुहूषति। अत्रादेशादूदन्तत्वेपि नेट्। चिकीर्षति। जुघुक्षति।

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥१।२।८॥

एभ्यः संश्च क्त्वा च कितौ स्तः॥ ग्रहिज्येति। सनः षत्वस्यासिद्धत्वात् भष्भावः। जिघृक्षति। वचिस्वपीत्युत्वम्। सुषुप्सति।

---

इति कित्त्वान्न गुणः। जुहूषतीति। हु दानादानयोः। ननु चात्र 'एकाच उपदेशे—' इत्यनेनैवेटो निषेधात् तस्योदाहरणमिदं नोपपद्यत इत्याशङ्क्यात्र 'अज्झन—' इति कृते दीर्घे ऊदन्तत्वेनोदात्तत्वादिडत्र स्यादिति कस्यचिद् भ्रान्तिः स्यात् तन्निरासार्थमेतदुदाहृतमित्यभिप्रेत्याह—अत्रादेशादिति। चिकीर्षतीति। डुकृञ् करणे। दीर्घः। इत्वम्। जुघुक्षतीति। गुहू संवरणे। ऊदित्वाद्विकल्पेनेटि प्राप्ते निषेधः। 'हो ढः'। 'षढोः कः सि'। षत्वम्। 'एकाचः—' इति भष्भावः। कषयोगे क्षः।

रुद। रुदिर् अश्रुविमोचने। विद ज्ञाने। मुषस्तेये। ग्रह उपादाने। ञिष्वप शये। प्रच्छ ज्ञीप्सायाम्। आद्यानां त्रयाणां 'रल—' इति विकल्पे प्राप्ते नित्यार्थं वचनम्। ग्रहेर्विध्यर्थमेव। स्वपिप्रच्छ्योः सन्नर्थम्। किदेव हि क्त्वा। जिघृक्षतीति। ग्रह। ढत्वादि पूर्ववत्। सुषुप्सतीति। ञिष्वप। 'एकाच—' इतीट्निषेधः।

---

१. Before it C has—भावकर्मणि यकि। अतो लोपः। वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषधेन। बुभूष्यते।; $N_1$ has the same, but has भावे कर्माणि and वृद्धिदीर्घाभ्यां पूर्वविप्रतिषेधेन। बुभूष्यते। अबुभूष्यत। २. 'ज्येति संप्रसारणम् P.

## स्मिपूङ्रञ्ज्वशां सनि ॥७।२।७४॥

स्मिङ् पूङ् ऋ अञ्जू अश् एभ्यः सन इट् स्यात् ॥ सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते ।

## किरश्च पञ्चभ्यः ॥७।२।७५॥

कॄ गॄ दृ धृ प्रच्छ एभ्यः सन इट् स्यात् ॥ चिकरिषति ।

---

स्मिपूङ् । स्मिङ् ईषद्धसने । पूङ् पवने । ङकारः पूञो निवृत्त्यर्थः । ऋ गतिप्रापणयोः । ऋ गताविति द्वयोरपि ग्रहणम् । ॠकारान्तां तु ग्रहणं न । किरतीत्यादीनामिटो विधानात् । अञ्जू[2] व्यक्तिम्रक्षणकान्तिगतिषु । अशूङ् व्याप्तौ । अश[3] भोजने इत्यस्य ग्रहणं न भवति । उदात्तत्वादेवेटः सिद्धत्वात् । अत्राञ्जेरशेश्चोदित्त्वाद्विकल्पे प्राप्ते स्मिङोऽप्राप्ते शेषयोरुगन्तत्वान्निषेधे प्राप्ते वचनम् । सिस्मयिषते इति । 'पूर्ववत् सनः' इत्यात्मनेपदम् । 'स्तौतिण्योः' इति नियमान्न षत्वम् । पिपविषत इति । 'ओः पुयण्—' इत्यभ्यासस्येत्वम् । अरिरिषतीति । इटि गुणे रपरत्वे च कृते 'अजादेः—' इति रि[4] इत्येतस्य द्वित्वम् । न चात्र 'द्विर्वचनेऽचि' इति स्थानिवत्त्वं प्राप्नोति यतो द्विर्वचननिमित्तेऽचीत्युच्यते । न चात्र द्विर्वचनस्य निमित्तमिट् । किं तर्हि । कार्यी । न च कार्यी निमित्तत्वेनाश्रीयते । तथा हि क्ङिन्निमित्तयोर्गुणवृद्ध्योर्निषेधो विधीयमानः शायितेत्यत्र न भवति ।

किरश्च । कॄ विक्षेपे । गॄ निगरणे । दृङ् अनादरे । धृङ् अवस्थाने[5] । प्रच्छ ज्ञीप्सायाम् । आद्ययोः 'इट् सनि वा' इति विकल्पे प्राप्ते मध्ययोरुगन्तत्वादिण्निषेधे प्राप्ते[6] अन्त्यस्य त्वनिट्त्वादप्राप्ते इदं वचनम् ।

---

१. स्मिङ् $D_1$, C, $N_1$. २. अञ्ज $D_1$; अञ्ज् $N_1$, $D_3$. ३. अश $D_2$.
४. रि रिकारस्य $Dc_3$. ५. अनवस्थाने $Dc_3$. ६. $Bc_2$; So; others om.

जिगरिषति । अत्र इटो [1]दीर्घत्वं नेष्टम् । [2]दिदरिषते । [3]दिधरिषते । पिपृच्छिषति ।

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥७।२।४९॥**

इवन्तेभ्यः ऋधादिभ्यश्च सन इड् वा स्यात् ॥

**च्छ्वोः शूडनुनासिके च ॥६।४।१९॥**

सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् [4]इत्येतावादेशौ स्तः

---

पिपृच्छिषतीति । 'रुदविद—' इति कित्त्वम् । 'ग्रहिज्या—' इति संप्रसारणम् । 'छे च' इति तुक् । 'उरत्' इत्यत्त्वम् । 'सन्यतः' इतीत्त्वम् ।

सनीवन्त । इवन्ता दिविसिवीत्यादयः । ऋधु वृद्धौ । भ्रस्जो पाके । दम्भु दम्भे । श्रिञ् सेवायाम् । स्वृ शब्दोपतापयोः । यु मिश्रणे । ऊर्णुञ् आच्छादने । भृञ् भरणे । भौवादिः । शपा निर्देशात् । मारणतोषणनिशामनेषु ज्ञा ण्यन्तश्चौरादिको ज्ञपिश्च । षण भक्तौ । षणु दाने । द्वयोरपि ग्रहणम् । विशेषाग्रहात् । अत्र भ्रस्जोनुदात्तत्वात् स्वृऊर्णुभृञां चोगन्तत्वात् प्रतिषेधे प्राप्ते शेषाणामुदात्तत्वात् सनि नित्यमिटि प्राप्ते विकल्पार्थोयमारम्भः ।

च्छ्वोः शूड् । यदि केवलस्य छस्य ग्रहणं क्रियते तदा प्रच्छ ज्ञीप्सायामित्यस्य क्तप्रत्यये कृतेन्तरङ्गत्वात् पूर्वं 'छे च' इति तुकि छमात्रस्य शकारे पृतृष्ट इत्यनिष्टं रूपं स्यात् । सतुक्कस्य तु शादेशे क्रियमाणे त्वेष दोषो नास्तीत्यालोच्याह—सतुक्कस्येति । एतच्च 'ननौ पृष्टप्रतिवचने' इत्यतो निर्देशादवसीयते । तुग्विरहितस्य ग्रहणे-

---

१. न दीर्घत्वम् C. २. दद्दरिषति C, $D_3$. ३. दिधरिषति $D_3$. ४. इति dropped $N_1$, $D_3$, $D_4$.

अनुनासिके क्वौ झलादौ [1]क्ङिति च ॥ द्वित्वम् । दुद्यूषति । दिदेविषति । सुस्यूषति । स्तौतिण्योरिति नियमात् न षत्वम् । सिसेविषति । अर्दिधिषति ।

**आप्ज्ञप्यृधामीत् ॥७।४।५५॥**

एषामच ईत् स्यात् सादौ सनि ॥[2]

**अत्र लोपोभ्यासस्य ॥७।४।५८॥**

सनि मीमित्यारभ्य यदुक्तं [4]तत्राभ्यासलोपः स्यात् ।

---

भिमते पृत्ष्ट इति निर्देशमकरिष्यत् । द्वित्वमिति । दिवः सनि 'हलन्ताच्च' इति कित्त्वे ऊठ् यणादेशः । ततः 'सन्यङोः' इति द्वित्वमित्यर्थः । हलादिः शेषः । ह्रस्वः । स्तौतीति । अग्रे कथयिष्यमाणे 'स्तौतिण्योः' इति सूत्रे अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्येति नियमात् षत्वं न भवतीत्यर्थः । अर्दिधिषतीति । ऋध । 'पुगन्त-' इति गुणे कृते धीत्यस्य द्वित्वम् । रेफस्य 'नन्द्राः—' इति निषेधात् द्वित्वं न । 'अभ्यासे चर्च' इति जश्त्वं दकारः ।

आप्ज्ञप् । आप्लृ व्याप्तौ । अन्यावनन्तरोक्तौ । तकारो मुखसुखार्थः ।

अत्र लोपः । अत्रग्रहणं विषयावधारणार्थमित्यभिप्रेत्याह-सनिमीमेति । केचित् सर्वस्याभ्यासस्य लोपो यथा स्यादित्येवमर्थमत्र-ग्रहणं वर्णयन्ति । विषयावधारणपक्षे तु नानर्थकेलोन्त्यविधिरिति सर्वाभ्यासलोपः । अनभ्यासविकारेष्विति तु निषेधो न । लोपस्या-

---

१. च क्ङिति $B_2$, $D_3$, $D_4$. २. Dropped $N_1$. ३. C, $B_2$, $N_1$, $D_4$ have रपरत्वम् after it. ४. तत्राभ्यासस्य $D_2$, $D_3$, $B_2$. ५. अत्र । $Bc_2$, $Dc_3$. ६ प्रतिषेधो न $Dc_3$.

रपरत्वम् । चर्त्वम् । [2]ईर्त्सति । बिभ्रज्जिषति । बि[3]भर्ज्जिषति । [1]बिभ्रक्षति । बिभर्क्षति । दिदंभिषति ।

**दम्भ इच्च ॥७।४।५६॥**

दम्भेरच इदादेशः स्यात् ईच्च सकारादौ सनि ॥

---

विकारत्वात् । ईर्त्सतीति । इत्त्वे कृते 'अजादेर्द्वितीयस्य' इति द्वित्वम् । बिभ्रज्जिषतीति । द्वित्वम् । 'सन्यतः' इतीत्वम् । 'झलां जश् झशि' इति [4]सकारस्य दकारः । 'स्तोश्चुना श्चुः' इति [5]दकारस्य जकारः । बिभर्क्षतीति । 'भ्रस्जो रोपध–' इति अकारात् परो रम् रेफस्य सकारस्य च निवृत्तिः । 'व्रश्च–' इति षः । 'षढोः कः सि' इति कः । 'इण्कोः–' इति षत्वम् ।

दम्भः । 'हलन्ताच्च' इति दम्भेः परस्य सनः कित्त्वमित्यन्वयः । ननु च दम्भेः परस्य सनः इक्समीपाद्धलः परत्वं नास्ति भकारेण व्यवधानादिति शङ्कानि[6]राकरणायाह—हलन्ताच्चेति । अत्र हल्ग्रहणस्य जातिवाचकत्वादिति । अयमभिप्रायः । 'हलन्ताच्च' इत्यत्र हलिति हल्त्वजातिरुच्यते । तेन यदा ता[7]वत्व्यक्तभेदा व्यक्तयो जातिरिति दर्शनं तदा तासां हल्त्वेनाश्रितानां नास्ति व्यवधानमतो यैव हल्जातिरिक् समीपगता त[8]त एव च परः सन्निति दम्भेर्विहितस्य सनः कित्त्वं सिद्धमेव । यदाप्यर्थान्तरभूता जातिर्व्यक्तिषु प्रत्येकं परिसमाप्ता निरवयवा नि[9]त्या एका च तदापि नास्ति व्यवधानम् । यस्माद् व्यक्तिर्व्यक्त्यन्तरस्य व्यवधायिका न जातेः । तस्या अमूर्तत्वात् । तस्मादिहापि दर्शने यैवं[10] हल्जातिरिकः समीपे तस्या एव परः सन्निति दम्भेः सनः कित्त्वं सिद्धं भवति ।

---

१. C, $B_2$, $N_1$, $D_4$ drop it. २. P has before it—ऋध वृद्धौ. ३. Dropped $N_1$. ४. सस्य दः । $Bc_2$. ५. दस्य जः । $Bc_2$. ६. °निवृत्त्यर्थमाह । $Bc_2$. ७. तावत्युक्तभेदा $Dc_3$. ८. तस्या एव परः $Dc_3$. ९. एका नित्या तदापि $Dc_1$, $Dc_3$. १०. Dropped $Bc_2$.

अभ्यासलोपः । हलन्ताच्चेत्यत्र दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सनः कित्त्वम् । नूलोपः[1] । धिप्सति । धीप्सति । शिश्रयिषति । शिश्रीषति । सिस्वरिषति । सुस्वूर्षति[2] । यियविषति । युयूषति । ऊर्णुनुविषति । ऊर्णुनविषति । ऊर्णनूषति । बिभरिषति । बुभूर्षति । जिज्ञपयिषति । इको झल् । कित्त्वान्न[4] गुणः ।

---

तस्यास्तु व्यक्तिव्यतिरिक्ताया जातेर्यदिगपेक्षसमीपवर्तिनीत्वं यच्च तां जातिमपेक्षमाणस्य सनः परत्वं तदुभयं व्यक्तिद्वारकं वेदितव्यम् । नकारव्यक्तिरिकः समीप इति तदाधारा हल्जातिरपि इकः समीपे[5] । भकारव्यक्तेः परः सन्निति जातेरपि परः सन्निति । नूलोप इति । 'अनिदिताम्—' इति । धिप्सति । धीप्सतीति । भष्भावः । 'खरि च' इति चर्त्वम् । शिश्रीषतीति । 'इको झल्—' इति कित्त्वम् । 'अज्झन—' इति दीर्घः । सिस्वरिषतीति । द्वित्वम् । 'उरत्' इत्यत्वम् । 'सन्यतः' इतीत्वम् । सुस्वूर्षतीति । पूर्ववद् दीर्घः । 'उदोष्ठ्य—' इत्युत्वम् । रपरः । दीर्घः । यियविषतीति । 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम् । ऊर्णुनुविषति । ऊर्णुनविषतीति । अजादित्वाद् द्वितीयस्य नु इत्यस्य द्वित्वम् । रेफस्य तु 'नन्द्राः—' इति निषेधान्न । इट्पक्षे 'विभाषोर्णोः'[3] इति यदा ङित्त्वं तदा उवङ् । अन्यदा गुणः । बुभूर्षतीति । पूर्ववद् दीर्घः । उत्वं च । जिज्ञपयिषतीति । ज्ञा अस्माण्णिच् । पुकि मित्त्वाद्ध्रस्वे सनि इटि गुणेयादेशे च कृते रूपम् । इको झलित्यादि । 'इको झल्—' इति सूत्रं हि[6] चिचीषतीत्यादौ[7] कित्त्वाद्गुणनिषेधार्थम् । अन्यथा हि यथा निरवकाशं सत् दीर्घत्वं गुणं बाधते तथा णिलोपमपि बाधेत[8] ।

---

१. लोपः $D_2$, $D_3$; नलोपः P, $B_1$, $B_2$; सनः कित्त्वं लोपः $B_2$. २. C drops from सुस्वूर्षति ... युयूषति ।. ३. C has विभाषर्णोः before it. ४. इगिति कित्त्वा° $D_3$. ५. समीपेति $Dc_3$. ६. Dropped $Dc_1$. ७. चिकीर्षती° $Dc_1$. ८. बाधते $Dc_1$, $Dc_3$.

परत्वाण्णिलोपेन दीर्घो बाध्यते[1] । ज्ञीप्सति । ज्ञपिरत्र पुगन्तो मित्संज्ञः[2] । पकारान्तश्चौरादिकश्च । अन्यत्र[3] जिज्ञापयिषतीत्येव । सिसनिषति । जनसनेत्यात्वम् । परिसिषासति ॥ तनिपति-दरिद्रातिभ्यः सनो वा इड् वाच्यः[7] । तितनिषति ।

**तनोतेर्विभाषा ॥६।४।१७॥**

तनोतेरुपधाया[5] दीर्घः स्याद्वा[6] झलादौ सनि ॥ तितांसति । तितंसति । आशङ्कायां सन् वक्तव्यः[4] । श्वा मुमूर्षति ।

---

तस्माद्दीर्घेण[8] णिलोपबाधो मा भूदिति किन्त्वम् 'इको झल्–' इति विधीयत इत्यर्थः । फलमाह- परत्वादित्यादि । ततश्च ज्ञीप्सतीत्यत्र 'अज्झनगमां सनि' इति प्राप्तो दीर्घो 'णेरनिटि' इति णिलोपेन परत्वात् बाध्यत इत्यर्थः । अयमर्थोऽस्माभिः 'इको झल्' इति सूत्रे विवृतः । एवं स्थिते ज्ञपेरिडभावे यद्रूपं स्यात् तद् दर्शयति- ज्ञीप्सतीति । 'आप्ज्ञप्–' इतीत्वम् । अभ्यासलोपः । ज्ञपिरत्रेति । अत्र 'सनीवन्त–' इति सूत्रे 'आप्ज्ञप्यृधामीत्' इति सूत्रे च ज्ञपिः पुगन्तो मित्संज्ञको ज्ञा अवबोधने इति क्र्यादिर्गृह्यते । पकारान्तश्चौरादिको ज्ञप् मारणतोषणनिशामनेषु मिच्चेत्ययमपि गृह्यते । अविशेषादित्यर्थः । सिसनिषतीति । 'स्तौतिण्योः' इति नियमान्न षः । परिसिषासतीति । 'स्तौतिण्योः' इत्यत्र[9] षभूते सनि निषेधादत्र षत्वम् । तितनिषतीति । तनु विस्तारे । 'सन्यतः' इतीत्वम् ।

तनोतेः । तितांसतीति । 'नश्चापदान्त–' इत्यनुस्वारः । आशङ्कायामिति । आशङ्का संभावना । श्वा मुमूर्षतीति । मृङ् प्राणत्यागे । किन्त्वम् । दीर्घत्वम् । उत्वम् । रपरः । अत्र

---

१. न बाध्यते $D_4$. २. मित्संज्ञः स्यात् $B_2$. ३. $D_2$, $D_3$, $D_4$, $B_2$ drop अन्यत्र ...°त्येव ।. ४. वक्तव्यः $N_1$. ५. °रुपधायादीर्घो वा $B_2$. ६. वा स्यात् $D_2$ ; दीर्घो वा झलादौ $D_4$. ७. वाच्यः C. ८. °दीर्घे $Dc_1$. ९. इत्यत्र $Bc_2$.

कूलं पिपातिषति ।

**सनि मीमाघुरभलभशकपतपदामच इस् ॥७।४।५४॥**

मि मी मा मेङ् मेङ् दा धा एषां रभादीनां चाचः इस् स्यात् सादौ सनि । अभ्यासलोपः । 'स्कोः संयोगाद्योः' इति संयोगादिलोपः । पित्सति । दिदरिद्रिषति । दिदरिद्रासति ।

---

च जीवितस्य प्रियत्वात् शुनो मर्तुमिच्छा न संभवतीति सन् न प्राप्नोति । अतः शङ्के मरिष्यति श्वा इत्यत्रार्थो वेदितव्यः । कूलं पिपातिषतीति । पत्लृ पथे च गतौ । अत्र कूलस्याचेतनत्वादिच्छा न संभवतीति सन् न प्राप्नोति । अतः शङ्के पतिष्यति कूलमित्यस्मिन्नर्थे एष प्रयोगः ।

**सनि मी** । मिमी इति डुमिञ् प्रक्षेपणे मीञ् हिंसायाम् । ननु च मीत्यस्मिन्नुच्चार्यमाणे मिनोतेर्ग्रहणं न लभ्यते । न । तस्यापि हि 'अज्झनगम–' इति सनि दीर्घत्वे कृते मी इति रूपं स्यात् । नन्वेवमपि लक्षणप्रतिपदोक्तपरिभाषयास्य ग्रहणं न स्यात् । तदपि न । अत्र हि घिसंज्ञत्वात् घु इत्येतस्य पूर्वनिपातमकुर्वतैतत् सूत्रितम् । यथा पूर्वनिपातलक्षणमिह नापेक्ष्यते तथान्यदपि किंचिच्छास्त्रीयं वचनं नापेक्ष्यते । अतो नेयं परिभाषात्र प्रवर्तते इति युक्तं मिनोतेरपि ग्रहणम् । **मा माङ् मेङ् इति** । गामादाग्रहणेष्वविशेष इत्यभिप्रायेण । मा माने । माङ् माने शब्दे च । मेङ् प्रणिदाने । इति च त्रयाणामपि ग्रहणमित्यर्थः । **दा धा इति** । दारूपा धारूपाश्च धातवः । रभ राभस्ये । डुलभष् प्राप्तौ । शक्लृ शक्तौ । पत्लृ गतौ । पद गतौ । पित्सतीति । पत्लृ अस्मात् सनः 'तनिपति–' इति यदेडभावस्तदा रूपम् । **दिदरिद्रिषतीति** । दरिद्रा दुर्गतौ ।

---

१. मा मेङ् $D_1$. २. चाच स्थाने $N_1$, $D_3$. ३. °लोपश्च C. ४. स्कोरिति संयोगा° P, $D_2$, $D_3$, C; स्कोः संयोगा° N. ५. Before it—दरिद्रातेरार्धधातुके आलोपः C. ६. Dropped $Bc_2$, $Dc_3$. ७. इत्यस्य $Bo_2$, $Dc_3$.

सः स्यार्धधातुके इति सस्य तः । मित्सति । मित्सते । दित्सति । धित्सति । रिप्सते । लिप्सते । शिक्षति । पित्सते । ईप्सति ।[४]

राधो हिंसायां सनि इस् वाच्यः । प्रतिरित्सति । हिंसायां किम् । आरिरात्सति ।

## मुचोकर्मकस्य गुणो वा ॥७।४।५७॥

अकर्मकस्य मुचो गुणो[६] वा स्यात् सादौ सनि ॥ अभ्यासलोपः । पक्षे हलन्ताच्चेति कित्त्वान्न गुणः । मोक्षते मुमुक्षते वा वत्सः स्वयम् । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः ।

---

पूर्ववद्वेट् । 'आतो लोप इटि च' इत्यालोपः । मित्सतीति । मि मी मा इति त्रयाणां रूपम् । मित्सते इति । माङ्मेङोः । 'पूर्ववत् सनः' इत्यात्मनेपदम् । दित्सति । धित्सतीति । डुदाञ् दाने । डुधाञ् धारणपोषणयोः । रिप्सते लिप्सत इति । 'पूर्ववत् सनः' इत्यात्मनेपदम् । 'स्कोः संयोग—' इति सलोपः । 'खरि च' इति चर्त्वम् । शिक्षतीति । सलोपः । 'इण्कोः—' इति षः । ईप्सतीति । आप्लृ व्याप्तौ । 'आप्ज्ञप्—' इतीत्वम् । अभ्यासलोपः ।

प्रतिरित्सतीति । हिंसितुमिच्छतीत्यर्थः । पूर्ववत् प्रक्रिया । आरिरात्सतीति । 'सन्यतः' इतीत्वम् ।

मुचः । मोक्षत इति । मुच्लृ मोक्षणे । 'चोः कुः' । 'इण्कोः' इति षत्वम् । कर्मकर्तरि लट् । 'कर्मवत् कर्मणा' इत्यतिदेशादात्मनेपदम् । कृगृश्रिञ्भूषार्थेभ्यः सनन्ताच्च यक्चिणौ नेति यक्निषेधः । वत्सं मोक्तुमिच्छति । स मोक्तुमिष्यमाणो मुक्तिक्रियां प्रत्यानुकूल्यं यदा प्राप्नोति तदा सुमोचत्वात् तस्मिन् कर्तृत्वेन

---

१. शिक्षते $D_3$. २. पित्सति $D_4$. ३. C drops it. ४. After it—आप्लृ व्याप्तौ N. ५. वक्तव्यः $D_1$, $D_2$, P, $B_1$. ६. वा गुणः $N_1$. ७. मुमुक्षति C. ८. मा मी $Bc_2$; मा मीञ् $Dc_3$. ९. After it—राध एव । $Bc_2$.

णौ कृतादेशस्य स्थानिवत्त्वम् । पुस्फारयिषति ।[1] चुक्षावयिषति ।
ओः पुयण्ज्यपरे[3] । पिपावयिषति । बिभावयिषति । यियावयिषति ।
रिरावयिषति । लिलावयिषति । जु[5] गतौ । जिजावयिषति ।
ओः पुंयण्जि[4] इति किम् । नुनावयिषति । अपरे किम् ।

---

विवक्षिते मुत्रिरकर्मको भवति । ननु गुणग्रहणं किमर्थम् । ओदित्येव किं नोच्यते । नन्वेवं सत्योकारोन्त्यस्य स्यात् । गुणग्रहणे त्विक एव स्यात् । संज्ञया विधानात् । मैवम् । अच इति हि वर्तते । तेनान्त्यस्य न स्यात् । एवं तर्ह्येतत् ज्ञापयति अच इति निवृत्तमिति । तेन 'अत्र लोपोभ्यासस्य' इत्यच एवाभ्यासस्य लोपो न । सति त्वधिकारे मा भूत् तस्यानुवृत्तिर्व्यर्थेत्यच[6] एव लोपो भवेत् । **पुस्फारयिषतीति** । स्फुर स्फुरणे । णिच् । गुणः । 'त्रिस्फुरोर्णौ' इत्यात्वम् । सन् । द्वित्वे क्रियमाणे उवर्णादेशस्याकारस्य स्थानिवत्त्वम्[7] । इङ्गुणायादेशाः । **चुक्षावयिषतीति** । टुक्षु शब्दे । णिच् । सन् । वृद्ध्यावादेशौ । उवर्णादेशस्याचः स्थानिवत्त्वम् । **ओः पुयणीति** । 'ओः पुयण्ज्यपरे' इति सूत्रेण सनि पवर्गयण्जकारेष्ववर्णपरेषु परतोभ्यासोकारस्येत्वमित्यर्थः । **पिपावयिषतीति** । पूङ् पवने । अस्माण्ण्यन्ताद् वृद्ध्यावादेशौ । स्थानिवद्भावात् पू इत्यस्य द्वित्वम् । **बिभावयिषतीति** । भवतेर्ण्यन्तात् सन् । **यियावयिषतीति** । यु मिश्रणे । अस्माण्ण्यन्तात् सन् । **रिरावयिषतीति** । **लिलावयिषतीति** । अत्रापि रु शब्दे लूञ् छेदने इति द्वाभ्यामपि ण्यन्ताभ्यामेव सन् । जु गताविति सौत्रो धातुः 'जुचङ्क्रमि—' इत्यादौ सूत्रे पठितत्वात् । **नुनावयिषतीति** । णु स्तुतावस्मात् ण्यन्तात् सन् । पूर्ववत् प्रक्रिया ।

---

१. P has पुस्फोरयिषति after it. २. क्षु शब्दे before it in P. ३. ज्यपरे dropped $N_1$, $D_3$, $D_4$. ४. पुयण् ज्य इति किम् $N_1$; पुयण् किम् $D_3$. ५. जु dropped $Bc_2$. ६. °र्व्यर्थेत्यभिप्रेत्याह । अच एव &c. $Dc_1$. ७. $Bc_2$, $Dc_3$; So; others स्थानिवत्त्वात्.

बुभूषति । स्रवतीति इत्वं वा । सिस्रावयिषति । सुस्राव-यिषति । इत्यादि । अपर इत्येव । शुश्रूषते । रलो व्युपधाद्धलादेः संश्च । रुरोचिषते । रुरुचिषते । लिलेखिषति । लिलिखिषति । रुदविदेति नित्यं कित्त्वम् । रुरुदिषति । विविदिषति । मुमुषिषति ।

**स्तौतिण्योरेव षण्यभ्यासात् ॥८।३।६१॥**

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य ॥ तुष्टूषति । द्युतिस्वाप्योरित्युत्वम् ।

---

बुभूषतीति । भवतेः सन् । 'सनि ग्रहगुहोश्च' इतीडभावः । 'इको झल्—' इति कित्त्वान्न गुणः । स्रवतीति इत्वं वेति । 'स्रवतिशृणोति द्रवतिप्रवतिप्लवतिच्यवतीनां वा' इति । सिस्रावयिषति । सुस्राव-यिषतीति । स्रवतेर्ण्यन्तात् सन् । आदिशब्दात् । शिश्रावयिषति । शुश्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषतीति ज्ञेयम् । शुश्रूषत इति । श्रु श्रवणे । कित्त्वाद् गुणाभावः । दीर्घः । 'ज्ञाश्रुस्मृ—' इति तङ् । रुरोचिषत इति । रुच दीप्तौ । लिलेखिषतीति । लिख लेखने । रुरुदिषतीत्यादि । रुदिर् अश्रुविमोचने । विद ज्ञाने । मुष स्तेये ।

स्तौतिण्योः । ष्टुञ् स्तुतौ । षभूते षत्वं प्राप्ते कृतषत्वे इत्यर्थः । सिद्धे सत्यारम्भो नियमार्थः । एवकारकरणमिष्टतोवधारणार्थमि-त्याह- स्तौतिण्यन्तयोरेवेति । षण्येवेति हि विज्ञायमाने तुष्टावेत्यत्र न स्यात् । इह च स्यादेव सिसिक्षतीति । षणिति सानुबन्धग्रहणं किम् । षमात्रे नियमो मा भूत् । सुषुपिष इन्द्रम् । स्वपेर्लिट् । छान्दसत्वाद् व्यत्ययेन थासः से । द्वित्वादि । तुष्टूषतीति । ष्टुञ् स्तुतौ । 'अज्झन—'

---

१. इत्यात्वम् $B_3$, $D_4$. २. $D_3$ drops this. ३. °रिति संप्रसारणम् P. ४. स्तौति । $Bc_2$. ५. °मिष्टता° $Bc_2$. ६. ण्योरेवेति $Dc_1$. ७. Dropped $Bc_2$, $Dc_3$.

सुष्वापयिषति[1] । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात् तु स्थादिष्वभ्यासेनेत्यभ्यासात्[2] षः स्यादेव । परिषिषिक्षति । षणि किम् । सभूतेन्यस्य स्यादेव । तिष्ठासति । सुषुप्सति । अभ्यासात् किम् । धात्विण्निमित्तः षोन्यस्य स्यादेव । इण् । प्रतीषिषति । इकु । अधीषिषति ।

## सः स्विदिस्वदिसहीनां च ॥८।३।६२॥

अभ्यासेणः परस्यैषां ण्यन्तानां सस्य स एव स्यान्न[3] षः षणि परे ॥[4] सिस्वेदयिषति ।[5] सिस्वादयिषति । सिसाहयिषति । स्थादिष्वभ्यासेन चाभ्यासस्येत्यत्र स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्विति नियमात् अभिसुसूषति । परिसिषासति ।

---

इति दीर्घः । 'शर्पूर्वाः खयः' । ष्टुत्वम् । **सुष्वापयिषतीति** । ञिष्वप शये । ण्यन्तात् सन् । **सिसिक्षतीति** । षिच क्षरणे । 'हलन्ताच्च' इति कित्त्वाद्गुणाभावः । **तिष्ठासतीति** । ष्ठा गतिनिवृत्तौ । 'सन्यतः' इतीत्वम् ।

**सः स्विदि** । ञिष्विदा गात्रप्रक्षरणे । स्वद आस्वादने । षह मर्षणे । सकारस्य सकारवचनं मूर्धन्यानिवृत्त्यर्थम् । **सिस्वेदयिषती**त्यादि । ण्यन्तेभ्यः सन् । **अभिसुसूषतीति** । षुञ् अभिषवे । 'सुनोतेः स्यसनोः' इति न षत्वम् । **परिसिषासतीति** । षोन्तकर्मणि । 'आदेच—' इत्यात्वम् । 'इण्कोः—' इति षत्वम् ।

---

१. $D_4$. So; others सुस्वा.° २. °ष्वभ्यासस्योति षः $D_2$. ३. °न्न तु षः $D_2$.
४. Before it P has—स्विदि स्नेहमोक्षणे ।. ५. Before it—स्वद स्वादे P.

शैषिकान्मतुबर्थीयात् शैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥[1]
स्वार्थसन्नन्तात् सन् स्यादेव । जुगुप्सिषते । मीमांसिषते ।
इति सन्प्रक्रिया ।[2]

---

शैषिकादित्यादि । अपत्यादिचतुरर्थान्तान्यः शेषः । तत्र भवः प्रत्ययः शैषिकः । अध्यात्मादित्वाट्ठञ् । तस्मात् शैषिकः सरूपप्रत्ययो नेष्टः । शालायां भवः । वृद्धाच्छः । शालीयः । शालीये भव इत्यर्थे पुनश्छो न । विरूपस्तु स्यादेव । अहिच्छत्रे भवः आहिच्छत्रः । प्राग्दीव्यतोऽण् । आहिच्छत्रे भवः आहिच्छत्रीयः । अणन्तात् छो भवति । मतुबर्थे भवः मतुबर्थीयः । गहादित्वात् छः । तस्मात् सरूपप्रत्ययो मतुबर्थो नेष्टः । मतुबर्थोऽस्यास्तीति मतुबर्थिकः । 'अत इनिठनौ' इति ठन् । दण्डोऽस्यास्तीति दण्डिकः । पूर्ववत् ठन् । सोऽस्यास्तीति पुनष्ठन् न स्यात् । विरूपस्तु स्यादेव । दण्डोऽस्त्येषां दण्डिनः । ते सन्त्यस्यां शालायां दण्डिमतीति । इन्नन्ताद् मतुब् भवति । सन्नन्तादिति । सरूप इति संबध्यते । तत्र सनो रूपसारूप्यव्यभिचारो नास्तीत्यर्थसारूप्यमाश्रीयते । विशेषण-सामर्थ्यात् । जुगुप्सिषते । मीमांसिषते इति । गुप गोपने । मान विचारणे । आभ्यां 'गुप्तिज्किद्भ्यः—' 'मान्बध—' इति च स्वार्थ-सन्नन्ताभ्यामिच्छासन् । इट् । अतो लोपः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादे निरगमदमला प्रक्रियेयं सनन्ता ॥

---

१. सरूपप्रत्ययः $D_1$. २. सनन्त° $D_3$. ३. सरूपो मतुबर्थिकः प्रत्ययः $Bc_2$, $Dc_3$.

# अथ यङन्ताः ।

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥३।१।२२॥

हलादिर्यो धातुरेकाच् तस्मात् पौनःपुन्ये भृशार्थे च यङ्प्रत्ययः[1] स्यात् ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वक्तव्यः । धातोरित्युक्तेः सोपसर्गान्न । प्राटति भृशम् ।[2] रुचिशुभ्योर्यङ् न ।[3]

---

धातोः । समभिहरणं समभिहारः । विप्रकीर्णानां द्रव्याणां राशीभाव उच्यते । स च मूर्तस्यानेकस्यैककालस्य स्यात् । अतो धातुवाच्यानां क्रियाणां मुख्यः समभिहारो न स्यात् । अमूर्तत्वात् । क्रमभावित्वेनायुगपत्कालत्वाच्चेत्यभिप्रेत्य गौणसमभिहारं दर्शयितुमाह- **पौनःपुन्ये भृशार्थेचेति** । एतदुभयं समभिहारसादृश्यादव्यवधानात् समभिहारव्यपदेशं लभते । तत्र प्रधानक्रियायाः पचनादिकायाः क्रियान्तर-व्यवधानेनावृत्तिः पौनःपुन्यम् । तथैकप्रधाने क्रियाया अधिश्रयणादि-कायाः साकल्येन संपत्तिः फलातिरेको वा भृशार्थः । **सूचिसूत्रीत्यादि** । सूच पैशून्ये । सूत्र अवमोचने । मूत्र प्रस्रवणे । अट गतौ । ऋ गतौ । अश भोजने । ऊर्णुञ् आच्छादने । तत्राद्यानां त्रयाणां चुरादिण्यन्ता-नामनेकाजर्थे ग्रहणम् । मध्यानां त्वहलाद्यर्थे । ऊर्णोतेरुभयार्थः । **धातोरित्युक्तेरिति** । सोपसर्गस्य धातूपसर्गसमुदायत्वेनाधातुत्वादिति भावः । ततश्च प्रादेर्हलादित्वेपि यङ् न । एवं सर्वत्र सोपसर्गाद्यङ् न । किं तु यङि जाते पश्चादर्थविशेषेणोपसर्गसंबन्धः उपपद्यत[4] इत्यादि । **रुचिशुभ्योरिति** । रुच दीप्तौ । शुभ शोभने ।

---

१. C drops प्रत्ययः. २. After this—धातूपसर्गसमुदायित्वेन प्रपूर्वादटेर्हलादित्वेपि यङ् $B_2$. ३. शुचिभ्यो C; न रुचिशुचिभ्यो यङ् $B_2$. ४. °विशेषेणोपपनापिद्यत इत्यादि $Dc_3$.

**नित्यं कौटिल्ये गतौ ॥३।१।२३॥**

गत्यर्थात् कौटिल्ये एव यङ् स्यान्न क्रियासमभिहारे ॥[1]

**लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥३।१।२४॥**

एभ्यो धात्वर्थगर्हायामेव यङ् स्यान्न क्रियासमभिहारे ॥ भृशाद्यर्थभावगर्हयोर्मिश्रणेपि लुपादेः[3] स्यादिति केचित् । सन्यङोरिति द्वित्वम् ।

**गुणो यङ्लुकोः ॥७।४।८२॥**

अभ्यासस्य गुणः स्यात् यङि यङ्लुकि[4] च[5] परे ॥

---

**नित्यं कौटिल्ये** । नित्यग्रहणं विषयानियमार्थमित्याह- **कौटिल्य एव यङ् स्यान्न क्रियासमभिहारे** इति ।

**लुपसद** । लुप्लृ छेदे । षद्लृ विशरणगत्यवसादनेषु । चर गतौ । जप व्यक्तायां वाचि । जभ गात्रविनामे । दह भस्मीकरणे । दंश दशने । गॄ निगरणे । धात्वर्थगर्हायामित्यनेन भावगर्हायामित्यस्यार्थमाह । **भृशाद्यर्थे**[2] इति । तथोक्तं **मुग्धबोधे** । 'गत्यर्थाद्वक्रे प्रादेर्गर्हायां यङ् न पूर्वोक्ते तद्युते तु स्यात्' इति । **सन्यङोरिति** । सूत्रि अस्माद्यङ् । ततो द्वित्वमिति ।

**गुणः** । अभ्यासस्यायं गुणो विधीयते । तेन यद्यपि लुक्शब्दः सामान्यवचनस्तथापि यङ्लुक्येव संप्रत्ययो भवति । न ह्यन्यत्र लुक्यभ्यासः संभवतीति मत्वाह- **यङ्लुकि चेति** । 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् यङो लुकि कृते गुणो न प्राप्नोतीति लुक्ग्रहणम् ।

---

१. After this—नित्यग्रहणं विषयनियमार्थम् $N_1$. २. धात्वर्थे $D_2$. ३. लुपादेर्यङ् स्यादि° $N_1$. ४. लुकि च परे $B_2$. ५. $D_1$ drops च.

धातुत्वाद्दश[1] लडादयः । ङित्त्वादात्मनेपदम् । [2]णिलोपः । पुनः पुनरतिशयेन वा सूचयति सोसूच्यते ।

**यस्य हलः ॥६।४।४९॥**

हलः परस्य यकारस्य लोपः स्यादार्धधातुके ।[3] असोसूचिष्ट । सोसूचांचक्रे । सोसूत्र्यते । मोमूत्र्यते[4] । द्वितीयस्य द्वित्वम् । हलादिशेषः ।

---

**धातुत्वा**दिति । 'सनाद्यन्ता—' इति धातुत्वादित्यभिप्रायः । **ङित्त्वा**दिति । 'अनुदात्तङित—' इति । **णिलोप** इति । 'णेरनिटि' इति ।

**यस्य** । 'आदेः परस्य' इति यकारो लभ्यते इत्यभिप्रेत्याह-**हलः परस्य यकारस्ये**ति । केचित्तु हलन्तायाः प्रकृतेर्विहितस्य यस्य लोप इति वदन्ति । तन्मते सूच्यादीनां शेतेः कण्ड्वादेश्च न यलोपः । सोसूच्यितेत्यादि । संघातग्रहणं किम् । ईर्ष्यिता । हल इति किम् । लोलूयिता । **असोसूचिष्टे**ति । लुङ् । सिच् । इट् । **सोसूचांचक्रे** इति । प्रत्ययान्तत्वादाम् । यलोपः । 'आम्प्रत्ययवत्' इति कृञ आत्मनेपदम् । सोसूचिता । सोसूत्रिषीष्ट । सोसूत्रिष्यते । असोसूचिष्यतेति यङन्ते सर्वत्र रूपाणि ज्ञेयानि । **मोमूत्र्यत** इति । मूत्रि । अस्माद्यङ् । द्वित्वम् । गुणः । धातुत्वाल्लडादयः । आत्मनेपदम् । णिलोपः । **द्वितीयस्य द्वित्वमि**ति । अट अश आभ्यां यङि द्वितीयस्य ट्य श्य इत्यस्य द्वित्वमित्यर्थः ।

---

१. दश dropped $D_3$. २. $D_2$, $D_4$, $B_2$ have बोभूयते before it. ३. °धातुके परे $D_2$. ४. Dropped N. ५. हलादिः शेषः $D_2$, $D_4$; हलादिशेषः dropped $D_3$. ६. यस्येति संघातग्रहणमेतत् । तत्र 'अलोन्त्यस्य' इत्यत्र 'अतो लोपः' इत्यनेनैव सिद्धत्वात् । अथवा हल इति पञ्चमी । तत्र आदेः परस्य' &c. $Dc_3$.

दीर्घोऽकितः ॥७।४।८३॥

अकितोऽभ्यासस्य दीर्घः स्याद्याङि यङ्लुकि च ॥ अटाट्यते । अशाश्यते ।

याङि च ॥७।४।३०॥

अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । यकारपरस्य रेफस्य न द्वित्वनिषेधः । अरार्यते । ऊर्णोनूयते । घुमास्थागापाजहातिसां हलि । ततो द्वित्वम् । गुणः । देदीयते । अतो लोपः । अदेदीयिष्ट । देधीयते । मेमीयते । तेष्ठीयते । जेगीयते ।

---

दीर्घः । अकितः किम् । जङ्गम्यते । ननु चात्रापवादत्वात् 'नुगतोनुनासिकान्तस्य' इति नुकि कृतेन जन्तत्वादेवाभ्यासस्य दीर्घो न स्यात् । अतोऽकित इति व्यर्थम् । एवं तर्हि अकित इत्यनेनैतत् ज्ञाप्यते । अभ्यासविकारेषु बाधको न बाध्यान् विधीन् बाधते इति । किमेतस्य ज्ञापने प्रयोजनम् । डोढौक्यत इत्यत्र 'दीर्घोऽकितः' इत्यनेन संध्यक्षरस्य ह्रस्वो न बाध्यते । अचीकरदित्यत्र 'दीर्घो लघोः' इत्यनेन सन्वदित्वं न बाध्यते । मीमांसत इत्यत्र दीर्घेणेत्वम् । अजीगणदित्यत्रेत्वेन हलादिशेष इति । अटाट्यत इति । दीर्घविधानसामर्थ्यात् 'ह्रस्वः' इति ह्रस्वो न ।

ऊर्णोनूयत इति । नुशब्दस्य द्वित्वम् । रेफस्य न द्वित्वम् । 'नन्द्राः—' इति निषेधात् । देदीयते इति । डुदाञ् दाने । दाण् दाने । दोवखण्डने । देङ् पालने । एतेषां रूपम् । चरमयोरात्वम् । 'धातोरेकाचः—' इति यङ् । ईत्वम् । द्वित्वम् । 'गुणो यङ्लुकोः' इति गुणः । दाप्दैपोरघुत्वात् दादायते इत्येव रूपम् । देधीयत इति । डुधाञ् धारणपोषणयोः । मेमीयत इति । मा माने । माङ् शब्दे । मेङ् प्रणिदाने । इत्येतेषां रूपम् । तेष्ठीयत इति । ष्ठा गतिनिवृत्तौ । जेगीयत इति । गाङ् गतौ । गै गाने ।

[१]पेपीयते। जेहीयते। सेषीयते। विभाषा श्वेः। शोशूयते। शेश्वीयते। सास्मर्यते। रीङ् ऋतः। चेक्रीयते। सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुणः। संचेस्क्रीयते।[२]

**सिचो यङि ॥८।३।११२॥**

सिचः सस्य षो न स्याद्यङि ॥ उपसर्गाभ्यासनिमित्तषत्वापवादः। निसेसिच्यते। वक्रं व्रजति वाव्रज्यते।

**ग्रो यङि ॥८।२।२०॥**

गॄ इत्यस्य रेफस्य लः स्याद्यङि ॥ गर्हितं गिलति

---

**पेपीयत** इति। पा पाने। पातेस्तु पापायते। **जेहीयत** इति। ओहाक् त्यागे। हाङस्तु जाहायते।[३] **सेषीयत** इति। षोन्तकर्मणि। सर्वत्र देदीयत इतिवत् प्रक्रिया। **शोशूयत** इति। टुओश्वि गतिवृद्ध्योः। यङ्। संप्रसारणं च। द्वित्वम्। गुणः। 'अकृत्सार्वधातुकयोः' इति दीर्घः। **सास्मर्यत** इति। स्मृ आध्याने। 'यङि च' इति गुणः। 'दीर्घोऽकितः' इति दीर्घः। **चेक्रीयत** इति। डुकृञ् करणे। रीङ्। पश्चात् द्वित्वम्।[४] गुणः। **संचेस्क्रीयत** इति। 'संपरि—' इति सुट्।

**सिचः**। षिच क्षरणे। उपसर्गेति। 'उपसर्गात् सुनोति—' इति 'स्थादिष्वभ्यासेन च' इति प्राप्तषत्वनिषेध इत्यर्थः। **वाव्रज्यत** इति। व्रज गतौ। 'नित्यं कौटिल्ये गतौ' इति यङ्। 'दीर्घोऽकितः' इति दीर्घः।

**ग्रो**। केचित्तु गॄ निगरणे गॄ शब्दे इति द्वयोस्तुदादिक्र्याद्योः सामान्येन ग्रहणमिच्छन्ति। अपरे गिरतेरेव ग्रहणं गृणातेर्हि यङेव

---

१. Before it $D_2$, $D_4$, $B_2$ have लिङ्यङोश्चेति व्यायः पीभावः। $D_4$ has in addition पेपीयते. २. After it $D_1$ has—परिचेस्क्रीयते। उपचेस्क्रीयते।. ३. जीहायते $Dc_3$. ४. 'ऋतश्च–' इति द्वित्वम् $Dc_3$. ५. After it—चुत्वम् $Dc_3$.

निजेगिल्यते । लोलुप्यते । सासद्यते ।

**न कवतेर्यङि ॥७।४।६३॥**

कवतेर्भौवादिकस्याभ्यासस्य चुत्वं न स्याद्यङि ॥ कोकूयते । कवतेर्निर्देशात् कौतिकुवत्योश्चुत्वमेव । चोकूयते ।[1]

**नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥७।४।८४॥**

एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः ॥ अकित इत्युक्तेर्न दीर्घः । न्लोपः[2] । वनीवच्यते । सनीस्रस्यते । इत्यादि ।

---

नास्ति अनभिधानादितीच्छन्ति । निजेगिल्यते इति । 'लुपसद—' इति यङ् । 'ॠत इत्—'[3] इतीत्वम् । रपरः । द्वित्वम् । चर्त्वम् । गुणः । लोलुप्यत इति । लुप्लृ छेदने । पूर्ववत् यङ् । गर्हायाम् । सासद्यत इति । षद्लृ विशरणगत्यवसादनेषु । दीर्घोऽभ्यासस्य ।

न कवतेः । कुङ् शब्दे । कवतेरित्यादि । कवतेरिति शप्-विकरणनिर्देशाददादितुदाद्योर्ग्रहणं नेत्यभिप्रायः । सर्वे शब्दार्था एव ।

नीग्वञ्चु । वञ्चु[4] गतौ । स्रंसुध्वंसुभ्रंसु अवस्रंसने । कस गतौ । पत्लृ गतौ । पद गतौ । स्कन्दिर् गतिशोषणयोः । न्लोप इति । 'अनिदिताम्—' इति । अथ नीकि कृते ह्रस्वत्वं गुणश्च कस्मान्न स्यात् । दीर्घोच्चारणसामर्थ्यात् । आदिशब्दात् दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते इति ज्ञेयम् ।

---

१. After this $D_1$ has—कवतिरव्यक्ते शब्दे । कुवतिरार्तस्वरे । कौति शब्दमात्रे इति व्यवस्था । २. Dropped $D_4$. ३. 'ऋतः—' इति इत् $Dc_3$. ४. वञ्च $Dc_3$.

## नुगतोनुनासिकान्तस्य ॥७।४।८५॥

अनुनासिकान्तस्यादन्ताभ्यासस्य नुगागमः स्याद्यङ्यङ्लुकोः । नुंक् पदान्तवद्वाच्यः । अझल्यप्यनुस्वारः । वा पदान्तस्येति वा परसवर्णः । यंयम्यते । यँय्यम्यते । वंवम्यते । वँव्वम्यते । तंतन्यते । तन्तन्यते । अत इति तपरत्वान्नेह । भाम क्रोधे । बाभाम्यते । ये विभाषेत्यात्वम् । जाजायते । जञ्जन्यते । एवं सनखन । कुत्वम् । जङ्घन्यते । हन्तेर्हिंसायां याङि घ्नीभावो वक्तव्यः ॥* जेघ्नीयते ।

---

नुग । अझल्यप्यनुस्वार इति । नुगित्येतदनुस्वारोपलक्षणार्थम् । स्थानिना ह्यादेशो लक्ष्यते । तेनाझल्यप्यनुस्वारो भवतीत्यर्थः । यंयम्यत इत्यादि । यमु उपरमे । टुवमु उद्गिरणे । तनु विस्तारे । इत्येतेषां रूपाणि क्रमात् । अत इति । तपरत्वं हि भूतपूर्वेपि दीर्घे मा भूदित्येवमर्थम् । अन्यथा सर्वस्याभ्यासस्य ह्रस्वत्वात् तपरत्वं व्यर्थं स्यात् । जाजायत इति । जन जनने । एवं सनखनेति । षणु दाने । खनु अवदारणे । एतयोरपि जनेरिव रूपाणि ज्ञेयानीत्यर्थः । सासायते संसन्यते । चाखायते । चङ्खन्यते इति । कुत्वमिति । 'अभ्यासाच्च' इति । जङ्घन्यत इति । हन हिंसागत्योः ।

---

१. Before it $D_1$ has—आदेशिना आदेशो लक्ष्यते । अनुस्वारो नुका लक्ष्यते । तेन अझल्यप्यनुस्वारः ।. २. C has—नुक् अनुस्वारोपलक्षणत्वेन before it; $B_2$, $N_1$ have तेन before it. ३. यँय्यम्यते । यंयम्यते । वँव्वम्यते । वंवम्यते । तंतन्यते । तन्तन्यते $N_1$, $D_4$. ४. °त्यात्वं वा $N_1$; $D_3$; °त्यात्वं च $D_4$.

**जपजभदहदशभञ्जपशां च ॥७।४।८६॥**

एषामभ्यासस्य नुक् स्यात् यङ्यङ्लुकोः ॥ गर्हितं[1] जपति जञ्जप्यते । पशतिस्तालव्यान्तः सौत्रो गत्यर्थः । कुटिलं पशति पंपश्यते[2] । इत्यादि । लवयान्ताभ्यासस्य[3] नुग्वेति केचित् । चंचल्यते । मंमव्यते । चाचल्यते[4] । मामव्यते । दंदय्यते । दादय्यते[5] ।

**चरफलोश्च ॥७।४।८७॥**

अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः[6] ॥

---

जप । जप व्यक्तायां वाचि । जभ गात्रविनामे । दह भस्मीकरणे । दंश दंशने । भञ्ज आमर्दने । पश इति सौत्रो गत्यर्थः । चतुर्षु 'लुपसदचर—' इति यङ् । भञ्जेः 'धातोरेकाचः—' इति । पशेः 'नित्यं कौटिल्ये' इति यङ् । जञ्जप्यत इति । गर्हितं जपतीति विग्रहः । आदिशब्दात् जञ्जभ्यते । दन्दह्यते । दंदश्यते । बम्भज्यते । पम्पश्यते । इति ज्ञेयम् । लवयान्तस्येति । तथोक्तं मुग्धबोधे । 'लवयस्तु वा' इति । चञ्चल्यत इति । चल चलने । मव बन्धने । दय रक्षणे ।

चर । चर गत्यर्थः । ञिफला विशरणे । फल निष्पत्तौ । द्वयोरपि ग्रहणम् । ननु निष्पत्त्यर्थस्याकार उच्चारणार्थ एव । अनुबन्धप्रयोजनाभावात् । ततश्च निरनुबन्धकग्रहणे न सानुबन्धकस्येति तस्यैव ग्रहणं स्यात् । नैष दोषः । चकारोत्र कृतो विशरणार्थस्य समुच्चयार्थः ।

---

१. गर्हितं जपति dropped $D_3$. २. $D_2$, $D_3$ $D_4$, $B_2$ drop from पशति°...... पंपश्यते. ३. लवयान्तस्या° $N_1$, $D_3$. ४. चाचल्यते before मंमव्यते $D_3$, $D_4$. ५. It is given before चाचल्यते in $N_1$. ६. यङ्लुकोः $N_1$.

**उत्परस्यातः ॥७।४।८८॥**

चेरफलोः प्रकृतेरकारस्य उत् स्याद्यङ्लुकोः[१] ॥ चञ्चूर्यते । पम्फुल्यते ।

**रीगृदुपधस्य च ॥७।४।९०॥**

धातोर्ऋदुपधस्याभ्यासस्य रीगागमः स्याद्यङि यङ्लुकि ।

---

उत्पर । अभ्यासाधिकारादभ्यासात्परस्याकारस्योत्वम् । न च प्रकृतेरकारादन्योऽभ्यासात्परोकारोस्तीति चेतसि कृत्वा परस्येति सूत्रावयवं प्रकृतेरकारस्येत्यनेन व्याचष्टे । **चञ्चूर्यते** इति । 'लुपसद—' इति यङ् । उत्वे कृते 'हलि च' इति दीर्घः । **पम्फुल्यत** इति । 'अभ्यासे चर्च' । ननु च 'अतः' इति किमर्थम् । 'अलोन्त्यस्य' इति मा भूदिति । 'अतः' इति तर्हि तपरत्वं किमर्थम् । इह मा भूदित्येवमर्थम् । फलन्तं प्रयुङ्क्ते फालयति । तस्मात् क्विप् । ततः क्विब्वा इत्येके इति पुनः क्विप् । तदन्ताद्यङ् । पाफाल्यते । पाफालीतीति । कथमत्र स्यात् । एकदेशविकृतस्यानन्यत्वात् । अथ 'उत्' इति तपरत्वं किम् । यावतान्तरतम्यात् मात्रिकस्य मात्रिक एव स्यात् । उच्यते । चञ्चूर्यत इत्यत्र लघूपधगुणो मा भूदित्येवमर्थम् । न च वाच्यं दीर्घेणैव गुणनिवृत्तिः स्यादिति । गुणं प्रति दीर्घस्यासिद्धत्वात् । यदि लक्षणान्तरेण प्राप्नुवन् गुणो निवर्त्स्यते तपरत्वेन तर्हि गुणवद्दीर्घो न स्यात् । नैवम् । तपरत्वे हि दीर्घत्वमसिद्धम् । अतो नान्यस्य निवृत्तिरस्त्यनेन शक्या कर्तुम् । तथा च 'अत उत् सार्वधातुके' इति तपरत्वेन दीर्घनिवृत्तिर्नेति मन्यमानः 'न भकुर्छुराम्' इति करोतेर्दीर्घनिषेधमारभते ।

**रीगृदुपधस्येति** । तपरत्वमुकारे परे यणादेशनिवृत्त्यर्थम् । सति तस्मिन् संदेहः स्यात् किं ऋकारोपधस्य रेफोपधस्येति ।

---

१. चर् फल एतयोः C. २. यङ्लुकोः $N_1$, $D_2$, $D_3$, $D_4$, P; यङ्यङ्लुकोः C, $B_2$.

## क्षुभ्नादिषु च ॥८।४।३९॥

क्षुभ्नादावाकृतिगणे णत्वं न स्यात् ॥ नरीनृत्यते । जरीगृह्यते । कृपो रो ल इति उभयत्र लत्वम् । चलीक्लृप्यते । रीगृत्वत इति संयोगार्थं वाच्यम् । वरीवृश्च्यते । परीपृच्छ्यते ।

---

क्षुभ्ना । क्षुभ्नादाविति । 'पूर्वपदात् संज्ञायाम्—' 'छन्दस्यृदवग्रहात्' इति वा प्राप्तस्य णत्वस्य प्रतिषेधः । नन्दि नन्दन नगर इत्येतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति[1] । हरिनन्दी । हरिनन्दनः । गिरिनगरम् । नृतेर्यङि । नरीनृत्यते । तृप्नु । तृप्नोति । नर्तन गहन निवेशन निवासन अग्नि अनूप एतान्युत्तरपदानि । परिनर्तनः । परिगहनः । 'पूर्वपदात्—' इति प्राप्तिः । परिनन्दनमिति । 'उपसर्गादसमासेपि' इति । शरनिवेशः । शरनिवासः । शराग्निः । दर्भानूपः । एताः संज्ञाः । आचार्यभोगीनः । आचार्यानी । अविहित-लक्षणो णत्वप्रतिषेधः क्षुभ्नादौ द्रष्टव्यः । अत एवाह—आकृतिगण इति । आकृत्या गणः आकृतिगणः । क्षुभ्नाद्याकार इत्यर्थः । केषांचिदेवं पाठः । क्षुभ्ना । तृप्नु । नृनमन । नरनगर । नरनृती । गिरिनदी । गहन । मदन । निवेश । निवास । अग्नि । अनूप । आचार्यभोगीन । चतुर्हायन । इरिकादीनि वनोत्तरसंज्ञायाम् । इरिका । तिमिर । समीर । कुबेर । हरि । कर्मार । नरीनृत्यत इति । नृती गात्रविक्षेपे । जरीगृह्यत इति । ग्रह उपादाने । 'ग्रहिज्या—' इति संप्रसारणम् । ऋत्वत इति । ऋदस्यास्तीति ऋत्वान् । ऋकारवानित्यर्थः । वरीवृश्च्यते परीपृच्छ्यत इति । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । पूर्ववत् संप्रसारणम् ।[2]

---

१. प्रयोजकानि Dc3. २. After this—सोषुप्यते इति Dc3.

**स्वापिस्यमिव्येञां यङि ॥६।१।१९॥**

एषां यङि संप्रसारणं स्यात् ॥ सोषुप्यते । सेसिम्यते । वेवीयते ।

**न वशः ॥६।१।२०॥**

वष्टेर्यङि संप्रसारणं न स्यात् ॥ वावश्यते ।

**चायः की ॥६।१।२१॥**

चायतेः की स्याद्यङि ॥ चेकीयते ।

**ई घ्राध्मोः ॥७।४।३१॥**

एतयोरी[1] अन्तादेशः स्याद्यङि ॥ जेघ्रीयते । देध्मीयते ।

**अयङ्‌ यि क्ङिति ॥७।४।२२॥**

शीङोऽयङादेशः स्याद्यादौ क्ङिति[2] । ङित्वादन्त्यस्य[3] । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते ॥

इति यङन्तप्रक्रिया ।

---

स्वपि । ञिष्वप् शये । स्यम शब्दे । व्येञ् संवरणे । सोषु[4]प्यत इत्यादि । संप्रसारणे कृते पश्चात् द्वित्वगुणादि[5] ।

न वशः । वावश्यत इति । वश कान्तौ । 'दीर्घोकितः' इति दीर्घः ।

चायः । चायृ पूजानिशामनयोः । दीर्घोच्चारणं यङ्‌लुगर्थम् । दीर्घोच्चारणसामर्थ्यादेव 'न लुमता—' इति प्रत्ययलक्षणप्रतिषेधो न ।

ई घ्रा । जेघ्रीयते । देध्मीयत इति । घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः ।

अयङ् । ङित्वादन्त्यस्येति । 'ङिच्च' इत्यनेन । शाशय्यत इति । शीङ् स्वप्ने । 'दीर्घोकितः' । डोढौक्यत इति । ढौकृ गतौ ॥

---

१. रीदन्तादेशः $D_2$, $D_3$, $B_2$; री आदेशः C. २. क्ङिति परे C, $N_1$, $D_3$, $D_4$. ३. °दन्तस्य $D_1$, $D_2$, $D_4$, P, C, $B_1$, $B_2$. ४. Dropped $Dc_3$. ५. द्वित्वम् । गुणादिः । $Dc_3$.

# अथ यङ्लुगन्ताः ।

## यङोचि च ॥२।४।७४॥

यङोचिं प्रत्यये लुक् स्यात् । चकारादन्यत्रापि बहुलं

---

यङः । 'अचि' इति प्रत्याहारग्रहणं न भवति । किं तु प्रत्ययग्रहणमित्यभिप्रेत्याह—अचि प्रत्यये इति । यदि प्रत्याहारग्रहणमिष्टं स्यात् तर्ह्यणीति वदेत् । नं हि यङन्तादन्येचः संभवन्ति । इदमेवाच्ग्रहणं ज्ञापकं सर्वे धातवः पचाद्यन्तःपातिन इति । ननु च 'हुश्नुवोः सार्वधातुके' इत्यत्र वार्तिककारो हुश्नुग्रहणमनर्थकमन्यत्राभावात् । यङ्लुगर्थमिति चेदार्धधातुकत्वात् सिद्धमिति यङ्लुकं छान्दसमभ्युपगम्य हुश्नुग्रहणं प्रत्याख्यातवान् । स मन्यते 'यङोचि च' इत्यत्र 'छन्दसि' इत्यनुवर्तते । तथा भाष्यकारोपि तत्रैवोक्तवान् । एवं तर्ह्येतत् ज्ञापयति भाषायामपि यङ्लुगस्तीति । बेभिदीति चेच्छिदीति बोभवीतीत्यादि सिद्धं भवतीति । अतस्तन्मतेप्यत्र 'छन्दसि' इत्यनुवर्तते । तथा चिरन्तनाः कवयः प्रायो यङ्लुकं नं प्रयुक्तवन्तः । एवं स्थितेत्रापि 'छन्दसि' इत्याचार्यैः किमिति नानुवर्तितम् । उच्यते । काशिकाकारस्तु 'छन्दसि' इति नानुवर्तत इत्युक्तवान् । तदभिप्रायेण नानुवर्तितम् । तस्य चाभिप्रायः पदमञ्जर्यामुक्तः । वृत्तिकारस्तु मन्यते यदि ज्ञापकेनापि तावद् भाषायामपि यङ्लुक्प्रयोगो भवति हन्तैवमत्रैव छन्दोग्रहणं मानुवृतत् । प्रयोगस्तु स्वाभिधानं व्यवस्थास्यत इतीति । अत एतत् निश्चितं प्रयोगानुसारेणैव यङ्लुक् प्रयोज्यः । अत एवाग्रे वक्ष्यति—इत्यादि प्रयोगानुसारात् ज्ञेयमिति । अत एवास्माभिरपि आचार्यैः प्रयुक्ता एव प्रयोगा व्याख्यायन्ते नान्ये कल्प्यन्त इति ज्ञेयम् । ननु च यङ्लुकि सति 'सन्यङोः'

---

१. °च्प्रत्यये C, P, N. २. For नहि यदि Dc₁, Dc₄. ३. तथा च Dc₃. ४. For न यत् Dc₁, Dc₄ ५. अत एव तस्मिन्निश्चितं Dc₃.

लुक्[1] स्यात् । अनङ्गकार्यत्वान्न लुमतेति द्वित्वानिषेधः[2] । यङ्लुकि सत्यन्तरङ्गत्वात् द्वित्वेभ्यासकार्ये च कृते[3] धातुत्वात् तिबादिः[4] । ततस्तिङाश्रितं[5] कार्यं ज्ञेयम्[6] ।

**चर्करीतं[7] च ॥**

चर्करीतमिति यङ्लुगन्तं तत् परस्मैपदि अदादिवत् ज्ञेयम् । शपो[8] लुक् ।

**यङो वा ॥७।३।९४॥**

यङ्लुगन्तात् परस्य हलादेः पितः सार्वधातुकस्य ईडागमो वा स्यात् ॥ भूसुवोरिति गुणाप्राप्तौ बोभूतु तेतिक्त इति

---

इति द्वित्वं न स्यात् । प्रत्ययलक्षणत्वस्य ' न लुमता— ' इति निषिद्धत्वादित्याशङ्क्याह—**अनङ्गे**ति । द्वित्वं ह्यङ्गस्येत्यधिकृत्य नोक्तम् । अतः ' न लुमता—' इति निषेधो न भवति । अङ्गकार्यस्यैव तत्र निषिद्धत्वादित्यभिप्रायः । **यङ्लुकि सती**त्यादि । असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया ।

' चर्करीतं परस्मैपदम् ' इत्यदादौ धातुसूत्रं तदेकदेशेन पठति—**चर्करीतं चे**ति । तद् व्याकरोति—**चर्करीतमिति यङ्लुगन्त**मित्यनेन । पूर्वाचार्यसंज्ञेयमिति निदर्शितम् । **शपो लुगि**ति । अदादित्वात् ।

**यङः** । यङन्तात् परतः शपो विहितत्वात् हलादेः पितः सार्वधातुकस्यासंभवाद् यङ्लुगन्त एव भवतीत्यभिप्रेत्याह—**यङ्लुगन्ता**दिति । **बोभूतु** इति । ' बोभूतु तेतिक्तेलर्षि—' इत्यादि सूत्रे बोभूतु

---

१. लुक् स्यात् dropped N. २. द्वित्वादेर्न निषेधः $B_2$. ३. $D_1$ drops कृते. ४. तिबादि N, $D_4$; तिबादयः $D_3$. ५. अत° $B_2$. ६. Dropped $D_3$. ७. परस्मैपदमवा° C. ८. तेन शपो लुक् $D_4$.

छन्दसि निपाताद् भाषायां यङ्लुकि गुणः ॥ बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभूयात् । बोभूहि । अबोभोत् । अबोभूताम् । अबोभवुः ।[3] अबोभूत् । अबोभूताम् । अबोभवुः । बोभवांचकार । कैश्चिदाम् नेष्यते । धातुनिर्देशे

इति गुणरहितस्य छन्दसि निपाताद् भाषायां गुण इत्यर्थः । बोभवीति । भू सत्तायामस्माद्धातोः 'एकाचः—' इति यङ् । यङो लुक् । 'सन्यङोः' इति द्वित्वम् । ह्रस्वः । 'अभ्यासे चर्च' । 'गुणो यङ्लुकोः' । इति । 'सनाद्यन्ता धातवः' इति धातुसंज्ञा । तिवादि । शप् । शपो लुक् । ईट् । गुणावादेशौ । बोभोतीति । ईडभावे रूपम् । बोभूत इति । 'सार्वधातुकमपित्' । इति ङित्त्वाद्गुणाभावः । बोभुवतीति । 'अदभ्यस्तात्' इत्यदादेशः । 'अचि श्नुधातु—' इत्युवङ् । बोभूयादिति । लिङ् । यासुट् । बोभूहीति । 'सेर्ह्यपिच्च' । इत्यपित्त्वान्न गुणः । अबोभवुरिति । लङ् । 'सिजभ्यस्त—' इति जुस् । 'जुसि च' इति गुणः । अबोभूदिति । लुङ् । 'गातिस्था—' इति सिचो लुक् । 'भूसुवोः—' इति गुणनिषेधः । ननु ज्ञापकाद् गुणः स्यात् । मैवम् । ज्ञापकं तु चतुर्ष्वेव लकारेषु लुग्विकरणवस्तु सजातीयेषु नान्यत्र । अबोभूतामिति । तसस्ताम् । अबोभवुरिति । जुस्गुणौ । बोभवांचकारेति । यङो लुक् । द्वित्वादि । धातुत्वम् । लिट् । प्रत्ययान्तत्वादाम् । गुणः । ननु चात्र 'न धातु—' इति गुणनिषेधेन भाव्यम् । मैवं वोचः । धात्वंशलोपनिमित्ते आर्धधातुके गुणनिषेधः । न चायं यङ्लुक् आर्धधातुकं निमित्तीकृत्य । किं तर्हि । अनिमित्तकः । तस्माद् गुणो भवत्येव । कैश्चिदामिति । तथा च न्यासकृता पदमञ्जरीकृता च बोभाव बोभूवतुरित्या-

१. निपातनाद् $D_3$. २. अबोभवीत् । अबोभोत् in place of it in $D_2$, $D_4$, $B_2$. ३. After this $D_2$ and $B_2$ $D_4$, have—लुङि अबोभूत् । सार्वधातुक एव गुणाभावश्छन्दसि निपातितस्तेन (आर्धधातुके तु उभयथापि गुणाभावः वेदे भाषायां च तेनात्र न गुणः $B_2$) नात्र (अत्र न $D_4$) गुणः । आर्धधातुकस्य सिचो लुप्तत्वेपि तद्विषयत्वस्य सत्त्वात् ।; P has अबोभवुः । अबोभोत् for अबोभूत्⋯अबोभवुः. ४. C drops from धातु⋯वुक्. ५. 'नेङ्गुणौ $Dc_3$. ६. Dropped $Dc_3$.

यङ्लुगन्तस्यापि ग्रहणात् भुवो वुगिति वुक् । बोभूव । बोभूवतुः । धातुग्रहणोक्तं यङ्लुकि वेति केचित् । बो[1]भाव । बो[2]भूवतुः । वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः ।[3] जङ्गमीति । जङ्गन्ति । जङ्गतः । [4]उपधालोपः ।[5] जङ्ग्माति । जङ्गमाति ॥

---

ह्युदाहृतम् । बोभूवेति । वार्तिककारमते नित्यत्वाद्वुक् गुणवृद्धी बा[6]धते । तन्मतमाश्रित्यैतदुदाहृतम् । न्यासकारा[7]दिमते तु बोभाव । बोभूवतुः । बोभूवुः । बोभूविथेति भाष्यम् । धातुग्रहणोक्तमिति । तथोक्तं मुग्धबोधे । 'धुग्रहणोक्तं तु वा स्यात्' इति । बोभावेति । 'अचो ञ्णिति' इति वृद्धिः । ननु चात्र 'इन्धिभवतिभ्यां च' इति कित्त्वं स्यात् । ततश्च वृद्धिर्न स्यात् । मैवम् । श्तिपा निर्देशात् तस्य यङ्लुकि प्राप्तिरेव नास्ति । तथोक्तम् ।

श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ इति ।

वनीवञ्चीतीति । वञ्चु गतौ । 'नित्यं कौटिल्ये' इति यङ् । 'नीग्वञ्चु—' इति नीक् । 'यङो वा' इतीट् । वनीवक्त इति । 'अनिदिताम्—' इति न्लोपः । 'चोः कुः'। वनीवचति । वनीवच्यात् । वनीवञ्चीतु । वनीवक्तु । अवनीवञ्चीत् । अवनीवन् । अवनीवञ्चीत् । अवनीवञ्चिष्टाम् । वनीवञ्चांचकार । वनीवञ्चिता । वनीवञ्च्यात् । वनीवञ्चिष्यति । अवनीवञ्चिष्यत् । एवं सर्वत्र रूपाणि ज्ञेयानि । विशेषो वक्ष्यति । गम्लृ गतौ । पूर्ववद्यङ् । यङो लुक् । 'नुगतोनुनासिकान्तस्य' इति नुक् । ईट् । जङ्गन्त इति । 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः । उपधालोप इति । 'गमहन—' इति । जङ्गमतीति ।

---

१. C drops बोभाव । बोभूवतुः २. बोभुवतुः. $D_3$ ; बोभुवतुः । बोभुवुः । $D_4$. ३. After it—अदभ्यस्तादिति । वनीवचति $B_2$, $D_4$. ४. उपधाया लोपः $D_1$ ; उपधालोपश्च C. ५. After it—जङ्गमाति $D_2$, P ; धातुग्रहणोक्तं यङ्लुकि विकल्पतः । जङ्ग्माति । जङ्गमाति $B_2$. ६. बाधेत $Dc_3$. ७. आदि dropped $Dc_3$. ८. भूधातुग्रहणो° $Dc_3$.

म्वोश्च ॥८।२।६५॥

मान्तस्य धातोर्नः[1] स्यान्मवयोः परतः ॥ जङ्गन्मि । जङ्गन्वः । जङ्घनीति । जङ्घन्ति । जङ्घतः ।[2] जङ्घ्नाति । जङ्घनति । 'नाभ्यस्तस्याचि' इति न गुणः । चञ्चुरीति । 'उत्परस्यातः' इति तपरत्वान्न गुणः । दीर्घत्वं स्यादेव । चञ्चूर्ति । चञ्चूर्तः । धातुग्रहणोक्तं यङ्लुकि वेति केचित्[3] । चङ्[4]खन्ति । चङ्खनीति । चङ्खातः । चङ्खन्तः । चङ्ख्नाति । चङ्खनाति । जञ्जन्ति । जञ्जनीति । जञ्जातः । जञ्जन्तः । जञ्जनाति ।

---

धातुग्रहणोक्तस्य यङ्लुकि विकल्पात् । जङ्घन्तीति । हन हिंसागत्योः । 'धातोरेकाचः—' इति यङ् । लुक् । नुक् पूर्ववत् । 'अभ्यासाच्च' इति कुत्वम् । अनुस्वारपरसवर्णौ । जङ्घत इति । अनुनासिकलोपः । जङ्घ्नाति । जङ्घनतीति । 'अदभ्यस्तात्' । 'गमहन—' इत्युपधालोपः । धातुग्रहणोक्तं वेति केचित् । 'हन्तेर्जः' इत्यत्र श्तिपा निर्देशात् जादेशो न । जङ्घहि । चञ्चुरीति । चर गतिभक्षणयोः । 'चरफलोश्च' इति नुक् । 'उत्परस्यातः' इत्युत् । तपरत्वादिति । एतच्च 'उत्परस्यातः' इत्यस्मिन्नेव सूत्रे विवृतम् । चङ्खातः । चङ्खन्त इति । खनु अवदारणे । नुक् । 'जनसनखनाम्' इत्याकारः । स च वा केषांचिन्मते । चङ्खनतीति । 'गमहन—' इत्युपधालोपः । जञ्जात इति । जन जनने । पूर्ववदात्वम् ।

---

१. धातोर्मस्य नः $B_2$. २. After it—जङ्घतः $B_1$, $B_2$, C. ३. धातु°...केचित् dropped $D_3$. ४. $B_2$ drops all from चङ्खन्ति to दोद्योति and has only देद्योति after केचित् ; चङ्खातः । चङ्खन्तः । चङ्खनाति । चङ्खानाति । जञ्जातः । जञ्जन्तः । जञ्जाति । जञ्जनीति । यङ्लुकि &c. $D_3$ ; चङ्खातः । चङ्खन्तः । चङ्खनान्ति । चङ्खनति । जञ्जातः । जञ्जन्तः । जञ्जाति । जञ्जनाति । यङ्लुकि झलि च्छ्वोः शूठौ वकारे च वेति केचित् । दोद्योति $D_4$.

जञ्झति। यङ्लुकि झलि वे च च्छ्वोः शूठौ वेति केचित्। देद्योति। 'लोपो व्योर्वलि'। देदेति। दोदिवीति। देद्यूतः। देदितः। देद्यूथः[2]। देदिथः। मिपोनुनासिकत्वाद् ऊठ्। गुणः। देद्योमि[3]। देद्यूवः। देदिवः। विच्छ। वेविच्छीति। वेवेष्टि। वेविश्वः[4]। वेविछ्वः। 'नाभ्यस्तस्य' इत्यनुवृत्तेरुतो वृद्धिर्न। योयोति। योयवीति[5]। नोनोति। नोनवीति[6]। जाहाति[7]। जाहेति। जहात्यभ्यासस्य

---

जञ्झतीति। उपधालोपः। चुत्वम्। जश्त्वम्। यङ्लुकीत्यादि। छकारवकारयोः शकारोठौ वा भवतो यङ्लुकि झलि वकारे च परतो भवत इति केचिन्मन्वते। तथोक्तं मुग्धबोधे। 'च्छ्वोः शूटावणौ अस्क्तौ यङ्लुक् वोस्तु वा' इति। देद्योतीति। दिवु क्रीडायाम्। 'गुणो यङ्लुकोः'। देदेतीति। वलोपः। गुणः। देद्यूत इति। 'च्छ्वोः शूड—' इत्यूठ्। यण्। देदित इति। 'लोपो व्योर्वलि' इति वलोपः। गुणः। 'सार्वधातुक—' इति। देद्यूवः। देदिवः। केषांचिन्मते वोठ्। विच्छेति। विच्छ गतौ। वेविच्छीतीति। तुक्। वेवेष्टीति। 'व्रश्च—' इति षः। ष्टुत्वम्। गुणः। वेवेश्मीति। पूर्ववत् 'च्छ्वोः शूठ्—' इति शः। वेविश्व इति। वकारे चेति शः। नाभ्यस्तस्येत्यादि। 'उतो वृद्धिः—' इत्यत्रानुवर्तितत्वेनेत्यर्थः। योयोतीति। यु मिश्रणे। नोनोतीति। णु स्तुतौ। जाहेतीति। ओहाक् त्यागे। 'दीर्घोऽकितः' इति दीर्घः। ईट्। आद्गुणः। जहात्यभ्यासस्येति। ओहाग् इति कित्त्वादकित इत्युच्यमानो दीर्घो नेति तेषामभिप्रायः।

---

१. दोद्यूतः $D_2$; before it—देद्योति $D_3$. २. दोद्यूथः $D_1$, $B_2$; $D_3$ and $D_4$ drop देद्यूथः and देदिथः and देद्योमि and has मिपो° after देदिवः. ३. दोद्योमि। दोद्यूवः $D_2$, $D_4$; देद्योमि। देदिवीमि। देद्यूवः $B_2$. (also दोदिवीमि $D_4$). ४. Before it—वेवेश्मि $D_4$. ५. $D_1$, $D_3$ drop it ६. नोनवीति dropped $D_1$, $D_3$, $D_4$, $B_2$. ७. $D_3$ drops it and P and C have 'घुमास्था—' इति पक्षे जेहेति before it; इट्पक्षे जाहेति। अन्यत्र जाहाति। जहात्यभ्यास° $B_2$, $D_4$; $D_2$ has 'यङो वा' इति ईट्पक्षे जाहेति। अन्यत्र जाहति for जाहाति। जाहेति. ८. जञ्झतीति $Dc_3$ ९. न्मन्यन्ते $Dc_3$.

न दीर्घ इति केचित्। जेहाति। जेहेति। जाहीतः। जाहितः। 'जपजभदहदश—' इति नलोपिनो ग्रहणाद् यङ्लुकि नलोपः। दंदशीति। लोपो वेति केचित्। दंदंशीति। दंदष्टि। दंदंष्टि। स्वपिस्यमीत्युत्वपक्षे सोषोप्ति। अन्यत्र सास्वप्ति।

## न धातुलोप आर्धधातुके ॥१।१।४॥

धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्ते गुणवृद्धी

---

स्वमते तु ककारो 'ह्रश्च व्रीहिकालयोः' इत्यत्र हाङ्हाकोः सामान्यग्रहणार्थः। जाहीत इति। 'ई हल्यघोः' इति ईः। जाहित इति। 'जहातेश्च' इति इत्। दंदशीतीति। दंश दशने। 'जपजभ—' इति नुक्। न्लोप इति। तथोक्तं मुग्धबोधे। 'दंशो न्लोपो वा' इति। दंदष्टीति। इडभावे 'व्रश्च—' इति षः। स्वपिस्यमीति। उत्वपक्षे इति। धातुग्रहणोक्तं केषांचिन्मते विकल्पेनेति उत्वपक्षे इत्युक्तम्। सोषोप्तीति। ञिष्वप् शये। संप्रसारणम्। द्वित्वगुणौ। सास्वप्तीति। 'दीर्घोकितः' इति दीर्घः।

न धातुलोप इति। सर्वस्य धातोर्लोपे कृते यत्र गुणवृद्धी स्तः तदार्धधातुकं न संभवत्येव। तत्र किं निषेधेन। तस्मान्निषेधसामर्थ्याद् धात्वेकदेशो धातुशब्दो वर्तते इति मत्वाह—धात्वंशेति। धात्वंशस्य लोपो यस्तस्य निमित्तं तदार्धधातुकं तस्मिन् परे तन्निमित्ते आर्धधातुकनिमित्ते गुणवृद्धी

---

१. $D_1$ has जहेति before it. २. Dropped $D_4$. ३. Dropped $D_4$. ४. न्लो° $D_3$, $D_4$. ५. न्लोपः $B_2$, $D_3$, $D_4$. ६. दंदंशीति $B_2$, $D_4$. ७. After it—सोषोपीति $B_2$. ८. After it—सास्वपीति $B_2$. ९. विकल्पोनेति $Dc_1$.

इको न स्तः ॥ बेभिदिता । मरीमृजिता ॥ आर्धधातुके किम् । बेभेत्ति । मरीमार्ष्टि ।

**रुग्रिकौ च लुकि ॥७।४।९१॥**

ऋदुपधस्य च धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युः यङ्लुकि ॥ वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति ।

---

न स्त इत्यर्थः । **बेभिदितेति** । भिदिर् विदारणे । यङ् । द्वित्वम् । गुणोभ्या-सस्य । लुट् । तासिः । तासिं निमित्तीकृत्य 'यस्य हलः' इति यकारस्य लोपः । तमेव निमित्तीकृत्य प्राप्तो गुणो निषिध्यते । **मरीमृजितेति** । मृजूष् शुद्धौ । 'रीगृदुपधस्य' इति रीक् । 'मृजेर्वृद्धिः' इति प्राप्ता वृद्धिर्न । **आर्धधातुके किमित्यादि** । ननु बेभेत्ति मरीमार्ष्टीत्येते ह्यचङ्गविकले प्रत्युदाहरणे । तथा हि यथार्धधातुकनिमित्ते गुणवृद्धी न एवं लोपोपि नेति । मैवम् । सत्यार्धधातुकग्रहे अन्यपदार्थत्वेन तस्य ग्रहणात् धातुलोप इति बहुव्रीहिः स्यात् । असति तु ह्यार्धधातुकग्रहणे अविशेषितत्वात् लोपस्य लोपमात्रे प्रतिषेधः स्यात् एव । **काशिका-कारैस्तु न्यासकारमतेनैतत्** प्रत्युदाहृतम् । **पदमञ्जरीकारमते तु** असत्यप्यार्धधातुकग्रहणे धातोर्लोपो यस्मिन्निति बहुव्रीहिः । तन्मते तु तुर्वी मूर्च्छा । तोतोर्ति मोमोर्ति 'राल्लोपः' इति च्छ्वोर्लोपस्य गुणस्य चैकनिमित्तत्वान्निषेधः स्यादिति प्रत्युदाहरणे । धातुग्रहणं किम् । लूञ् । लविता । प्रागेव धातुसंज्ञाया भवन्ननुबन्धलोपो धातुलोपो न । इक इति किम् । अभाजि । रागः ।

**रुग्रिकौ** । रुगागमे उकार उच्चारणार्थः । **वर्वृतीतीत्यादि** । वृतु वर्तने । 'यङो वा' इतीट् वा । मर्मृज्यते मर्मृज्यमाना स इति चोपसंख्यानम् ।

---

१. $D_1$ drops it. २. $D_1$ drops it. ३. Dropped $B_2$. ४. यस्य $Dc_3$.

ऋतश्च ॥७।४।९२॥

ऋदन्तस्य[1] धातोरपि तथा ॥ चर्करीति[2] । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्ति । चरीकर्ति ॥ ऋतश्चेति तपरत्वादॄदन्तस्य न । कॄ[4] । चाकर्ति । चाकरीति[5] । गुणवद् वृद्धेरपि निषेधो ज्ञेयः । मर्मृजीति । ग्रह । जर्गृहीति[6] । ढत्वधत्व-

ऋतः । तथेति । अभ्यासस्य रुक्रिक्रीगागमा यङ्लुकि स्युरित्यर्थः । चर्करीतीत्यादि । डुकृञ् करणे । 'ऋतश्च' इति तपरत्वादॄदन्तस्य नेति । 'ऋतश्च' इत्यत्र हि द्वयं प्रकृतम् । अङ्गमभ्यासश्च । ऋत इति विशेषणं चोपात्तम् । तथापि तदङ्गस्यैव विशेषणम् । कुतः । तपरत्वसामर्थ्यात् । अभ्यासस्य हि सर्वत्र ह्रस्वो भवति । अत एव ऋदन्तस्य धातोरिति व्याख्यातवान् । तस्मात् तपरकरणादॄदन्तस्य नेत्यभिप्रायः । तथोक्तं वार्तिककृता ।

'किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः' ॥ इति ।

यङ्लुगन्तं किरतिं पचतीत्यत्र यो नयेत् पचतिना तुल्यरूपाणि यः प्रापयेत् पचतिवत् रुगादिकमकृत्वेत्यर्थः । तमहं प्राप्तिज्ञं रुगादीनां प्राप्तिज्ञं तं मन्ये । तेन साधुशब्दराशेः संग्रहः प्रारब्ध इति वार्तिकार्थः । कॄ इति । कॄ विक्षेपे । चाकर्तीति । द्वित्वम् । 'उरत्' । 'दीर्घोकितः' । गुणवद् वृद्धेरिति । एतच्च यङ्लुकश्छान्दसत्वात् छन्दसि च सर्वे विधयो व्यभिचरन्तीति हेतोर्लभ्यते । मर्मृजीतीति । मृजूष् शुद्धौ । जाग्रहीतीति । ग्रह उपादाने । द्वित्वम् । 'दीर्घोकितः' । चुत्वम् । ढत्वेत्यादि । ग्रह अस्माद्यङ्लुकि द्वित्वादौ कृते ईडभावे जग्रह् ति

१. ऋदन्तधातो° $D_2$; ऋदन्ताद्धातो° C. २. This and the next two forms dropped $D_4$. ३. This and the next form dropped $D_3$. ४. Dropped $D_3$. ५. $D_1$, $D_3$ drop it; after it $D_2$, $D_4$, $B_2$ have —चाकीर्तः । चाकिरति. ६. जाग्रहीति $D_2$.

ष्टुत्वढ[1]लोपाः । जर्गृढि[2] । केचिद्यङ्निमित्तं संप्रसारणं नेच्छन्ति । जाग्रहीति । ढत्वधत्वष्टुत्वढलोपदीर्घाः [4]जाग्राढि । बलीयस्त्वादादौ सं[5]प्रसारणे कृते रुग्रिगादि । जर्गृढः । जरिगृढः । जरीगृढः । [6]जर्गृहाति । गृ[7]धु । [8]जर्गृधीति । जर्गर्धि । [9]अजर्गृधीत् । गुणः । हल्ङ्यादिलोपः ।

---

इति स्थिते ' हो ढः ' इति ढत्वम् । ' झषस्तथोः—' इति धत्वम् । ' ष्टुना ष्टुः ' इति ष्टुत्वम् । ' ढो ढे लोपः ' इति ढलोपः । ' ढ्रलोपे—' इति दीर्घ इत्यर्थः । बलीयस्त्वादित्यादि । ग्रह तस् इति स्थिते ' सार्वधातुकमपित् ' इति ङित्त्वात् ' ग्रहिज्या—' इति संप्रसारणं प्राप्नोति । ' सन्यङोः ' इति द्वित्वं च । तत्र संप्रसारणं तदाश्रयं च कार्यं बलवदित्यादौ संप्रसारणमित्यर्थः । ततो द्वित्वम् । ' उरत् ' । चुत्वम् । रुग्रिगादीति । जगृह इति स्थिते ऋदुपधत्वाद्रुग्रिग्रीकः । ततोढत्वधत्वष्टुत्वढलोपाः । जर्गृहतीति । ' अदभ्यस्तात् ' । शेषं पूर्ववत् ढत्वादिवर्जम् । गृधु इति । गृधु अभिकाङ्क्षायाम् । अजर्गृधीदिति । लङ् । ईट् । गुण इत्यादि । ईडभावे अजर्गृध् त् इति स्थिते ' पुगन्त—' इति गुणः । रपरः । ' हल्ङ्याब्—' इति [10]लोपः ।

---

१. °ढलोपदीर्घाः $D_1$, P. २. जाग्राढि D, P, जर्गर्ढि $B_2$, $N_1$, $D_3$, $D_4$; $D_1$ drops from केचित्...जाग्राढि. ३. जरिगृहाति $D_3$. after this $D_2$ has —षढोः कः सि इति कस्यासिद्धत्वात् भष्भावः । जर्घर्क्षि । ४. Before it—ढत्वधत्वष्टुत्वढलोपदीर्घाः $B_2$. ५. बलीयस्त्वादादौ संप्रसारणं ततो द्वित्वं रुग् रिगादि P, $N_1$; संप्रसारणस्य बलीयस्त्वादादौ संप्रसारणे कृते ततो द्वित्वम् । रुक्रिगादयः $B_2$. ६. जर्गृहीति । षढोः कः सीत्यस्यासिद्धत्वात् भष्भावः । जर्घक्षि । लङ् स्तिप्सिपोः । अजर्घर्ट् । $B_2$, $D_4$. ७. गृधु अभिकाङ्क्षायाम् $B_2$. ८. जर्गृधाति $N_1$. ९. अजर्गृधात् $N_1$ ; अजर्गर्धीत् । $D_3$. १०. सलोपः $D_{3}$.

भष्भावः । जश्त्वचर्त्वे । अजर्घत् । अजगृद्धाम् । अजगृधुः । दध्श्वेति वा रुत्वम् । रो रि । ढ्रलोपे दीर्घः । अजर्घाः । अजर्घत् । अजगृद्धम् । इत्यादिप्रयोगानुसारात् ज्ञेयम् ।

इति यङ्लुक्प्रक्रिया ॥

'एकाचो बशः—' इति भष्भावः । 'झलां जशोन्ते' इति जश्त्वम् । 'वावसाने' । चर्त्वमित्यर्थः । दध्श्वेत्यादि । सिपि जर्घत् स् इति स्थिते रुत्वम् । 'रो रि' इति पूर्वरलोपः । दीर्घः । विसर्गः । अजर्घत् इति । रुत्वाभावे ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं यङन्ता ॥

इति यङ्लुगन्तप्रक्रिया ॥

१. भष् C. २. अजर्घत् $N_1$, $D_4$. ३. ढ्रलोपे पूर्वस्य दीर्घो णः C. ४. अजर्घत् $B_2$, $D_4$, $N_1$; dropped $D_3$. ५. अजर्घृद्धम् $N_1$; dropped $D_3$. ६. प्रयोगवशात् $D_3$. ७. यङ्लुकि प्रक्रिया $D_3$, $D_4$.

# अथ सुब्धातुप्रक्रिया ।

**सुप आत्मनः क्यच् ॥३।१।८॥**

एषितुरात्मसंबन्धिनः इषिकर्मणः सुबन्तादिच्छायां क्यच्प्रत्ययो वा स्यात् ॥ सुपो धात्विति सुपो लुक् ।

**क्यचि च ॥७।४।३३॥**

क्यचि च परे अवर्णस्य ई आदेशः स्यात् ॥ धातुत्वाल्लडादयः । आत्मनः पुत्रमिच्छति पुत्रीयति ॥

---

अथ सुब्धातुप्रक्रिया । **सुपः** । एषितुरित्यादि । आत्मशब्दः परप्रतियोगिवचनः । एषितुरेवात्मसंबन्धितया इषिकर्मभूतं यत् सुबन्तं तस्मादिच्छायामर्थे क्यच्प्रत्ययो भवतीत्यर्थः । सुप्ग्रहणं किम् । वाक्यान्मा भूत् । महान्तं पुत्रमिच्छति । न धातुप्रातिपदिकव्यावृत्त्यर्थः । धातोर्हि सन् बाधकः । प्रातिपदिकात् सुबन्ताच्च जाते विशेषाभावाच्च । कथं च सुब्ग्रहणाद्वाक्यनिवृत्तिः । उच्यते । यस्मात् सुब् विहितस्तस्माद्भवति । न च सुब् वाक्याद्विहितः । अपि तु तदवयवात् । आत्मनः किम् । राज्ञः पुत्रमिच्छति । क्यचः ककारः 'नः क्ये' इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थः । अन्यथैकेद्ग्रहणे अनेकेतौ क्यङ्क्यषौ न गृह्येयाताम् ।

**क्यचि** । 'अकृत्सार्वधातुकयोः' इति दीर्घत्वस्यापवादः । **धातुत्वादिति** । 'सनाद्यन्ताः—' इति । **पुत्रीयतीति** । 'वर्तमाने लट्' । शप् । तिबादि । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयीत् । पुत्रीयामास । पुत्रीयिता । पुत्रीय्यात् । पुत्रीयिष्यति । अपुत्रीयिष्यत् ।

---

१. $D_1$ drops it. २. धातुप्रातिपदिकयोरिति $D_3$. ३. ईदादेशः $N_1$ ; ई स्यात् $D_3$. ४. °योगित्व° $Dc_3$. ५. वा $Dc_3$. ६. °द्बाधकानिवृत्तिः $Dc_3$.

वान्तो यि प्रत्यये। गव्यति नाव्यति। त्वद्यति। मद्यति। युष्मद्यति। अस्मद्यति। हलि च। गीर्यति। दीव्यति। अदस्यति। रीङ् ऋतः। कर्त्रीयति। क्यच्व्योश्च।[2] गार्गीयति।

---

एवं सर्वत्र सुब्धातुषु रूपाणि ज्ञेयानि। विशेषो वक्ष्यते।

**गव्यतीति**। गामात्मन इच्छतीति। **नाव्यतीति** नावमिच्छति। **त्वद्यति**। **मद्यतीति**। त्वामिच्छति मामिच्छति। 'प्रत्ययोत्तरपदयोश्च' इतित्वन्मदादेशौ। **युष्मद्यति**। **अस्मद्यतीति**। युवां युष्मान् वेच्छति। आवामस्मान् वेच्छति। **हलि चेति**। गिरमिच्छति दिवमिच्छतीत्यत्रार्थे गिर् य दिव् य इति स्थिते 'हलि च' इति सूत्रेण दीर्घ इत्यर्थः। ननु च तत्र 'धातोः' इत्यनुवर्तते। तत् कथमत्र दीर्घः। उच्यते। गॄ निगरणे। अस्मात् क्विप्। क्विबन्तस्य च धातुत्वापरित्यागाद्गिर्शब्दो धातुरेव। दिवेरुणादिक्विपि कृते दिव्शब्दोपि धातुरेव। एवं चेत् कथं **काशिकायां** वृत्तौ 'हलि च' इत्यत्रोक्तं धातोरित्येव दिवमिच्छतीति। एषोप्यदोषः। उणादीनामव्युत्पत्तिपक्षमाश्रित्योक्तं वृत्तिकृतेति कृत्वा। आचार्यवर्यैस्तु व्युत्पत्तिपक्षमाश्रित्योक्तमिति ज्ञेयम्। **अदस्यतीति**। अमुमात्मन इच्छति। सान्तत्वात् 'अदसोसेः' इति मुभावो न। **कर्त्रीयति**। आत्मनः कर्तारमिच्छति। **गार्गीयति**। गर्गस्य गोत्रापत्यं गार्ग्यः। 'गर्गादिभ्यो यञ्'। ततः आत्मनो गार्ग्यमिच्छतीत्यर्थे क्यच्। 'क्यच्व्योश्च' इत्यपत्ययकारलोपः। 'क्यचि च' इतीकारः।

---

१. 'हलि च' इति दीर्घः। D3. २. After it—इति तद्धितलोपः $N_1$.

**नः क्ये ॥१।४।१५॥**

क्यचि क्यङि क्यषि परे नान्तमेव पदसंज्ञं स्यात् । नान्यत् । नलोपः । राजीयति । नान्तमेवेति नियमान्नेह । वाच्यति । अकृतसार्वधातुकेति दीर्घः । कवीयति ।

**क्यस्य विभाषा ॥६।४।५०॥**

हलः परेषां क्यच् क्यङ् क्यषां लोपो वा स्यात् आर्धधातुके ॥ समिधिता । समिध्यिता । मान्ताव्ययेभ्यः क्यच् नेष्टः । किमिच्छति । उच्चैरिच्छति ।

---

**नः क्ये** । ननु च सुबन्तादेव क्यजादयो विधीयन्ते ततश्च प्रत्ययलक्षणेन सुबन्तं पदमित्येव सिद्धम् । सत्यम् । किं तु नियमार्थम् । सिद्धे सत्यारम्भो नियमार्थः नान्तमेवेति । ननु नान्तं क्य एवेति विपरीतनियमः किं न स्यात् । उच्यते । 'न ङिसम्बुद्ध्योः' इति निषेधात् । विपरीतनियमे हि ङिसम्बुद्ध्योः पदसंज्ञाया अभावादेव नलोपो न स्यात् तत् किं निषेधेनेत्येतत् सर्वं मनसि कृत्वाह-**नान्तमेव पदसंज्ञं स्यादिति** । **न्लोप इति** । 'नलोपः प्रातिपदिकान्तस्य' इति । **राजीयतीति** । राजानमिच्छति । 'क्यचि च' इतीकारः । **वाच्यति** । वाचमिच्छति । अपदत्वान्न कुत्वम् । **कवीयतीति** । कविमिच्छति ।

**क्यस्य** । **समिधितेति** । समिधमात्मन इच्छति । **मान्ताव्ययेति** । मान्ताश्चाव्ययानि च तेभ्यः क्यच् नेष्ट इत्यर्थः ।

---

१. च परे D3. २. °धातुके परे । कवीयति D2 ; °कयोर्दीर्घः । D3. ३. यस्य लोपो D3.

अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥ ७।४।३४॥

अशनायादयः क्रमात् बुभुक्षाद्यर्थेषु[1] निपात्यन्ते क्यचि ॥ अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति ।

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ७।१।५१॥

एषां क्यचि परे सुगागमः स्यादात्मप्रीतौ ॥ अश्ववृषयोर्मैथुनेच्छायामिष्यते । अश्वस्यति वडवा । वृषस्यति गौः । क्षीरलवणयोर्लालसायाम् । क्षीरस्यति बालः । लवणस्यति उष्ट्रः । सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुग्वागम[2] इत्यपरे[3] । आदेशप्रत्ययेतरत्वान्न षः । दधिस्यति । दध्यस्यति ।[4]

---

अश । भोक्तुमिच्छा बुभुक्षा । पातुमिच्छा पिपासा । गर्धनं गर्धः । अभिकाङ्क्षेत्यर्थः । अशनीयतीति । अत्राशनेच्छामात्रं न बुभुक्षा । ' क्यचि च ' इतीत्वम् । उदकीयतीति धनीयतीति ज्ञेयम् ।

अश्व । आत्मप्रीताविति । विषयसप्तमीयम् । अश्वस्यतीति । अश्वमात्मन इच्छति । क्यच् । असुकि अतो गुणे पररूपम् । वृषस्यतीति । वृषमात्मन इच्छति । लालसायामिति । अभिलाषातिरेको लालसा । मैथुनेच्छायां किम् । अश्वीयति । वृषीयति । लालसायां किम् । क्षीरीयति । लवणीयतीति । सर्वेति । तथोक्तं मुग्धबोधे । ' धनोदकाशनवृषाश्वलेर्गृहपानान्न जाभाथ ङा ङनङ्ङ । सन् सनसनौ ' क्ये न षः ' इति । दधिस्यतीति । दध्यात्मन इच्छतीत्यभिलाषातिरेकेण सुक् । दध्यस्यतीति असुक् । यणादेशः ।

---

१. बुभुक्षाद्यर्थे $D_1$. २. सुगागमः असुग्वा $N_1$; सुगसुगागमौ $D_1$; नासुगसुग्वागमौ P. ३. इष्यते for इत्यपरे $D_3$. ४. After it—दधीयति $B_2$, $D_4$; दध्यस्यति dropped $D_3$.

काम्यच्च ॥३।१।९॥

इषिकर्मणः सुबन्तादात्मेच्छायां काम्यच् प्रत्ययो वा स्यात् । काम्यचोधातुविहितत्वेनार्धधातुकत्वाभावादेव गुणाप्राप्तेः कित्त्वप्रयोजनाभावात् ककारस्य नेत्वम् । पुत्रकाम्यति ।

सोपदादौ । यशस्काम्यति । इणः षः । सर्पिष्काम्यति । किंकाम्यति । अव्ययत्वान्न सः । स्वः काम्यति ।

उपमानादाचारे ॥३।१।१०॥

उपमानात् कर्मणः सुबन्तादाचारेर्थे क्यच् स्याद्वा ॥ आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षैवोपमानस्य कर्मता । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् । अधिकरणाच्च ॥* प्रासादीयति कुट्याम् ।

---

**काम्यच्च** । अथ काम्यचः ककारस्येत्संज्ञा कस्मान्न स्यादित्याशङ्क्याह- **काम्यच्च** इति । इह शब्दस्योपदेशः कार्यार्थो वा भवति श्रवणार्थो वा । अत्र तु कार्याभावात् श्रवणमेव नेत्संज्ञेत्यभिप्रायः । **पुत्रकाम्यतीति** । आत्मनः पुत्रमिच्छति ।

**यशस्काम्यतीति** । ‘ सोपदादौ ’ इति सः । **किंकाम्यतीति** । मान्ताव्ययेभ्योपि भवतीति प्रदर्शनार्थम् ।

**उपमानात्** । उपमीयतेनेनेत्युपमानम् । आचरणमाचारः । भावे घञ् । आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैवोपमानस्य कर्मता । **पुत्रीयतीति** । ‘ क्यचि च ’ इतीत्वम् । **विष्णूयतीति** । विष्णुमिवाचरतीति । ‘ अकृत्सार्वधातुकयोः ’ इति दीर्घः । **प्रासादीयतीति** । प्रासाद इवाचरति ।

---

१. प्रत्ययः स्याद्वा $D_1$; स्याद्वा (प्रत्ययः dropped) $D_3$. २. षः $D_3$. ३. क्यच्प्रत्ययः $D_1$. ४. स्यात् स्वार्थे $D_2$. ५. $D_2$ drops from आचार …to कर्मता ।

**कर्तुः क्यङ् सलोपश्च ॥३।१।११॥**

उपमानात् कर्तुः सुप आचारेऽर्थे क्यङ् स्यात् सान्ते सलोपश्च । अकृत्[1]सार्वधातुकेति दीर्घः । कृष्ण इवाचरतीति कृष्णायते । राजायते । क्यङ्मानिनोश्चेति पुंवत् । कुमारायते वृद्धा ।

ओजसोप्सरसो नित्यं पयसस्तु विभाषया ।[2] सलोपः । [3]ओजायते । अप्सरायते । पयायते । पयस्यते ।[4] सुपूर्वस्य मनसो नित्यम् । सुमनायते ॥ आचारे गल्भह्रोडक्लीबेभ्यः क्विब्वा ॥*

---

कर्तुः । ननु चेदेकमेव वाक्यम् । तत्र चेनेत्थं समुच्चीयते क्यङ् सलोपश्चेति । तेनेदमुक्तं स्यात् । क्यङ्सलोपौ स्त इति । तथा च युगपद्विधानात् सलोपाभावे क्यङा न भवितव्यम् कृष्णायत इत्यादौ । पयायत इत्यादावेव भवितव्यम् । युगपद्विधाने हि नान्यतराभावे कार्यं स्यात् । यथा 'स्थाघ्वोरिच्च' इतीति शङ्कानिराकरणार्थमाह- **क्यङ् स्यात् सान्ते सलोपश्चेति** । अयमभिसंधिः । चकारोऽत्रान्वाचये न समुच्चये । तेन द्वे वाक्ये भवतः । क्यङ् स्यात् सर्वत्रेत्येकम् । सान्ते सलोपश्चेति द्वितीयम् । तेन प्राधान्येन विधीयमानः क्यङ् सलोपाभावेऽपि स्यात् । राजायत इति । 'नः क्ये' । पदत्वान्नलोपः । ततो दीर्घः । ङित्त्वादात्मनेपदम् । **कुमारायत** इति । कुमारीवाचरति । पुंवत्त्वे सति दीर्घः ।

सलोपविधौ वाग्रहणं संबध्यते । व्यवस्थितविभाषा च सेत्यभिप्रेत्याह—**ओजस** इति । सलोपविधौ च स्थानषष्ठी संबध्यते । विभक्तिविपरिणामात् । तेन 'अलोन्त्यस्य' इत्यन्त्यस्यैव स्यात् । अत एतत् सिध्यति । अप्सरायत इत्यादि । अप्सरस इवाचरति ।

---

१. °सार्वेति दीर्घः $D_1$; °सार्वधातुके दीर्घः $D_2$ °कयोर्दीर्घः $D_3$. २. P and C, $D_3$ have after it—मनसस्तु सुपूर्वस्य नित्यं लोपो विधीयते ॥ इति ३. ओजायते दुर्बलः । $D_3$. ४. तक्रम् after it in P ; नीरम् after it in $N_1$.

क्विपः सर्वस्य लोपः । गल्भादेः क्वावपि तङानौ ॥ गल्भायते । गल्भते । इत्यादि ॥ सर्वप्रातिपदिकेभ्यः क्विब् वाचार इत्येके ॥*
कृष्णाति । स्वति । स्वामास । स्वांचकार ।

---

क्विपः सर्वस्य लोप इति । ककारो 'लशक्वतद्धित' इतीत्संज्ञः । इकारः 'उपदेशे—' इति । पकारो 'हलन्त्यम्' इति । 'तस्य लोपः' । 'वेरपृक्तस्य' इति वलोपः । अथ किमर्थं ककारपकारौ क्विप्यासज्येते यतः ककारस्य गुणनिषेधः कार्यम् । न चेह गुणः प्राप्नोति । अधातुविहितत्वेनार्धधातुकत्वाभावात् । पकारस्यानुदात्तत्वं कार्यम् । तच्च क्विपो न संभवति । अनच्कत्वात् सर्वलोपित्वाच्च । न च वेरिति सामान्यग्रहणार्थः ककारः । तदविघातार्थः पकार इति वाच्यम् । अन्यतरेणैव सामान्यग्रहणस्य सिद्धत्वात् । अन्यथा विड्विचोरपि द्वितीयानुबन्धः कर्तव्यः स्यात् । सत्यम् । क्वि इत्येव पठितव्यमित्येके । पकारानुबन्धकरणसामर्थ्यात् प्रकृतेरेव स्वर इत्यपरे । ननु च क्विप् सर्वप्रातिपदिकेभ्यः इत्येव गल्भादेः सिद्धः किमर्थं पृथगुच्यत इत्याशङ्क्याह- गल्भादेरिति । अयं भावः । आत्मनेपदार्थानुदात्तस्यानुषञ्जनार्थं पुनर्वचनम् । तथोक्तं[2] महाभाष्ये । 'कर्त्तव्यं च । किं प्रयोजनम् । आत्मनेपदार्थमनुबन्धानासङ्क्ष्यामीति । 'गल्भ क्लीब होढ' इति । इत्यादीति । आदिशब्दात् । क्लीबायते । क्लीबते । होढायते । होढते । सर्वप्रातिपदिकेभ्य इति । तथोक्तं महाभाष्ये । 'अपर आह । सर्वप्रातिपदिकेभ्य आचारे क्विप् वक्तव्यः' इति । कृष्णतीति । कृष्ण इवाचरति । क्विपो लोपः । कर्तरि लट् । तिप् । शप् । प्रातिपदिकादेवायं क्विप् विधीयते । तेन पदत्वाभावात् 'अतो गुणे' इति पररूपं स्यात् । एतच्च सर्वेभ्य इति वक्तव्ये सर्वप्रातिपदिकेभ्य इति वचनाल्लभ्यते । स्वामासेति । प्रत्ययान्तत्वादाम् ।

---

१. Dropped C, $B_2$. २. तथा च for तथोक्तं $Dc_3$.

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥३।१।१२॥

भृशादिभ्यश्च्व्यर्थे [1]भवत्यर्थे क्यङ् स्यात् न तु च्व्यन्तेभ्यः । [2]अन्तहल्लोपश्च ॥ अभृशो भृशो भवति भृशायते । उन्मनायते । शश्वत् । शश्वायते । [3]क्विबप्यत्रेति केचित् । भृशाति । पक्षे च्विः । भृशीभवति ।

लोहितादिडाज्भ्यः क्यष् ॥३।१।१३॥

लोहितादेर्डाजन्ताच्चोक्तेर्थे क्यष् स्यात् । पक्षे च्विः । क्विब् [4]वेत्येके ।

---

भृशादि । च्व्यर्थः अभूततद्भावः । अच्वेरिति प्रत्येकमभिसंबध्यत इत्याह न तु च्व्यन्तेभ्य इति बहुवचनेन । किमर्थं पुनरिदमुच्यते । यावता भवतियोगे च्विर्विधीयते तेनोक्तत्वात् च्व्यन्तेभ्यः क्यङ् न स्यात् उक्तार्थानामप्रयोग इति कृत्वा । तत्सदृशप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः । सादृश्यं चार्थद्वारकम् । अभूततद्भावार्थेभ्यो भृशादिभ्यः प्रत्ययः स्यादिति । अत एवोक्तं च्व्यर्थ इति । उन्मनायत इति । अनुन्मना उन्मना भवति । सलोपः । 'अकृत्सार्वधातुक—' इति दीर्घः । क्विबप्यत्रेति । तथा च बोपदेवपण्डितैर्मुग्धबोधे उक्तम् । '[5]भृशादिभ्यश्च्व्यर्थे ङ्यक्वी वा स्तः' इति । भृश । शीघ्र । चपल । पण्डित । उत्सुक । उन्मनस् । अभिमनस् । सुमनस् । दुर्मनस् । रहस् । रोहत् । रेहत् । संश्वरत् । प्रमत् । वहत् । शश्वत् । तृषत् । शुचिवर्चस् । ओजस् । अरजस् ।[6]

लोहितादि । उक्तेर्थे च्व्यर्थे भवत्यर्थे लोहितादिभ्यः डाजन्ताच्च क्यष् । लोहितीस्यादिति । अभूततद्भावे इति च्विः । 'अस्य च्वौ'

---

१. भवत्यर्थे dropped $D_3$. २. अन्त्य° $D_4$. ३. क्विब् वाप्यत्रेति $D_2$; क्विब् वात्रेति C. ४. चेत्येके C. ५. भृशादेश्च्व्यर्थे मुग्ध. ६. After it—सुरजस् $Dc_3$.

## वा क्यषः ॥१।३।९०॥

क्यषन्तात् परस्मैपदं वा स्यात् ॥ लोहितायते । लोहितायति । लोहितति । लोहितीस्यात् । चर्मायति । चर्मायते । चर्मति । चर्मीस्यात् । पटपटायति । पटपटायते । पटपटाति । पटपटास्यात् ।

---

इतीत्वम् । एतच्च क्यष्विधानं लोहितशब्दात् डाजन्ताच्चेति ज्ञातव्यम् । ननु च लोहितादिगणे नीलमधुपेनरहितमंदेति पठ्यन्ते तेभ्योपि क्यषा भाव्यम् । न । तानि भृशादिषु द्रष्टव्यानि । इह तु प्रमादपाठस्तेषाम् । एवं वेदादिशब्दोनर्थकः । मैवम् । अपठितेभ्यश्चर्मादिभ्यः क्यष् भवत्येव । अत एव चर्मायत इत्येवोदाहृतं न नीलादीन्युदाहृतानि । चर्मायत इति । 'नः क्ये' इति पदत्वान्नलोपः । ततः 'अकृत्सार्वधातुक—' इति दीर्घः । आकृतिगणोयम् । तथा च 'नः क्ये' इति सामान्यग्रहणार्थं क्यषि ककारोनुबध्यते । न हि पठितानां मध्ये नकारान्तः शब्दोस्ति । चर्मतीत्येतत्त्वन्यमतेनोक्तम् । स्वमते त्वेतदनभिमतमेव । क्केराचार एवेष्टत्वात् । क्कौ नलोपस्यानिष्टत्वाच्च । पटपटायति पटपटायत इति । डाजन्तस्य उदाहरणम् । पटत्शब्दात् 'अव्यक्तानुकरणाद्—' इति डाचि विवक्षिते डाचि बहुलं द्वे भवत इति द्वित्वम् । ततो डाचि टिलोपः । तत्र कृते पटत्शब्दे योत्शब्दः तदवयवस्य तकारस्य नित्यमाम्रेडित इति पररूपं पकारः । 'वा क्यषः' इत्यात्मनेपदं वा । ननु च क्यष्योगे डाच् नास्ति कृभ्वस्तियोगे एव विहितत्वात् । सत्यम् । अस्मादेव ज्ञापकात् क्यष्योगे भवति । पटपटास्यादिति च्वेरुदाहरणम् । अव्ययस्य ईत्वं दीर्घो नेति केचिदितीत्वाभावः ।

---

१. स्याद्वा $D_2$, $D_3$. २. लोहितायति । लोहितायते $N_1$, $D_3$. ३. $D_2$, $N_1$ drop it. ४. So $N_1$. ५. पटपटास्यादिति केचित् after this in $D_2$. ६. मन्दे° $Dc_3$. ७. न क्यषः $Dc_3$. ८. क्यषि चकारोनुबध्यते $Dc_3$. ९. क्यषा $Dc_3$.

**कष्टाय क्रमणे ॥३।१।१४॥**

[1]चतुर्थ्यन्तात् कष्टशब्दाद[2]नार्जवेऽर्थे क्यङ् स्यात् ॥ कष्टाय कर्मणे क्रामति कष्टायते । छद्मायते इत्येके ।

सत्र[3]कक्षकष्ट[4]गहनेभ्यः पापचिकीर्षायाम् ॥* स[5]त्रायते । इत्यादि ।[6]

**कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥३।१।१५॥**

रोमन्थतपोभ्यां कर्मभ्यां क्यङ् स्यात् क्रमेण वर्तिचरोरर्थयोः ॥ रोमन्थं वर्तयति रोमन्थायते गौः ।

---

कष्टाय । कष्टायेति निर्देशात् चतुर्थीसमर्थात् प्रत्ययो विज्ञायत इत्याह- चतुर्थ्यन्तादिति । क्रमशब्दोस्ति पादविहरणे । अस्त्यनार्जवे । तत्र कस्येह ग्रहणमिति शङ्कानिरासार्थमनार्जवे इति व्याकरोति । जिह्मं पापमनार्जवमिति पर्यायाः । एतच्च 'धातोः कर्मणः—' इति सूत्राद्वाशब्दानुवृत्तेर्लभ्यते । व्यवस्थितविभाषात्वात् । कष्टाय कर्मण इति ता[7]दर्थ्यचतुर्थी । अनार्जवे किम् । अजः कष्टं क्रामति । पादविहरणं करोतीत्यर्थः । छद्मायत इति । तथोक्तं मुग्धबोधे । छद्मायत इति ।

सत्रेत्यादि । अ[8]स्मिन्न्यासान्तरे समर्थविभक्तिर्नास्ति । सुबधिकारात् संबद्धयोग्या विभक्तिरध्याहार्या । सत्रायत इति । सत्रं कर्तुमिच्छति । पापं कर्तुमिच्छतीत्यर्थः ।

कर्मणो । वर्तिचरोरिति । वर्तनं वर्तिः । ण्यन्तात् क्तिन् । ननु न भाव्यं क्तिना युचा बाधितत्वात् । एतस्मादेव ज्ञापकात् क्तिन्नपि भवतीत्यदोषः । रोमन्थायत इति । अभ्यवहृतं पुनराकृष्य चर्वतीत्यर्थः ।

---

१. Before this—क्रमणं प्रवर्तनं न पादविहरणम् $N_1$; before this—क्यङनुवर्तते न क्यष् । क्रमणं प्रवर्तनं न पादविहरणम् C. २. °दनार्जवेत्यर्थे $D_2$. ३. कच्छ $D_3$. ४. कृच्छ्रगहने $D_3$, $D_4$. ५. Before it—एभ्यो धर्मवाञ्छायां क्यप् स्यात् । पापं कर्तुमिच्छति $D_2$. ६. After it—पापचिकीर्षायां किम् । कष्टाय तपसे क्रामति C, $N_1$. ७. तादर्थ्ये चतुर्थी $Dc_3$. ८. So $Dc_3$.

हनुचलन एव ।* तपसः परस्मैपदं च । तपश्चरति तपस्यति ।

बाष्पोष्मभ्यामुद्वमने ॥३।१।१६॥

आभ्यां क्यङ् स्यादुद्वमने ॥ बाष्पमुद्वमति बाष्पायते । उष्मायते । फेनाच्च ॥* फेनायते । धूमाच्चेति केचित् । धूमायते ।

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे॥३।१।१७॥

एभ्यः कर्मभ्यः कृञर्थे क्यङ् स्यात् ॥ शब्दं करोति शब्दायते । इत्यादि ॥ सुदिनदुर्दिननीहारेभ्यश्च ॥* सुदिनायते ।

---

हनुचलन एवेति । अभ्यवहृत्य पुनरुद्गीर्य चर्वणं हनुचलनम् । इह न । कीटो रोमन्थं वर्तयति । उद्गीर्णं बहिर्निरस्तमवगीर्णं वा पृष्ठतो निर्गतं रोमन्थाख्यं द्रव्यं वर्तयति पुटिकां करोतीत्यर्थः ।

बाष्पो । उष्मायत इति । ऊष्माणमुद्वर्तयति । 'अकृत्—' इति दीर्घः । फेनायत इति । फेनमुद्वमति । धूमादिति । तथोक्तं मुग्धबोधे । बाष्पोष्मफेनधूमादुद्वान्तौ ' इति ।

शब्दवैर । क्रियां विनात्र शब्दादेः कर्मत्वं नेति क्रियात्र करणं न साधकतममित्यभिप्रेत्याह— कृञर्थ इति । आदिशब्दात् । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । तत्करोतीति णिचि प्राप्तेस्यारम्भः । 'भृशादिभ्यश्च' इत्यतश्चकारानुवृत्तेर्णिजपि । शब्दयति । अटाट्टाशीकाकोटापोटासोटासृष्टाप्लुष्टादिभ्योपि करोत्यर्थे क्यङ् । अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । सृष्टायते । प्लुष्टायते ।

---

१. After हनुचलन एव—अभ्यवहृतं पुनराकृष्य चर्वयतीत्यर्थः । कीटो रोमन्थं वर्तयति । अत्र मा भूत् । तपसः &c. $N_1$. २. After it—अभ्यवहृतं पुनराकृष्य चर्वयतीत्यर्थः C; कीटो रोमन्थं वर्तयति $D_2$, $D_4$; नेह । कीटो रोमन्थं वर्तयति $D_3$. ३. P and $D_2$, $D_4$ drop it; C has आधूमायते इत्येके । ४. क्यङ् स्यात् कृञर्थे $D_1$. ५. करोतीति $D_3$. ६. °पृष्ठा° $Dc_3$. ७. पृष्ठायते $Dc_3$

## सुखादिभ्यः कर्तृवेदनायाम् ॥३।१।१८॥

एभ्यः कर्मभ्यः क्यङ् स्यात् वेदयितुरनुभवेऽर्थे[1] ॥ सुखं वेदयति सुखायते । दुःखायते ।[2]

## नमोवरिवश्चित्रङः क्यच् ॥३।१।१९॥

एभ्यः[3] क्यच् स्यात् क्रमेण पूजायां परिचर्यायामाश्चर्यलेखनयोः ॥ नमस्यति । वरिवस्यति । ङित्त्वात् तङ् । चित्रीयते ।

---

सुखादिभ्यः । वेदयितुरनुभवेऽर्थे इति । वेदयितुः ज्ञातुः स्वसमवेतानां सुखादीनां प्रत्यक्षोपलब्धावित्यर्थः । वेदयितुरनुभवे किम् । सुखं वेदयते प्रसाधको राज्ञः । अनुमानेन निश्चिनोतीत्यर्थः । सुख । दुःख । तृप्र । अस्र । आस्र । अलीक । करण[4] । कृपण । सोढ । प्रतीप ।

नमः । पूजायामित्यादि[5] । यद्यपि करणे इति सामान्यमनुवर्तते तथाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते पूजादि विनापि वचनम् । नमस्यति । पूजयतीत्यर्थः । अथ नमस्यति गुरूनित्यत्र कथं द्वितीया । यतो 'नमः स्वस्ति—' इति चतुर्थी विहिता नमोयोगे । मैवम् । अप्रधानत्वान्नमःशब्दस्यात्रत्यस्य । प्रधाने हि संप्रत्यय इति प्रधानयोगे चतुर्थी । अथवोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया । वरिवस्यति । परिचरति । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । 'क्यचि च' इतीत्वम् ।

---

१. वेदनायात्वनुभवेऽर्थे $D_2$. २. After it—कर्तृवेदनायां किम् । सुखं वेदयते प्रसाधको राज्ञः । $D_3$. ३. एभ्यः क्यच् स्यात् dropped $N_1$. ४. करुण $Dc_3$. ५. मानपूजाया° $Dc_3$.

**पुच्छभाण्डचीवराण्णिङ् ॥३।१।२०॥**

एभ्यो णिङ् स्यात् कृञर्थे । पुच्छादुदसने पर्यसने वा । उत्पुच्छयते ।[1] भाण्डात् समाचयने ॥* संभाण्डयते । चीवरादर्जने परिधाने च ॥* संचीवरयते भिक्षुः ।

**मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥३।१।२१॥**

एभ्यः कृञर्थे णिच् स्यात् ॥ मुण्डयति । व्रताद् भोजनतन्निवृत्त्योः ॥* पयः शूद्रान्नं वा व्रतयति ॥ वस्त्रादाच्छादाने[2] ॥*

---

**पुच्छ** । उदसनमुत्क्षेपणम् । पर्यसनं परितः क्षेपणम् । यदोदसने प्रत्ययस्तदा तद्द्योतनायोच्छब्दः प्रयुज्यते । यदा पर्यसने तदा परिशब्दः । **उत्पुच्छयत** इति । णाविष्ठवदिति टिलोपः । **भाण्डा**दिति । समाचयनं राशीकरणम् । अर्जनमलब्धस्य लाभः । णिङो ङकार आत्मनेपदार्थः । णकारो 'णेरनिटि' इति सामान्यग्रहणार्थः ।

**मुण्ड** । यद्यपि प्रातिपदिकाद्धात्वर्थे इति गणसूत्रेणैव मुण्डादिभ्यो णिच् विहितः तत्करोतीत्यादिना च प्रपञ्चितस्तथापीह मन्दधियामनुग्रहार्थं पुनरुच्यते । **मुण्डय**तीति । मुण्डं करोतीत्यर्थः । मिश्रयति । श्लक्ष्णयति । लवणयति । **व्रता**दिति । तन्निवृत्तिर्भोजननिवृत्तिः । पयो व्रतयति । भुङ्क्ते इत्यर्थः । शूद्रान्नं व्रतयति । न भुङ्क्त इत्यर्थः ।

---

१. After it—परिपुच्छयते $D_1$, $D_2$, $D_3$, $D_4$, $N_1$. २. After it—परिधाने च $D_2$, $D_4$, $B_2$, $N_1$.

संवस्त्रयति । णाविष्ठवत् प्रातिपदिकस्य ॥ इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थ-स्फाद्यादेशाः स्युस्तद्वत् णावपीत्यर्थः । टिलोपः । हलिं कलिं गृह्णाति । अत्र णिचिपरत्वाद्वृद्धौ सत्यां टिलोपः । हलयति । महद्धलं हलिः । कलयति । चङि अग्लोपित्वाभावात् सन्वद्भावे प्राप्ते हलकलेत्यदन्तत्वनिर्देशान्न[4] । अचकलत् ।

---

संवस्त्रयतीति । समाच्छादयतीत्यर्थः । णाविष्ठवदिति । 'तसिलादिष्वाकृत्वसुचः' इतीष्ठनि पुंवद्भाव उक्तः । 'र ऋतः' इति रभावः । 'टेः' इति टिलोपः । 'विन्मतोर्लुक्' इति विन्मतोर्लोपः । स्थूलदूरेति यणादिपरलोपः । प्रियस्थिरेत्यादिना प्रियादीनां प्रस्थस्फाद्या-देशाः । एतानि कार्याणि यथेष्ठनि परतो भवन्ति तथा णावपि परतः प्रातिपदिकस्य भवन्तीति वक्तव्यमित्यर्थः । ननु च प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति गण एव पठ्यते । तत् कस्मात् पुनरिहोच्यते । तस्यैव प्रपञ्चार्थम् । अत्र णिचीति । हलि कलि अनयोर्णिचि कृते 'अत्रोञ्णिति' इति वृद्धिः प्राप्नोति इष्ठवद्भावेन टिलोपश्च । तत्र विप्रतिषेधे परं कार्यमिति परत्वादादौ वृद्धिः । तस्यां च सत्यां पश्चात् टिलोप इत्यर्थः । हलयतीति । हलिशब्दं व्याकरोति- महदिति । चङीत्यादि । हलि कलि अनयोर्णिचि चङि च सति परत्वाद्वृद्धौ कृतायामैकारे जाते पश्चाट्टिलोपः । ततश्च नाग्लोप्यङ्गं तस्मादग्लोपित्वा-भावात् 'सन्वत्' इति सन्वद्भावे प्राप्ते 'हलकल' इति सूत्रेदन्तत्व-निपातनादग्लोपित्वात् सन्वद्भावो न स्यादित्यर्थः । अचकलदिति ।

---

१. $D_1$ drops it. २. Dropped $N_1$. ३. सुब्धातुत्वात् वा सन्वद्भावे for चङि.. प्राप्ते $D_2$, $D_4$; before it—सुब्धातोरनेकाचश्च सन्वद्भावो वेति केचित् । अनेन $N_1$. ४. After it—न च $D_2$ ; °दन्तनिर्देशान्न $D_3$, $D_4$.

अजेहलत् । कृतयति । अचकृतत् । तूस्तानि वि[2]हन्ति वितूस्तयति ॥ सत्यापपाशेति णिच् । अर्थवेदसत्यानामापुग्वाच्यः ॥* [3]सत्यमाचष्टे सत्यापयति । अर्थापयति । वेदापयति । [4]पाशाद्विमोचने ॥ * विपाशयति । [5]रूपं पश्यति रूपयति । वीणयोपगायति उपवीणयति । [6]तूलैरनुकुष्णाति अनुतूलयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । अभ्यषेणयत् । अषोपदेशत्वेपि [7]स्थादिष्वभ्यासेति नियमादभ्यासव्यवायेपि षत्वम् । अभिषिषेणयिषति । लोमान्यनुमार्ष्टि अनुलोमयति । त्वचं गृह्णाति त्वचयति । वर्मणा संनह्यति संवर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति । [8]हस्तिनाति[9]क्रामति

'णिश्रि—' इति चङ् । 'चङि' इति द्वित्वम् । कृतयतीति । कृतं गृह्णाति । अचकृतादिति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । वितूस्तयतीति । जटीभूतकेशादिस्तूस्तशब्दार्थः । सत्यापयतीति । आपुग्विधिसामर्थ्यान्न टिलोपः । अर्थापयतीति । अर्थमाचष्टे । वेदापयति । वेदमाचष्टे । विपाशयतीति । पाशं विमोचयतीत्यर्थः । उपवीणयतीति । वीणया समीपे गायतीत्यर्थः । त्वचयतीति । अकारान्तस्त्वचशब्दोयम् । त्वचेति सूत्रेदन्तग्रहणात् । अवचूर्णयतीति । अदन्तेषु सत्यापयतीत्यादिषूदाहरणेष्विष्ठवद्भावाट्टिलोपः । ननु च सत्यापयतीत्यस्मिन् सूत्रे आख्यानमोचनादयोर्था अनुक्ताः कथं लभ्यन्ते । उच्यते । शब्दानामर्थाभिधानं स्वाभाविकं न वाचनिकम् । अतः शक्तिस्वाभाव्यादयमर्थः [10]स तस्येति निर्दिष्टः । हस्तिनातिक्रामति

१. Dropped $N_1$. २. विनिहन्ति $D_2$, $D_3$, $D_4$, $B_2$. ३. सत्य°—सत्यापयति after वेदापयति $D_3$. ४. पाशाद् विमोचने । संयतने च । संपाशयति । विपाशयति । $N_1$. ५. Before it—रूपादर्शने $N_1$. ६. रनुतूलयति $D_3$. ७. स्थादिष्विति $D_2$, P, $N_1$. ८. Before it—तेनातिक्रामयतीत्यर्थे णिच् $N_1$. ९. °क्रामयाति $N_1$. १०. So $Dc_3$.

अतिहस्तयति । हस्तौ निरस्यति हस्तयति इति केचित् । तत्करोति तदाचष्टे इति चुरादित्वात् सुबन्ताण्णिच् । षष्टं करोति आचष्टे वा षष्ठयति । सुब्धातुत्वात् षस्य न सः ।

---

अतिहस्तयतीति 'तेनातिक्रामति' इति णिच् । टेर्लोपः । हस्तौ निरस्यति हस्तयतीति । 'तत्करोति—' इत्यनेन सूत्रावयवेन चुरादिगणोक्तं सूत्रत्रयं लक्ष्यते । 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' । 'तत्करोति तदाचष्टे' 'तेनातिक्रामति' 'धातुरूपं च' कृर्तकरणार्थे इत्येतेषामर्थः । प्रातिपदिकाद्यथादर्शनं णिच्प्रत्ययः स्यात् क्रियाविशेषे । कूलमुल्लङ्घयति उत्कूलयतीत्यादि । तस्यैव निदर्शनार्थे द्वितीय-तृतीयसूत्रे । तदिति द्वितीयासमर्थात् प्रातिपदिकात् करोतीत्यर्थे[७] च । तथा तेनेति तृतीयासमर्थात् अतिक्रामतीत्यर्थे णिच् भवति । तीक्ष्णं करोति तीक्ष्णयति । वाक्यमाचष्टे वाक्ययति । हस्तिना अति-क्रामति अतिहस्तयतीत्यादि । 'धातुरूपं च' इत्यनेन कात्यायनोक्तमा-ख्यानादित्याशङ्कां स्मारयति । तृतीयस्यार्थः कर्तृकरणयोरर्थे च यथादर्शनं णिच् स्यात् । आलानेन बध्नाति आलानयति हस्तिनः[८] । दात्रेण लुनाति दात्रयति व्रीहीनित्यादि । सुब्धातुत्वादिति । सुब्धातुष्ठिवु-ष्वष्कतीनां सत्वनिषेध इति । अथ देवदत्तस्य दण्डं करोति दण्डयति देवदत्तमित्यादिषु वृत्तौ कथं द्वितीया । वाक्ये हि षष्ठी दृश्यते । उच्यते । वृत्तौ प्रत्ययार्थः प्रधानमप्रधानं प्रकृत्यर्थः । तत्राप्रधानं प्रधानानुयायीति प्रकृत्यर्थे दण्डादौ प्रत्ययार्थमनुयाति सति तत्संबन्धो देवदत्तोऽपि प्रत्ययार्थमनुगच्छति । तदनुगमाच्च कर्म संपद्यत इति । यत्र च संबन्धिना वृत्तिस्तत्र कर्मणोन्तर्भूतत्वात् तस्याकर्मतैव । यथा

---

१. अङ्गानिरस्यतीत्यर्थे णिच् । २. अतिहस्त° $D_4$. ३. Dropped $N_1$. ४. So $B_2$, $N_1$, $D_3$, $D_4$. ५. न सस्य षः $D_2$. ६. हस्तौ निरस्यति तथोक्तं मुग्धबोधे हस्तौ निरस्यति हस्तयति इति । $Dc_3$. ७. After it—आचष्टे इत्यर्थे च । $Dc_3$. ८. हस्तिनम् । $Dc_3$.

कविं पटुं वाचष्टे । वृद्धौ सत्यां टिलोपः । कवयति । पटयति । चङि अनग्लोपित्वात् सन्वद्भावः । अचीकवत् । अपीपटत् । आख्यानात् कृतस्तदाचष्ट इति कृल्लुक् । प्रकृतिप्रत्यापत्तिः । प्रकृतिवच्च कारकम् । कंसवधाख्यानमाचष्टे कंसं घातयति ।

---

तपः करोतीति तपस्यति । मुण्डयति छात्रमित्यादौ तु सामान्यकर्मान्तर्भूतं विशेषकर्मणा तु सकर्मकत्वम् । एवं चेत् पुत्रीयतेरपि विशेषकर्मणा सकर्मकत्वं स्यात् । पुत्रीयते छात्रमिति । सत्यम् । किं त्वाचारक्यचा बुद्धेरपहृतत्वात् सदपीच्छाक्यचः कर्म न युज्यते । तथा हि पुत्रीयति छात्रमित्यत्र पुत्रमिवाचरतीति प्रतीयते न तु पुत्रमिच्छतीति । तदुक्तं हरिणा—

'सदपीच्छाक्यचः कर्म तदाचारक्यचाहृतम्' । इति ।

**वृद्धौ सत्यां टिलोप** इति । कविपटुशब्दयोर्णिचि जाते परत्वादादौ 'अचोञ्णिति' इति वृद्धिः । तत इष्टवद्भावेन टिलोप इत्यर्थः । **कवयति । पटयतीति** । शपि गुणायादेशौ । **चङि** इति । ऐकारौकारयोष्टिलोपेन लोपादनग्लोपित्वमित्यर्थः । **अचीकवदिति** । 'सन्यतः' इतीत्वम् । 'दीर्घो लघोः' इति दीर्घः । **आख्यानादिति** । आख्यायत इत्याख्यानं कंसवधादि । तद्वाचकः शब्दोऽप्युपचारादाख्यानम् । तस्मात् कृदन्तात् 'तदाचष्टे' इत्यर्थे णिच् कृतो लुक् । **प्रकृतेः** प्रत्यापत्तिर्या प्रत्ययमुत्पादितवती तस्याः प्रकृतेः पूर्ववदविकृतेन रूपेणावस्थानम् । **प्रकृतिवच्चेति** । चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः । कार्यशब्दश्चाध्याहार्यः । ततोयमर्थः । कृतो या प्रकृतिस्तस्या यथा कार्यमडादि तथा ण्यन्ताया अपि स्यात् । किं च प्रकृतिवत् कारकमपि स्यादित्यर्थः । **कंसं घातयतीति** । हन्तेर्भावे 'हनश्च वध' इत्यप्प्रत्ययो वधादेशश्च । ततः कंसस्य वध इति षष्ठीसमासः ।

---

१. Dropped $N_1$. २. C drops सन्वद्भावः. ३. Dropped in $N_1$, $D_1$; $D_2$, $B_2$ have णिच् after it. ४. Before it—स्वरूपाद्विप्रच्युतस्य पुनस्तत्प्राप्तिः प्रत्यापत्तिः C; प्रकृतिप्रत्यापत्तिः $D_4$. ५. °कर्मणां तु सक° $Dc_3$.

बोलिं बन्धयति । ऊढिमाचष्टे ऊढयति । चङि द्वित्वं प्रति ढत्वादीनामसिद्धत्वात् सणिच्कस्य ह्रति[3] इत्यस्य द्वित्वम् । हलादिशेषः[4] । औजिढत् । ढीत्यस्य द्वित्वमिति दुर्गगुप्तादयः । औडिढत् ।

---

कंसवधाण्णिच् । तत्र कृते अप्प्रत्ययस्य कृतो लुक् । प्रकृतेर्हन् अस्याः प्रत्यापत्तिः । हन्[5] इति स्थिते ' अत उपधायाः ' इति वृद्धिः । ' हो हन्तेः— ' इति कुत्वम् । हकारस्य घकारः । ' हनस्तः ' इति तकारोन्तादेशः । शप् । गुणायादेशौ । कारकं च प्रकृतिवत् । प्रकृतेश्च कंसः कर्मासीत् । अत्र द्वितीया कंसमित्यत्र । बलीं बन्धयतीति । बलिबन्धाख्यानमाचष्टे । ऊढयतीति । वह प्रापणे । अस्मात् स्त्रियां क्तिन् । ' हो ढः ' इति ढत्वम् । ' झषस्तथोः— ' इति धत्वम् । ' ष्टुना ष्टुः ' इति ष्टुत्वम् । ' ढो ढे लोपः ' इति । ' वचिस्वपि— ' इति संप्रसारणम् । ' ढ्रलोपे— ' इति दीर्घः । ततो णिच् । टिलोपः । शप् । गुणायादेशौ । चङीत्यादि । ऊढि अस्माण्णिचि लुङि ' णिश्रि— ' इति चङि च सति टिलोपे च ऊढि अत् इति स्थिते ' चङि ' इति द्वित्वं प्राप्नोति । तत्र प्रति पूर्वत्रासिद्धन्यायेन ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् ह्रति अस्य सणिच्कस्य द्वित्वम् । येषां णौ कृत उवर्णादेश आकार आवादेश एव स्थानिवदिति मतं तेषां मतेनेत्यर्थः । अन्येषां हि काशिकाकारादीनां मते णौकृतस्य सर्वस्यापि स्थानिवत्त्वमिति टिलोपस्य स्थानिवत्त्वादिकारसहितस्य चङ्परे णौ द्वित्वम् । औजिढदिति । ' कुहोश्चुः ' इति महाप्राणस्य हकारस्य महाप्राणो झकारः । ' अभ्यासे चर्च ' इति झकारस्य जकारः । ' णेरनिटि ' इति णिलोपः । ढीत्यस्येत्यादि । तेषां हि मते पूर्वत्रा-

---

१. Before it—बलिमाचष्टे । $D_3$. २. Before it—क्रियान्वाख्यानाच $N_1$. ३. ही इत्यस्य द्वित्वम् $D_2$. ४. हलादिः $D_1$, $D_3$, $D_4$, $N_1$. ५. इह हन् इति $Dc_3$.

ऊढमाचष्टे ऊढयति । औजिढत्[1] । अल्लोपस्य णौ स्थानिवत्त्वमाश्रित्य ढृतशब्दस्य द्वित्वादौजढदिति काशिकायाम् । औडढत्[2] इत्यन्ये । प्रकृत्यैकाच् । वृद्धिपुगागमौ । स्वापयति । इष्ठवत्त्वात्[4] पुंवद्भावः । एनीमाचष्टे एतयति । र ऋत इति रत्वम् । प्रथयति । स्थूलदूरेति यणादिलोपः । स्थवयति ।[5] प्रियस्थिरेति

---

सिद्धन्यायः । **ऊढमाचष्ट** इति । निष्ठान्तम् । पूर्ववत् प्रक्रिया । **औजिढदिति** । अत्रापि येषां मते णौ कृत उकारादेश आकार आवादेश एव स्थानिवत् तेषां मते लोपस्य स्थानिवत्त्वाभावात् 'अजादेः—' इति सणिच्कस्य ढत्वादीनामसिद्धत्वाच्च ढृति इत्यस्य द्वित्वम् । **अल्लोपस्येत्यादि** । **काशिकाकारस्य** हि मते णौकृतं सर्वं स्थानिवद् भवतीति अल्लोपस्य स्थानिवत्त्वमाश्रित्य ढृतशब्दस्य द्वित्वादग्लोपित्वात् सन्वद्भावाद्यप्राप्तेरौजढदिति सिध्येदित्यभिप्रायः । तथा च **काशिकायामाह वामनः** । औजढदिति ऊढमाख्यदिति णिच् । तदन्ताल्लुङ् । 'चङि' इति द्विर्वचने कर्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वाण्णौ च यष्टिलोपस्तस्य स्थानिवद्भावात् ढृत इत्यस्य द्विरुच्यते इति । **औडढदित्यन्य** इति । **दुर्गगुप्तादयः** । **वृद्धीति** । 'अचो ञ्णिति' इति वृद्धिः । 'अर्तिह्री—' इति पुक् । **स्वापयतीति** । स्वमाचष्टे अस्माण्णिचि सतीष्ठवद्भावेन टिलोपे प्राप्ते 'प्रकृत्यैकाच्' इति प्रकृतिभावः । ततो वृद्धिपुकौ । **एनीमिति** । 'वर्णादनुदात्त—' इति ङीप् तस्य च नः । **एतयतीति** । 'तसिलादिषु—' इति पुंवद्भावात् ङीप्नयोरभावः । **प्रथयतीति** । पृथुमाचष्टे । **स्थवयतीति** । स्थूलमाचष्टे । यणादिलोपः पूर्वस्य च गुणः ।

---

१. C drops it. २. C. drops it. ३. औडढत् औडिढदित्यन्ये $D_2$ ; C drops औडढत् इत्यन्ये !. ४. इष्टवत्त्वात् $D_3$ ; इष्टवद्भावः $D_4$. ५. After it—स्ववयति $D_3$: ६. स्वापमा° $Dc_3$.

प्रादयः । प्रियमाचष्टे प्रापयति । स्थापयति । साधयति । संज्ञापूर्वको विधिरनित्य इति नोपधावृद्धिः । कनयति । विन्मतोर्लुक् । स्रग्विन्—स्रजयति । ईश्मन्—ईशयति । त्वचयति । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । श्वेतयति । अश्वयति । गालोडयति । आह्वरयति ।

**कण्ड्वादिभ्यो यक् ॥३।१।२७॥**

कण्डूञ् इत्यादिभ्यो यक्प्रत्ययः स्यात् कृञर्थे । धातवः

---

ततोऽन्य । प्रापयतीति । 'प्रकृत्यैकाच्' इति प्रकृतिभावः । वृद्धिपुकौ । स्थापयतीति । स्थिरमाचष्टे । साधयतीति । बाढमाचष्टे । 'अन्तिक-बाढ—' इति साधादेशः । कनयतीति । युवानमल्पं वाचष्टे । 'युवाल्पयोः' इति कनादेशः । स्रग्विन्निति । स्रजो विद्यन्तेस्य । 'अस्माया—' इति विन् । तमाचष्टे । अत्र विनो लुक् । ईश्मन्निति । ईडस्यास्ति ईश्मान् । तमाचष्टे । करोति वा । अत्र मतुपो लुक् । त्वचयतीति । त्वग्वन्तमाचष्टे । पूर्ववत् । श्वेनेति । श्वेताश्वशब्दस्याश्वेत्यस्य लोपः । अश्वतरस्य तरइत्यस्य लोपः । गालोडितेत्यस्य इतस्य लोपः । आह्वरकेत्यस्य कलोप इत्यर्थः ।

**कण्ड्वा** । **धातव** इति । तत्र धात्वधिकारात् धातुभ्य एव प्रत्ययो विधीयते । तथा च गुणप्रतिषेधार्थः ककारोनुबध्यते । तथा चोक्तम् ।

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः' ॥ इति ।

---

१. स्फापयति $D_2$; साधयति । स्थापयति । प्रशस्यमाचष्टे श्रापयति । ज्यापयति । संज्ञापूर्वको &c. $N_1$. २. स्रग्विणमाचष्टे स्रजयति $B_2$. ३. इश्मनमाचष्टे इशयति $B_2$. ४. इत्येवमादिभ्यः $D_3$. ५. इतशब्दस्य $Dc_3$.

प्रातिपदिकानि चेति कण्ड्वादयो द्विविधाः।[१] कण्डूं करोति कण्डूयति। [२]कण्डूयते। [३]हृणीङ्—हृणीयते। [४]महीङ्—महीयते। इत्यादि। क्यजन्तात् सन्। नामधातोर्यथेष्टं द्वित्वं वक्तव्यम्। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुपुतित्रीयियिषति। अजादेराद्येतरस्य द्वित्वम्। अशिश्वीयिषति। अश्वीयियिषति। [५]अशिश्वीयियिषति। यत्र संयोगे नदराः सन्ति तत्र आदेरेव न द्वित्वम्। इन्दिद्रीयिषति। चन्दिद्रीयिषति। कण्ड्वादेस्तृतीय-

---

कण्डूमित्यादि। कण्डूयतीत्यस्यार्थः। ञित्त्वादुभयपदम्। हृणीयते। ङित्त्वादात्मनेपदम्। आदिशब्दात्। मन्तु। वल्गु। असूञ्। वेञ्। वेट्। लोञ्। तिरस्। इरस्। उरस्। उषस्। मागध। मेधा। नडस्। मघस्। दुःख। सुख। वरण। चामर। अधर। भिषक्। भिष्णुक्। इषुध। इषुह। गद्गद। एला। केला। लेट्। लोट्। स्वरूपग्रहणम्। लेट्यूति। लोट्यूति। चरण। तुरण। भुरण। कण्ड्वादिः। **पुपुत्रीयिषतीति**। पुत्रमिच्छति क्यच्। पुत्रीयितुमिच्छतीति सन्। 'सन्यङोः' इति प्रथमस्य द्वित्वे प्राप्ते नामधातोर्यथेष्टं द्वित्वं स्यात्। प्रथमस्य वा द्वितीयस्य वा तृतीयस्य वा त्रयाणामपि वा। **अशिश्वीयिषतीति**। अश्वमिच्छति क्यच्। अश्वीयितुमिच्छति। सन्। **यत्र संयोग** इत्यादि। ण्यन्ते विवृतम्। **इन्दिद्रीयिषतीति**। इन्द्रमिच्छति। इन्द्रीयितुमिच्छति। क्यजन्तात् सन्। **चन्दिद्रीयिषतीति**। चन्द्रमिच्छति। चन्द्रीयितुमिच्छति। चिकामयिषत इति। कमेर्णिङ्। कामयितुमिच्छति। सन्। द्वित्वम्। पूर्ववत् सनः।

---

१. After it—तत्र धात्वधिकारे धातुभ्यः प्रत्ययो विधीयते न प्रातिपदिकेभ्यः। तथा च ककारः गुणप्रतिषेधार्थः। कण्डूं &c. $B_2$; $N_1$ follows $B_2$, but has धात्वधिकारात् and तथा गुणप्रतिषेधार्थः ककारः।. २. Dropped N. ३. हृणीङ् लज्जारोषणयोः $B_2$. ४. महीङ् वृद्धिपूजनयोः $B_2$. ५. Dropped $D_1$. ६. Dropped $D_2$, $D_3$, P, C.

स्यैव । कण्डूयियिषति । णिङः सन् । चिकामयिषते । आयादित्वाद्वा । चिकमिषते । यङ्[1] सन् ण्यन्तात् सन् । बोभूयिषयिषति । इत्यादि ।।[2]

इति नामधातुप्रक्रिया ।।

---

चिकमिषत इति । णिङभावे रूपम् । बोभूयिषयिषतीति । भू सत्तायाम् । अस्मात् अतिशयेन भवतीत्यस्मिन्नर्थे 'धातोः—' इति यङ् । द्वित्वम् । 'गुणो यङ्लुकोः' । ततो बोभूयितुमिच्छतीत्यस्मिन्नर्थे सन् । इट् । णिच् । पुनः सन् । पुनरिट् । शबादि । इत्यादि प्रयोगानुसारात् ज्ञेयम् ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रिया नामधातोः ।।

---

१. यङः C. २. After it—ज्ञेयम् P, $D_3$ ; N drops इत्यादि.

## अथ पदव्यवस्था ।

### अनुपराभ्यां कृञः ॥१।३।७९॥

आभ्यां[1] कृञः परस्मैपदं स्यात् [2]कर्तृगेपि फले । गन्धनादावपि ॥ अनुकरोति । पराकरोति ।

### अभिप्रत्यतिभ्यः क्षिपः ॥१।३।८०॥

[3]कर्तृगेपि फले परस्मैपदम् ।[4] अभिक्षिपति । एवं [5]प्रति अति ।

### प्राद्वहः ॥१।३।८१॥

प्रवहति ।

---

अथ पदव्यवस्था । तत्र प्राधान्यादल्पत्वाच्च सूचीकटाहन्यायेन परस्मैपदं तावदाह—

अनु । कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितं तदपवादः परस्मैपदं विधीयते ।

अभि । क्षिप प्रेरणे । स्वरितेत् । अस्मात् कर्तृगे फले आत्मनेपदे प्राप्ते परस्मैपदं विधीयते । अभिक्षिपतीति । 'तुदादिभ्यः शः' । अभिप्रत्यतिभ्यः किम् । आक्षिपते । कर्तृग्रहणमनुवर्तते । तेनेह न । अभिक्षिप्यते ।

प्राद्वहः । वह प्रापणे । स्वरितेत् । अस्मात् परस्मैपदं प्रपूर्वात् स्यात् । प्रवहतीति । शप् ।

---

१. After it—परस्य C. २. कर्तृगे फलेपि C, $D_2$, $D_3$, $N_1$; कर्तृगामिनि फले $D_1$; कर्तृगे फले $B_2$. ३. कर्तृगामिफले $D_1$; कर्तृगे फलेपि $D_3$. ४. After it—स्यात् $D_2$ ; क्षिपः परस्मैपदं स्यात् $D_3$. ५. प्रतिक्षिपति । एवमति । $D_3$.

**परेर्मृषः ॥१।३।८२॥**

परिमृष्यति ॥ वहेरपि । परिवहति ।

**व्याङ्परिभ्यो रमः ॥१।३।८३॥**

विरमति । आरमति । परिरमति ।

**उपाच्च ॥१।३।८४॥**

उपपूर्वाद्रमतेरन्तर्भूतण्यर्थात् परस्मैपदं स्यात् ॥ यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः ।

**विभाषाकर्मकात् ॥१।३।८५॥**

उपाद्रमोऽकर्मकाद्वा परस्मैपदं स्यात् ॥ उपरमति । उपरमते । निवर्तत इत्यर्थः ।

---

परेः । मृष तितिक्षायाम् । स्वरितेत् । अस्मात् परस्मैपदं स्यात् परिपूर्वात् । परिमृष्यतीति । 'दिवादिभ्यः श्यन्' । वहेरपीति । परेरिति योगविभागाद्वहेरपि परिपूर्वात् परस्मैपदं स्यादित्यर्थः ।

व्याङ् । रमु क्रीडायाम् । अनुदात्तेत्त्वादात्मनेपदे प्राप्ते व्याङ्परिपूर्वात् परस्मैपदम् ।

उपात् । 'विभाषाकर्मकात्' इत्यनेनोपपूर्वाद्रमेरकर्मकादेव आत्मनेपदं वक्ष्यति । तस्मादत्र सकर्मकादेवात्मनेपदं स्यात् । सकर्मकत्वं चोपपूर्वस्य रमेर्ण्यर्थं विना न घटत इत्याभिप्रेत्याह— अन्तर्भूतण्यर्थादिति । बुद्ध्यादावनुप्रविष्टण्यर्थादित्यर्थः । पृथग्योगकरणमुत्तरार्थम् ।

**विभाषा** । पूर्वेण नित्ये प्राप्ते विकल्पः ।

---

१. Before it—परस्मैपदं स्यात् $N_1$. २. Before it—परस्मैपदं स्यात् $N_1$. ३. Before it—यावद्भुक्तम् $N_1$.

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥१।३।८६॥

एभ्यो णेः पूर्वमचित्तवत्कर्तृकेभ्योचलनार्थेभ्योपि ण्यन्तेभ्यः परस्मैपदं स्यात् ॥ बोधयति पद्मम् । योधयति काष्ठम् । विनाशयति[1] । जनयति[2] । अध्यापयति[3] । प्रावयति । द्रावयति । स्रावयति ।

## निगरणचलनार्थेभ्यश्च[4] ॥१।३।८७॥

अणौ सकर्मकेभ्योचित्तवत्कर्तृकेभ्योपि अदनकम्पनार्थेभ्यो ण्यन्तेभ्यः कर्तुः फलेपि परस्मैपदं स्यात् ॥ भोजयति ।

---

बुध । 'णिचश्च' इत्यात्मनेपदे प्राप्ते परस्मैपदं विधीयते । बुध अवगमने । युध संप्रहारे । णश अदर्शने । जनी प्रादुर्भावे । इङ् अध्ययने । प्रुङ् गतौ । द्रु गतौ । स्रु गतौ ।[5] ये चात्राकर्मकाः बुधयुधनशजनास्तेषाम् 'अणावकर्मकात्—' इत्येव सिद्धे वचनमचित्तवत्कर्तृकार्थमित्याह—**अचित्तवत्कर्तृकेभ्य** इति । प्रुङ्द्रुस्रुवः चलनार्था अपि । तेषां 'निगरण—' इत्येव सिद्धे यदा अचलनार्थास्तदर्थं वचनमित्याह—**अचलनार्थेभ्य** इति । **बोधयतीति** । विकासयतीत्यर्थः । विनाशयतीत्यत्र दुःखमिति ज्ञेयम् । **जनयतीत्यत्र** सुखं ज्ञेयम् । जनीजॄष इति मित्त्वात् ह्रस्वः । **अध्यापयतीति** । 'क्रीङ्—' इत्यात्वम् । पुक् । **प्रावयतीति** । प्रापयतीत्यर्थः । **द्रावयतीति** । विलापयतीत्यर्थः । **स्रावयतीति** । स्यन्दयतीत्यर्थः । स्यन्दनं चलनमिति न प्रसिद्धं लोके[6] ।

**निगरण** । अयमपि योगः सकर्मकार्थोचित्तवत्कर्तृकार्थश्चेत्याह—**अणौ सकर्मकेभ्य** इत्यादि । 'णिचश्च' इति कर्तृयोगे फले प्राप्तस्यात्मनेपदस्यापवादोयमित्याह—**कर्तुः फलेपीत्यादि** । **भोजयतीति** ।

---

१. नाशयति पापम् । $N_1$. २ दुःखं जनयति $B_2$. ३. सुखमध्यापयति $B_2$. ४. निगरणार्थेभ्यः कम्पार्थेभ्यो C. ५. After it—श्रु श्रवणे $Dc_3$. ६. चलनं प्रसिद्धं लोके $Dc_3$.

चेलयति ॥ अत्तेर्निषेधः ॥* आदयते ।

**अणावकर्मकाच्चित्तवत्कर्तृकात् ॥१।३।८८॥**

णेः पूर्वमकर्मकात् चित्तवत्कर्तृकात् ण्यन्तात् परस्मैपदं स्यात् ॥ शेते कृष्णः । शाययति कृष्णं गोपी । अकर्मकात् किम् । भक्तिं कारयते । प्राणिकर्तृकात् किम् । शोषयते शालिं वायुः । अणौ किम् । रूपयन्तं प्रयोजयति । रूपयते हरिः ।

---

भुज पालनाभ्यवहारयोः । **चलयतीति** । चल कम्पने । घटादित्वा-न्मित्त्वम् । ततो ह्रस्वः । आदयत इति । अद भक्षणे ।

**अणौ** । **शाययतीति** । शीङ् स्वप्ने । **शोषयत इति** । शुष शोषणे । **रूपयत इति** । रूप रूपकरणे । चुरादिः । णावकर्मकः । **काशिकाकार**मते हेतुमण्णिच्येव योऽकर्मकस्तस्यैव पुनर्हेतुमण्णिचि कृते प्रत्युदाहरणत्वम् । तथा ह्याह जयादित्यः काशिकायाम् । 'चेतयमानं प्रयोजयति चेतयते इति केचित् प्रत्युदाहरन्ति । तदयुक्तम् । हेतुमण्णिचो विधिः । प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तस्मादिह चेतयतीति परस्मैपदेनैव भवितव्यम् । इदं तु प्रत्युदाहरणम् । आरोहयमाणं प्रयोजयति आरोहयते' इति । आरोहयमाणमित्यस्य स्वयमेवारोहत इत्यर्थः । आचार्यवर्यैस्तु भेदस्याविवक्षया णिग्रहणं णिजातेराश्रयणादिति मन्वानैः प्रत्युदाहृतम् । तथा 'णेरणौ—' इत्यस्मिन् सूत्रे अनेनैव प्रत्युदाहृतम् । अणाविति किम् । गणयति गोपालको गणम् । गणयति गणः स्वयमिति । **न्यासकारेण** च णिजात्याश्रयणादेव समर्थितम् ।

---

१. चालयति मरुत्पर्णम ; $B_2$, $D_4$; चलयति मरुत्पणर्म् N, (marginal note—घटादित्वान्मित्त्व ततो ह्रस्वः); चलयति Com. २. C drops it. ३. Before it—कर्तुःफलेऽपि $D_2$, $D_4$, $B_2$ ; कर्तुः फले $N_1$.

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥१।३।८९॥**

सूत्रद्वयोक्तलक्षणवद्भ्योपि पादिभ्यो ण्यन्तेभ्यः कर्तुः फले परस्मैपदं न स्यात् ॥[1] पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते । धेटोपि निषेधः ॥* धापयते । अकर्तुः फले परस्मैपदं स्यादेव । सोमं पाययति याज्ञिकः ।[5]

---

न पा । पा इति लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति पा पाने इत्ययं गृह्यते । न पा रक्षणे । दमु उपशमे । यमु उपरमे । यसु प्रयत्ने । एतावाङ्पूर्वौ । मुह वैचित्ये । परिपूर्वः । रुच दीप्तौ । नृती गात्रविक्षेपे । वद व्यक्तायां वाचि । वस निवासे । भौवादिकः । न वस आच्छादने । अदादिकः । पूर्वोक्ताद्धेतोः । **सूत्रद्वयोक्तेति** । ' निगरणचलनार्थेभ्यश्च ' ' अणावकर्मकाच्चित्तवत्कर्तृकात् ' इति सूत्रद्वयोक्तलक्षणवद्भ्य इत्यर्थः । तत्र पिबतिर्निगरणार्थः । दमप्रभृतयश्चित्तवत्कर्तृकाः । नृतिश्चलनार्थः । **पाययत इति** ।'शाच्छासा—' इति युक् । **दमयत इति** । अमन्तत्वान्मित्त्वम् । ततो ह्रस्वः । **आयामयत इति** । यमोपरिवेषणे इति मित्संज्ञानिषेधः । ङिद्विशिष्टस्याकारस्योपादानमुपसर्गप्रतिपत्त्यर्थम् । **धापयत इति** । धेट् पाने । आत्वम् । ' अर्तिह्री—' इति पुक् । **अकर्तुरित्यादि** । कर्त्रभिप्रायात्मनेपदापवादः परस्मैपदं तस्यैव निषेधात् ॥

इति परस्मैपदम् ॥

---

१. After this—पिबतिरदनार्थः । दमिप्रभृतयः चित्तवत्कर्तृकाः । नृतिश्चलनार्थे $B_2$, $D_4$ (चलनार्थोपि $D_4$.) २. पाययते सक्तून् पयः । दमयते । दाम्यति । देवदत्तः । तमन्यः । दमु उपशमे । $N_1$. ३. Before it—यमोपरिवेषणेति मित्संज्ञा प्रतिषिध्यते । ४. याजकः N, $D_2$, $D_4$, $B_2$. ५. After it—इति परस्मैपदम् $N_1$, $D_4$.

## कर्तरि कर्मव्यतिहारे ॥१।३।१४॥

धातोः कर्तर्य[1]प्यात्मनेपदं स्यात् क्रियाया[2] विनिमये ॥ व्यतिभवते ।[3] श्नसोरल्लोपः । व्यतिस्ते । व्यतिघ्नते ।[4]व्यतिषते । तासस्त्योरिति [5]सलोपः । व्यतिसे । धि च । व्यतिध्वे । ह एति । व्यतिहे । व्यतिषीत । [6]व्यत्यसै । व्यत्यास्त ।[7] व्यतिराते ।

अथात्मनेपदम् । कर्तरीति । कर्मशब्दः क्रियावाची न पारिभाषिककर्मवाचीत्याह—क्रियाविनिमय इति । अन्येन कर्तुमिष्टां क्रियामन्यः करोति इतरसंबन्धिनीं चेतरः । स व्यतिहारस्तद्विशिष्ट-क्रियावचनाद्धातोरात्मनेपदं स्यादित्यर्थः । व्यतिस्ते इति । अस भुवि । अकारे लुप्ते 'सात्पदाद्योः' इति षत्वनिषेधः । व्यतिषत इति । 'आत्मनेपदेष्वनतः' इत्यत् । 'उपसर्गप्रादुर्भ्याम्' इति षः । व्यतिसे इति । अकारसकारयोर्लुप्तयोः स इति प्रत्ययमात्रं पदमिति षत्वनिषेधः । व्यतिस्वहे । व्यतिस्महे । व्यतिषीतेति । 'लिङः सीयुट्' । अल्लोपः । षत्वम् । व्यतिषीयाताम् । व्यतिषीरन् । इत्यादि । व्यतिस्ताम् । व्यतिषाताम् । व्यतिस्व । व्यतिषाथाम् । व्यतिध्वम् । व्यत्यसै इति । लोडुत्तमैकवचनम् । इट् । एत्वम् । 'एत ऐ' । 'आडुत्तमस्य' इत्याट् । वृद्धिः । पित्त्वादल्लोपाभावः । यण् । व्यत्यसावहै । व्यत्यसामहै । व्यत्यास्तेति । लङ् । आट् । व्यत्यासाताम् । इत्यादि । लुङादौ अस्तेर्भूः । व्यत्यभविष्ट । व्यतिबभूवे । व्यतिभवितासे । व्यतिभविषीष्ट । व्यतिभविष्यते । व्यत्यभविष्यत । व्यतिरात इति ।

१. कर्तर्यात्मने° P; $D_2$, $B_2$. २. क्रियाविनिमये $B_2$, N, Com. ३. After it—चन्द्राकौं । अर्केण चिकीर्षितं चन्द्रः करोतीत्यर्थः । $N_1$. ४. $D_2$ drops it. ५. लोपः C. ६. व्यत्यतिस्ताम् C. ७. After it—व्यत्यासाताम् । व्यत्यासत । व्यतिसते । व्यतिससे । व्यतिरासे । व्यतिरै । आलोपपक्षे । व्यतिरे $B_2$.

व्यतिरासे । व्यतिरै । आलोपपक्षे । व्यतिरे ।

ईडजनोर्ध्वे च ॥७।२।७८॥

क्रादित्वाज्जनेर्द्वित्वम् ॥ व्यतिजज्ञिषे । व्यतिजज्ञिध्वे ।[२] व्यतिजज्ञिष्व ।

न गतिहिंसार्थेभ्यः ॥१।३।१५॥

एभ्यः क्रियाविनिमयेपि नात्मनेपदं स्यात् ॥ व्यतिसर्पन्ति । व्यतिघ्नन्ति ॥ हसादीनां च ॥* व्यतिहसन्ति । एवं जल्पपठौ ।

---

रा आदाने । अदादित्वाच्छपो लुक् । व्यतिराते प्रथमपुरुषैकवचनम् । व्यति रा आते । सवर्णदीर्घे कृते द्विवचनमपि तथैव । 'आत्मनेपदेष्वनतः' इत्यत् । सवर्णदीर्घे कृते बहुवचनमपि तथा । जनेरिति । जन जनने । अस्य व्यतिजजाते । व्यतिजज्ञाते । व्यतिजज्ञाथे । व्यतिजज्ञे । व्यतिजजन्महे । व्यतिजज्ञीत । व्यतिजजाताम् । व्यतिजज्ञाताम् । व्यतिजज्ञताम् ।

व्यतिजज्ञिध्वेति । 'ईडजनोर्ध्वे च' इतीट् । व्यत्यजजात । व्यत्यजज्ञाताम् । व्यत्यजज्ञत । व्यत्यजनिष्ट । व्यतिजज्ञे । व्यतिजनिता । व्यतिजनिषीष्ट । व्यतिजनिष्यते । व्यत्यजनिष्यत । कर्मव्यतिहारे किम् । लुनन्ति । कर्तृग्रहणमुत्तरार्थम् । शेषात् कर्तरि परस्मैपदम् ।

न गति । पूर्वेण प्राप्तमात्मनेपदं निषिध्यते । व्यतिसर्पन्तीति । सृप्लृ गतौ । व्यतिघ्नन्तीति । हन हिंसागत्योः । 'गमहन—' इत्युपधालोपः । हसादीनामिति । हसप्रकाराणां शब्दार्थानामित्यर्थः । अत एवाह —एवं जल्पपठौ इति । जल्प व्यक्तायां वाचि । पठ पठने ।

---

१. Before it—उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । $D_3$. २. Before it—व्यतिजजाते । व्यतिजज्ञते । N. ३. After it—व्यतिजजन्वहे । व्यतिजज्ञिष्व । व्यतिजज्ञिध्वम् । व्यतिजजनै । व्यतिजजनावहै N; व्यतिजज्ञिष्व । व्यतिजज्ञिध्वम् । $D_4$, Com. ४. Dropped $N_1$. ५. अन्योन्यं व्यतिगच्छन्ति C. ६. च न $B_2$, $N_1$ ७. पठ C. ८. Before it—व्यतिजजन्वहे $Dc_3$.

इरतेर्न निषेधः। संप्रहरते। वहेर्न निषेध इति केचित्। व्यतिवहते।

इतरेतरान्योन्योपपदाच्च ॥१।३।१६॥

आभ्यां युक्तात् क्रियाविनिमयेपि नात्मनेपदं स्यात् ॥ इतरेतरस्य अन्योन्यस्य वा व्यतिलुनन्ति। परस्परस्येति: परस्परस्य व्यतिलुनन्ति।

नेर्विशः ॥१।३।१७॥

निपूर्वाद्विश आत्मनेपदं स्यात् ॥ निविशते।

---

व्यतिजल्पन्ति। व्यतिपठन्ति। संप्रहरत इति। हिंसार्थत्वान्निषेधः प्राप्तो नेति भावः।

इतरेतर। उपोच्चारितपदमुपपदम्। इतरेतरान्योन्ययुक्ताच्छब्दादित्यर्थः। व्यतिलुनन्तीति। लूञ् छेदने। 'श्नाभ्यस्तयोरातः'।

नेः। निविशत इति। विश प्रवेशने। तुदादित्वाच्छः। न्यविशत। अत्राटा व्यवधानं नास्ति। तदागमास्तद्ग्रहणेन गृह्यन्त इति। नेरुपसर्गस्य ग्रहणम्। अर्थवद्ग्रहणे नानर्थकस्येति। तेनेह न। मधुनि विशन्ति भ्रमराः।

---

१. व्यतिसंप्रहरते C; संप्रहरन्ते $N_1$, $D_4$. २. व्यतिवहन्ते $D_4$. ३. इतरेतरान्योन्योपपदात् $D_1$. ४. आत्मनेपदं न स्यात् $D_1$. ५. After it—यदागमास्तद्ग्रहणेन गृह्यन्ते। तेनाटा नास्ति व्यवधानम्। न्यविशत $N_1$, C and $D_1$, C has additional matter after न्यविशत—नेरुपसर्गस्य ग्रहणम्। अर्थवद्ग्रहणेनानर्थकस्य ग्रहणमिति। तस्मादिह न भवति। मधुनि विशन्ति भ्रमराः।

**परिव्यवेभ्यः क्रियः ॥१।३।१८॥**

एभ्यः क्रीणातेस्तङानौ स्तः ॥ इहोभयपदिनामात्मनेपदमकर्त्रभिप्रायार्थम् । परिक्रीणीते । एवं वि अव ।

**विपराभ्यां जेः ॥१।३।१९॥**

विजयते । पराजयते ।[3]

**आङो दोऽनास्यविहरणे ॥१।३।२०॥**

आङ्पूर्वाद्दात्र आत्मनेपदं स्यात् न तु मुखप्रसारणेऽर्थे ॥ आदत्ते । मुखप्रसारणे तु व्याददाति मुखं कृष्णः ।

---

**परि** । डुक्रीञ् द्रव्यविनिमये । **परिक्रीणीत** इति । 'ई हल्यघोः' । पर्यादय उपसर्गा गृह्यन्ते । कथम् । 'क्रियः' इति संबन्धे षष्ठी । तेन क्रियः संबन्धिनो ये पर्यादयः । संबन्धश्चार्थद्वारको विशेषणविशेष्यभावः । स च उपसर्गैरेव क्रियः संभवति । अत उपसर्गा एव । तेनेह न । बहवो वयो यस्मिन् धने तत् बहुवि क्रीणाति धनमिति ।

**विपराभ्याम्** । 'शेषात्—' इत्यस्यापवादः । **विजयत इति** । जि जये । अत्राप्युपसर्गावेव । तेनेह न । बहुवि जयति धनम् । परा जयति सेना ।

**आङः** । अकर्त्रभिप्रायार्थमारम्भः । ददातेरेवास्यविहरणे वृत्तिर्नान्येषां दारूपाणाम् । तस्मादास्यविहरणप्रतिषेधेन तस्यैव ग्रहणं विज्ञायत इत्याह—दात्र इति । **आदत्ते** इति । 'श्नाभ्यस्तयोः'

---

१. परिव्यवेभ्यः परस्मात् क्रीणातेरात्मनेपदं स्यात् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । $N_1$. २. Before it—विपराभ्यां जयतेरात्मनेपदं स्यात् $N_1$. ३. After this—विपराशब्दौ उपसर्गौ गृह्येते साहचर्यात् तेनेह न स्यात् । बहु विजयति वनम् । पराजयति सेनेति ।

मुखप्रसारणसंदेशादपि न। विपादिकां व्याददाति। स्वाङ्गकर्मकादेव निषेधः। नेह। व्याददते पिपीलिकाः पतङ्गस्य मुखम्।

**क्रीडोनुसंपरिभ्यश्च ॥१।३।२१॥**

एभ्यः क्रीडस्तङानौ स्तः॥ अनुक्रीडते। एवं संपरि। चकारादाङोपि। आक्रीडते। अवादपि केचित्। अवक्रीडते॥ समोकूजने॥* संक्रीडते। कूजने तु संक्रीडति चक्रम्। आगमेः क्षमायाम्॥* आगमयते कालम्॥ आशिषि नाथः॥*

---

इत्याकारलोपः। चर्त्वम्। व्याददाति। प्रसारयतीत्यर्थः। **विपादिका** पादस्फोटः। **स्वाङ्गकर्मकादिति**। नात्राद्रवादिकं स्वाङ्गं विवक्षितम्। किं तर्हि। स्वमङ्गं स्वाङ्गं तत् कर्म यस्य स स्वाङ्गकर्मकः। तेन परसंबन्धिना मुखेन यदा सकर्मको भवति तदात्मनेपदं स्यात्। **व्याददते पिपीलिकाः पतङ्गस्य मुखमिति**।

**क्रीडः**। क्रीड व्यवहारे। यद्यन्वादिरुपसर्गत्वं व्यभिचरति संशब्दस्तु न व्यभिचरति। अतस्तत्साहचर्यादन्वादिरप्युपसर्गः। तेन कर्मप्रवचनीयप्रयोगे न स्यात्। माणवकमनु क्रीडतीति। माणवकेन सह क्रीडतीत्यर्थः। 'तृतीयार्थे' इति कर्मप्रवचनीयसंज्ञा। **अवादिति**। तथोक्तं **मुग्धबोधे** 'पर्यन्ववाङः क्रीडः' इति। **आगमेरिति**। गमेराङ्पूर्वाण्ण्यन्तादात्मनेपदं स्यात्। क्षमा उपेक्षा। कालहरणं परीक्षणमित्यर्थः। **आगमयत इति**। परीक्षत इत्यर्थः। अमन्तत्वान्मित्संज्ञायां ततो ह्रस्वः। लट्। अन्यत्र विद्यामागमयति। सनन्तस्य शकेर्जिज्ञासायामिति च वक्तव्यम्। विद्यासु शिक्षते। विद्या जिज्ञासितुं घटत इत्यर्थः। 'सनिमी—' इति इस्। अभ्यासलोपः। **आशिषीति**। नाथ याच्ञोपतापैश्वर्याशीःषु इत्यनुदात्तेत्।

---

१. °संदृशेपि न $D_2$, $D_4$. २. पिपिलिक्यः C. ३. पतङ्गमुखम् C, P. ४. °विति $N_1$, $D_4$. ५. $D_2$, $D_4$, $N_1$, $B_2$ drop it and have after it—क्षमायां किम्। विद्यामागमयति।; P drops it. ६. विद्या $Dc_1$.

सर्पिषो नाथते ।[1] हरतेर्गत्यनुकारे ॥* पैतृकमनुहरते अश्वः ।[2] किरतेर्हर्षजीविकाकुलायकरणेषु आत्मनेपदम् ॥*

अपाच्चतुष्पाच्छकुनिष्वालेखने ॥६।१।१४२॥

अपात् किरतेः सुट् स्याच्चतुष्पाच्छकुनि[3]कर्तृके आलेखनेर्थे । अपस्किरते वृषो हृष्टः ।[4] कुक्कुटो [5]भक्षार्थी ।[6] श्वा [7]आश्रयार्थी । अन्यत्र मल्लोपाकिरति । गजोपाकिरत्यम्भः । आङि नुपृच्छ्योरिष्टिः ॥*

---

तत्रानुदात्तत्वादेवात्मनेपदे सिद्धे आशिष्येव नाथतेरात्मनेपदम् न[8] याच्ञादिष्विति नियमार्थमेतत् । सर्पिष इति । 'आशिषि नाथः' इति षष्ठी । पैतृकमिति । पितृवद्गमनस्वभावमित्यर्थः । पितुरागतम् । 'ऋतष्ठञ्' । 'इसुसुक्तान्तात्कः' । गतीति किम् । स्वरूपानुकरणे मा भूत् । पैतृकमनुहरतीति । पदमञ्जरीकारमते गतिशब्दः प्रकारवाची । प्रकारस्ताच्छील्यमित्यर्थः । किरतेरिति । कॄ विक्षेपे । अस्य विक्षेप एवार्थः । हर्षादयस्तु विषयाः । तत्र हर्षो विक्षेपहेतुः । जीविका कुलायकरणं च फलम् ।

अपात् । हर्षजीविकाकुलायकरणेष्विति वाच्यम् । अपस्किरत इति । तुदादित्वाच्छः । 'ॠत इत्'। रपरः । [9]मल्लोपकिरतीति । अत्र चतुष्पात्त्वं हर्षादयोपि न सन्ति । गजोपकिरतीति । अत्र हर्षाद्यभावः । चतुष्पात्त्वमस्त्येव ।

---

१. After it—आशिषि किम् । नाथति । याचते इत्यर्थः । इह याच्ञायां मा भूत् । $N_1$, $D_2$, $D_4$, $B_2$. २. After it—गत्यनुकार इति किम् । हरतीति स्वरूपानुकरणे मा भूत् । $D_2$, $D_4$, $B_2$ (अनुहरतीति $B_2$, $D_4$); अनु सादृश्येपि । तुर्गतिमनुकरोतीत्यर्थः । गत्यनुकार इति किम् । अनुहरतीति । स्वरूपानुकारे मा भूत् $N_1$. ३. °कर्तृकेर्थे (आलेखनेर्थे dropped) $D_3$. ४. Before it—जीविकायाम् C. ५. भक्ष्यार्थी C; भिक्षार्थी $D_3$. ६. Before it—कुलायकरणे C. ७. आश्रयार्थी वा । $D_3$, $N_1$. ८. याच्ञा° $Dc_1$. ९. मल्लोपः किर° $Dc_3$.

आनुते । आपृच्छते । शप उपालम्भे ॥* विप्राय शपते ।[१]

**समवप्रविभ्यः स्थः ॥१।३।२२॥**

एभ्यस्तिष्ठतेस्तङानौ स्तः ॥ संतिष्ठते । समस्थित । एवं अव प्र वि ।[३] आङः प्रतिज्ञाने ॥*[४] नित्यं शब्दमातिष्ठते ।[५]

**प्रकाशनस्थेयाख्ययोश्च ॥१।३।२३॥**

स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च स्थस्तङानौ स्तः ॥ कृष्णाय तिष्ठते गोपी । त्वयि तिष्ठते विवादः ।

---

**आनुत** इति । उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । **शप** इति । वाचा शरीरस्य स्पर्शनमुपालम्भः शपथविशेषः । तथा हि । विप्रस्य शरीरं स्पृशामीति शपथं कुर्वाणो विप्राय शपत इति प्रयुज्यते । 'श्लाघह्नुङ्स्था—' इति संप्रदानसंज्ञायां विप्रायेति चतुर्थी । अन्यत्र शपत्याक्रोशतीत्यर्थः ।

**समव** । **संतिष्ठत** इति । 'पाघ्रा—' इति तिष्ठादेशः । **समस्थितेति** । लुङ् । 'स्थाघ्वोरिच्च' इतीदन्तादेशः । सिच्च कित् । 'ह्रस्वादङ्गात्' इति सिचो लोपः । **नित्यमिति** । मीमांसको नित्यशब्दं प्रतिजानीत इत्यर्थः ।

**प्रकाशन** । स्वाभिप्रायकथनं प्रकाशनम् । तिष्ठत्यस्मिन्निति स्थेयः । विवादपदनिर्णेता लोके रूढः । तस्य प्रतिपत्त्यर्थमाख्याग्रहणमिति प्रकाशनस्थेयाख्याशब्दार्थमभिप्रेत्याह—**स्वाभिप्रायेति** । **कृष्णाय तिष्ठत इति** । स्वाभिप्रायाविष्करणं करोतीत्यर्थ । 'श्लाघ—' इति संप्रदानसंज्ञा चतुर्थी । **त्वयीत्यादि** । अस्मद्विवादस्य त्वमेव निर्णेतेत्यर्थः ।

---

१. आनुते शृगालः । शब्दं करोतीत्यर्थः $N_1$. २. After it—अन्यत्र शपति C; उपालम्भ इति किम् । शपति इत्याक्रोशे मा भूत् $D_2$, $B_2$; उपालम्भने इति किम् । शपतीत्याक्रोशे मा भूत् । $N_1$, $D_4$. ३. प्र अव वि $D_1$. ४. आङः स्थः प्रति° $D_3$. ५. After it—मीमांसकः $B_2$.

## उदोनूर्ध्वकर्मणि ॥१।३।२४॥

उदस्तिष्ठतेस्तङानौ स्तः अनूर्ध्वक्रियायाम् ॥ उद ईहायामिष्टिः ॥* मुक्तावुत्तिष्ठते । ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति । [1]अनूर्ध्वक्रियायां किम् । आसनादुत्तिष्ठति ।

## उपान्मन्त्रकरणे ॥१।३।२५॥

उपात् [2]स्थेस्तङानौ स्तः मन्त्रकरणे ।[3] गायत्र्योपतिष्ठतेर्कम् । [4]मन्त्रकरणे किम् । [5]यौवनेनोपतिष्ठति पतिम् ।

उपाद्देवपूजा[6]सङ्गमैत्रीकरणपथिष्विति वक्तव्यम् ॥* विष्णुमुपतिष्ठते । यमुना गङ्गामुपतिष्ठते । स[7]न्तमुपतिष्ठते । गङ्गामुपतिष्ठते पन्थाः ॥ लिप्सायां वा ॥* भिक्षुर्धार्मिकमुपतिष्ठते उपतिष्ठति वा ।

---

उदः इति । उत्पूर्वात्तिष्ठतेरीहायां परिस्पन्दे वर्तमानादात्मनेपदस्येष्टिरित्यर्थः । ईहाग्रहणमनूर्ध्वक्रियाविशेषणम् । ईहात्मिकायामनूर्ध्वक्रियायामिति । **मुक्तावुत्तिष्ठत** इति । तदर्थे घटते इत्यर्थः । **ग्रामादित्यादि** । उत्पद्यत इत्यर्थः ।

उपात् । मन्त्रः करणं साधकतमं यस्य धात्वर्थस्य स तथा । मन्त्रकरणे किम् । यौवनेनोपतिष्ठति ।

उपादिति । देवस्य पूजा देवपूजा । सङ्ग उपश्लेषः । मित्रस्य कर्म मैत्रम् । पन्था मार्गः । स कर्ता भाव्यः । **विष्णुमित्यादि** । पूजयतीत्यर्थः । **यमुनेत्यादि** । संगता भवतीत्यर्थः । **सन्तमिति** । मैत्रं करोतीत्यर्थः । **गङ्गामिति** । प्राप्नोतीत्यर्थः । **लिप्सायामिति** । लब्धुमिच्छा लिप्सा । तस्यां गम्यमानायां वात्मनेपदमित्यर्थः । **भिक्षुरित्यादि** । लिप्सायां जातायां धार्मिकमुपसंक्रामतीत्यर्थः ।

---

१. अनूर्ध्वे क्रियायां $D_2$. २. तिष्ठते° $D_1$. ३. After it—सति $D_3$. ४. $D_1$ drops from मन्त्र°···पतिम्. ५. पतिमुपतिष्ठति यौवनेन C, $D_3$; यौवनेनोपतिष्ठति कृष्णं गोपी P. ६. सङ्गतिमित्रकरण° $N_1$. ७. महामात्रानुपतिष्ठते । मैत्रीकरणेन महामात्रानाराधयतीत्यर्थः । $N_1$.

**अकर्मकाच्च ॥१।३।२६॥**

उपपूर्वात् तिष्ठतेरकर्मकात्तङानौ स्तः ॥ ज्ञानमुपतिष्ठते ।[2]

**उद्विभ्यां तपः ॥१।३।२७॥**

आभ्यामकर्मकात्तपः प्राग्वत्[3] ॥ उत्तपते । वितपते ।[4] आत्माङ्गकर्मकाच्चेष्टिः ॥* उत्तपते वितपते पाणिम् । अकर्मकात् स्वाङ्गकर्मकात्[5] किम् । महीं वितपत्यर्कः[6] ।

**आङो यमहनः ॥१।३।२८॥**

आङः पराभ्यामकर्मकाभ्यामाभ्यां तङानौ स्तः ॥ आयच्छते । आहते । आघ्नते[7] ।[8] आत्माङ्गकर्मकाभ्यां च ॥*

---

अकर्मकात् । अकर्मकादकर्मकक्रियावचनादित्यर्थः । ज्ञानमुपतिष्ठत इति । संनिधीयत इत्यर्थः । अकर्मकात् किम् । देवमुपतिष्ठति ।

उद्विभ्याम् । उद् वि एताभ्यां परादकर्मकक्रियावचनात् तप संताप इत्यस्माद्धातोरात्मनेपदं स्यादित्यर्थः । उत्तपते । वितपते इति । दीप्यत इत्यर्थः । उद्विभ्यां किम् । निष्टपति । 'निसस्तपतावनासेवने' इति षः ।

आङः । आयच्छत इति । यम उपरमे । 'इषुगमि—' इति छः । आहत इति । 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः । आघ्नत इति । 'आत्मनेपदेषु—' इति झस्यादादेशः ।

---

१. यावद्भुक्तमुपतिष्ठते । अकर्मकादिति किम् राजानमुपतिष्ठति । $N_1$. २. After it—अकर्मकादिति किम् । राजानमुपतिष्ठति $D_2$, $D_4$, $B_2$. ३. पूर्ववत् $D_2$. ४. After it—दीप्यत इत्यर्थः C. ५. °कर्मकाच्च $D_4$. ६. वितपति सूर्यः $D_1$. ७. आघ्नाते । आघ्नते । $D_3$, $D_4$. ८. After it–अकर्मकादिति किम् । आयच्छाति कूपाद्रज्जुम् $B_2$; अकर्मकात् किम् । आयच्छति कूपाद्रज्जुम् । $N_1$, $D_4$ (अकर्मकादिति $D_4$.)

आयच्छते पाणिम् । आहते शिरः ॥

**हनः सिच् ॥१।२।१४॥**

हन्तेः परः सिच् कित् स्यात् ॥ कित्त्वादनुनासिकलोपः । ह्रस्वादङ्गात् । आहत । आहसाताम् ।

**आत्मनेपदेष्वन्यतरस्याम् ॥२।४।४४॥**

हन्तेर्वधादेशो वा स्यादात्मनेपदे लुङि ॥ [1]आवधिष्ट ।

**यमो गन्धने ॥१।२।१५॥**

सूचनार्थाद्यमः सिच् कित् स्यादात्मनेपदेषु ॥ [3]उदायत । अकर्मकाभ्यामात्माङ्गकर्मका[4]भ्यां किम् । शत्रुमाहन्ति । परशिर आयच्छति ।

---

'गमहन—' इत्युपधालोपः । 'हो हन्तेः—' इति कुत्वम् ।

आत्मेति । आत्मनः स्वस्याङ्गं तत् कर्म ययोस्ताभ्यामित्यर्थः । आहतेति । लुङ् ।

**यमः** । सूचनं परदोषाविष्करणम् । उदायत इति । [5]परावद्यं प्रकटितवानित्यर्थः । **समः** । समो गम्यृच्छिभ्याम् इत्येव सूत्रम् । अन्यद्वार्तिकम् । अत्र समुच्चयेनोक्तिस्तु सूत्रकारवार्तिककारयोः साम्यद्योतनाय । गम्लृ गतौ । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । प्रच्छ ज्ञीप्सायाम् । स्वृ शब्दोपतापयोः । ऋ गतिप्रापणयोः । भ्वादिजुहोत्याद्योर्ग्रहणम् । श्रु श्रवणे । विद ज्ञाने । गमादिभिः परस्मैपदिभिः साहचर्यान्न लाभार्थः । **संगच्छत** इति । 'इषुगमि—' इति छः ।

---

१. °देशः स्याद्वा $D_1$. २. आवधिष्ट $N_1$. ३. उदायत । गन्धन इति किम् । आयंस्त कूपाद्रज्जुम् । $N_1$; उदायत $D_3$. ४. °काभ्यामिति $N_1$. ५. परावन्द्यं प्रकटितवानित्यर्थः । उपदायतेति आहतेतिवत् प्रक्रिया । समः । समो गम्यृच्छिभ्यामित्येव सूत्रम् । ऋ गति° &c. $Dc_3$.

**समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ ॥१।३।२९॥**

एभ्यः संपूर्वेभ्योकर्मकेभ्यस्तङानौ स्तः ॥ संगच्छते ।

**वा गमः ॥१।२।१३॥**

गमः परौ लिङ्सिचौ कितौ वा स्त आत्मनेपदेषु ॥ अनुदात्तोपदेशेति मलोपः। समगत। समगंस्त। संगसीष्ट। संगंसीष्ट। समृच्छते । संपृच्छते । संस्वरते । समियृते । सर्तीत्यङ् । समारत । समारेताम् । संशृणुते । संवित्ते ।

**वेत्तेर्विभाषा ॥७।१।७॥**

वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात् ॥ संविद्रते । संविदते ॥ दृशेर्वाच्यम् ॥* संपश्यते । अकर्मकेभ्यः किम् । गङ्गां संगच्छति ।

**निसमुपविभ्यो ह्वः ॥१।३।३०॥**

अकर्मकादिति निवृत्तम् । एभ्यो ह्वेञः प्राग्वत् ॥

---

**समगतेति** । लुङ् । 'ह्रस्वादङ्गात्' इति सिचो लुक् ।

**संगसीष्टेति** । आशीर्लिङ् । अनुनासिकलोपः । **संपृच्छत** इति । संप्रसारणम् । **समियृत** इति । 'जुहोत्यादिभ्यः श्लुः' । 'श्लौ' इति द्वित्वम् । 'अर्तिपिपर्त्योः' इतीत्वम् । 'अभ्यासस्यासवर्णे' इतीय् । **समारतेति** । 'ऋदृशोऽङि गुणः' ।

**संविद्रत** इति । 'आत्मनेपदेषु—' इत्यत्। **संपश्यत** इति । दृशिर् प्रेक्षणे । 'पाघ्रा —' इति पश्यः ।

**निसमु** । अकर्त्रभिप्रायार्थ आरम्भः । ह्वेञ् स्पर्धायां शब्दे च ।

---

१. गमृ° N. २. N. Drops कितौ. ३. Before it—समृच्छते N. ४. रुडागमः स्याद्वा $D_1$. ५. Dropped $N_1$. ६. संयच्छति $D_3$. ७. $D_1$ $D_3$, P drop इति.

निह्वयते। एवं सम् उप वि ॥ उपसर्गादस्यत्यूह्योर्वा वाच्यम् ॥ निरस्यति । निरस्यते । समूहति । समूहते ।

**उपसर्गाद्ध्रस्व ऊहतेः ॥७।४।२३॥**

उपसर्गात् परस्य ऊहतेरणो ह्रस्वः स्यात् यादौ क्ङिति । ब्रह्म समुह्यात् ।

**स्पर्धायामाङः ॥१।३।३१॥**

आङो ह्वेञः प्राग्वत्[1] स्पर्धायाम् ॥ कृष्णश्चाणूरमाह्वयते । [2]स्पर्धायामिति किम् । [3]गामाह्वयति ।

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥१।३।३२॥**

[4]हिंसात्मकसूचने भर्त्सनादौ च कृञः पूर्ववत् ॥

---

अस्मादात्मनेपदं स्यादित्यर्थः । एवं संह्वयते उपह्वयते विह्वयते । निरस्यतीति । असु क्षेपणे । दिवादिः । **समूहतीति** । ऊह वितर्के ।

**स्पर्धायाम्** । पराभिभवेच्छा स्पर्धा । तस्यां गम्यमानायामात्मनेपदं स्यादित्यर्थः । **कृष्ण** इत्यादि । स्पर्धमानस्तस्याह्वानं करोतीत्यर्थः । स्पर्धायां किम् । गामाह्वयति [5]गोपालः ।

**गन्धन** । **हिंसात्मकसूचने** इति । हिनस्तीति हिंसः । पचाद्यच् । हिंस आत्मा यस्य तत्तथोक्तं पीडाकरणम् । अथवा हिंसाकारकत्वात् सूचनमेव हिंसास्वरूपमित्यर्थः । सूचनं च दोषाविष्करणम् । हिंसात्मकं सूचनं गन्धनशब्दार्थः । भर्त्सनं तिरस्कारः अवक्षेपणशब्दार्थः । आदिना सेवनं परचित्तानुवृत्तिः । साहसिक्यम् । सहसा वर्तते । 'ओजः—

---

१. After it—स्यात् $D_3$. २ From स्पर्धा°...ह्वयति dropped $D_3$. ३. ग्रामावाह्वयति P. ४. हिंसार्थे सूचने $D_2$ ; हिंसार्थ सूचने $D_1$, $D_4$, C, $B_1$, $B_2$. ५. गोपालम् $Dc_1$.

उत्कुरुते । श्येनो वर्तिकामपकुरुते । विष्णुमुपकुरुते । परदारान् प्रकुरुते । एधो दकस्योपस्कुरुते । गीताः[1] प्रकुरुते ।[2] शतं प्रकुरुते । धर्मार्थं विनियुङ्क्त इत्यर्थः ।[3] एषु[4] किम् । कटं[5] करोति ।

**अधेः प्रसहने ॥१।३।३३॥**

अधेः कृञस्तङानौ स्तः[7] शक्तौ ॥ दैत्यानधिकुरुते विष्णुः ।[6]

**वेः शब्दकर्मणः ॥१।३।३४॥**

शब्दः कर्मकारकं यस्य तस्माद्विपूर्वात् कृञः प्राग्वत् ॥ स्वरान् विकुरुते ।[8]

---

सहोम्भ—' इति ठक् । तस्य भावः कर्म वा । ब्राह्मणादित्वात् ष्यञ् । अविमृश्यकारित्वमित्यर्थः । सतो गुणान्तराधानं प्रतियत्नः । प्रकथनं प्रकर्षेण कथनम् । उपयोगो धर्मादौ विनियोगः । एष्वर्थेषु वर्तमानात् कृञ आत्मनेपदं स्यादित्यर्थः । उत्कुरुते । सूचयतीत्यर्थः । अपकुरुत इति । भर्त्सयते इत्यर्थः । उपकुरुत इति । सेवत इत्यर्थः । प्रकुरुत इति । तेषु सहसा वर्तत इत्यर्थः । उपस्कुरुते इति । गुणान्तराधानं करोतीत्यर्थः । 'उपात् प्रतियत्ने' इति च सुट् । 'कृञः प्रतियत्ने' इति षष्ठी । प्रकुरुते इति । प्रकर्षेण कथयतीत्यर्थः । एतेषु किम् । कटं करोति ।

अधेः । पृथग्योगकरणमधिविशेषणार्थम् । दैत्यानधिकुरुते विष्णुरिति । दैत्यानभिभवति । अथवा तान् पराजेतुं समर्थोपि न पराजयते क्षमया[9] इत्यर्थः ।

---

१. गाथाः $D_2$, $B_2$; गीतां $N_1$, $D_3$. २. N. drops शतं प्रकुरुते C, $B_2$, $N_1$, $D_3$, $D_4$. ३. एषु किम्...करोति dropped $D_3$. ४. एष्विति $D_1$, $D_2$, $N_1$. ५. पटं $N_1$. ६. After it—प्रसहने इति किम् । अर्थमधिकरोति । $N_1$. ७. तङानौ स्तः P; प्राग्वत् स्यात् $D_2$. ८. After it—क्रोष्टा C, $D_2$; after it—स्वरानुदात्तादीन् करोतीत्यर्थः P. ९. क्षमते इत्यर्थः $Dc_3$.

**अकर्मकाच्च ॥१।३।३५॥**

वेः कृञोकर्मकात्तथा ॥ वायुर्विकुरुते । शब्दकर्मणोकर्मकात् किम् । चित्तं विकरोति कामः ।[२]

**संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥१।३।३६॥**

पूजनोत्क्षेपणादौ णीञस्तङानौ स्तः । शास्त्रे नयते । दण्डमुन्नयते । पुत्रमुपनयते । पदार्थान् नयते । भृत्यमुपनयते । करं विनयते । शतं विनयते ।[६]

---

**अकर्म** । **वायुर्विकुरुत इति** । शोभनं वातीत्यर्थः ।

**संमानन** । **पूजनोत्क्षेपणादाविति** । पूजनमर्चा संमाननशब्दार्थः । उत्क्षेपणमुत्क्षिप्योर्ध्वं नयनमुत्सञ्जनशब्दार्थः । आदिना आचार्यकरणमुपनयनम् । ज्ञानं प्रमेयं निश्चयः । भृतिर्वेतनम् । विगणनमृणादेः शोधनम् । व्ययो धर्मादिषु विनियोगः । संमाननाचार्यकरणभृतिषु नयत्यर्थस्य विशेषणेषु सत्सु उत्सञ्जनज्ञानविगणनव्ययेषु नयत्यर्थेषु सत्सु णीञ् प्रापणे अस्मादात्मनेपदं स्यादित्यर्थः । **शास्त्रे नयते इति** । पदार्थानिति शेषः । युक्त्या स्थिरीकृत्य शिष्यान् प्रापयतीत्यर्थः । ते युक्तिभिः स्थाप्यमाना पूजिता भवन्तीति पूजा तेषाम् । **दण्डमुन्नयत इति** । उत्क्षिप्योर्ध्वं नयतीत्यर्थः । **पुत्रमुपनयते** । आचार्यो भवन्नध्ययनायात्मनः समीपं प्रापयतीत्यर्थः । **पदार्थान् नयते इति** । पदार्थलक्षणं प्रमेये[७] निश्चिनोतीत्यर्थः । **भृत्यमुपनयते** । वेतनेनात्मसमीपं प्रापयतीत्यर्थः । **करं विनयते** । राजगृह्यभागं निर्यातयतीत्यर्थः । **शतं विनयते** । धर्मार्थं विनियुङ्क्ते इत्यर्थः ।

---

१. After it—स्यात् $D_2$. २. After it—अनाश इति वाच्यम् । विकरोत्यर्थोयमिति नाशार्थस्य मा भूत् । N, $D_4$. ३. णिञः P; $D_2$. ४. शास्त्रं C. ५. $D_2$ drops शतं विनयते. ६. After it—संमाननादिषु किम् । अजां नयति ग्रामम् । $N_1$. ७. प्रमेयं $Dc_3$.

कर्तृस्थे चाशरीरे कर्मणि ॥१।३।३७॥

णीञः[1] कर्तृस्थेमूर्ते[2] कर्मणि कारके[3] पूर्ववत् ॥[4] क्रोधं विनयते । कर्तृस्थे किम् । गुरोः क्रोधं विनयति । अमूर्ते किम् । गण्डं[5] विनयति ।

वृत्तिसर्गतायनेषु क्रमः ॥१।३।३८॥

क्रमस्तङानौ स्तः अप्रतिबन्धोत्साहस्फीततासु[6] ॥ ऋचि[7] क्रमते बुद्धिः । धर्माय[8] क्रमते । सतां श्रीः क्रमते ।

उपपराभ्याम्[9] ॥१।३।३९॥

वृत्त्यादिष्वाभ्यामेव[10] क्रमस्तङानौ स्तो नान्योपसर्गात् ॥ उपक्रमते । पराक्रमते । आभ्यां किम् । संक्रामति । वृत्त्यादौ किम् । उपक्रामति ।

---

**कर्तृस्थे** । शरीरावयवोत्र शरीरं गृह्यते । स च मूर्त इत्यभिप्रेत्याह—**अमूर्तेति** । प्रत्यासत्तेर्नयतिकर्तृस्थे इति ज्ञेयम् । अपगमे वर्तमानादिति च ज्ञेयम् । अत्र च क्रोधाद्यपगमः फलम् । कर्तृगामिनि[11] 'स्वरितञितः—' इत्येव सिद्धे नियमार्थं वचनम् । कर्तृस्थे कर्मण्यशरीर एव नान्यत्रेति ।

**वृत्ति** । **ऋचि क्रमते बुद्धिः** । तस्यामप्रतिहता भवतीत्यर्थः । **धर्माय क्रमते** । धर्मार्थमुत्सहत इत्यर्थः । **सतां श्रीः क्रमते** । स्फीता भवतीत्यर्थः । **संक्रामतीति** । 'क्रमः परस्मैपदेषु' इति दीर्घः ।

---

१. णियः C, $N_1$; नियः $D_3$. २. कर्तृस्थे स्वेमूर्ते° $D_1$. ३. कर्मकारके P, $D_2$. ४. After it—स्यात् $D_2$. ५. गड्डुं $D_1$, $B_2$. ६. अप्रतीबन्धो° C. ७. वेदे C. ८. Before this—अध्ययनाय क्रमते $B_2$. ९. °पराभ्यां च $B_2$. १०. वृत्त्यादिष्वर्थेष्वा° $D_3$. ११. °गामीति $Dc_3$.

आङ उद्गमने ॥१।३।४०॥

आङः क्रमः[१] प्राग्वदुद्गमनेर्थे[२] ॥ आक्रमतेर्कः । ज्योतिरुद्गमने इति वाच्यम् । नेह । आक्रामति धूमः । उद्गमने किम् । खमाक्रामत्यर्कः[३] ॥

वेः पादविहरणे ॥१।३।४१॥

वेः क्रमः प्राग्वत्[४] पादविहरणेर्थे[५] ॥ साधु विक्रमते वाजी । पादेति किम् । वाजिना विक्रामति ।

प्रोपाभ्यां समर्थाभ्याम् ॥१।३।४२॥

आभ्यां तुल्यार्थाभ्यां क्रमस्तङानौ स्तः[६] । क्रियारम्भ एवानयोस्तुल्यार्थता[७] । भोक्तुं प्रक्रमते उपक्रमते ।[८]

अनुपसर्गाद्वा[९] ॥१।३।४३॥

क्रमते । क्रामति ।[१०]

---

आक्रमतेर्कः । उदयत इत्यर्थः । ज्योतिर्ग्रहनक्षत्रादि । खमाक्रामत्यर्क इति । अत्र हि व्याप्तिरेव विवक्षिता ।

वेः । विहरणं विक्षेपः । वाजिनेति । गच्छतीत्यर्थः ।

अनु । अप्राप्तविभाषेयम् । उपसर्गवियुक्तात् क्रमस्तङानौ वा स्तः ।

---

१. C drops क्रमः २. प्राग्वत्स्यादु° $D_2$. ३. खे आक्रामत्यर्कः C. ४. प्राग्वत् स्यात् $D_2$. ५. अर्थे dropped N. ६. Dropped $D_4$. ७. $D_2$ drops एव; एवैतयो° $B_2$. ८. After it—आरभते इत्यर्थः N ९. After it—अनुपसर्गात् क्रमतेस्तङानौ वा स्तः $B_2$, N ($N_1$ drops स्तः). १०. After it—अनुपसर्गादिति किम् । संक्रामति $N_1$.

अपह्नवे ज्ञः ॥१।३।४४॥

[1]जानातेस्तङानौ स्तोपलापेर्थे [2] ॥ शतमपजानीते ।[3]

अकर्मकाच्च ॥१।३।४५॥

अकर्मकाज्ज्ञानातेस्तथा[4] ॥ सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ।[5]

संप्रतिभ्यामनाध्याने ॥१।३।४६॥

आभ्यां ज्ञः प्राग्वत्[6] अनौत्कण्ठ्ये ॥ संजानीते । प्रति-[7] जानीते । [8]औत्कण्ठ्ये तु पितुः संजानाति ।[9]

---

अप । शतमपजानीते । अपलपतीत्यर्थः । क्र्यादित्वात् श्ना । 'ज्ञाजनोर्जा' इति जा । 'ई हल्यघोः' इतीत्वम् ।

अकर्म । सर्पिषो जानीते इति । 'ज्ञोविदर्थस्य' इति षष्ठी ।

संप्रति । अनौत्कण्ठ्यमस्मरणम् । संजानीते अवेक्षत इत्यर्थः । प्रतिजानीते । अभ्युपगच्छतीत्यर्थः । पितुः संजानातीति । स्मरतीत्यर्थः । पितुरित्यत्र 'अधीगर्थ—' इति षष्ठी । 'अकर्मकाच्च' इत्यत्रापि अस्मरण इत्यभिप्रेतमिति तङ् न ।

---

१. ज्ञाते° $D_2$. २. °पह्नवेर्थे $D_3$. ३. After it—सोपसर्गश्चायमपह्नवे वर्तते न केवलः । C. ४. स्तङानौ स्तः $D_3$. ५. After it—अकर्मकात् किम्—स्वरेण पुत्रं जानाति P; $D_4$, N ($N_1$, $D_4$ अकर्मकादिति). ६. After it—स्यात् $D_2$. ७. Dropped $N_1$. ८. औत्कामे तु C. ९. After it—संस्मरतीत्यर्थः । $N_1$.

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥१।३।४७॥**

भासनसान्त्वनादिषु वदे[1]तेस्तङानौ स्तः ॥ शास्त्रे वदते ।[2] भृत्यानुपवदते ।[3] पाणिनिर्वदते ।[4] क्षेत्रे वदते ।[5] विवदन्ते शिष्याः ।[6] प[7]रदारा[8]नुपवदते ।

**व्यक्तवाचां समुच्चारणे ॥१।३।४८॥**

मनुष्याणां सहोच्चारणे वदेस्तङानौ स्तः ॥[9] संप्रवदन्ते विप्राः । स[10]मुच्चारणे किम् । वदति विप्रः । व्यक्तवाचां किम् । संप्रवदन्ति खगाः ।

---

**भासन** । भासनं दीप्तिः । उपसंभाषोपसान्त्वनम् । ज्ञानं सम्यगवबोधः । यत्न उत्साहः । विमतिर्नानामतिः । उपमन्त्रणं रहस्युपच्छन्दनम् । **शास्त्रे वदते** । भासमानः पदार्थान् वक्तीत्यर्थः । **भृत्यानुपवदते** । उपसान्त्वयतीत्यर्थः । **पाणिनिर्वदते** । वदितुं जानातीत्यर्थः । **क्षेत्रे वदते** । उत्सहते इत्यर्थः । **विवदन्ते शिष्याः** । विमता विविधं भाषन्ते इत्यर्थः । **परदारानुपवदते** । रहस्युपच्छन्दयतीत्यर्थः । एषु किम् । यत् किंचिद्वदति ।

**व्यक्त** । ननु व्यक्तवाच्येव वदिर्वर्तते किमर्थं व्यक्तवाचामिति विशेषणम् । प्रसिद्ध्युपसंग्रहार्थम् । व्यक्तवाचो मनुष्याः प्रसिद्धा इत्यभिप्रेत्याह—**मनुष्याणामिति** ।

---

१. वदस्त° $D_3$. २. After it—उपसंभाषा उपसान्त्वनम् C. ३. After it—उपसान्त्वयतीत्यर्थः । ज्ञानं सम्यगवबोधनम् C. ४. After it—जानाति वदितुमित्यर्थः । यत्नः उत्साहः । C. ५. After it—गेहे वदते । तद्विषयमुत्साहमाविष्करोतीत्यर्थः । विमतिर्नाम मतिः C. ६. After it—विमतिविचित्रं भाषन्ते इत्यर्थः C. ७. C drops परदारानुपवदते. ८. °रान् वदते $D_1$. ९. After it—अकर्मकादेवेष्टिः $D_2$, $D_4$, P, $N_1$, $B_2$; १०. Dropped in $D_2$, $D_3$; after खगाः in $B_2$, $N_1$.

अनोरकर्मकात् ॥१।३।४९॥

व्यक्तवाग्विषयादनुपूर्वाद्वदतेरकर्मकात्तथा ॥ अनुवदते कठः कलापस्य[1] । अकर्मकादिति[2] किम् । पूर्वमेव यजुरुदितमनुवदति । पुनर्वदतीत्यर्थः[3] । व्यक्तवाचामित्येव[4] । अनुवदति वीणा । विमतौ[5] च । अनुवदन्ते शिष्याः ॥

विभाषा विप्रलापे ॥१।३।५०॥

नृणां विमतिसहोक्तिव्यामिश्रणे वदेः प्राग्वत् वा[6] ॥ विप्रवदन्ते विप्रवदन्ति वा वैद्याः ।[7]

अवाद्ग्रः ॥१।३।५१॥

अवाद्गिरतेस्तङानौ स्तः ॥ अवगिरते ।

---

अनो[8] । अनुवदते कठः कलापस्येति । यथाधीयानः कलापो वदति तथा कठ इत्यर्थः । अकर्मकात् किम् । उक्तमनुवदति । व्यक्तवाचां किम् । अनुवदति वीणा ।

विभाषा । नृणामिति । परस्परप्रतिषेधेन[9] विरुद्धः प्रलापो विमत्युक्तिः । सहोक्तिश्च । तयोर्व्यामिश्रणमेकरूपता[10] । एकरूपे सहोच्चारणे आत्मनेपदं स्यादित्यर्थः ।[11]

अवाद्ग्रः । अवगिरते इति । गॄ निगरणे । तुदादिः । न गॄ शब्दे इति क्र्यादिः । तस्यात्रपूर्वप्रयोगाभावात् । 'ऋत इत्' । रपरः ।

---

१. कालापस्य $D_3$, $D_4$, P, C, $B_1$. २. अकर्मकादिति किम्...to शिष्याः dropped in $D_2$, $D_3$; before it—व्यक्तवाचामित्येव । अनुवदति वीणा $B_2$, $D_4$. ३. पुनर्वदतीत्यर्थः dropped $N_1$, $D_4$. ४. From व्यक्त°... to शिष्याः dropped $B_2$, $D_4$. ५. $D_1$, $N_1$ drop विमतौ...शिष्याः. ६. After it—स्यात् $D_2$. ७. After it—विप्रलाप इति किम् । संप्रवदन्ति वैद्याः । व्यक्तवाचामित्येव । विप्रवदन्ति शकुनयः $B_2$, $N_1$. ८. अनुः सादृश्ये । यथा कलापोधीयानो वदति. ९. परस्परनिषिद्धेन विरुद्धः $Dc_1$. १०. रूपे सहोच्चारणे $Dc_3$. ११. After it—विप्रा वदन्ति । युगपद् वदन्तीत्यर्थः $Dc_3$.

**समः प्रतिज्ञाने ॥१।३।५२॥**

संपूर्वाद्गिरतेः पूर्ववत् प्रतिज्ञायाम् ॥ शतं संगिरते ।

**उदश्चरः सकर्मकात् ॥१।३।५३॥**

उत्पूर्वाच्चरतेः सकर्मकात् तङानौ स्तः ॥ धर्ममुच्चरते । उत्क्रम्य यातीत्यर्थः । सकर्मकात् किम् । धूम उच्चरति ।

**समस्तृतीयायुक्तात् ॥१।३।५४॥**

संपूर्वाच्चरतेः प्राग्वत् तृतीयायोगे ॥ अश्वेन संचरते ।[3]

**दाणश्च सा चेच्चतुर्थ्यर्थे ॥१।३।५५॥**

संपूर्वाद्दाणश्चतुर्थ्यर्थे तृतीयायोगे तङानौ स्तः ॥ दास्या संयच्छते [4]कामी । सम इति [5]षष्ठ्यन्तत्वात् प्रेण व्यवधानेपि । [6]दास्या संप्र[7]यच्छते । [8]चतुर्थ्यर्थे किम् । [9]दास्या संप्रयच्छ[10]ति भिक्षां भिक्षवे ।[11]

---

**समः** । शतं संगिरत इति । प्रतिजानीत इत्यर्थः ।

**उदः** । धूम उच्चरतीति । उत्क्रम्य गच्छतीत्यर्थः ।

**समः** । तृतीयायुक्तात् किम् । उभौ लोकौ संचरति ।

**दाणः** । दास्यासंयच्छते कामीति । दाण् दाने । 'पाघ्रा–' इति यच्छादेशः । अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया । **सम इति षष्ठ्यन्तत्वादिति** । अयं भावः । समः इति यदि पञ्चमी स्यात् 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्यानुवृत्तेः समः परस्माद्व्यवहितादेव दाण आत्मनेपदं स्यात् । तस्माद्विशेषणषष्ठी । तेन व्यवधानेपि भवतीति ।

---

१. After it स्यात्—$D_2$. २. After it—स्यात् $D_2$. ३. After it—तृतीयेति किम् । उभौ लोकौ संचरति $D_2$, $D_3$, $D_4$, $B_2$, $N_1$. ४. कामुकः $D_1$. ५. विशेषणे षष्ठी न पञ्चमी तेन "समोन्येन व्यवधानेपि $D_2$, $D_4$, $B_2$. ६. Dropped $D_4$. ७. संप्रयच्छते कामुकः । $D_3$. ८. चतुर्थ्यर्थे इति $N_1$. ९. हस्तेन for दास्या C; before it-पाणिना संयच्छति । $D_3$. १०. संयच्छति $D_3$. ११. After it—भार्यायै संयच्छति । समः किम् । दास्या उपयच्छति । $D_4$.

**उपाद्यमः स्वकरणे ।।१।३।५६।।**

उपपूर्वाद्यमो विवाहेऽर्थे तङानौ स्तः ।। भार्यामुपयच्छते ।

**विभाषोपयमने ।।१।२।१६।।**

विवाहार्थाद्यमः सिज्वा कित् स्यादात्मनेपदेषु ।। रामः सीतामुपायत । उपायंस्त वा ।

**ज्ञाश्रुस्मृदृशां सनः ।।१।३।५७।।**

एभ्यः सन्नन्तेभ्यस्तङानौ स्तः ।। जिज्ञासते । शुश्रूषते ।

---

उपात् । यदि स्वकरणमभिप्रेतं स्यात् तदा शकटादिस्वकरणेऽपि स्यादिति शङ्कानिरासायाह—विवाहेऽर्थे इति । अयमाशयः । प्रतिनियता हि शब्दशक्तयस्तस्मादुपपूर्वो यमिरात्मनेपदे विवाह एव वर्तते । भाष्ये तु स्वीकरणमात्रे स्यादित्युक्तम् । तथा च भट्टिकाव्ये प्रयोगोऽपि । 'उपायंस्त महास्त्राणि' इति । रामः सीतामुपायतेति । परिणीतवानित्यर्थः । सिचः कित्त्वे सति 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः । ततो 'ह्रस्वादङ्गात्' इति सिचो लोपः । उपायंस्त त्विति । कित्त्वाभावादनुनासिकलोपसिज्लोपाभावौ ।

ज्ञाश्रु । तत्र ज्ञः 'अपह्नवे ज्ञः' इति सूत्रत्रयेण तङानौ विहितौ । श्रुदृशोश्च 'समो गमि—' इति । तत्र 'पूर्ववत्सनः' इति सिद्धमन्यत्र विधीयते । जिज्ञासत इति । ज्ञा अवबोधने । सन् । 'सन्यङोः' इति द्वित्वम् । ह्रस्वः । 'सन्यतः' इतीत्वम् । शुश्रूषत इति । श्रु श्रवणे । 'इको झल्' इति सनः कित्त्वम् । 'श्र्युकः किति' इतीण्निषेधः ।

---

१. सिच्च कित् स्याद्वा $D_1$; सिच् किद्वा स्यात् $D_3$.

सुस्मूर्षते । दिदृक्षते ।

**नानोर्ज्ञः ॥१।३।५८॥**

अनुपूर्वात् ज्ञः सन्नन्तात् तङानौ न स्तः ॥ अनुजिज्ञासति पुत्रम् ।

**प्रत्याङ्भ्यां श्रुवः ॥१।३।५९॥**

आभ्यां शृणोतेः सन्नन्तात्तङानौ न स्तः ॥ प्रतिशुश्रूषति । आशुश्रूषति ॥ इह सर्वत्रोपसर्गग्रहणात्कर्मप्रवचनीयादौ न । द्विजं प्रति शुश्रूषते ।

**प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥१।३।६४॥**

आभ्यां परादयज्ञपात्रविषयाद्युजेस्तङानौ स्तः ॥ प्रयुङ्क्ते ।

---

'अज्झन—' इति दीर्घः । **सुस्मूर्षत** इति । स्मृ आध्याने । पूर्ववत् कित्त्वात् 'उदोष्ठ्य—' इत्युत्वम् । 'हलि च' इति दीर्घः । **दिदृक्षत** इति । दृशिर् प्रेक्षणे । 'हलन्ताच्च' इति कित्त्वम् । 'व्रश्च—' इति षः । 'षढोः—' इति कः ।

**नानोः** । पूर्वेण प्राप्तं प्रतिषिध्यते । तेन सकर्मकस्य प्रतिषेधः । अकर्मकात्तु स्यादेवात्मनेपदम् । औषधस्यानुजिज्ञासते । औषधेन प्रवर्तितुमिच्छतीत्यर्थः । अनोः किम् । धर्मं जिज्ञासते ।

**प्रोपा** । युज समाधौ । अस्यानुदात्तेत्वादात्मनेपदं सिद्धमतस्तस्य ग्रहणमयुक्तमित्यभिप्रायेणाह–युजेरिति । युजिर्योगे । प्रयुङ्क्त इति ।

---

१. दिदृक्षते । सुस्मूर्षते C, $D_1$, $D_3$, $N_1$. २. आशुश्रूषति । प्रतिशुश्रूषति । $N_1$. ३. पराद्युजेरपात्रविषयात्तङानौ स्तः $D_1$.

उपयुङ्क्ते[1] । स्वराद्यन्तोपसृष्टाद्वाच्यम् ॥* उद्युङ्क्ते । वियुङ्क्ते । यज्ञपात्रेषु । [3]प्रयुनक्ति ।[4]

समः क्ष्णुवः ॥१।३।६५॥

संक्ष्णुते[5] शस्त्रम् ॥

भुजोऽनवने ॥१।३।६६॥

भुजस्तङानौ स्तो[6] न तु पालनेऽर्थे ॥ ओदनं भुङ्क्ते । पालने तु पृथिवीं[7] भुनक्ति ॥

---

रुधादिभ्यः श्नम् । 'श्नसोरल्लोपः' । 'चोः कुः' इति कुत्वं गः । तस्य 'खरि च' इति कः । 'नश्चा—' इत्यनुस्वारः । 'अनुस्वारस्य—' इति ङकारः । स्वरेति । स्वरः अच् आदिरन्तो वास्य स्वराद्यन्तस्तत्संबन्धाद्युजेः स्यात् । स्वराद्यन्तोपसृष्टादिति किम् । निर्युनक्ति । प्रयुनक्तीति । द्वन्द्वं न्यञ्चि पात्राणीति ज्ञेयम् ।

समः । क्ष्णु तेजने । 'समो गमि—' इत्यत्रैवायं किं नोक्तः । अकर्मकादिति तत्र वर्तते ।

भुजः । अवननिषेधाद्रौधादिकस्य भुज पालनाभ्यवहारयोरस्य ग्रहणं न तौदादिकस्य भुज कौटिल्ये अस्य । अवनसंबन्धाभावात् । तेनेह न । विभुजति पाणिम् ।

---

१. C drops it. २. उपयुङ्क्ते N1 ; अनुयुङ्क्ते before it D4. ३. Before it—द्वन्द्वं यज्ञपात्राणि C, N1. ४. After it—स्वराद्यन्तोपसृष्टादिति किम् । निर्युनक्ति B2. ५. Before it—संपूर्वात् क्ष्णुवस्तङानौ स्तः । N1. ६. स्तः B2, D4. ७. पृथ्वीं B2, D4.

णेरणौ यत् कर्म णौ चेत् स कर्तानाध्याने ॥ ॥१।३।६७।

ण्यन्तात्तङानौ स्तः अणौ यत् कर्म स एव ण्यन्तस्य कर्ता चेत् न त्वाध्याने ॥ पश्यन्ति भवं भक्ताः । दर्शयते

णेः । 'णिचश्च' इति कर्त्रभिप्राये सिद्धेकर्त्रभिप्रायार्थोयमारम्भः । कर्त्रभिप्रायेपि विभाषोपपदेन प्रतीयमान इति विकल्पबाधनार्थश्च । ण्यन्तात् तङानौ स्त इत्यादिना वाक्यभेदेन सूत्रं व्याचष्टे—ण्यन्तात् तङानौ स्त इति । अनेन 'णेः' इत्येकं वाक्यं दर्शितम् । तस्यार्थः स्पष्टः । ततः 'अणौ यत् कर्म' इत्यनेन अणौ यत् कर्मेति द्वितीयम् । अणौ यत् कर्म णौ चेत् तत् कर्मेत्यर्थः । अनेन कर्मान्तरव्यावृत्तिः क्रियते । 'स एव ण्यन्तस्य कर्ता चेत्' इत्यनेन तृतीयचतुर्थे दर्शिते । तत्र ण्यन्तस्य चेदित्यंशेन 'णौ चेत्' इति तृतीयम् । तत्र 'अणौ यत्' इत्यनुवर्तते । अणौ यत् प्रतिपाद्यं ण्यन्ते चेत्तदेव प्रतिपाद्यमित्यर्थः । एतत् समानक्रियार्थम् । स एव कर्तेत्यंशेन 'स कर्ता' इति चतुर्थम् । अत्राणौ यत् कर्म णौ चेदिति वर्तते । अणौ यत् कर्म ण्यन्तस्य चेत् स एव कर्ता स्यादित्यर्थः । न त्वाध्यान इत्यनेनानाध्यान इति प्रसज्य-प्रतिषेधपरं पञ्चमं दर्शितम् । ततश्चैवं संपिण्डितो वृत्त्यर्थः । ण्यन्तात्तङानौ स्तः । अणौ यत् कर्म तदेव ण्यन्ते स्यात् । अणौ यत् प्रतिपाद्यं तदेव ण्यन्तस्य स्यात्[1] । अणौ यत् कर्म णौ चेत् स एव कर्ता स्यात् ।[2] स्मरणे तु न भवति । पश्यन्ति भवमित्यणौ कर्मत्वप्रदर्शनार्थम् । उदाहरणं त्वेतत्—दर्शयते

१. तदेव चेत् Dc3. २. After it—स्मरणे तु न भवति । पश्यति भक्तान् इति अणौ कर्मत्वप्रदर्शनार्थः । उदाहरणं त्वेतत् Dc3.

भवो भक्तान् स्वयमेव । इह कर्तृस्था क्रिया । तेन कर्मवत् कर्मणेति

भवो भक्तान् स्वयमेवेति । अयं दृशिर्दर्शनविषयत्वापत्त्युपसर्जनदर्शनविषयत्वापादने वर्तते । दर्शनविषयत्वमापादयतीति । यदानुभवस्य सौकर्यातिशयप्रदर्शनाय भक्तव्यापारो न विवक्ष्यते तदा विषयत्वापत्तौ दृशिर्वर्तते । तत्र भवस्य कर्तृत्वम् । तदुक्तं हरिणा ।

'निवृत्तप्रेरणं कर्म स्वाक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते' ॥ इति ।

ततो विषयत्वापत्तिवृत्तेर्दृशेर्भक्तव्यापारे णिजुत्पद्यते । पुनः सौकर्यातिशयविवक्षायामविवक्षिते भक्तव्यापारे विषयत्वापत्तिमात्रे दृशिर्वर्तते । दर्शयते भवः स्वयमेवेति । सुष्ठु विषयो भवतीत्यर्थः । सोऽयं निवृत्तप्रेरणपक्षः । अध्यारोपितप्रेरणपक्षस्तु । पश्यन्ति भवं भक्तास्तत्सौकर्यातिशयाद्भवः प्रयुङ्क्ते भक्तानिति भक्तव्यापारे णिजुत्पद्यते । दर्शयते भवो भक्तान् स्वयमेवेति सुष्ठु दर्शनविषयत्वं प्रतिपद्यत इत्यर्थः । एष एव तस्य प्रयोजकव्यापारः । नन्वत्रापि सौकर्यातिशयप्रतिपादने तात्पर्यमिति कर्माविवक्षित्वा दर्शयते भवः स्वयमेवेत्येव प्रदर्शनीयम् । भक्तानिति न वक्तव्यम् । मैवम् । भाष्यकारेण पश्यन्ति भृत्या राजानं दर्शयते भृत्यान् राजेति प्रयुक्तत्वादणौ ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे एवात्मनेपदं न । यथा स्थलमारोहयति मनुष्यानिति । इह णौ कर्तॄणां भक्तानां कर्मत्वमिति स्यादेव तङ् । एवं च स्मरयत्येनं वनगुल्मस्य कोकिल इति जयादित्यप्रत्युदाहृतिर्घटते । वामनस्तु अस्मदुक्तमेवार्थं मन्यते । माघे प्रयोगोऽपि 'करेणुरारोहयते निषादिनम्' इति । पदमञ्जरीकारमते न्यासकारमते तु कर्म न प्रयोज्यमेव । इह कर्तृस्थेति । दर्शनक्रियाया भक्तेषु समवायात् । णेः किम् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती साध्वारोहति । अत्राणौ कर्म हस्ती स एव कर्ता भवति किं त्वण्यन्तस्यैव रोहतीत्यस्यातो

१. कर्तृस्थक्रिया $D_2$. २. °क्तान् सौकर्यातिशयाद्भवः प्रयुङ्क्ते । $Dc_3$. ३. सुष्ठु न दर्शने विषयत्वं प्रतिपाद्यत इत्यर्थः । $Dc_1$. ४. आरोहमाणो हस्ती साध्वारोहयति $Dc_3$.

कर्मवत्त्वाभावादात्मनेपदमप्राप्तं विधीयते । अणौ यत् कर्म णौ चेत् स कर्तेति किम् । दर्शयति भवं भक्तान् भक्तिः । औत्कण्ठ्ये तु स्मरयति भक्तान् हरिः ।

गृधिवञ्च्योः प्रलम्भने ॥१।३।६९॥

ण्यन्ताभ्यामाभ्यां तङानौ स्तः प्रतारणेऽर्थे ॥ बटुं वञ्चयते

---

न तङ् । अणौ किम् । गणयति गोपालो गणम् । गणयति गणः स्वयमेव । अत्र गणो णावेव कर्म न त्वणौ । अतो न । पूर्वश्चुरादि णिच् । द्वितीयो हेतुमण्णिच् । अणौ यदित्यादि । अणौ यत् कर्म तदेव ण्यन्तस्य कर्ता भाव्यः । किमर्थः । करणादेः कर्तृत्वे मा भूत् । दर्शयति भवं भक्तान् भक्तिरिति । भक्त्या भवं पश्यतीति भक्तिरणौ करणम् । सा णौ सति कर्तृत्वे संपद्यते । किं त्वणौ कर्म नेति न तङ् । णौ चेद्ग्रहणं समानक्रियार्थम् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहमाणो हस्ती भीतान् सेचयति मूत्रेण । अत्राणौ आरोहणस्य कर्म हस्ती स सेचयतीत्यस्य ण्यन्तस्य कर्तापि भवति । किं तु भिन्नक्रियात्वान्न तङ् । यत्सग्रहणमनन्यकर्मार्थम् । आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यम् । अत्र कर्मान्तरमस्ति मनुष्यः । ततो न तङ् । कर्तेति किम् । आरोहन्ति हस्तिनं हस्तिपकाः । तानारोहयति महामात्रः । अत्र यदेवाणौ कर्म हस्ती तदेव णौ कर्तृत्वेन न विवक्षितम् । किं तर्हि । महामात्रः । अतो न तङ् । स्मरयति भक्तान् हरिरिति । स्मृ आध्याने । घटादिः । मित्त्वात् ह्रस्वः । भक्ता हरिं स्मरन्तीति ण्यभावे हरिः कर्म स णौ सति कर्ता संपद्यते विवक्षावशाद्यद्यपि तथाप्याधानत्वात्तङ् न ।

गृधि । गृधु अभिकाङ्क्षायाम् । वञ्चु गतौ । प्रतारणं मिथ्या-

---

१. स्मारयति $B_2$. २. गर्धयते । बटुं वञ्चयते $D_2$, $D_3$ ; P, $N_1$, बटुं गर्धयते । वञ्चयते $D_4$. ३. कारणादेः $Dc_1$. ४. कर्तृत्वं $Dc_3$. ५. आरोहमाणो $Dc_3$. ६. हि $Dc_1$.

गर्धयते । प्रलम्भने किम् । श्वानं गर्धयति । अहिं वञ्चयति ।[1]

मिथ्योपपदात् कृञोऽभ्यासे ॥१।३।७१॥

ण्यन्तात् कृञो मिथ्योपपदात् तङानौ स्तोऽभ्यासे ॥ पदं मिथ्या कारयते । सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्या किम् । साधु पदं कारयति । अभ्यासे किम् । सकृत् पदं मिथ्या कारयति ।

अपाद्वदः ॥१।३।७३॥

अपपूर्वाद्वदस्तङानौ स्तः[4] कर्तृगे क्रियाफले ॥ अपवदते ।[5]

---

फलाख्यानम् । श्वानं गर्धयतीति । गर्धनमस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । परिहरतीत्यर्थः ।

मिथ्या । उपोच्चारितं पदमुपपदम् । मिथ्या उपपदं यस्य । मिथ्या कारयते इत्यात्मनेपदेनैवाभ्यासस्य द्योतितत्वात् 'नित्य-वीप्सयोः' इति द्वित्वं न । सापचारमिति । सदोषम् । एतेन मिथ्याशब्दार्थमाह । स्वरादिदुष्टमिति । तस्यैवार्थं व्यक्तीकरोति । असकृदिति । अभ्यासशब्दार्थं दर्शयति ।

अपात् । अपवदत इति । धनकामो न्यायमिति शेषः । न्यायापवादेन धर्ममर्जयिष्यामीति मन्यते ।

---

१. After it—वक्रं गमयतीत्यर्थः $D_2$, $D_4$, $B_2$. २. Dropped in $D_1$. ३. मिथ्योपपदात् किम् $D_1$, P. ४. C drops कर्तृगे क्रियाफले. ५. After it—अपात् किम् । प्रवदति C, $N_1$ ( $N_1$ अपादिति किम् ).

**समुदाङ्भ्यो यमोऽग्रन्थे ॥१।३।७५॥**

एभ्यो यमस्तङानौ स्तः न तु ग्रन्थकर्मकात् कर्तृगे फले । संयच्छते । उद्यच्छते । आयच्छते । आयंस्त रज्जुम् । ग्रन्थे तु वेदमुद्यच्छति ।

**अनुपसर्गाज्ज्ञः ॥१।३।७६॥**

अनुपसर्गाज्जानातेः कर्तृगे क्रियाफले तङानौ स्तः ॥ गां जानीते । अनुपसर्गात् किम् । प्रजानाति । कर्तृगे फले किम् । परस्य गां जानाति ।

**विभाषोपपदेन प्रतीयमाने ॥१।३।७७॥**

कर्तृगे फले यदात्मनेपदं विहितं तदुपपदेन द्योत्ये कर्तृगे

---

**समु** । आङ्पूर्वादकर्मकात् 'आङो यमहनः' इत्येव सिद्धं सकर्मकार्थं पुनर्ग्रहणमिति दर्शयितुं द्वितीयं सकर्मकमुदाहरणमाह–आयंस्त रज्जुमिति । लुङ् । अगन्धनाद्यर्थत्वात् कित्त्वाभावः । वेदमुद्यच्छतीति । वेदमधिगन्तुमुद्यमं करोतीत्यर्थः ।

**अनुपसर्गात्** । नास्योपसर्गोऽस्ति तथा । सकर्मकार्थमिदं वचनम् । अन्यथा 'अकर्मकाच्च' इति सिद्धत्वात् ।

**विभाषा** । 'स्वरितञितः—' इत्यादिभिः पञ्चभिः सूत्रैः कर्तृगे फले प्राप्ते आत्मनेपदं विहितम् । तदुपपदेन द्योतिते कर्तृगे फले न प्राप्नुयात् । उक्तार्थानामप्रयोग इति न्यायात् । अतोऽप्राप्त-

---

१. $D_2$, $N_1$ drop it. २. Dropped $D_3$. ३. After it—अन्यस्मात्तु नियच्छति $D_2$, $D_4$, $B_2$; अन्यस्य तु नियच्छति $N_1$. ४. वेदानुद्यच्छति N. ५. $D_1$ has the Vṛitti as follows:—स्वरितञितः कर्त्रभिप्राये क्रियाफले । अपाद्वदः । णिचश्च । समुदाङ्भ्यो यमो ग्रन्थे । अनुपसर्गात् ज्ञः । एतैः पञ्चभिः सूत्रैर्यदात्मनेपदं &c; कर्तृगे क्रियाफले $B_2$. ६. तत्रोपपदं विहितं तत्रोपपदेन° $B_2$.

फले वा[1] स्यात् ॥ [2]स्वयं यज्ञं यजति । स्वयं यज्ञं यजते । एवमन्यत्र[3] ।

इति पदव्यवस्थाप्रक्रिया ।

---

विभाषेयम् । समीपवर्ति शब्दान्तरमुपपदं न पारिभाषिकं तत्रोपपदमिति । एवमन्यत्रेति । एवमुदाहृतप्रकारेण 'अपाद्वदः' इत्यादिषु चतुर्षु सूत्रेषु ज्ञेयमित्यर्थः । स्वं पुत्रमपवदति स्वं पुत्रमपवदते । स्वं यज्ञं कारयते कारयतीति वा । स्वं व्रीहिं संयच्छते संयच्छति वा स्वां गां जानीते जानाति वा इति ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे पदविधिनियमप्राक्रियेयं समाप्ता ॥

---

१. आत्मनेपदं वा स्यात् $D_1$. २. स्वं यज्ञं यजते । स्वयं यज्ञं यजति । स्वं कण्ठं करोति । स्वं कण्ठं कुरुते । एवमन्यत् $D_1$. ३. °मन्यत् $D_1$.

# अथ भावकर्मप्रक्रिया ।

भावकर्मविवक्षायां लः कर्मणि चेति लडादयः । तस्य तिबादयः ।

**भावकर्मणोः ॥१।३।१३॥**

भावकर्मणोर्विहितस्य लस्य स्थाने आत्मनेपदं स्यात् सर्वत्र ॥

**सार्वधातुके यक् ॥३।१।६७॥**

धातोर्यक् प्रत्ययः स्यात् भावकर्मवाचिनि सार्वधातुके परे ॥ भावो धात्वर्थः । तस्यैकत्वात् तङाद्येकवचनं सर्वत्र ।

---

अथ भावकर्मप्रक्रिया । भावकर्मविवक्षायामिति । भावो धात्वर्थः क्रियात्मकः । कर्म पारिभाषिकम् ।

भाव । अयं प्रत्ययनियमः भावकर्मणोरेवात्मनेपदमिति । नार्थ-नियमः । अर्थनियमे हि को भवता लाभो लब्ध इति कर्मणि घञ् दुर्लभः स्यात् ।

सार्व । भावकर्मवाचिनीति । ताच्छील्ये आवश्यके वा णिनिः । तस्यैकत्वादिति । तस्य भावस्य । स ह्याख्यातवाच्यः साध्यरूपः प्रतीयते । साध्यरूपत्वाच्च निवृत्तभेदः । तदुक्तम् । निवृत्तभेदा सर्वैव क्रियाख्यातेभिधीयते । श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ॥ इति । तस्मादाख्यातवाच्यस्य भावस्य संख्याद्ययोगात् तङाद्येकवचनमेव स्यादित्यर्थः । तर्हि तस्यैकत्वादित्ययुक्तम् । मैवम् ।

---

१. Before it—श्रीगणेशाय नमः । $D_3$. २. लस्य $N_1$, $D_4$ ; तस्य तिबादयः dropped $D_3$. ३. Dropped $N_1$. ४. After it—प्रथमपुरुषस्य P. ५. $Dc_3$ has भावकर्मप्रक्रिया and लकारार्थप्रक्रिया after पदव्यवस्था. ६. °ति न युक्तम् । $Dc_3$.

कर्तुस्तिङानभिधानात्[1] कर्तरि तृतीया । मया भूयते ।[2] [3]भूयेत । भूयताम् । अभूयत । अकर्मकोप्युपसर्गवशात् [4]क्वचित् सकर्मकः । ततः कर्मणि लडादयः । तिङोक्तत्वात् कर्मणि न द्वितीया । अनुभूयते आनन्दश्चैत्रेण त्वया मया [5]वा । अनुभूयेते । अनुभूयन्ते ।[6] त्वमनुभूयसे । [7]अहं अनुभूये । इत्यादि ।

---

द्व्याद्प्रतियोगिकैकत्वाभावेप्यभेदैकत्वादेकवचनमुत्सर्गात्[8] करिष्यते इति भाष्यम् । अत एव मध्यमोत्तमपुरुषावपि न स्तः । शेषे प्रथमाम्नानात् । अत एवोक्तम् 'तङाद्येकवचनम्'[9] इति । मया भूयत इति । भू सत्तायाम् । भावो विवक्षितः । भूयेतेति । 'विधि-निमन्त्रणा—' इति लिङ् । 'लिङः सीयुट्' । सलोपः । यक् । आद्गुणः । यलोपः । भूयतामिति । लोट् । 'आमेतः' । अभूयतेति । लङ् । 'लुङ्लङ्—' इत्यट् । अकर्मकोपीत्यादि । अर्थान्तरे वर्तमान इति भावः । एतच्च तिङन्तप्रारम्भ एव विवृतम् । अनुभूयते आनन्दश्चैत्रेण त्वया मया वेति । अत्रानुपूर्वो भवतिरनुभवे वर्तत इति सकर्मकः । अत्रानन्दे कर्मण्युपपदे समानाधिकरणे विवक्षिते 'शेषे प्रथमः' इति प्रथमः । त्वमनुभूयसे इति । अत्र युष्मदि कर्मण्युपपदे समानाधिकरणे विवक्षिते 'युष्मद्युपपदे' इति मध्यमः । अहमनुभूये इति । अस्मदि कर्मणि समानाधिकरण उपपदे विवक्षिते उत्तमः । आदिना लिङादयः । अनुभूयेत । अनुभूयेयाताम् । अनुभूयेरन् । इत्यादि लिङ् । अनुभूयताम् । अनुभूयेताम् । अनुभूयन्ताम् । इत्यादि लोट् । अन्वभूयत । अन्वभूयेताम् । अन्वभूयन्त । इत्यादि ङ् ।

---

१. °स्तङा $D_1$. २. After it—युवाभ्यां भूयते $D_2$; युवाभ्यां भूयते । युष्माभिर्भूयते $B_2$, $D_4$. ३. $D_2$ drops it. ४. $D_2$ and P, $B_2$ drop it; C, $N_1$ have कश्चित्. ५. C drops it. ६. त्वमनु° $D_2$. $D_3$, $D_4$, $B_2$. ७. P drops अहम्. ८. °मुत्सर्गः $Dc_3$. ९. °वचनानि $Dc_3$.

**च्चिण् भावकर्मणोः ॥३।१।६६॥**

धातोश्च्लेश्चिण् स्यात् भावकर्मवाचिनि तशब्दे परे ॥ णित्त्वाद्वृद्धिः । अभावि । अन्वभावि ।

**स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा च्चिण्वदिट् च ॥६।४।६२॥**

उपदेशेऽजन्तेभ्यो हनादेश्च परेषां भावकर्मणोर्विहितानां स्यादीनामिड्वा स्यात् स च इट् चिण्वच्च ॥ चिण्वद्भावाद् वृद्धिः । अन्वभाविषाताम् । अन्वभविषाताम् । बुभूवे । बभूवे ।

---

च्चिण् । णित्त्वाद्वृद्धिरिति । 'अचो ञ्णिति' इति । अभावीति । भावे । 'चिणो लुक्' इति तशब्दस्य लुक् । अन्वभावीति । कर्मणि ।

स्यसिच् । हनादेरिति । हन हिंसागत्योः । ग्रह उपादाने । दृशिर् प्रेक्षणे । चिण्वद्भावे प्रयोजनान्यभियुक्ताः पठन्ति ।

'चिण्वद् वृद्धिर्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती' ॥ इति ।

अन्वभाविषातामिति । 'अचो ञ्णिति' इति वृद्धिः । युक् 'आतो युक् चिण्कृतोः' इति । अदायिष्यत हन्तेर्घत्वं 'हो हन्तेः—' इति । अघानिष्यत । 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत्युक्तेर्दीर्घः । शामिष्यते । शमिष्यते । ननु चात्र 'णेरनिटि' इति णिलोपो न स्यात् सेट्त्वादित्यत आह—इट् चासिद्ध इति । अयमिट्

---

१. $D_2$ drops it. २. परे $N_1$. ३. मिट् स इट् च्चिण्वद्वा । $D_3$. ४. $D_2$ and P, $B_2$, $N_1$ drop it. ५. च्चिण्भावाद् C. ६. Dropped $D_3$. ७. After it—इति केचित् $D_2$, $D_4$, $B_2$ केचित् लिटि भाव कर्मणोर्भवतेरित्यस्याभ्यासोकारस्यात्वमिच्छन्ति । तन्मते । अनुबभूवे । बभूवे N. ८. Before it—इष्यते अयमिट् । असिद्धवदत्राभादित्यसिद्धः । $Dc_3$.

भाविता । भविता । भाविषीष्ट । भविषीष्ट । भाविष्यते । भविष्यते । अभाविष्यत । अभविष्यत । अकृत्सार्वधातुकयोर्दीर्घः । स्तूयते विष्णुः । अस्तावि । अस्ताविषाताम् । अस्तोषाताम् हरिहरौ भक्तेन । तुष्टुवे । स्ताविता । स्तोता । स्ताविषीष्ट । स्तोषीष्ट । स्ताविष्यते । स्तोष्यते । अस्ताविष्यत । अस्तोष्यत । गुणोऽर्तीति गुणः । स्मर्यते । अर्यते । सुटो बहिरङ्गत्वान्न गुणः ।

---

'असिद्धवदत्राभात्' इत्यसिद्धः । ननूदात्तेभ्यः परत्वाद्वलादिलक्षणेनेटा भाव्यम् । स च सिद्ध इत्यत आह—नित्य इति । विघात्यनित्यः । इहाङ्गकार्यातिदेशः । तेन हनिणिङादेशा न । घानिष्यते । आयिष्यते । अध्यापिष्यते । अन्वभविषातामिति । 'आर्धधातुकस्येड् वलादेः' । बुभूवे । लिट् । 'लिटस्तझयोः—' इत्येश् । द्वित्वम् । 'भवतेरः' इत्यत्र कर्तृनिर्देशाद् भावकर्मणोर्नात्वम् । बभूव इति केषांचिन्मतेनात्वम् । भावितेति । चिण्वदिट् । भवितेति । इट् । भाविषीष्टेति । आशीर्लिङ् । सर्वाण्येतानि भावे । कर्मणि तु अनुभूयते । अनुबभूवे । अनुभाविता । अनुभविता । अनुभाविषीष्ट । अनुभविषीष्ट । अनुभाविष्यते । अनुभविष्यते । अन्वभाविष्यत । अन्वभविष्यत । इति ज्ञेयम् । उपदेशग्रहणं भाविष्यत इत्यत्र गुणायादेशयोः कृतयोर्न स्यादित्येवमर्थम् । स्तूयते विष्णुरिति । ष्टुञ् स्तुतौ । सकर्मकत्वात् कर्मणि लकारः । स्तूयते । स्तूयेत । स्तूयताम् । अस्तूयत । अस्तावीति । लुङ् । च्लिः । चिण् । वृद्ध्यावादेशौ । चिणो लुक् । अस्ताविषातामिति । चिण्वदिट् । अस्तोषातामिति । चिण्वदिडभावे 'एकाचः—' इति इडभावः । तुष्टुवे इति । 'शर्पूर्वाः खयः' । उवङ् । स्मर्यत इति ।

---

१. भविषीष्ट । भाविषीष्ट, &c. in this order $N_1$. २. अन्वभाविष्यत । अन्वभविष्यत $D_2$, $D_4$, $B_2$. ३. After it—अस्ताविषत C. ४. $D_2$ drops स्तोष्यते । अस्ताविष्यत । अस्तोष्यत; P, $N_1$, $D_4$ drop the last two forms. ५. निघानि° $Dc_3$. ६. After it—अयमिट् असिद्धवदत्राभादित्यसिद्धः । $Dc_3$. ७. बभूवे $Dc_1$.

रिङादेशः । संस्क्रियते । [1]लोपः । [2]स्रस्यते । इदितस्तु नन्द्यते । संप्रसारणम् । इज्यते । [3]अयङ् यि क्ङिति । शय्यते ।

तनोतेर्यकि ॥६।४।४४॥

तनोतेर[4]ाकारोन्तादे[5]शो वा स्याद्यकि च ॥ तायते । तन्यते । [6]ये विभाषा । जायते । जन्यते ।

---

स्मृ आध्याने । सकर्मकत्वात् कर्मणि लकारः । स्मर्येत । स्मर्यताम् । अस्मर्यत । अस्मारि । अस्मारिषाताम् । अस्मृषाताम् । सस्मार । स्मारिता । स्मर्ता । स्मारिषीष्ट । स्मृषीष्ट । स्मारिष्यते । स्मरिष्यते । अर्यत इति । ऋ गतौ । संस्क्रियत इति । डुकृञ् करणे । सकर्मकः । 'संपरि—' इति सुट् । 'रिङ् शय—' इति रिङ् । चिण्वदिडादि पूर्ववज् ज्ञातव्यं सिजादिषु । स्रस्यत इति । स्रंसु अवस्रंसने । भावे लकारः । 'अनिदिताम्—' इति न्लोपः । नन्द्यत इति । टुनदि समृद्धौ । भावे लः । इदित्त्वान्नलोपाभावः । इज्यत इति । यज देवपूजादिषु । कर्मणि लकारः । अकर्मकत्वविवक्षायां भावे वा । 'वचिस्वपि—' इति संप्रसारणम् । शय्यत इति । शीङ् स्वप्ने । भावे लकारः ।

तायत इति । तनु विस्तारे । कर्मणि लः । जायत इति । जन जनने । भावे लः ।

---

१. न्लोपः P; नलोपः $D_3$; अनिदितामित्यादिना न्लोपः । $N_1$, $D_4$. २. भ्रस्यात् P. अनिदितामित्यादिनाल्लोपः । भ्रस्यते $D_2$, $B_2$ (भ्रश्यते $B_2$), $D_4$. ३. अयाङि क्ङिति $D_3$. ४. °राकारः स्याद्यकि वा $D_2$, $B_2$. ५. °देशः स्याद्यकि वा P, $D_3$; °देशो वा स्याद्यकि $D_1$. ६. $D_1$ has ये विभाषा । जायते । जन्यते before अयङ्यि क्ङिति.

तपोनुतापे च ॥३।१।६५॥

तपतेश्च्लेश्चिण्[1] न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त पापिना । घुमास्थेतीत्वम् । दीयते । एशः आदिशित्वाभावादात्वम् । जग्ले ।

आतो युक् चिण्कृतोः ॥७।३।३३॥

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च ॥ अदायि। अदायिषाताम्[3] । अदिषाताम् । दायिष्यते[4] । दास्यते । हन्यते । हो हन्तेरिति कुत्वम् । अचिण्णलोरित्युक्तेर्हनस्तो न ।

तपः । अनुतापः पश्चात्तापः । अन्वतप्त पापिनेति । तप संतापे । कर्मणि लुङ् । 'झलो झलि' इति सिचो लोपः । यत् पूर्वं पापं कर्म कृतं तेन पश्चात्तप्तः[6] । अभिहत इत्यर्थः । दीयत इति । डुदाञ् दाने । कर्मणि लः । जग्ले इति । ग्लै हर्षक्षये । भावे लः । 'आदेच उपदेशे' इत्यात्वम् । द्वित्वम् । आलोपः ।

आतः । कृति दायः । चिण्कृतोरिति किम् । ददौ । चौडिः । बाह्वादित्वादिञ् । अदायीति । दाञो लुङि चिणि रूपम् । अदायिषातामिति । 'स्यसिच्सीयुट्—' इति चिण्वदिट् । अदिषातामिति । 'स्थाघ्वोरिच' इतीदन्तादेशः सिच्च कित् । दायिष्यते । दास्यत

१. °श्चिणादेशः $D_1$. २. Dropped $D_3$. ३. आदायिषाताम् । आदिषाताम् $B_2$. ४. Before it—स्थाघ्वोरिच $D_2$, $D_4$, $B_2$. ५. इति dropped $D_4$. ६. पश्चात्तापः $Dc_3$.

अघानि । अघानिषाताम् । [1]अहसाताम् । पक्षे वधादेशः । अवधि । अवधिषाताम् ।[2] गृह्यते । अग्राहि । चिण्वदिटो न दीर्घत्वमिष्टम् । अग्राहिषाताम् । अग्रहीषाताम् । दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः किन्त्वादम् न । अदृक्षाताम् । णिलोपः । शम्यते मोहो मुकुन्देन ।

---

इति । चिण्वदिड् वा । तदभावे नेट् । हन्यत इति । हन हिंसागत्योः । कर्मणि लः । अघानीति । लुङ् । चिण् । अघानिषातामिति । चिण्वदिट् । अहसातामिति । चिण्वदिडभावे 'हनः सिच्' इति किन्त्वादनुनासिकलोपः 'अनुदात्तोपदेश—' इति । पक्षे वधादेश इति । 'आत्मनेपदेष्वन्यतरस्याम्' इति । एतच्च परमतेनोक्तम् । स्वमते तु वधादेशोत्र न भवत्येव । तथोक्तं महाभाष्ये[4] । 'चिण्वद्भावो भवति विप्रतिषेधेन । अथेदानीं चिण्वद्भावे कृते पुनः प्रसङ्गाद्वधभावः कस्मान्न भवति । सकृद् गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति कृत्वा । हनिणिङादेशप्रतिषेधश्च' इति । गृह्यते इति । ग्रह उपादाने । कर्मणि लः । 'ग्रहिज्या—' इति संप्रसारणम् । अग्रहीषातामिति । वल इट् । 'ग्रहोलिटि' इति दीर्घः । दृश्यत इति । दृशिर् प्रेक्षणे । कर्मणि लः । अदर्शिषातामिति । चिण्वदिट् । सिचः किन्त्वादिति । दृशेश्चिण्वदिडभावे 'लिङ्सिचौ—' इति सिचः किन्त्वात् 'सृजिदृशोः—' इत्यम् नेत्यर्थः । शम्यत इति । शमु उपशमे । हेतुमण्णिच् । अमन्तत्वान्मितां ह्रस्वः । ततो यकि कृते 'णेरनिटि' इति णिलोपः[5] । कर्मणि लकारं दर्शयति मोह इत्यादिना ।

---

१. D$_2$, P drop it. २. After it—अवधिषत D$_3$. ३. Before it—लिङ्सिचावात्मनेपदेषु । N$_1$. ४. भाष्ये Dc$_3$. ५. णेर्लोपः Dc$_3$.

चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥६।४।९३॥

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् ॥

द्वितीये[1] णिचि दीर्घविधौ त्वजादेशो न स्थानिवदिति पाक्षिक-दीर्घार्थं दीर्घोक्तिः । ह्रस्वोक्तावाद्यणिच्लोपस्य[2] स्थानिवत्त्वात्

---

चिण्णमुलोः । ननु च 'मितां ह्रस्वः' इति ह्रस्वग्रहणमनुवर्त्यानेन[3] विकल्पमात्रं विधेयम् । किं दीर्घग्रहणेन । विकल्पमात्रविधानेऽपीष्टं सिध्यति । तथा हि । यदानेन ह्रस्वो विधीयते तदाशमीत्यादि सिध्यति । यदा ह्रस्वो न तदात उपधाया दीर्घो विहितस्तस्य स्वेनैव रूपेणावस्थानादशामीत्याद्यपि सिध्यति इत्यतो दीर्घग्रहणं व्यर्थमिति शङ्कानिराकरणायाह—द्वितीये णिचीत्यादि । शमयन्तं प्रयुङ्क्ते इति शमेर्ण्यन्तात् प्रयोजकव्यापारे द्वितीये णिचि कृते पूर्वणिलोपे च लुङि चिणि[4] चैव कृते अशामीति पाक्षिकदीर्घो भाव्य एतदर्थं दीर्घोक्तिः । ननु च दीर्घोक्तावप्यत्र पाक्षिकं दीर्घत्वं न स्यात् । तथा हि । चिण्णमुल्परे[6] णौ मितामङ्गानां ह्रस्वत्वं (दीर्घत्वं) विधातव्यम् । यश्चात्र णिश्चिण्परः नात्र मिदङ्गम् । 'अचः परस्मिन्—' इति स्थानिवद्भावेन पूर्वणिचा व्यवधानात् । यस्मिंश्च मिदङ्गं नासौ चिण्परः । परेण णिचा व्यवधानादित्याशङ्क्याह—**दीर्घविधौ त्वजादेशो न स्थानिवदिति** । 'न पदान्त—' इति सूत्रेणेत्यभिप्रायः । ननु च ह्रस्वविकल्पविधावपीष्टं सिध्यतीत्याशङ्कामपाकरोति—ह्रस्वोक्ताविति । न हि ह्रस्वविधौ स्थानिवद्भावः केनचित् प्रतिषिद्धस्तेन ह्रस्वे[7] विकल्पेन विधीयमाने णिलोपस्य

---

१. द्वितीयेति णिचि $D_1$. २. णिलोपस्य N, $D_3$, $D_4$. ३. तेनं for न $Dc_3$. ४. णिचि च कृते $Dc_3$. ५. पाक्षिकदीर्घभावाय दीर्घोक्तिः । $Dc_3$. ६. चिण्परे णमुल्परे च णौ &c. $Dc_3$. ७. ह्रस्वविकल्पेन $Dc_3$.

पाक्षिक उपधाह्रस्वो न स्यात्[1] । अशमि । अशामि । ण्यन्तत्वे-नाजन्तत्वाच्चिण्वदिट् । तस्य असिद्धवदत्राभादिति णिलोपं प्रति असिद्धत्वाण्णिलोपः । अशामिषाताम् । अशमिषाताम् ।[2] चिण्वदिडभावे । अशमयिषाताम् । ण्यन्तत्वाभावे शम्यते मुनिना ।

**नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥७।३।३४॥**

मान्तस्य सेट उपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति च न त्वाचमेः[3] । अशमि । अदमि । अनाचमेः[4] किम् । आचामि । आचमिकमिवमीनामिति वक्तव्यम् । अकामि ।

---

स्थानिवत्त्वाद्विकल्पेन ह्रस्वो न स्यादित्यर्थः । **अशमि । अशामीति ।** व्याख्यातप्रायम् । **अशमयिषातामिति** । 'आर्धधातुकस्येड्वलादेः' । णेर्गुणायादेशौ । **शम्यते मुनिनेति** । भावे लः ।

**नोदात्तो** । उपदेशे उदात्तः उदात्तोपदेशः । अस्मादेव साधुः । उदात्तोपदेशस्येति किम् । अनामि । अगामि । कथमुद्यम उपरम इत्येतौ । 'यम उपरमे' । 'अड उद्यमे' इति निपातनात् । यन्मते त्वपाणिनीयो धातुपाठेऽर्थनिर्देशस्तन्मते संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः । उपदेशे किम् । शमी तमीत्यादि यथा स्यात् । शमादिभ्यो घिनुण् । असत्युपदेशे प्रत्ययस्वरे कृते धातोरनुदात्तत्वात् शमीत्यादि न स्यात् । उपदेशेत्यनेनाद्यवस्था लक्ष्यते । **अशमि । अदमीति ।** भावे लः । **आचामीति** । चमु अदने । आङ्पूर्वः । **अकामीति** । कमु

---

१. उपधाया ह्रस्वो $D_2$, P. २. After it—शमयांचक्रे । शामिता । शमिता । इत्यादि $D_2$. ३. चामेः $N_1$. ४. °चामेः $N_1$.

अवामि । अमुचमुविश्रमां वेति केचित् । आमि अमि मा । अचामि । अचमि । व्यश्रामि । व्यश्रमि । वध हिंसायाम् । जनिवध्योश्चेति न वृद्धिः । अवधि । जाग्रो विचिण्णल्ङित्सु इत्युक्तेर्वृद्धिः । अजागारि । ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति केचित् । अजागरि । अजागारि ।

**भञ्जेश्च चिणि ॥६।४।३३॥**

भञ्जेर्नलोपो वा स्याच्चिणि ॥ अभाजि अभञ्जि ।

**विभाषा चिण्णमुलोः ॥७।१।६९॥**

लभेर्नुमागमो वा स्याच्चिण्णमुलोः परतः ॥ अलम्भि । अलाभि । व्यवस्थितविकल्पत्वात् प्रादेर्नित्यं नुम् । प्रालम्भि ।

---

कान्तौ । **अवामीति** । टुवमु उद्गिरणे । त्रिष्वपि कर्मणि लः । **आमि अमि मेति** । अम रोगे । 'न माङ्योगे' इत्यडभावः । **व्यश्रामि** । **व्यश्रमीति** । श्रमु तपसि खेदे च । **अजागारीति** जागृ निद्राक्षये । भावे लः । चिण् । ण्यन्तेति । तथोक्तं **मुग्धबोधे** । 'जेः परयोरिण्णमोस्तु घंश्च जागुश्च स्वोर्घः' इति । अजागरि । हेतुमण्णिच् । ततः कर्मणि लः । ण्यन्तत्वेनाजन्तत्वाच्चिण्वदिट् । तस्य 'असिद्धवदत्राभात्' इति णिलोपं प्रत्यसिद्धत्वाण्णिलोपः ।

**भञ्जेः** । **अभाजीति** । भञ्जो आमर्दने । नलोपपक्षे 'अत उपधायाः' इति वृद्धिः । **अलम्भीति** । डुलभष् प्राप्तौ । कर्मणि लुङ् । च्लिः । चिण् । **प्रादेरिति** । उपसर्गात् परस्येत्यर्थः ।

---

१. अमु° $D_1$. २. मु $D_1$. ३. आमि मा आमि मा $B_2$; अमि मा आमि वा $N_1$. ४. मा अमि $D_4$, C; आमि वा $D_3$. ५. After it अजानि $D_1$. ६. अजागारि । अजागरि । $D_3$.

यदा कर्मैव कर्तृत्वेन विवक्ष्यते तदा सकर्मकाणामप्यकर्मकत्वात् कर्तरि भावे च लकारः।

**कर्मवत् कर्मणा तुल्यक्रियः ॥३।१।८७॥**

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात्। कर्मवत्त्वाद्यगात्मनेपदचिण्चिण्वदिटः स्युः। उक्तं च

---

अथ कर्मकर्तरि प्रक्रिया। **यदा कर्मैवेति**। कर्मादीनां कारकाणां शक्तिरूपत्वात् शक्तेश्च धर्मरूपत्वाद्धर्मस्य च धर्मरहितत्वात् कर्मशब्देन कर्मशक्त्याश्रयं तण्डुलादि द्रव्यमुच्यते। तद्यदा बाह्यकर्तृव्यापारनिवृत्तौ स्वव्यापारमात्रेवतिष्ठते तदा स्वतन्त्रत्वात् कर्मकर्तृव्यपदेशं लभते। तदुक्तं **हरिणा**—

'निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम्।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेवतिष्ठते'॥ इति।

तत्तु कर्म कर्तृत्वं प्राप्तं कर्मकर्तृ इत्युच्यते यथा लोके ब्राह्मणः सन् भ्रमणतां ब्राह्मणभ्रमण उच्यते।

**कर्मवत्**। कर्मशब्दोयं गौणः। तस्मादुपचारेण कर्मस्थायां क्रियायां वर्तते। यथा मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्दः पुरुषेषु। उपचारस्य तु प्रयोजनं कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवद्भावो यथा स्यात् कर्तृस्थभावकानां कर्तृस्थक्रियाणां च मा भूदित्येतत् सर्वं मनसि कृत्वाह—**कर्मस्थयेति**। **कर्ता कर्मवत् स्यादिति**। 'कर्तरि शप्' इत्यनुवृत्तः कर्ता प्रथमया विपरिणम्यमानः कर्मवत् स्यात्। तस्य च कर्मकर्तृव्यपदेशार्हत्वे **दुर्गसिंहोक्तिं** प्रमाणयति—**उक्तं चेति**।

---

१. कर्तृत्वेन विवक्षितं $D_3$; कर्तृत्वे विवक्ष्यते N. २. Dropped $D_3$. ३. कर्मस्थाक्रियया $D_1$. ४. After this—कर्मस्थभावकर्मक्रियाणां च कर्ता कर्मवद् भवति। न कर्तृस्थभावकानां कर्तृस्थक्रियाणां कर्मस्थः पचतेर्भावः कर्मस्थाविर्भेदः क्रिया। मांसासिभावः कर्तृस्थः कर्तृस्थावगमेः क्रिया। कर्मवत्त्वा° C; $N_1$ (कर्मस्थभावकानां कर्मस्थाक्रियाणां च $N_1$; also न तु कर्तृस्थ° $N_1$; कर्मस्थावभिदेः क्रिया $N_1$).

'क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैर्यस्मात् कर्मकर्तेति तद्विदुः' ॥

परत्वाच्छपि प्राप्ते कर्मकर्तरि यग्वाच्यः । कर्तरि कर्मेत्यनुवृत्तौ शेषात् कर्तरीति पुनः कर्तृग्रहणात् कर्तैव यः कर्ता तत्रैव परस्मैपदं न कर्मकर्तरि । भिद्यते काष्ठं स्वयमेव । अत्र कर्तु-स्तिङोक्तत्वात् प्रथमा । अभेदि । पच्यते ओदनः स्वयमेव । अपाचि । यदा भावे लकारस्तदा काष्ठात् कर्तरि तृतीया ।

---

**क्रियमाणमिति** । क्रियमाणं क्रियया ईप्स्यमानं कर्म ओदनादि यद्यदा स्वयमेवात्मनैव न च कर्त्रन्तरेण प्रसिध्यति विक्लेदादि-कमुपगच्छति । किंविशिष्टं कर्म । सुकरैरनायाससाध्यैः स्वैरात्मीयै-र्गुणैर्धर्मैर्विक्लेदाद्यल्पत्वादिभिर्विशिष्टं यस्मात् अतः कर्तृत्वाद्धेतोस्तदा कर्मकर्तेति विदुः कर्मकर्तृशब्देन व्यपदिशन्तीत्यर्थः । **भिद्यते काष्ठं स्वयमेवेति** । अत्र कर्तरि लकारः । स्वयमित्यव्ययं तृतीयान्तात्म-शब्दार्थे वर्तते । स्वयमात्मना करणभूतेनेत्यर्थः । भिद्यते विदीर्यते । विदारमात्रवचनो ह्यत्र भिदिः । धातूनामनेकार्थत्वात् । भेदनं प्रति काष्ठमेव कर्तृ । एवं पच्यते ओदन इत्यादौ विक्लेदादिमात्रवचनाः पच्यादयो ज्ञेयाः । **अभेदीति** । लुङ् । च्लिः । चिण् । तलोपः । **यदा भावे लकार इति** । अतिदेशं विनापि च तत् कार्यं स्यात् तदापि भाव्यमिति कृत्वा तद्वत्करणमिति भावः । **कर्तरि तृतीयेति** । कर्तुस्तिङानभिधानात् । लोनुवृत्तेरिति । लिङ्याशिष्यङ् इति द्विलकारको निर्देशः । तत्र लोनुवृत्तेरित्यर्थः । कर्मवदित्यत्र कर्मणेति किम् । करणाधिकरणाभ्यां तुल्याक्रियस्य मा भूत् । साध्वसिः छिनत्ति साधु स्थाली पचति । 'धातोरेकाचः—' इति धात्वनुवृत्तेरेक-संख्यायाश्च विवक्षया यस्मिन् धातौ कर्मणोपस्थापिते यत् कर्म

---

१. च $D_1$. २. कर्तरि $D_4$. ३. तत्र P, $D_2$, $B_2$. ४. कर्त्रा $Dc_3$.

लोनुवृत्तेस्तिङ्वाच्यस्यैव कर्तुःकर्मवत्त्वम् । तेनात्र न द्वितीया । भिद्यते काष्ठेन ।

तपस्तपः कर्मकस्यैव ॥३।१।८८॥

तपः कर्मकस्यैव तपेः कर्ता कर्मवत् स्यात् ॥ तप्यते तपस्तापसः । तपोर्जयतीत्यर्थः । तपोनुतापे चेति कर्मकर्तरि चिण् न । अतप्त । तपःकर्मेति किम् । उत्तपति सुवर्णम् । श्रद्धावत्कर्तृकात् सृजो यक्चिणौ कर्तरीति केचित् । सृज्यते स्रजं भक्तः । असर्जि ।[4]

---

तस्मिन्नेव धातौ स यदि कर्ता स्यात् तदा कर्मवद्भावादिति । इह न । पचत्योदनं देवदत्तः । राध्यत्योदनः स्वमेव । कर्मस्थभावकानां कर्मस्थक्रियाणामेव भवति । कर्तृस्थभावक्रियाणां नेति किम् । गच्छति ग्रामम् । गच्छति ग्रामः स्वयमेव । अत्र गमेः क्रिया कर्तृस्था । माससहचरित आसिः मासासिः । अपरिस्पन्दसाधनसाध्योभावः । सपरिस्पन्दसाधनसाध्या क्रिया ।

तपः । पूर्वं क्रियासादृश्य एव कर्मवद्भावो विहितः । स क्रिया-वैसादृश्ये न प्राप्नोतीति विध्यर्थमिदम् । तप्यते तपस्तापस इति । अत्रोपवासादिकं तपः तापसं तपतीति तापसस्य कर्मवत् । कर्मावस्थायां तपेः क्लेशार्थता । तापसस्य कर्त्रवस्थायां तपेर्र्जनार्थता । तप्यते तपस्तापस इति अर्जयतीत्यनेन दर्शयति । अतप्तेति । 'झलो झलि' इति सिचो लुक् । श्रद्धावदिति । तथा बोपदेवपण्डितैः 'सृजः श्राद्धयात्मनेण् च' इति यक्चिणात्मनेपदानि विहितानि भाष्ये इत्युक्तम् । 'सृजि-युज्योः श्यंस्तु । सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । श्यंस्तु भवति । सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यश्चिणात्मनेपदार्थः । सृज्यते मालाम् । असर्जि मालामिति । युजेस्तु न्याय्ये कर्मकर्तरि यकोभावाय । युज्यते ब्रह्मचारी योगम्' इति ।

---

१. तपतेः C. २. कर्तरि $D_3$. ३. कर्मकर्तरीति C. ४. After this—श्रद्धावत्कर्तृकात् किम् । मालां करोति मालिकः । व्यन्यसृष्ट मालो मिथुनम् C, N (सृजति मालां मालिकः । व्यत्यसृष्ट माला मिथुनम् N).

कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥१।३।९०॥

अनयोः कर्मकर्तरि श्यन् परस्मैपदं[1] वा स्तः ॥ कुष्यति कुष्यते वा पादः स्वयमेव । रज्यति । रज्यते ।[2] व्यवस्थितविकल्पत्वादार्धधातुके न । अकोषि । अरञ्जि ।

अचः कर्मकर्तरि ॥३।१।६२॥

अजन्ताच्च्लेश्चिण्[3] वा स्यात् कर्मकर्तरि[4] तशब्दे ।[5] अकारि । अकृत ।[6]

दुहश्च ॥३।१।६३॥

अदोहि । अदुग्ध ।[7]

---

कुषिरजोः । कुष निष्कर्षे । रञ्ज रागे । यगात्मनेपदयोरपवादौ । रज्यतीति । 'अनिदिताम्—' इत्यनुनासिकलोपः । अकोषीति । कर्मवद्भावाच्चिण् ।

अचः । प्राप्तविभाषेयम् । अकारीति । 'अचो ञ्णिति' इति वृद्धिः । अकृतेति । 'ह्रस्वादङ्गात्—' इति सिचो लोपः । तस्यासिद्धत्वात् गुणः प्राप्तः 'उश्च' इति कित्त्वान्न ।

दुहः । दुह प्रपूरणे । अस्माद्धातोश्चिण् वा स्यात् कर्मकर्तरि तशब्दे परे । अदुग्धेति । 'शल इगुपधा—' इति क्सः । तस्य 'लुग्वा दुह—' इति लुक् । 'दादेः—' इति घः । धत्वम् । जश्त्वम् ।

---

१. पदं $N_1$. २. After it—वा वेत्स्त्र स्वयमेव $B_2$; वा $D_3$. ३. च्चिणादेशः स्याद्वा N; कर्मकर्तरि च्चिण् वा स्यात् $D_3$. ४. कर्मकर्तृतशब्दे $D_2$. ५. After it—परे $D_3$. ६. After it—कटः स्वयमेव $B_2$, N. ७. After it—अधुक्षत् गौः स्वयमेव पयो मुंचति $B_2$, $N_1$ (मुञ्चतीत्यर्थः N).

**न रुधः ॥३।१।६४॥**

रुधश्च्लेः[1] कर्मकर्तरि चिण् न ॥ अरुद्ध । पचदुहान्यद्विकर्मकाणां कर्मकर्ता[2] न कर्मवदिति केचित् । चिनोति वृक्षः फलानि स्वयमेव[3] । द्विकर्मकाभ्यां पचदुहाभ्यां कर्मकर्तरि चिण् नेति केचित् । अपक्त्वाम्रः फलम् । अदुग्ध गौर्दुग्धम् ।

**न दुहस्नुनमां यक्चिणौ ॥३।१।८९॥**

एषां कर्मकर्तरि यक्चिणौ न स्तः ॥ दुहेरनेन यग्निषिध्यते । चिण् प्रागेव विकल्पितः । दुग्धे । प्रस्नुते[4] ।[5] चिण्वदिटो न निषेध इति केचित् । अस्नाविष्ट । स्नुक्रमोरिति नेट् । अस्नोष्ट[6] । नमते । अनंस्त ।[7] णिश्रन्थिग्रन्थिब्रूञामात्मनेपदाकर्मकाणां च

---

न रुधः । रुधिर् आवरणे । अरुद्धेति । 'झलो झलि' इति सिचो लोपः । तस्यासिद्धत्वात् लघूपधगुणः प्राप्तो 'लिङ्सिचौ—' इति कित्त्वान्न । धत्वजश्त्वे ।

न दुह । कर्मकर्तरीति विशेषणम् शुद्धे कर्मणि भावे वा प्राप्तयोः प्रतिषेधार्थम् । दुग्ध इति । शप् । अदादित्वात् तस्य लुक् । धत्वम् । 'झषस्तथो—' इति धः । जश्त्वम् । प्रस्नुत इति । स्नु प्रस्रवणे । चिण्वदिट इति । तथोक्तं मुग्धबोधे । 'ञिस्नुश्रिमाढात्त्वामिण्' इति । नमत इति । णमु प्रह्वत्वे शब्दे च । अन्तर्भावितण्यर्थो णमिरत्र । एवं हि कर्मस्थक्रियः स्यात् । यथा नमयति दण्डं देवदत्तः । नमयते दण्डः स्वयमेवति ण्यन्तावस्थायाम् ।

---

१. च्लेः dropped N. २. कर्ता $D_2$. ३. स्वयमेव फलानि N. ४. स्नुते $D_3$. ५. After it—गौः $D_2$, $D_4$, $B_2$; गौः स्वयमेव N. ६. अस्नोष्ट । दण्डः स्वयमेव । N. ७. Before it—नमि अन्तर्भूतण्यर्थः । नमयति दण्डं देवदत्तः । N.

यक्चिणौ न । कारयते ।[1] ण्यन्तात् कर्मकर्तरि चङ् वेति केचित् । अचीकरत । अकारयिष्ट[2] । अकारिष्ट । श्रथ्नीते । अश्रन्थिष्ट[3] । ग्रथ्नीते । अग्रन्थिष्ट ।[4] ब्रूते । अवोचत । आहते । आहत ।[5] आवानिष्ट ।[6] आवधिष्ट । कॄगॄश्रिञ्[7] भूषार्थेभ्यः[8] सन्नन्ताच्च यक्चिणौ न ॥ श्रिञ्वर्जात्[9] चिण्वद्डिडापि नेति केचित् । किरते । अकीर्ष्ट । गिरते ।

---

कारयते इति । ण्यन्तस्योदाहरणम् । अचीकरतेति । कारि अस्माच्चङि 'णौ चङि' इत्युपधाह्रस्वः । द्वित्वम् । चुत्वम् । 'सन्वल्लघुनि—' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । 'दीर्घो लघोः' । **अकारयिष्टेति** । चिण्वदिडभावे । **अकारिष्टेति** । चिण्वदिटि । **श्रथ्नीते ग्रथ्नीत** इति । श्रन्थग्रन्थ संदर्भे । श्रा । 'ई हल्यघोः' । 'अनिदिताम्—' इति न्लोपः । **अवोचतेति** । 'ब्रुवो वचिः' इति वचिः । 'अस्यति वक्ति—' इत्यङ् । 'वच उम्' । अत्राप्यन्तर्भावितण्यर्थत्वात् कर्मस्थक्रियत्वम् । **आहत इति** । 'आङो यमहनः' इत्यात्मनेपदम् । तद्विधानेकर्मकत्वमण्यन्तर्भावितण्यर्थः । **आहतेति** । चिण्वदिडभावे अनुनासिकलोपः । 'हनः सिच्' इति किन्त्वात् 'ह्रस्वादङ्गात्' इति सिचो लुक् । **आघानिष्टेति** । चिण्वदिट् । वृद्धिः । घत्वम् । **आवधिष्टेति** । 'आत्मनेपदेषु—' इति वधादेशः । **कॄगॄ इति** । कॄ विक्षेपे । गॄ निगरणे । श्रिञ् सेवायाम् । भूषार्था अलंकारार्थाः । **किरत इति** । तुदादित्वात् शः । 'ॠत इत्' । रपरः । **अकीर्ष्टेति** ।

---

१. After it—कटः स्वयमेव । N. २. Dropped $B_2$. ३. अश्रेथिष्ट C. ४. After it—ग्रन्थः स्वयमेव । $N_1$. ५. C, P drop it. ६. अघानिष्ट । अवधिष्ट $D_3$, $B_2$; अघानिष्ट N. ७. क्षृगॄ° $D_1$. ८. भूषणार्थेभ्यः $N_1$. ९. वर्जं $D_3$.

अगीर्ष्ट । श्रयते । अश्रयिष्ट । अश्रायिष्ट । तंसते । अतंसिष्ट । चिकीर्षते । अचिकीर्षिष्ट ।[1]

ण्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥ १ ॥

---

लुङ् । सिच् । इत् । रपरः । अश्रयिष्टेति । चिण्वदिट् । तंसत इति । तसि अलंकारे । चिकीर्षत इति । डुकृञ् । सन् । द्वित्वम् । 'अज्झन—' इति दीर्घः । उरत् । सन्यतः । ऋत इत् । रपरः । दीर्घः ।

ण्यादय इति । ण्यादयो द्विकर्मकसंग्रहश्लोके पठिताः । नीहृ इत्यादयः निष्कर्मणश्च गत्यर्थाश्च निष्कर्मगत्यर्थाः । ण्यन्ताश्चते निष्कर्मगत्यर्थाश्च ण्यन्तनिष्कर्मगत्यर्थाः । ते न्यादयश्च[2] मुख्यकर्मणि विहितं प्रत्ययं लकृत्यक्तखलर्थान् प्राप्नुवन्ति । दुह्यादिस्तस्मिन्नेव श्लोके दुहयाच्यर्थ इति पठितो गौणे कर्मणि कर्मप्रत्ययमाप्नोति । अन्ये त्वित्यादि । ण्यादिण्यन्तनिष्कर्मगत्यर्थदुहादिभ्योऽन्ये 'गतिबुद्धि—' इत्यादिसूत्रेषु पठिता यथारुचि रुचिमनतिक्रम्य यथेच्छं मुख्ये गौणे वा कर्मणि कर्मप्रत्ययं यान्तीत्यर्थः । तथोक्तं भाष्ये—

'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' ॥ इति ।

द्विकर्मणां नीप्रभृतीनाम् ।

---

१. After it—कटः स्वयमेव $N_1$. २. न्यादयो $D_1$, $D_3$, P.

निन्ये विजनमजागरि रजनिमगामि मदमयाचि संभोगम् ।
गोपी हावमकार्यत भावश्चैनामनन्तेन ॥ २ ॥

इति भावकर्मप्रक्रिया ॥

---

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणम्' इति तस्यैव वचनात् । अस्योदाहरणान्याह—निन्ये इति । अनन्तेन गोपी विजनं निन्ये नीता । अत्र गोपी मुख्यं कर्म । तदर्थत्वान्नयनस्य । अतो मुख्ये कर्मणि ले जाते गोपीत्यत्र प्रथमा । तिङभिहितत्वात् । रजनिं रात्रिमजागरि जागरिता गोप्यनन्तेन । इदं ण्यन्तनिष्कर्मण उदाहरणम् । अत्रापि तथैव मुख्यत्वम् । गोप्यनन्तेन मदमगामि प्रापिता । इदं ण्यन्तगत्यर्थस्योदाहरणम् । अत्रापि पूर्ववत् । गोप्यनन्तेन संभोगमयाचि याचिता । इदं दुह्यादेः । याचेस्तु संभोगो मुख्यः । गोपी अमुख्या । तस्याः संभोगार्थत्वात् । अत्र गौणे कर्मणि गोप्यां प्रत्ययस्ततः प्रथमा । अनन्तेन गोपी हावमनुरागोत्सवमकार्यत । अत्र गोपी गौणं तत्र प्रत्ययः । 'हृक्रोः—' इति कर्मत्वात् । एवं गोपीं भावश्चाकार्यत । अत्र भावो मुख्यं कर्म । तत्रापि प्रत्ययः । अन्ये तु यथारुचीति वचनात् । इति श्लोकार्थः । अजागरीति ण्यन्तजागर्तेश्चिणि रूपम् । केषांचिन्मतेन वृद्ध्यभावः । अगमीति । मित्त्वाद्ध्रस्वः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन्प्रसादे निरगमदमलो **भावकर्मप्रसङ्गः** ॥

---

१. हाव° $B_2$, $D_4$.

# अथ लकारार्थप्रक्रिया. ।

## अभिज्ञावचने लृट् ॥३।२।११२॥

स्मृतिपर्यायधातुयोगे भूतानद्यतने धातोर्लृट् स्यात् ॥ स्मरसि कृष्ण गोकुले वत्स्यामः ।

## न यदि ॥३।२।११३॥

यद्युक्ते प्रागुक्तं न ॥ अभिजानासि कृष्ण यद्वनेभुञ्ज्महि ।

## विभाषा साकाङ्क्षे ॥३।२।११४॥

यच्छब्देन योगेयोगेपि उक्तार्थे लृड् वा स्यात् लक्ष्य-लक्षणसंबन्धे प्रयोक्तुराकाङ्क्षायाम् ॥ स्मरसि कृष्ण वने

---

**अभिज्ञा** । वचनग्रहणं पर्यायार्थमित्यभिप्रेत्याह—**स्मृतिपर्यायेति** । पर्यायश्च जानासि स्मरसि बुध्यसे चेतयसे इति । **वत्स्याम** इति । वस निवासे । लृट् । मस् । 'स्यतासी—' इति स्यः । 'सः स्यार्धधातुके' इति सस्य तः । 'अतो दीर्घो यञि' इति दीर्घः ।

**न यदि** । यदीति सप्तमी । तेन यत्र यच्छब्दोस्ति तत्र नियमतोभिज्ञा-वचनं यच्छब्दयुक्तं स्यादित्याह—**यद्युक्ते** इति । यद्युक्तेभिज्ञा-वचने लृण्नेत्यर्थः । **अभुञ्ज्महीति** । भुज पालनाभ्यवहारयोः । अस्मादनद्यतने लङ् । 'भुजोनवने' इति तङ् । महिङ् । श्नसोरल्लोपः ।

**विभाषा** । उक्तार्थेभिज्ञावचने । लक्ष्यलक्षणसंबन्ध इति विषय-सप्तमी । लक्ष्यलक्षणे यो यः संबन्धस्तस्मिन् विषये प्रयोक्तुराकाङ्क्षा

---

१. यच्छब्दयोगे° $D_3$.

वत्स्यामः। तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्। पक्षे लङ्। एवं यच्छब्दे।

**परोक्षे लिट् ॥३।२।११५॥**

चकार। उत्तमपुरुषे वैचित्त्यात् पारोक्ष्यम्। सुप्तोऽहं किल विललाप॥ अत्यन्तापह्नवेपि लिट्। नाहं कलिङ्गं जगाम।

**हशश्वतोर्लङ् च ॥३।२।११६॥**

आभ्यां योगे लिड्विषये लङ् चाल्लिट्॥ इति हाकरोत् चकार वा। शश्वदकरोत् चकार वा।

---

स्यादित्यर्थः। **वास** इत्यादि। वासः परिज्ञातत्वाल्लक्षणम्। तेन हि चारणं लक्ष्यते। चारणं लक्ष्यमपरिज्ञातत्वात्। लक्षणं परिज्ञातं ह्यपरस्य लक्षणं स्याद्यथाग्नेर्धूमः। पक्षे लङिति। यथा स्मरसि कृष्ण वनेवसाम तत्र गामचारयामेते। एवं यच्छब्द इति। यथा स्मरसि कृष्ण यद्वने वत्स्यामस्तत्र यद्गां चारयिष्यामः। पक्षे लङ्।

**परोक्षे**। व्याख्यातचरम्। **उत्तम** इति। विक्षिप्तं चित्तं यस्य स विचित्तस्तस्य भावो वैचित्त्यम्। आत्मसाध्यापि क्रिया यदा चित्तविक्षेपान्नोपलक्ष्यते तदासौ परोक्षा भवति। तेनोत्तमविषयेपि परोक्षता। अतस्तत्रापि लिट्। **विललापेति**। लपेर्विपूर्वस्योत्तमे णलि रूपम्। **अत्यन्तेति**। अपह्नवोपलापः। कस्यचिदन्तं स्यात्। यः सर्वापह्नवस्तत्र लिट् स्यात्। नाहं कलिङ्गान् जगामेत्यत्र न केवलं कलिङ्गदेशावस्थापह्नवः अपि तु गमनस्यापीत्यत्यन्तापह्नवः। यदा स्थानमात्रस्यापह्नवः न गमनस्यापि तदा लङेव। नाहं कलिङ्गेष्ववतिष्ठमिति।

---

१. परोक्षम् $D_2$. २. $D_1$ drops अपि. ३. After it—च $D_1$, $D_2$, $D_3$, $D_4$, $B_2$. ४. लङिति। परोक्षे। $Dc_1$. ५. कश्चिदन्त्यं न स्यात् $Dc_3$. ६. °स्थानस्याप° $Dc_3$.

प्रश्ने चासन्नकाले ॥३।२।११७॥

लङ् चालिट्[1] ।[2] अगच्छत् किम् । जगाम किम् । आसन्नकाले किम् । कंसं जघान किम् ।

लट् स्मे ॥३।२।११८॥

स्मयोगे लिडर्थे[3]ऽपि लट् स्यात् ॥[4] यजति स्म युधिष्ठिरः ।

अपरोक्षे च ॥३।२।११९॥

भूतानद्यतनेपरोक्षेऽपि स्मयोगे[5] लट् स्यात् ॥ एवं स्म पिता ब्रवीति ।

नना पृष्टप्रतिवचने ॥३।२।१२०॥

ननुयोगे भूते[6]ऽपि लट्[7] पृष्टप्रतिवचने ॥[8] अकार्षीः किम् । ननु करोमि भोः । पृष्ट[9]प्रतिवचन इति किम् । नन्वकार्षीत् ।

---

प्रश्ने इति । पञ्चवर्षाभ्यन्तर आसन्नकालः । अगच्छदिति । 'इषुगमि—' इति छः । ब्रवीतीति । 'ब्रुव ईट्' ।

ननौ । प्रश्नः पृष्टम् । भावे निष्ठा । प्रश्नपूर्वकं प्रतिवचनम् । शाकपार्थिवादित्वादुत्तरपदलोपी समासः । अकार्षीः किमिति । प्रश्नः । ननु करोमि भोः । इति वचनम् । पृष्टप्रतिवचने किम् । ननु अकार्षीः ।

---

१. Before it—संनिहितकालसंबंधविषये प्रश्ने च C; आसन्नकाले पृच्छयमाने भूतानद्यतनपरोक्षवृत्तेर्धातोः $N_1$. २. After it—च $D_1$, $D_3$. ३. C drops अपि. ४. Before it—आह स्म हारीतः $B_2$, $D_4$. ५. °स्मयोगेऽपि $D_1$; लडर्थेऽपि लट् स्यात् $N_1$; लिडर्थेऽपि $D_4$. ६. पृष्टेऽपि C. ७. After it—स्यात् C, $D_3$. ८. स्यात् after it in $D_2$. ९. P, $D_2$, $D_3$, $D_4$, $N_1$ drop from पृष्ट...°र्षीत्.

नन्वोर्विभाषा ॥३।२।१२१॥

आभ्यां योगे[1] प्रागर्थे लङ् वा स्यात्[2] ॥ अकार्षीः किम् । न करोमि । नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ।

पुरि लुङ् चास्मे ॥३।२।१२२॥

[3]पुराशब्दयोगे भूतानद्यतने लुङ्लटौ वा स्तः न तु स्मयोगे[4]। पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । [5]अस्मे किम् । यजति स्म पुरा ।

---

नन्वोरिति । **प्रागर्थे** पृष्टप्रतिवचने इत्यर्थः । **नाकार्षमिति** । मिपोम् ।

पुरीति । पुराशब्देत्यनेन पुराशब्द इहोपपदत्वेनोपात्तो न पूः शब्द इति दर्शयति । एवं तर्हि तस्याकारान्तत्वात् पुरीति सप्तम्यन्तस्य निर्देशो न घटते । नैवम् । 'आतो धातोः' इत्यतः 'आतः' इति योगविभागादाकारलोपाद् घटिष्यते । ननु पूःशब्दोपादानं किं न स्यात् । न । तस्य न घटते वृत्त्यभावात् । इह च 'अनद्यतने' इति मण्डूकप्लुत्यानुवर्तते । अत एवाह—**भूतानद्यतन** इति । चकारेण [6]लटोनुकर्ष इत्याह—**लुङ्लटाविति** । **पक्षे यथाप्राप्तमिति** । लङ्लिटौ । **अवात्सुरिति** । लुङ् । 'सिजभ्यस्त—' इति झेर्जुस् । सिचि वृद्धिः हलन्तलक्षणा । पूर्ववत् सस्य तः । **अवसन्निति** । लङ् । **ऊषुरिति** । लिट् । 'परस्मैपदानाम्—' इति झेरुस् । द्वित्वम् । 'वचिस्वपि—' इति प्रकृतेः संप्रसारणम् । 'लिटि—' इत्यभ्यासस्य । 'शासिवसि—' इति षः ।

---

१. एतयोर्योगे $D_1$; ननु आभ्यां योगे C, $N_1$. २. Before it—भूतेकाले $D_1$. ३. Dropped $N_1$. ४. Before it—अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्तते । $N_1$. ५. अस्मेति C. ६. लटानुकर्ष $Dc_1$.

**यावत्पुरानिपातयोर्लट् ॥३।३।४॥**

आभ्यां निपाताभ्यां योगे भविष्यति काले धातोर्लट् स्यात् ॥ यावद् भुङ्क्ते । पुरा भुङ्क्ते । निपातयोः किम् । यावद् दास्यते तावद् भोक्ष्यते । करणभूतया पुरा यास्यति ।

**विभाषा कदाकर्ह्योः ॥३।३।५॥**

आभ्यां योगे भविष्यति लट् वा स्यात् ॥ पक्षे यथाप्राप्तम् । कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा ।

**किंवृत्ते लिप्सायाम् ॥३।३।६॥**

विभक्त्यन्तं डतरडतमान्तं च किमो रूपं किंवृत्तं तद्योगे भविष्यति वा लट् स्यात् लिप्सायाम् ॥ कं कतरं कतमं वा त्वं भोजयसि भोजयिष्यसि भोजयितासि वा ।

---

**यावद् भुङ्क्त इति** । 'भुजोनवने' इति तङ् । **यावद्दास्यते तावद् भोक्ष्यत इति** । यत् परिमाणमस्य । 'यत्तदेतेभ्यः—' इति वतुप् । 'आ सर्वनाम्नः—' इत्यात्वम् । **पुरा यास्यतीति** । पॄ पालनपूरणयोः । 'भ्राजभास—' इति क्विप् । 'उदोष्ठ्य—' इत्युत्वम् । रपरः । करणे तृतीया ।

**किंवृत्ते** । डतरडतमान्तमिति । 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' । 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति । लब्धुमिच्छा **लिप्सा** । **भोजयसीति** । भुजेर्हेतुमण्ण्यन्तात् लट् । **भोजयिष्यतीति** । लृट् । **भोजयितासि वेति** । लुट् । लिप्सायां किम् । को द्वारकां गमिष्यति ।

---

१. वत्स्यति $D_2$. २. After it—काले $D_1$. ३. °डतमप्रत्ययान्तं C. ४. C drops कम्; किम् $D_4$. ५. After it—लिप्सायां किम् । कः पाटलिपुत्रं गमिष्यति । $N_1$, $D_2$.

**लिप्स्यमानसिद्धौ च ॥३।३।७॥**

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां[1] भविष्यति लड् वा स्यात् ॥ योन्नं ददाति दास्यति दाता वा स स्वर्गं [2]लोकं याति यास्यति याता वा ।

**लोडर्थलक्षणे च ॥३।३।८॥**

लोडर्थस्य प्रैषादेः[3] [4]लक्षणक्रियावचनाद्धातोर्भविष्यति लड् वा स्यात् । आशंसायामपीति[5] केचित् । कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय । [6]पक्षे लट्लुटौ ।

---

**लिप्स्य** । लिप्स्यमानात् सिद्धिर्लिप्स्यमानसिद्धिः । लब्धुमिष्यमाणं लिप्स्यमानमन्नादि । अकिंवृत्तार्थोयमारम्भः । **योन्नमित्यादि** । लिप्स्यमानादन्नात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति ।

**लोडर्थ** । प्रैषादेरित्यादिना विध्यादयो गृह्यन्ते । लक्ष्यतेनयेति लक्षणा । सा चासौ क्रियेति लक्षणक्रिया । तद्वचनादित्यर्थः । **चारयेति** । 'प्रैषातिसर्ग—' इति प्रैषे लोट् । स च प्रैषश्चारणविषयस्य । कृष्णभोजनं निमित्तत्वाल्लक्षणम् । कृष्णभोजनमाशङ्क्य चारणप्रैष इत्यस्ति कृष्णभोजनस्य प्रैषं प्रति निमित्तत्वम् । **पक्षे लट्लुटाविति** । यथा कृष्णश्चेद् भोक्ष्यते भोक्ता वा त्वं गाश्चारयेति । लिङर्थसूत्रं व्याख्यातप्रायत्वात् त्यक्त्वा व्याख्यायते । 'लिङ् चोर्ध्वमौहूर्तिके ॥ ३।३।९॥ ऊर्ध्वं मुहूर्ताद्भवः ऊर्ध्वमौहूर्तिकः । निपातनात् समासोत्तरपदवृद्धी । ऊर्ध्वमौहूर्तिके लोडर्थलक्षणे भविष्यति लिङ् लट् च वा स्तः । ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य वा गुरुश्चेदागच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोधीष्व ।

---

१. गम्यायां $D_4$. २. $D_2$, $D_3$ drop लोकम्. ३. प्रैषणादेः $D_3$. ४. लक्षणस्य $N_1$. ५. C drops इति. ६. Before it—कृष्णभोजनं चारणं प्रैषलक्षणम् $N_1$.

**वर्तमानसामीप्ये वर्तमानवद्वा ॥३।३।१३१॥**

समीपमेव सामीप्यम् । स्वार्थेपि ष्यञ् अनेन ज्ञाप्यते । वर्तमानसमीपे भूते भविष्यति वा काले वर्तमानवत् प्रत्यया वा स्युः । कदा आगतोसि । अयमागच्छामि । अयमागमम् । कदा आगमिष्यसि । एष आगच्छामि आगमिष्यामि वा ।

---

'वर्तमाने लट्' इत्यारभ्य यावत् 'उणादयो बहुलम्' इति वर्तमाने विहितास्ते भूते भविष्यतीति विधीयन्ते—

**वर्तमान** । ज्ञाप्यते । ज्ञापनप्रयोजनं चातुराश्रम्यादि । अयमागमिष्यामीत्यर्थे एष आगच्छामि । वत्करणं सर्वसादृश्यार्थम् । येन विशेषेण प्रकृत्युपपदोपाधिना वर्तमाने प्रत्यया विहितास्तथवात्र स्युः । पूङ्यजिभ्यां वर्तमाने शानन् उक्तः वर्तमानसामीप्येपि ताभ्यामेव स्यात् । पचमानो यजमान इति । ताच्छील्यादिविशिष्टे कर्तरि इष्णुच् विहितः वर्तमानसामीप्येपि स्यात् । अलंकरिष्णुः । विप्रकर्षे तु वर्षेण गमिष्यतीति लृडेव । परुदगच्छदिति लङेव । यस्तु मन्यते गच्छामीति पदं वर्तमानार्थमेव कालान्तरावगतिस्तु वाक्यात् न च वाक्यगम्यः कालः पदसंस्कारायोपयुज्यते तं प्रतिपत्तारं प्रति प्रकरणमिदमारब्धव्यमेव ।

---

१. Before it—'लिङ् चोर्ध्वमौहूर्तिके ॥' ३।३।९॥ ऊर्ध्वमौहूर्तिके लोडर्थस्य प्रैषादेर्लक्षणक्रियावचनाद्धातोर्भविष्यति काले लिङ् वा लट् च पक्षे लृङ्-लुटौ । ऊर्ध्वमुहूर्तादुपरिमुहूर्तस्य उपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति आगन्ता वाथ त्वं व्याकरणमधीष्व । $D_3$. २. °सामीप्ये $D_1$. ३. From अय°.. वा dropped $D_3$ : अहमागमम् $D_4$. ४. गमिष्यसि $N_1$. ५. गच्छामि । $N_1$. ६. गमिष्यामि वा $D_4$, $N_1$. ७. इति dropped $Dc_3$.

## आशंसायां भूतवच्च ॥३।३।१३२॥

भविष्यति काले भूतवत् चकारात् वर्तमानवच्च प्रत्यया वा स्युः आशंसायाम् । देवश्चेद्वर्षति अवर्षीत् वर्षिस्यति वा ऐतद्[1] धान्यं वपामः अवाप्स्म वप्स्यामो वा ।

## क्षिप्रवचने लृट् ॥३।३।१३३॥

क्षिप्रपर्यायोपपदे भविष्यति लृडेव स्यादाशंसायां न[2] भूतवत् ॥ वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा आयास्यति शीघ्रं वप्स्यामः । नेति वाच्ये लड्ढक्तिर्लुड्बाधार्था । श्वः शीघ्रं वप्स्यामः ।

## आशंसावचने लिङ् ॥३।३।१३४॥

आशंसापर्यायोपपदे भविष्यति लिङेव स्यान्न[3] भूतवत् गुरुश्चेदुपेयात् आशंसे अधीयीय आशंसे क्षिप्रमधीयीय ।

---

**आशंसायाम्** । आशंसनमाशंसा । अप्राप्तस्य प्राप्तीच्छा । **अवाप्स्मेति** । डुवप् बीजतन्तुसंताने । लुङ् । हलन्तलक्षणा वृद्धिः । भूतसामान्यातिदेशोयम् । अतो भूतविशेषौ लङ्लिटौ न भवतः ।

**क्षिप्र** । वचनग्रहणं पर्यायार्थमित्यभिप्रेत्याह—**क्षिप्रपर्यायेति** । भूतवच्चेत्यस्यापवाद इत्याह—**न भूतवदिति** ।

**आशंसा** । गुरुश्चेदुपेयादिति । इण् । **अधीयीयेति** । इङो लिङ् । सीयुट् । उत्तमैकवचनम् इट् । इटोत् । ङित्त्वाद्गुणाभावः । सलोपः 'धातोः—' इतीयङ् । उपसर्गेण सह सवर्णदीर्घः । **आशंसे क्षिप्रमधीयीयेति** । अत्र क्षिप्रवचनमप्युपपदम् । आशंसावचनमपि । तत्र

---

१. एतै for एतद् P, C, $B_2$. २. न तु C. ३. न्न तु C.

परत्वाल्लिङेवभवति न लट् । तस्य तु यत्राशंसावचनं नास्ति सोवकाशः । स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयं व्याख्यायते । 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥३।३।१३५॥ क्रियाणां प्रबन्धेन सातत्येनानुष्ठाने प्राकरणिकानां कालानां सामीप्ये भूतभविष्यदनद्यतनवत् लङ्लुटौ न स्तः । यावज्जीवं भृशमन्नमदात् दास्यति वा । सामीप्ये । येयं पौर्णमास्यतिक्रान्ता एतस्यामग्नीनाधित । सोमेनायष्ट । गामदित । पौर्णमास्यन्तरेणाव्यवधानं सामीप्यम् । आगामिन्यामाधास्यते । 'भविष्यति मर्यादावचनेवरस्मिन्' ॥३।३।१३६॥ भविष्यति काले मर्यादावचने सति अवरस्मिन् प्रविभागेनद्यतनवत् प्रत्यया न स्युः । योयमध्वा गन्तव्य आ पाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे तत्र सक्तून् पास्यामः । भूते मर्यादाया अनुक्तौ च परस्मिंश्च लुङ्लुटौ स्तः । अक्रियाप्रबन्धसामीप्यार्थं सूत्रम् । 'कालविभागे चानहोरात्राणाम्' । ३।३।१३७।। कालमर्यादाविभागे सत्यवरस्मिन् प्रविभागे सति भविष्यति न चेदहोरात्रसंबन्धी विभागः । पूर्वेणैव सिद्धेहोरात्रनिषेधार्थं सूत्रम् । योयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् । त्रिविधोदाहृतिः । योयमागामी मासस्तस्य योवरः पञ्चदशरात्रः योयमागामी त्रिंशद्रात्रस्तस्य योवरोर्धमासः योयमागामी त्रिंशद्रात्रस्तस्य योवरः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे । तत्र सक्तून् पातास्मः । 'परस्मिन् विभाषा' ॥३।३।१३८॥ भविष्यति मर्यादेत्यारभ्य सर्वमनुवर्तते । योयमागाम्यब्दः तस्य यत् परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे अध्येतास्महे ।

**भूते च ॥३।३।१४०॥**

उताप्योः समर्थयोरित्यादि लिङ्निमित्ते भूतेर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ[2] ॥ यद्यहमैष्यमुताभोक्ष्ये अप्यभोक्ष्ये न भुक्तवान् ।

**वोताप्योः ॥३।३।१४१॥**

वा आ उताप्योः । उताप्योरिति यावत् भूते लिङ्निमित्ते लृङ्क्रियातिपत्तौ वेत्यधिक्रियते ।

---

भूते । अभोक्ष्ये इति । भुजपालनादौ । 'भुजोनवने'* इति तङ् । न भुक्तवानिति । क्रियाया अनिष्पत्तिं दर्शयति । आगमनं नाभूत् भोजनमपि नाभूदित्यर्थः ।

वोताप्योः । वा आ उताप्योरिति । आङः प्रश्लेषं दर्शयति । ननु चाङ्योगे 'पञ्चम्यपाङ्' इति पञ्चम्या भाव्यम् । तदयुक्तम् उताप्योरिति सप्तम्या निर्देशः । नैतत् । पदमेवात्र सप्तम्यन्तमुपादीयते । न च पदादाङ्योगे सप्तमी स्यात् । अप्रातिपदिकत्वात् । अयं चाङ् मर्यादायाम् ।

---

१. Before it—*Vide*, C, $N_1$ $B_2$. p. 1810-11. २. After it—गम्यायाम् $D_4$, $B_2$. ३. उताभोक्ष्यं $D_2$ ; °मुताहं $D_3$. ४. अप्यभोक्ष्यं $D_2$. ५. न तु $D_1$. ६. $D_2$, $D_4$ drop वा आ उताप्योः. ७. अभोक्ष्यादिति $Dc_3$.

* नाद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ॥३।३।१३५॥ सातत्येन क्रियानुष्ठाने कालानां समसंज्ञेनाव्यवधाने लङ्लुटावनद्यतने न स्तः । यावज्जीवं भृशमन्नमदात् । यावज्जीवं भृशमन्न दास्यसि । येयं पौर्णमास्यतिक्रान्ता एतस्यामग्नीनाधित । येयमागामिन्यमावास्या एतस्यामग्नीनाधास्यते ।

भविष्यति मर्यादावचनेवरस्मिन् ॥३।३।१३६॥ भविष्यति काले देशकृतमर्यादावचने सत्यवरस्मिन् भागे लुट् न भवति । अक्रिया । अक्रियाप्रबन्धसामीप्यार्थं वचनम् । योयमध्वा गन्तव्य आ पाटलिपुत्रात् यत्र यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे ।

कालविभागे चानहोरात्राणाम् ॥३।३।१३७॥ भविष्यत्यनहोरात्रकालकृतमर्यादावचने सत्यवरस्मिन् प्रविभागे लुण् न स्यात् । योयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् । योयं मास आगामी तस्य योवरः पञ्चदशरात्रः तत्र युक्ता अध्येतास्महे ।

परस्मिन् विभाषा ॥३।३।१३८॥ भविष्यति मर्यादावचने कालविभागे अनहोरात्रे परस्मिन् विभागे लुण् न स्याद्वा । योयं संवत्सर आगामी तस्य यत् परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे अध्येतास्महे वा । अनहोरात्राणामिति प्रत्युदाहरणं पूर्वोक्तम् ।

गर्हायां लडपिजात्वोः ॥३।३।१४२॥

आभ्यां योगे लट् स्यात् कालत्रयेपि गर्हायाम् । कालविशेषप्रत्ययापवादः । अपि जायां त्यजसि । जातु गणिकामादत्से । अत्र लिङ्निमित्ताभावात् लृङ्[1] न ।

विभाषा कथमि लिङ् च ॥३।३।१४३॥

कथमा योगे कालत्रयेपि[2] वा लिङ् चात् लट्[3] गर्हायाम् । कथं धर्मं त्यजेः त्यजसि वा । पक्षे कालत्रयलकाराः । अत्र भविष्यति नित्यं लृङ् भूते वा । कथं नाम तत्रभवान्[4] धर्ममत्यक्ष्यत् ।

किंवृत्ते लिङ्लृटौ ॥३।३।१४४॥

किंवृत्तयोगे गर्हायामेतौ स्तः । कालत्रयेपि । सर्वलकारापवादः । कः कतरो वा हरिं निन्देत् निन्दिष्यति । लृङत्र प्राग्वत्[5] ।

---

गर्हायाम् । गर्हा निन्दा कुत्सेति पर्यायाः । जात्वित्यादि । जायात्यागो गर्हितः । गणिकादानमतिनिन्दितमिति गम्यते ।

विभाषा । विभाषाग्रहणं यथास्वं कालविशेषे विहितानां प्रत्ययानामबाधनार्थमित्याह—पक्षे कालत्रयलकारा इति । कथं धर्मं त्यक्ष्यसि कथं धर्मं त्यक्तासि कथं धर्ममत्याक्षीः कथं धर्ममत्यजः कथं धर्मं तत्यजिथेति ज्ञेयाः सर्वलकाराः । गर्हायां किम् । कथं भवान् विष्णुमपूपुजत् ।

किंवृत्ते । विभक्त्यन्तं डतरडतमान्तं च किंवृत्तम् । लिङ्ग्रहणं लटः परिहारार्थम् । लृङत्रप्राग्वदिति । भविष्यति नित्यं भूते वेत्यर्थः । को वा हरिमनिन्दिष्यत् ।

---

१. न लृङ् $D_2$, $D_4$, $B_2$. २. $D_2$ drops अपि. ३. लट् स्यात् $D_3$. ४. भवान् P, C. ५. After it—गर्हायामिति निवृत्तम $B_2$, $D_4$.

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥३।३।१४५॥

किंवृत्ते अकिंवृत्तेपि लिङ्लृटौ स्तः असंभावनामर्षयोः । त्रिषु कालेषु सर्वलकारापवादः । न संभावयामि न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा । कः कतरो वा निन्देत् [1]निन्दिष्याति । क्रियातिपत्तौ पक्षे लृङ् ।[2]

## किंकिलास्त्यर्थेषु लृट् ॥३।३।१४६॥

किंकिलशब्दे अस्त्यर्थे चोपपदेनवक्लृप्त्यमर्षयोर्लृडेव स्यात् त्रिषु कालेषु ॥ न श्रद्दधे न मर्षये वा किंकिल त्वं शूद्रान्नं भोक्ष्यसे । अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि । अत्र लिङ्निमित्ताभावाल्लृङ् न ।

## जातुयदोर्लिङ् ॥३।३।१४७॥

आभ्यां योगे कालत्रयेपि लिङेव स्यादुक्तेर्थे ॥ यदा यद्योर्योगे च । जातु यत् यदा यदि वा त्वादृशो हरिं निन्देत् नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ।

---

अनव । गर्हायामिति निवृत्तम् । अमर्षोक्षमा । बह्वचः पूर्वनिपातो लक्षणव्यभिचारे लिङ्गम् । तेन यथासंख्यं न भवति । लृङिति । न संभावयामि न मर्षये वा भवान् हरिमनिन्दिष्यत् । को वा हरिमनिन्दिष्यत् ।

किंकिलशब्दो निपातसमुदायः क्रोधद्योतकः । अस्त्यर्थाः अस्ति भवतिविद्यतयः । अस्तीत्यादि । त्वं शूद्रीं गमिष्यसि । अस्ति नाम तत् न श्रद्दधे न मर्षये वेत्यन्वयः ।

जातु । उक्तेर्थे अनवक्लृप्त्यमर्षयोः । लृङ् प्राग्वदिति । क्रियातिपत्तौ भविष्यति नित्यं भूते वेत्यर्थः ।

---

१. निन्दिष्यति वा $B_2$ $D_4$. २. After it—भविष्यति नित्यम् । $N_1$. ३. शब्दे चोपपदे $N_1$. ४. मर्षये $D_1$. ५. °त् न लृङ् $D_2$. ६. For लिङेव $D_1$ has लिङ्. ७. यदायद्योरुपसंख्यानम् $D_1$, यदायद्योगे च $D_4$. ८. वेदवान् द्विजः $D_1$.

यच्चयत्रयोः ॥३।३।१४८॥

आभ्यां योगे पूर्ववत् ॥ यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षये । प्राग्वत् ऌङ् ॥

गर्हायां च ॥३।३।१४९॥

अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् ॥ यच्च यत्र वा त्वं शूद्रं याजयेः । अन्याय्यम्[1] । ऌङ् पूर्ववत्[2] ।

चित्रीकरणे च ॥३।३।१५०॥

यच्च यत्र वा त्वं याजयेः[3] । चित्रमेतत् ।

शेषे ऌडयदौ ॥३।३।१५१॥

यच्चयत्राभ्यामन्येन यदिवर्जेन योगे ऌडेव स्यात् कालत्रये चित्रीकरणे[4] ॥ आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अत्र ऌङ् न । अयदौ किम् । आश्चर्यं[5] यदि स[6] भुञ्जीत ।

---

यच्च । पूर्ववदिति । अनवक्लृप्त्यमर्षयोरर्थयोर्लिङ् स्यात् । ऌटोपवाद इत्यर्थः । प्राग्वत् ऌङिति । व्याख्यातचरमेव । याजयेरिति । यजेर्ण्यन्तस्य लिङि रूपम् ।

चित्री । चित्रीकरणमाश्चर्यमद्भुतं विस्मयनीयम् । यच्चयत्रयोर्योगे चित्रीकरणे लिङेव स्यात् । अत्र ऌङिति । लिङ्निमित्ताभावात् । आश्चर्यं यदि स भुञ्जीतेति । अनवकॢप्तिरत्राश्चर्यं च द्वयं गम्यते । तत्राश्चर्यनिमित्ते ऌटि प्रतिषेधे यदा यद्योगे चेत्यनवकॢप्तौ लिङ् ।

---

१. अन्याय्यमेतत् $D_2$. २. प्राग्वत् $D_3$. ३. शूद्रं याजयेः $B_2$, $N_1$, $D_3$, $D_4$. ४. °करणेर्थे $D_3$. ५. Dropped $D_3$. ६. तु यदि $Dc_3$.

## उताप्योः समर्थयोर्लिङ् ॥३।३।१५२॥

आभ्यां तुल्यार्थाभ्यां योगे लिङ् स्यात् त्रिकालेषु[1] । सर्वलकारापवादः[2] । बाढार्थे[3] तुल्यार्थतानयोः । उत अपि वा हन्यादघं हरिः । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेपि नित्यो लृङ् ।

## कामप्रवेदनेकच्चिति ॥३।३।१५३॥

स्वाभिप्रायाविष्करणार्थे[4] लिङ् स्यात् कालत्रये[5] नतु कच्चिति । कामो[6] मे भुञ्जीत भवान् । अकच्चिति किम् । कच्चित् जीवति[7] ।

## संभावनेलमिति चेत् सिद्धाप्रयोगे ॥३।३।१५४॥

अलमर्थेन[8] प्रौढ्या संभावनेर्थे लिङ्[9] सिद्धश्चेदलमोप्रयोगः।

---

**उताप्योः** । उत अपि वेत्यादि । बाढं हनिष्यतीत्यर्थः । समर्थयोः किम् । उत हनिष्यति अपि धास्यति इति प्रश्नापिधानयोर्मा भूत् ।

**काम** । कामोऽभिलाषस्तस्य प्रवेदनं प्रकाशनम् । एतदभिप्रेत्याह—**स्वाभिप्रायाविष्करण** इति ।

**संभावने** । अत्रालंशब्देनालमर्थो गृह्यत इत्याह—**अलमर्थेनेति** । स चालमर्थः पर्याप्तिरेव न भूषणादिरित्यभिप्रेत्याह—**प्रौढयेति** । प्रौढिः स्वकार्यनिर्वर्तनसामर्थ्यम् । संभावनं शक्तिः श्रद्धानम् । प्रौढ्या संभावनं पर्याप्तमवितथं संभावनं चेदि[10]त्यर्थः । सिद्धाप्रयोग इति व्याकरोति—**सिद्धश्चेदलमोप्रयोग** इति । कुत एतत् । अलम एवाप्रयोग इत्युच्यते ।

---

१. त्रिषु कालेषु $B_2$, $D_3$. २. सर्वलापवादः P, $D_4$. ३. बाढे $D_2$, $D_4$, $B_2$. ४. °रणेर्थे $D_4$. ५. कालत्रये dropped $B_2$. ६. कामं भुञ्जीत भवान् C. ७. After it—जानकी $D_4$. ८. °मर्थेनाप्रौढ्यसंभावनेर्थे $D_1$. ९. स्यात् after it in $D_2$, N. १०. भवति चेदि° $Dc_3$.

कालत्रये । अपि गिरिं शिरसा भिन्द्यात् । अलमोप्रयोगे किम् । अलं कृष्णो हस्तिनं हनिष्यति ।

**विभाषा धातौ संभावनवचनेयदि॥३।३।१५५॥**

संभावनार्थे[1] धातावुपपदे प्रागुक्तेर्थे लिङ् वा[2] स्यात् न तु यच्छब्दे[3] । संभावयामि भुञ्जीत भवान् भोक्ष्यते वा[4] । अयदि[5] किम् । संभावयामि यद् भुञ्जीथास्त्वम् ।

---

इतिकरणेनार्थपदार्थत्वात् प्रच्याव्य शब्दार्थकतायामलमो व्यवस्थापनात् । यद्येवमलमर्थः संभावनाविशेषणं न स्यात् । नैष दोषः । आवृत्तिरलंशब्दस्य करिष्यते । क्व च सिद्धोलमोप्रयोगः । यत्र च तस्यार्थो गम्यते स च तत्र प्रयुज्यते तत्र । अपि गिरिमित्यादि । भिदृ विदारणे । रुधादिभ्यः श्नम् । 'श्नसोः—' इत्यल्लोपः । अत्र यत् पर्वतभेदसामर्थ्यं पुंसः संभाव्यते तदस्त्येवेत्यावितथत्वात् पर्याप्तम् । संभावन इति किम् । पर्याप्तं भुङ्क्ते । अलमर्थेन विशेषणं किम् । विदेशस्थानीयो देवदत्तः प्रायेण गमिष्यति ग्रामम् । अत्र क्रियातिपत्तौ भूते भविष्यति च लङ् स्यात् ।

**विभाषा** । पूर्वेण नित्यं प्राप्ते विकल्पार्थं सूत्रम् । संभावनमुच्यते येन स संभावनवचन इतीममर्थमाह—**संभावनार्थ** इति । अत्र 'संभावनेलमिति चेत् सिद्धाप्रयोगे' इति सर्वमनुवर्तत इत्याह—**उक्तेर्थे** इति । अवकल्पयामि श्रद्दध इत्यनयोरपि संभावनार्थयोः प्रयोगे एवमेवोदाहार्यम् ।

---

१. संभावनेर्थे $D_1$, $P_1$; C drops the Vṛitti up to यच्छब्दे. २. स्याद्वा $N_1$. ३. यच्छब्दसंयोगे $B_2$. ४. $D_1$, $D_3$ drop वा. ५. अयदिति C.

हेतुहेतुमतोर्लिङ् ॥३।३।१५६॥

हेत्वर्थे हेतुमदर्थे च लिङ् वा स्यात् ॥ कृष्णं नमेच्चेत् सुखं यायात् । पक्षे लृट् । पुनर्लिङ्ग्रहणात्[1] भविष्यदर्थे एव लिङ्[2] । नेह । हन्तीति पलायते ।

इच्छार्थेषु लिङ्लोटौ ॥३।३।१५७॥

इच्छार्थेषु[3] धातुभियोगे लिङ्लोटौ स्तः त्रिषु[4] कालेषु । इच्छामि भुञ्जीत भुङ्क्तां वा[5] भवान् । कामप्रवेदने वाच्ये[6] । नेह । इच्छन् करोति[7] ।

---

हेतुहेतुमतोः । हेतुः कारणम् । हेतुमत् फलम् । हेत्वर्थे हेतुमदर्थे च वर्तमानाद्धातोरिति शेषः । कृष्णमित्यादि । कृष्णनमनं हेतुः । सुखप्राप्तिः हेतुमती । पक्षे लृडिति । कृष्णं नंस्यति चेत् सुखं यास्यतीति । पुनर्लिङ्ग्रहणादिति । 'उताप्योः समर्थयोर्लिङ्' इत्यतो लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणस्यैतत् प्रयोजनं भविष्यदर्थे एव यथा स्यादित्यर्थः । पलायत इति । 'उपसर्गस्यायतौ' इति लत्वम् । क्रियातिपत्तौ लृङ् ।

इच्छार्थेष्विति । सर्वलकारापवादः । ननु चात्रेच्छार्थेष्विति सप्तम्यन्तं तत् कथमिच्छार्थैर्योग इति व्याख्यातम् । मैवं संशयिष्ठाः । अत्रेच्छार्थेषु धातुषूपपदेष्वित्येवार्थः । तथापि केवलं तत्प्रयोगे मा भूत् । किं तु तद्योगे यथा स्यादित्येवमर्थमेवं व्याख्यातम् । उपपदसंज्ञाकार्याभावाच्च ।

---

१. लृङ् $D_4$. २. After it—वा स्यात् $D_3$. ३. इच्छार्थे $D_2$; इच्छार्थधातुभि° $D_1$. ४. त्रिकालेषु $D_2$, P. ५. $D_1$ drops it. ६. वाच्यं P, $N_1$, C, $B_2$, $D_3$, $D_4$. ७. करोमि $D_1$, $D_4$.

लिङ् च ॥३।३।१५९॥

समानकर्तृकेरिच्छार्थैर्योगे लिङ् स्यात् । भुञ्जीयेतीच्छति ।[1]

इच्छार्थेभ्यो विभाषा वर्तमाने ॥३।३।१६०॥

इच्छार्थेभ्यो लिङ् वा स्याद्वर्तमाने । पक्षे लट् । इच्छेत् ।[2] इच्छति । वष्टि । उश्यात् । विधिनिमन्त्रणेति लिङ् । कालत्रये[3][4] विधौ । यागं कुर्यात् । नियोगकरणे । इह भुञ्जीत भवान् ।

---

लिङ् चेति । तृतीयाव्याख्यानघटना पूर्ववत् । भुञ्जीयेति । 'इटोत्' इत्यदादेश उत्तमपुरुषैकवचनस्य । ननु च किमर्थमिदमुच्यते । यावता वासरूपन्यायेनैवात्र लिङ् स्यात् । नैतत् । लिङ्लिटोर्हि परत्वाद्बाधकयोः प्राप्तयोस्तद्बाधनार्थं तुमुन् विधीयते इति तेन बाधितत्वाद्यथा लोट् न तथा लिङपि न । तस्मात् लिङ्विध्यर्थमुच्यते । योगविभाग उत्तरार्थः । वष्टीति । वश कान्तौ । अदादित्वात् शपो लुक् । व्रश्चादिना षत्वम् । उश्यादिति । ग्रहिज्यादिना संप्रसारणम् । विधिनिमन्त्रणेति लिङिति । एतच्च सूत्रं भू सत्तायामित्यस्मिन्नेव धातौ व्याख्यातम् । निमन्त्रणादीनर्थान् व्याकुर्वन् क्रमेणोदाहरति—विधौ । यागं कुर्यादिति । विधिर्भृत्यादेर्निकृष्टस्य प्रवर्तना । आज्ञापनेति यावत् । कुर्यादिति । करोतेरुप्रत्यये गुणे च कृते 'अत उत्सार्वधातुके' इत्युः । 'ये च' इत्युल्लोपः । नियोगकरणे इति । नियोगतोवश्यंभावेन यत्करणमनुष्ठानमवश्यकार्यं भुक्त्यां दौहित्रादेः प्रेरणे इति यावत् । श्राद्धे हि निमन्त्रितो दौहित्रादिरभुञ्जानः प्रत्यवैति । भुञ्जीतेति ।

---

१. C drops इति; इतीच्छामि । $N_1$. २. इच्छेत् भवान् $B_2$, $D_4$. ३. कस्तत्राविधिः for कालत्रये विधौ $D_1$. ४. °त्रयेपि $D_3$.

कामचारे । इहासीत भवान् । सत्कारपूर्वके व्यापारे । पुत्रमध्यापयेद्भवान् । संप्रधारणे । किं भो[2] वेदमधीयीय उत तर्कम् । प्रार्थने । भो भोजनं लभेय । एवं लोट् ।

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥३।३।१६३॥**

एषु गम्येषु कृत्याः स्युः[3] लोट् च ॥[4] कामचारानुज्ञा अतिसर्गः । प्रेषितस्त्वं गङ्गां गच्छ । एवमतिसृष्टस्त्वम् । प्राप्तस्ते

---

'भुजोनवने' इति तङ् । कामचार इति । कामचार इच्छाप्रवृत्तिः । यदकरणेपि न प्रत्यवायः तत्र प्रेरणमिति यावत् । अध्यापयेदिति । इङ् अध्ययने इत्यस्मादधिपूर्वाद्धेतुमाण्णिच् । 'क्रीङ्जीनां णौ' इति आकारः । 'अर्तिह्री—' इति पुक् । अधीयीयेति । इङ उत्तमपुरुषैकवचनस्य 'इटोत्' इत्यत् । लभेयेति । डुलभष् प्राप्तौ । एवं लोडिति । अनेन प्रकारेण लोडुदाहार्यः । तथा हि । विधौ । यागं करोतु । नियोगकरणे । इह भुङ्क्तां भवान् । कामचारे । इहास्तां भवान् । सत्कारपूर्वके व्यापारे । पुत्रमध्यापयतु भवान् । संप्रधारणे । किं भो वेदमध्ययै उत तर्कम् । प्रार्थने । भो भोजनं लभै । इति लोट् ।

प्रैषाति । विधिप्रेरणयोः को विशेषः । केचिदाहुः । आज्ञापनं विधिः प्रेरणं प्रैष इति । केचित्त्वनयोर्विशेषं नेच्छन्त्येव ।

---

१. सत्कारपूर्वकव्यापारे $D_2$, $D_4$; सत्कारपूर्वव्यापारे P. २. भो भवन् $D_1$, $D_3$. ३. $D_1$ drops it. ४. Before it—प्रेषणं प्रषः C.

कालो वा । लिङप्यत्रेति केचित् ।

---

लिङप्यत्रेति केचिदिति । दुर्गसिंहादयः । तथा च दुर्गसिंहवृत्तौ प्रैषप्राप्तकालयोरपि पञ्चमी सप्तम्यपि स्यादेवेति मतमिति । कृत्यग्रहणस्य प्रयोजनमुदाहरणं च कृत्यप्रक्रियायां वक्ष्यति । स्पष्टत्वात् त्यक्तं सूत्रत्रयं व्याख्यायते । 'लिङ्-चोर्ध्वमौहूर्तिके' ॥३।३।१६४॥ लोट्कृत्याश्च स्युः प्रैषादौ गम्ये । ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य त्वं कटं कुर्याः कुरु वा । त्वया कटः कार्यो वा । 'स्मे लोट्' ॥३।३।१६५॥ स्मे उपपदे प्रैषादौ ऊर्ध्व-मौहूर्तिकेर्थे लिङ्कृत्यानामपवादो लोट् स्यात् । ऊर्ध्वं मुहूर्तात् त्वं कटं कुरु स्म । 'अधीष्टे च' ॥३।३।१६६॥ स्मे उपपदे अधीष्टे गम्ये लोट् । अङ्ग स्म बटुमध्यापय । 'लिङ् यदि' ॥३।३।१६८॥ यदि कालसमयवेलासूपपदेषु तुमुनोपवादो लिङ् स्यात् । कालो यद् भुञ्जीत भवान् समयो वेला वा ।

---

१. °चतुष्टयं Dc3.

लिङ् चोर्ध्वमौहूर्तिके ॥३।३।१६४॥

प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्तिके लिङ् वा । यथाप्राप्तं च । भवान् खलु कटं कुर्यात् करोतु वा ।

स्मे लोट् ॥३।३।१६५॥

स्मशब्दोपपदे पूर्वस्मिन् कालेर्थे च लोडेव स्यात् । ऊर्ध्वमुहूर्तात् कटं करोतु भवान् ।

अधीष्टे च ॥३।३।१६६॥

अधीष्टं व्याख्यातम् । स्मे उपपदे व्याख्यातेर्थे लोट् स्यात् । अङ्ग स्म माणवकमध्यापय ।

लिङ् यदि ॥३।३।१६८॥

कालसमयवेलासूपपदेषु धातोर्लिङ् स्याद् यच्छब्दयोगे । कालोयं भुञ्जीत भवान् । एवं समयवेलाच ।

अर्हे कृत्यतृचश्च ॥३।३।१६९॥

चाल्लिङ् । त्वं कन्यां वहेः ।[1]

शकि लिङ् च ॥३।३।१७२॥

शक्तौ लिङ् स्यात् चात् कृत्याः ॥ त्वं भारं वहेः । लोडप्यत्रेति केचित् । सिंधुमपि शोषयाणि । माङि लुङ् । मा कार्षीत् । कथं मा भवतु मा भविष्यति इति । नायमाङ् किं तु माशब्दः ।

---

अर्हे । अर्हतीत्यर्हः । तद्योग्यः । अर्हे कर्तरि गम्यमाने धातोः कृत्यतृचः प्रत्ययाः स्युः । चकाराल्लिङपि स्यादित्यर्थः । त्वं कन्यां वहेरिति । वोढुमर्हसीत्यर्थः ।

शकि । शकीति नोपपदं किं तु प्रकृत्यर्थविशेषणमित्याह—शक्ताविति । शक्त्युपाधिकेर्थे वर्तमानाद्धातोरित्यर्थः । त्वं भारं वहेः । वोढुं शक्नोषीत्यर्थः । लोडप्यत्रेति केचिदिति । दुर्गसिंहादयः । तथा च दुर्गसिंहवृत्तावुक्तम् । समर्थनाशिषोश्चेति । सिंधुमिति । कश्चिदाह । सिंधुः शोषयितुमशक्यः । अपरस्तु समर्थयते सिंधुमपि शोषयाणि इति । माङीति । भूधातौ व्याख्यातम् । कथमिति । यदि माङि लुङ् कथं तर्हि मा भवतु मा भविष्यतीति लोट्लट्प्रयोग इत्यर्थः । माशब्द इति । अमानोनाः प्रतिषेधे इति निरनुबन्धको मा निषेधार्थः पठ्यते । तस्यायं प्रयोगः । अत एतदुपपन्नमित्यर्थः । केचिदाहुः । असाधुरेवायं प्रयोग इति ।

---

१. Before it—*Vide* Footnote on p. 462, $B_2$, C, N. २. After it—भवानेतदर्हति $B_2$, $D_4$. ३. चकारात् $D_1$. ४. From माङि to माशब्दः dropped $D_4$. ५. भवत्वस्य पापमिति $D_2$.

**क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः ॥३।४।२॥**

पौनःपुन्यार्थे भृशार्थे वा लोट् स्यात् तस्य च[1] लोटः पद[2]व्यवस्थायां हिस्वौ स्तः सर्वतिङ्विषये तध्वमोर्विषये तु वा कालत्रये । लमात्रापवादः ।

**समुच्चयेन्यतरस्याम् ॥३।४।३॥**

अनेकक्रियाव्यवहारे[5] प्रागुक्तं वा स्यात् ॥

---

क्रियेत्यादि । पौनःपुन्यं भृशार्थो वा क्रियासमभिहार इत्याह—**पौनःपुन्ये भृशार्थे वेति** । प्रकृत्यर्थविशेषणं चैतत् । पौनःपुन्यविशिष्टक्रियावचनात् भृशार्थविशिष्टक्रियावचनाद्धातोरित्यर्थः । योगविभागोत्र कार्यः । क्रियासमभिहारे लोट् । ततो लोटो हिस्वौ । लोडित्यनुवर्तते । तेन लोटो हिस्वौ लोडेव । ततश्च 'सेर्ह्यपिच्च' इत्यादिना यौ हिस्वौ विधास्येते तावेवेह लोटः स्थाने स्तः नापूर्वाविति लोड्धर्माणौ स्तः । तेन लोट्-संबन्धिनो हेः परस्मैपदत्वाद्धेः परस्मैपदत्वम् । लोटः स्वशब्दस्यात्मने-पदत्वात्तस्यापि स्वस्यात्मनेपदत्वं व्यवस्थितम् । द्वयोरपि तिङ्त्वं च सिध्यतीति 'तिङ्ङतिङः' इति निघातः स्यात् इति । एतत् सर्वं मनसि कृत्वाह—**तस्य च लोटः पदव्यवस्थायां हिस्वौ स्त इति** । परस्मै-पदं हिर्भवति । आत्मनेपदं स्वो भवतीत्यर्थः । उदाहरिष्यत्यग्रे ।

**समुच्चये** । अत्रापि समुच्चयः प्रकृत्यर्थविशेषणमेव । **प्रागुक्तमिति** । लोट् स्यात् । पदव्यवस्थया हिस्वौ स्तः सर्वतिङ्विषये तध्वमोर्विषये तु वा कालत्रये । लकारमात्रापवाद इत्यर्थः ।

---

१. धातोर्लोट् P, $N_1$. २. Dropped $D_3$. ३. Dropped $D_3$. ४. पदव्यवस्थया $D_1$, $D_3$, $D_4$. ५. °व्याहारे C.

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥३।४।४॥**

पूर्वस्मिन् लोड्विधाने यस्माद्धातोर्लोड्उक्तः सोनुप्रयोज्यः ॥

**समुच्चये सामान्यवचनस्य ॥३।४।५॥**

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः । क्रियासमभिव्याहारत्वाल्लो[2]डन्तद्वित्वम् ॥ याहि याहीति याति ।

---

यथाविधि । पूर्वस्मिन्निति । क्रियासमभिहारे इत्यस्मिन्नित्यर्थः । धातुसंबन्धे प्रत्ययविधेरनुप्रयोगे सिद्धे यथाविध्यर्थं वचनम् । धातुसंबन्धे प्रत्ययाः । अस्यार्थः । अभिधानेभिधेयोपचाराद्धात्वर्थो धातुशब्देनोच्यते । तेन प्रत्ययानां संबन्धो विशेषणविशेष्यभावस्तस्मिन् सति यस्मिन् काले ते विहितास्ततोन्यत्र विशेष्यकालेपि साधवः स्युः । सोमयाज्यस्य पुत्रो भविता । अत्र याजीति भूते णिनिः । भवितेति भविष्यत्यनद्यतने लुट् । तत्र [3]विशेषणं विशेष्यमनुरुध्यते इति याजिना विशेषितो भविता साधुः । भाविकृत्यमासीत् । प्रत्ययाधिकारे पुनः प्रत्ययग्रहणा-द्धात्वधिकारविहितास्तद्धिता अपि धातुसंबन्धे सति कालभेदे सति साधवः स्युः । गोमानासीत् । गोमान् भविता । सर्वत्र तिङ्[4]वाच्यो विशेषः । सुबन्तं विशेषणम् ।

समुच्चय इति । अत्रापि धातुसंबन्धे प्रत्ययविधेरनुप्रयोगे सिद्धे विशेषानुप्रयोगनिवृत्त्यर्थं वचनम् । ननु च लाघवेन सामान्यस्यैव प्रयोगो भविष्यति । मैवम् । लाघवं च लौकिके शब्दव्यवहारे नाद्रियते । क्रियासमभिव्याहारत्वादिति । ‘क्रियासमभिहारे द्वे भवतः’ इति वक्तव्येनेति भावः । याहि याहीति यातीति । या

---

१. After it—याहीत्यस्य यानुप्रयुज्यते न तु गच्छतेरनुप्रयोगः $D_1$ : सोनुप्रयुज्यते $D_3$. २. °डन्तस्य $D_3$. ३. विशेषणं विशेष्यगुणत्वाद् विशेष्य° $Dc_3$. ४. °वाच्योर्थो $Dc_3$.

एवं यातः यान्ति यासि याथः याथ । पक्षे[1] यात यातेति यूयं याथ । याहि याहीत्ययासीत् यास्यति वा । अधीष्व अधीष्वे[2]त्यधीते । एवमन्यत्र । ध्वंविषये प्राग्वत् । पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे । यङन्ते क्रियासमभिहारान्तरे तु लोलूयस्व लोलूयस्वेति लोलूयते । समुच्चये तु सक्तून् पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दा[3]धिकमास्वा[4]दस्वेत्यभ्यवह[5]रति । तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ । भुङ्ध्वमास्वादध्वमित्यभ्यवह[6]रध्वे । पक्षे हिस्वौ । लोडभावपक्षे

---

प्रयाणे । अदादित्वात् शपो लुक् । **अधीष्वाधीष्वेत्यधीत इति** । इङ् अध्ययने इत्यस्य आत्मनेपदित्वात् स्वशब्दो भवति । **एवमन्यत्रेति** । अनेन प्रकारेण द्विवचनबहुवचनयोर्भूते भविष्यति चोदाहार्यम् । तथा हि । अधीष्वाधीष्वेत्यधीयाते । अधीष्वाधीष्वेत्यधीयते । एवं मध्यमोत्तमयोरुदाहार्यम् । भूते अधीष्वाधीष्वेत्यध्यगीष्ट । भविष्यति अधीष्वाधीष्वेत्यध्येष्यते इति । **ध्वंविषये प्राग्वदिति** । अधीष्वाधीष्वेत्यधीध्वे इति । एवं सर्वेषु लकारेषूदाहार्यम् । **यङन्त इति** । यङ् क्रियासमभिहारे धातोरेकाचः इति विधीयते । तथापि क्रियासमभिहारो भृशार्थः पौनःपुन्यमिति द्विविध इति भृशार्थे क्रियासमभिहारे यङि कृते पौनःपुन्यलक्षणे क्रियासमभिहारान्तरे विहिते लोट्द्विवचने भवत इति । **सक्तून् पिबेति** । पा पाने । 'पाघ्रा—' इति पिबादेशः । 'अतो हेः' इति हेर्लुक् । **भुङ्क्ष्वेति** । भुजेः श्नमि अल्लोपे कृते 'चोः कुः' । षत्वम् । **आस्वादस्वेति** । स्वादु प्रीतिलिहोः ।

---

१. $D_1$, $D_3$, P, $N_1$ drop पक्षे. २. °ष्वेत्येवायमधीते $D_2$, $D_4$, $B_2$. ३. °दाधिक° $D_1$. ४. °स्वादयस्वे° C. ५. °हरते $D_2$, $D_3$, $D_4$, $N_1$, P, $B_2$. ६. °हरध्वम् C.

लडादि[1] । पुनः पिबति पुनः खादतीत्यभ्यवहरति । इत्यादि ।

इति लकारार्थप्रक्रिया ।[2]

---

पक्षे हिस्वाविति । पिब खादेत्यभ्यवहरथ । भुङ्क्ष्व आस्वादस्वेत्यभ्यवहरध्वमिति । इत्यादीत्यादिशब्देन पुनः पिबत पुनः खादत इत्यभ्यवहरत इत्याद्यूह्यम् ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-

चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।

तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-

व्याख्यानेस्मिन् प्रसादे निरगमदमलोयं लकारार्थवर्गः ॥[3]

---

---

१. लडादिः $D_1$. २. After this—समस्तवैरिव्रजकुञ्जरेन्द्रव्रातेषु सिंहो नृपभानुजश्च । विशोभते भूपतिभीमसेनो महीपतीशाधिपतिर्महोजाः ॥; समाप्ता द्वितीया वृत्तिः । $B_2$ ; $D_3$ has after it—श्री । श्री···श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः । श्रीमद्विट्ठलाय नमः । श्रीगुरुभ्यो नमः । श्रीरामः ॥ २. After it—इत्याख्यातप्रक्रिया समाप्ता । $N_1$ ; इति लकारप्रक्रिया $D_3$ ; समाप्ता $D_4$. ३. After this $Dc_3$ has इति द्वितीयवृत्तिः संपूर्णा । ३. After this $Dc_1$ has—श्रीरस्तु । शुभं भवतु । कल्याणमस्तु । संवत् १६०६ वर्षे श्रावणमासे शुद्धपक्षे १ गुरौ लिखितमिदं पुस्तकम् ॥ ति० प्र० प्रसाद ॥ श्रीः ॥ श्रीः ॥ छ ॥ छ ॥ यादृशं पुस्तके दृष्टं तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥१॥ श्रीरस्तु । श्रीः ॥ श्रीः ॥ छ ॥

# अथ कृदन्तप्रक्रिया ।

धातोः ॥३।१।९१॥

आतृतीयाध्यायान्तं धातोरित्यधिक्रियते । पुनर्धातूक्तिः कृत्संज्ञा उपपदसंज्ञा चात्रैवेत्येवमर्था ॥

तत्रोपपदं सप्तमीस्थम् ॥३।१।९२॥

तत्रास्मिन् धात्वधिकारे सप्तमीनिर्दिष्टमुपपदाख्यं स्यात् ।

कृदतिङ् ॥३।१।९३॥

इति कृत्संज्ञा ।

---

अथ कृदन्तप्रक्रिया । तत्रादौ कृदन्तेष्वेव कृत्याः प्रदर्श्यन्ते । **आतृतीयाध्यायान्तमिति** । तृतीयाध्यायपर्यन्तं मर्यादीकृत्येत्यर्थः । ननु यङ्विधौ 'धातोरेकाचः—' इति धातुग्रहणं प्रकृतं तेनैवाधिकार-सिद्धौ पुनर्धातुग्रहणं किमर्थमित्याशङ्क्याह—**पुनर्धातूक्तिरिति** । चकार आर्धधातुकसंज्ञाया वासरूपबाधकत्वस्य च समुच्चयार्थः । अत्रैव कृत्संज्ञायां सत्यां प्रकरिष्यतीत्यत्र स्यप्रत्ययस्य सिंहावलोकनन्यायेन 'कृदतिङि'ति कृत्संज्ञाभावात् 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वाभावात् न सुबुत्पत्तिः । वासरूपबाधकत्वेनैव स्थिते पूर्वत्र क्सादिभिः सिचो न समावेशः स्यात् । आर्धधातुककार्ये धातुग्रहे सति सामर्थ्याद्धातोरित्येव हि तस्यार्धधातुकसंज्ञा । अन्यथा लूभ्याम् लूभिरित्यत्र क्विबन्ता धातुत्वं न जहतीत्यार्धधातुकसंज्ञा स्यात् । तत इट् प्रसज्येत ।

---

१. Before it—श्रीगणेशाय नमः । $N_1$. २. P drops the Vritti. ३. $Bc_1$ has before it—ओं नमः श्रीगणपतये. ४. ननु च $Dc_3$. ५. °धिकारः धातोः इति सिद्धौ $Dc_3$. ६. Dropped $Dc_3$. ७. °रित्येष विहितस्यार्ध° $Dc_3$, PC.

**वासरूपोऽस्त्रियाम् ॥३।१।९४॥**

अत्रासरूपोपवादप्रत्ययः उत्सर्गस्य वा बाधकः स्यात् स्त्र्यधिकारोक्तं विना ॥

---

वासरूपः[1] । अपवादविषय उत्सर्गो न भवतीति सर्वत्र स्थितिः । कृतां केषांचित् तत्रापि प्रवृत्तिर्दृश्यते सा कथं नाम स्यादित्यस्य योगस्यारम्भः । स्त्र्यधिकारोक्तं विनेति । कथं पुनरस्त्रियामित्यत एषोऽर्थो लभ्यते । एवं मन्यते । स्त्रीग्रहणं स्वर्यते । स्वरितेनाधिकारो विज्ञायते । तेन स्त्र्यधिकारेण यावुत्सर्गापवादौ तयोरेव प्रतिषेध इति । ननु स्त्रियां वाच्यायामित्यर्थः किमिति नोच्यते ।[3] एवमर्थे सति लव्या लवितव्येति यद्विषये तव्यो न स्यात् । एवं तर्हि स्त्रियामिति स्त्रीसंशब्देन यः प्रत्यय इति किं न । एवमर्थे सति व्यावक्रोशी व्यावकृष्टिरिति णचो विषये क्तिन् स्यादुभयोरपि स्त्रियामित्येव विहितत्वात् । अतः साधूक्तं स्त्र्यधिकारोक्तं विनेति । 'तव्यत्तव्यानीयर' इति उत्सर्गः । 'अचो यत्' इत्यपवादः । तद्विषये तव्यत्तव्यानीयरोपि संभवन्ति वा । चेयम् । चेतव्यम् । चयनीयम् । असरूप इति किम् । 'कर्मण्यण्' इत्युत्सर्गः । 'आतोनुपसर्गे कः' इत्यपवादो नित्यं बाधकः । गोद इति । नानुबन्धकृतमसारूप्यम् । अस्त्रियां किम् । 'स्त्रियां क्तिन्' इत्युत्सर्गः । 'अ प्रत्ययात्' इत्यपवादो बाधते एव नित्यम् । चिकीर्षा ।

---

१. °वादः प्रत्ययः P, C. २. After it—इति PC, $Dc_3$. ३. After it—स्वरितेनाधिकारः $Dc_3$. ४. एवमर्थे मनः इति $Dc_1$. ९. भवन्ति वा $Dc_3$, PC.

कृत्याः प्राङ्ण्वुलः ॥३।१।९५॥

ण्वुल्तृचावित्यतः प्राक् ये प्रत्यया विहितास्ते कृत्यसंज्ञाः[2] स्युः ।

कर्तरि कृत् ॥३।४।६७॥

कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते

तयोरेव कृत्यक्तखलर्थाः ॥३।४।७०॥

कृत्याः क्तः खलर्थाश्च भावकर्मणोरेव स्युः ॥

तव्यत्तव्यानीयरः ॥३।१।९६॥

धातोरेते प्रत्ययाः स्युरुक्तेर्थे ॥ तः स्वरार्थः । प्राग्वदिडादि । स्वाद्युत्पत्तिः । एधितव्यम् । एधनीयं त्वया ।

---

कृत्याः । 'ण्वुल्तृचौ' इत्यत इति । ननु 'रोगाख्यायां ण्वुल् बहुलम्' इत्यस्यात्रावधित्वं कस्मान्न । ज्ञापकात् । 'अर्हे कृत्यतृचश्च' इति तृच्ग्रहणं करोति तत् ज्ञापयति नास्यावधित्वमिति[3] । अतः साधूक्तं ण्वुल् तृचावित्यतःप्रागिति ।

तव्यत् । उक्तेर्थे इति । भावकर्मणोरित्यर्थः । तः स्वरार्थ इति । उपलक्षणं चैतत् । तरेफौ स्वरार्थावित्यर्थः । तकारः 'तित् स्वरितम्' इति स्वरितत्वार्थः । रेफः 'उपोत्तमं रिति' इति मध्योदात्तार्थः । प्राग्वदिडादीति । 'आर्धधातुकस्येड् वलादेः' इतीट् । आदिशब्देन गुणादि । स्वाद्युत्पत्तिरिति । 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वात् 'स्वौजसमौट्—' इति स्वाद्युत्पत्तिरित्यर्थः । एधितव्यमिति । एध वृद्धावित्यस्माद् भावे तव्यादयः । चेतव्य इति ।

---

१. P drops विहिताः २. °संज्ञकाः C. ३. °वधिकत्वमिति $Dc_1$.

भावस्यैकत्वादेकवचनं क्लीवता च । चेतव्यश्चयनीयो धर्मस्त्वया ॥ वसेस्तव्यत् कर्तरि णिच्च । वास्तव्यः । कर्मकर्तरि केलिमर्वाच्यः।[1] स्वयमेव पच्यन्त इति पचेलिमास्तण्डुलाः ।

कृत्यचः ॥८।४।२९॥

उपसर्गस्थान्निमित्तात् परस्याच उत्तरस्य कृत्स्थनकारस्य णत्वं स्यात् ॥ प्रयाणीयम् । अचः किम् । प्रमग्नः । निर्विण्णस्योपसंख्यानम् ॥ निर्विण्णः ।

---

चिञ् चयने । अस्मात् कर्मणि प्रत्ययः । कृतोक्तत्वात् कर्मणः प्रथमैव भवति धर्म इति । वास्तव्य इति । वसतीति वास्तव्यः । णित्त्वात् 'अत उपधायाः' इति वृद्धिः ।

कृत्यचः । अन मुक्सहित—अन अनि अनीयर् इनि निष्ठादेशाः प्रयोजयन्ति । अन । प्रयाणम् । मान । प्रयायमाणम् । अनि । प्रयाणिः । अनीयर् । मूल एवोदाहृतः । इनि प्रयायिणौ । निष्ठादेशः[2] । प्रहीणः । प्रमग्न इति । टुमस्जो शुद्धौ । अस्मात् कर्तरि क्तः । 'स्कोः—' इति सलोपः[3] । 'ओदितश्च' इति तस्य नः । कुत्वम् । निर्विण्ण इति । निपूर्वाद्विदेः क्तप्रत्यये 'रदाभ्यां निष्ठातो नः' इति नत्वे रूपम् ।

---

१. केलिमद्वाच्यः $B_2$, $N_1$; केलिमञ् वाच्यः $D_4$. २. निष्ठाप्रदेशाः $Dc_3$. ३. कलोपः:$Dc_3$.

णेर्विभाषा ॥८।४।३०॥

ण्यन्तात् परस्योपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थनस्य णो वा स्यात् ॥ दुर्वर्जादुपसर्गादिति केचित् । प्रयापणीयम् । प्रयापनीयम् ।

हलश्चेजुपधात् ॥८।४।३१॥

हलादेरिजुपधात् कृन्नस्याचः परस्य णो वा स्यात् प्रागुक्तनिमित्ते सति ॥ प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् ।

णेः । ननु चात्र यदि ण्यन्तात् परस्य कृत्स्थनस्य ण इत्युच्यते तर्हि प्रयाप्यमाणं प्रयाप्यमानमित्यत्र यकारव्यवहितत्वात् णत्वं विभाषा न स्यात् । 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्यानुवृत्तेः । अत एव काशिकायामुक्तम् । ण्यन्ताद्यो विहितः कृत् तत्स्थस्य नकारस्येति । प्रत्युदाहृतं च तत्रैव 'विहितविशेषणं किम् प्रयाप्यमाणं प्रयाप्यमानमित्यत्र यकारव्यवधानेपि यथा स्यात्' इति । अत्रोच्यते । एवमाचार्याणामभिप्रायः । अत्र यद्यपि यकारव्यवधानमस्ति तथापि व्यवाय इत्यनुवर्तनात् व्यवायेपि सेत्स्यति । तथा चोक्तं भाष्ये । 'अडधिकाराद्वा । अथवा अड्व्यवाय इति वर्तते' इति । दुर्वर्जादिति । दुर्वर्जनं किम् । दुर्योधनः । प्रयापणीयमिति । या प्रापणे । णिच् । 'अर्तिह्री—' इति पुक् । 'णेरनिटि' इति णिलोपः । एवमनमानअनि इनि निष्ठादेशेषूदाहार्यम् ।

हलः । 'कृत्यचः' इति नित्ये प्राप्ते विकल्पार्थं वचनम् । सर्वस्येजुपधस्य हलन्तत्वात् हल्ग्रहणमादेर्विशेषणमित्याह— हलादेरिति । प्रकोपणीयमिति । कुप क्रोधे । 'पुगन्त—' इति

१. °सर्गस्थनिमित्ता° C. २. स्यात् dropped $D_4$. ३. उपसर्गात् dropped $D_4$. ४. Dropped $B_2$; प्रकोपनीयम् । प्रकोपणीयम् N. ५. Dropped C, $D_2$. ६. हलादेः $B_2$, $D_4$. ७. °ग्रहस्यानन्तर्यस्याप्यनुवृत्तेः । $Dc_3$. ८. चात्रैव PC; च dropped $Dc_3$. ९. इति $Dc_3$, PC.

प्रोहणीयम् । इजुपधात् किम् । [1]प्रवपणीयम् ॥

**इजादेः सनुमः ॥८।४।३२॥**

इजादेरेव सनुमो हलन्तात् कृन्नस्य णः स्यात् [2]प्राङ्निमित्ते । [3]प्रेङ्खणीयम् । इजादेरेव किम् । [4]प्रमङ्गनीयम् ॥

**न भाभूपूकमिगमिप्यायीवेपाम् ॥८।४।३४॥**

एभ्यः कृन्नस्य णो न स्यात् ॥ [5]ख्या[6]धातोरपि णत्वं नेति केचित् । प्रख्यानीयम् । प्रभानीयम् । प्रभवनीयम् । [7]प्रपवनीयम् । पूञ एव निषेधः । पूङस्तु प्रपवणीयः सोमः । प्रकमनीयम् । प्रगमनीयम् । प्रप्यायनीयम् । प्रवेपनीयम् । ण्यन्तभादिभ्योऽपि न । प्रभापनीयम् ।

---

गुणः । **प्रोहणीयमिति** । ऊह वितर्के । **प्रवपणीयमिति** । टुवप् बीजतन्तुसंताने । अत्रोभयत्र 'कृत्यचः' इति णत्वम् ।

**इजादेः** । ननु चात्र 'कृत्यचः' इत्येव सिद्धमित्याशङ्क्य सिद्धे सत्यारम्भो नियमार्थ इत्याह— **इजादेरेवेति** । अत्र च 'हलः' इति वर्तते । तेन च सामर्थ्यात् तदन्तविधिरित्याह— **हलन्तादिति** । हलधिकारो ण्यन्तान्नित्यो विधिरनेन मा भूदित्येवमर्थम् । **प्रेङ्खणीयमिति** । इखि गतौ । **प्रमङ्गनीयमिति** । मगि सर्पणे ।

**न भा** । भा दीप्तौ । भू सत्तायाम् । पूञ् पवने । कमु कान्तौ । गम्लृ गतौ । ओप्यायी वृद्धौ । टुवेपृ कम्पने ।

---

१. प्रवहणीयम् $B_2$, $D_4$, N. २. प्राग्नि° $D_4$. ३. प्रेषणीयम् $D_2$; Before it—इखि गतौ N. ४. प्रकम्पनीयम् C, $B_1$, $D_2$, $D_3$. ५. After it—निमित्ते सति P. ६. धातोर्णत्वं C. ७. Dropped B. ८. नित्यं णत्वम् $Dc_3$, PC. ९. इति णित्यच इत्येव $DC_1$. १०. उत्सर्पणे $Dc_3$. ११. गम्लृसृप्लृ गतौ PC, $Dc_3$.

कृत्यल्युटो बहुलम् ॥३।३।११३॥

कृत्या ल्युट् च बहुलमर्थेषु स्युः ॥ स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेस्मै दानीयो विप्रः ॥

अचो यत् ॥ ३।१।९७॥

अजन्ताद्यत् स्यात् ॥ चेयं पुण्यं त्वया । जेयम् । वासरूपविधेस्तव्यादयोपि । जेतव्यम् । जयनीयम् । अजन्तभूतपूर्वादपि । दित्स्यम् । धित्स्यम् ।

---

कृत्य । बहुलग्रहणं न कार्यम् । आरम्भसामर्थ्यादेव कृत्यल्युटो यत्र विहितास्ततोन्यत्र स्युः । ततो बहुलग्रहणात् कृन्मात्रस्य स्वार्थव्यभिचारः सिद्धोतो गले चोप्यते इति गलेचोपकः पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् । स्नानीयमिति । ष्णा शौचे । अस्मात् करणेनीयर् । दानीय इति । डुदाञ् दाने । अस्मात् संप्रदाने ।

अचः । तकारो 'यतो नावः' इत्याद्युदात्तार्थः । अजन्तभूतपूर्वादपीति । अयमाशयः । द्विधा धातवः । अजन्ता हलन्ताश्चेति । तत्र हलन्तात् 'ऋहलोर्ण्यत्' इति ण्यतं वक्ष्यति । अतो यत् पारिशेष्यादजन्तादेव स्यात् किमज्ग्रहणेन इत्याशङ्क्य अजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमज्ग्रहणं कृतमिति । अजन्तश्चासौ भूतपूर्वश्च । प्रागजन्त इदानीं हलन्त इत्यर्थः । दित्स्यं धित्स्यमिति । दाञो धाञश्च सन् । द्वित्वम् । 'सनिमीमा—'

---

१. °मर्थे C. २. After it—उक्तेर्थे $D_4$, $B_2$. ३. Before it—चीयते $D_4$. ४. °दपि यत् $B_2$.

ईद्यति ॥६।४।६५॥

यति परे आत ईत् स्यात् ॥ गुणः । देयम् । ग्लेयम् । तकिशसिचतियतिजनिभ्यश्च यत् ॥ तक्यमित्यादि । हनो वा यद् वधश्च ॥ वध्यः । पक्षे ण्यत् । वात्यः ॥

पोरदुपधात् ॥३।१।९८॥

पवर्गान्तादुदुपधाद्यत् स्यात् । ण्यतोपवादः । शप्यम् । सरूपत्वान्न ण्यत् ॥[2]

---

इति इस् । 'अत्र लोपोभ्यासस्य ।' 'सः स्यार्धधातुके' इति तः । 'आर्धधातुकस्य—' इति विवक्षिते 'अतो लोपः' । तस्मिन् सति अनजन्तत्वात् यन्न स्यादतोजूग्रहणं कृतम् । पाक्षिकं चैतत् प्रयोजनं ज्ञेयम् । यदार्धधातुके परे लोपो विधीयते तदा विस्पष्टार्थमजूग्रहणम्[4] । गुण इति । 'सार्वधातुकार्धधातुकयोः' इति । ग्लेयमिति । ग्लै हर्षक्षये । 'आदेच उपदेशे—' इत्यात्वम् आर्धधातुके विवक्षिते । तकीत्यादि । तक शासने । शस हिंसायाम् । चति याचने । यती यत्ने[5] । जनी प्रादुर्भावे ।

पोः । शप्यमिति । शप उपालम्भने । अदुपधात् किम् । कोप्यम् । अत्र 'यतोनावः' इत्याद्युदात्तत्वं न । ण्यतो जातत्वादन्तस्वरितत्वमेव स्यात् ।

---

१. तक्यमित्यादि dropped C. २. तव्यादयः । हननीयः N. ३. After it—अदुपधात् किम् । कोप्यम् $B_2$. ४. After it—कृतम् $Dc_3$. ५. प्रयत्ने PC, $Dc_3$.

## आङो यि ॥७।१।६५॥

आङ्परस्य लभेर्नुम् स्याद्यादौ प्रत्यये[1] ॥ आलम्भ्या गौः । आङः किम् । लभ्यम् ।

## उपात् प्रशंसायाम् ॥७।१।६६॥

उपाल्लभेर्नुम् स्यात् प्रशंसायां यति[2] ॥ उपलम्भ्यः साधुः । स्तुतौ किम् । उपलब्धुं शक्यः उपलभ्यः ।

---

आङः । आलम्भ्या गौरिति । अत्र यादौ प्रत्यये विवक्षिते प्रत्ययोत्पत्तेः प्राक् नुमि कृते अदुपधत्वं विहतमिति यन्न भवति । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । तत्र कृदुत्तरपदप्रकृतिस्वरेणान्तस्वरितत्वं भवति । नुमुत्पत्तेः पूर्वमेव यदि यत् स्यात् तर्ह्युत्तरपदाद्युदात्तत्वं स्यात् । तच्च नेष्टम् । अत्र च 'इदितो नुम् धातोः' इति धातुग्रहणसामर्थ्यादुपदेशावस्थायामेव नुम् । तेन यादौ प्रत्यये विवक्षिते अयमर्थो लभ्यते । तदुक्तं भाष्ये । 'धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम्' इति । लभ्यमिति । 'पोरदुपधात्' इति यत्[3] ।

उपात् । उपलम्भ्यः साधुरिति । साधुः प्रशस्यतेत्र । अत्रापि यादिप्रत्ययविवक्षायां नुम् ततो ण्यत् । तेनान्तस्वरितत्वमेव । तथोक्तमिन्दुमत्यां वृत्तौ । 'उपलम्भ्या विद्या । ण्यदन्तत्वादन्तस्वरितत्वम्' इति । ननु वृत्तौ यतीत्युच्यते तत् कथमेतत् ण्यदन्तम् । सत्यम् । यतीत्यनेन यादिरेव प्रत्ययो विवक्षितः । स च यत्ण्यद्भ्यामन्यो न संभवतीत्युभयोः सामान्येन निर्देशः कृतो यतीति । ननु चैतत् सूत्रद्वयं ण्यत्प्रकरणे पठितव्यम् । किमिति यत्प्रकरणे पठ्यते । उच्यते । यद्यपि नुमि ण्यत्–प्रत्यय एव भवति तथापि नुमः पूर्वं यादिप्रत्ययविवक्षायां यदेवादुपधाद्विवक्ष्यत इति यत्प्रकरणे पठन्ति ।

---

१. परे for प्रत्यये C. २. उपात् परस्य लभे° $D_1$. ३. 'पोरदुपधात्' इति before it PC; $Dc_3$.

**शकिसहोश्च ॥३।१।९९॥**

आभ्यां यत् स्यात् ॥ शक्यम् । सह्यम् ।

**गदमदचरयमश्चानुपसर्गे ॥३।१।१००॥**

एभ्योनुपसर्गेभ्यो यत् स्यात् ॥ गद्यम् । मद्यम् । चर्यम् । चरे राङि चागुरौ * ॥ आचर्यो देशः । अगुरौ किम् । आचार्यः । यमेर्नियमार्थम् । यम्यम् । उपसर्गे तु । प्रगाद्यम् । प्रयाम्यम् ।

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ ॥३।१।१०१॥**

एते यदन्ता निपात्यन्ते गर्ह्याद्यर्थे ॥ अवद्यमनिष्टम् । पण्यं विक्रेयम् । अनिरोधोप्रतिबन्धः । शतेन वर्या कन्या । वृत्यान्या । स्त्रीनिर्देशात् पुंसि न । वार्या ऋत्विजः ।

---

शकिसहोः । शक्लृ शक्तौ । षह मर्षणे ।

गदमद । अनुपसर्गे इति । सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह- अनुपसर्गेभ्य इति । गद व्यक्तायां वाचि । मदी हर्षे । चर गति-भक्षणयोः । यम उपरमे । आचार्य इति । उपनेता गुरुः । यमेर्नियमार्थमिति । 'पोरदुपधात्' इत्येव सिद्धे पुनर्वचनं नियमार्थमित्यर्थः ।

अवद्यपण्येति । अवद्यमिति । वदेर्नञः परात् 'वदः सुपि क्यप् च' इति यत्क्यपोः प्राप्तयोर्यदेव निपात्यते । पण्यमिति । पणेर्व्यवहारार्थस्य ण्यति प्राप्ते यत् । वर्येति । वृञो ण्यति प्राप्ते यत् । वृत्येति । 'एतिस्तुशास्—' इति क्यप् । स्त्रीनिर्देशादिति । वर्येति सूत्रे [2] स्त्रीनिर्देशस्तन्त्रमित्यर्थः । वार्या ऋत्विज इति । ऋत्विजां हि धनत्रि[3]भागादनिरोधः[4] । स्त्रीलिङ्गता तु नास्ति । गर्ह्यादिषु किम् । अनुद्यम् । पाण्यम् । स्तुत्यमित्यर्थः ।

---

१. Dropped N. २. °निर्देशः सूत्रमित्यर्थः । Dc₁. ३. °संविभागा° PC. ४. °रोधोस्ति स्त्रीलि° PC.

**वह्यं करणम् ॥३।१।१०२॥**

वह्यं निपात्यते करणं चेत् । वह्यं शकटम् । वाह्यमन्यत् ।

**अर्यः स्वामिवैश्ययोः ॥३।१।१०३॥**

अर्यः स्वामी वैश्यो वा । आर्योऽन्यः ।

**उपसर्या काल्या प्रजने ॥३।१।१०४॥**

उपसर्येति निपात्यते । गर्भे प्राप्तकाला चेत् । उपसार्यान्या ।

**अजर्यं सङ्गतम् ॥३।१।१०५॥**

नञ्पूर्वाज्जीर्यतेः कर्तरि यन्निपात्यते संगतं चेद्वाच्यम् । न जीर्यतीत्यजर्यं सतां संगतम् ।

---

**वह्यं शकटमिति** । वहत्यनेनेति वह्यम् । **वाह्यमन्यदिति** । करणादन्यद्वाह्यमित्यर्थः ।

**अर्यः** । ऋ गतावित्यस्माद्धातोर्ण्यति प्राप्ते स्वामिवैश्ययोर्यन्निपात्यते । **उपसर्या** । उपपूर्वात् सर्तेर्यत्प्रत्ययो निपात्यते । कालः प्राप्तोऽस्याः प्राप्तकाला । 'कालाद्यत्' । प्रजनः प्रजननम् । भावे घञ् । प्रथमं गर्भग्रहणमिति । इममर्थं काल्या प्रजने इत्यस्याह– **गर्भे प्राप्तकाला चेदिति** ।

**उपसार्यान्येति** । उपसंक्रमणीयेत्यर्थः ।

**अजर्यम्** । **जीर्यतेरिति** । जॄष् वयोहानौ । **संगतमिति** । भावे क्तः । संगतिश्चेदित्यर्थः । संगतं किम् । अजरिता कम्बलः ।

---

१. प्रथमगर्भे $D_2$, $B_2$ ; प्रथमे गर्भे $N_1$. २. For प्राप्तकाला PC, $Dc_3$ have काल्या ।.

**ऋहलोर्ण्यत्** ॥३।१।१२४॥

ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात् ॥ कार्यम् । हार्यम् । वाह्यम् । कुत्वम् । हनस्तोचिण्णलोः । घात्यम् ।

**चजोः कु घिण्ण्यतोः** ॥७।३।५२॥

चजोः कुत्वं स्यात् घिति ण्यति च ॥ पाक्यम् । रोग्यम्[1] ।

**न क्वादेः** ॥७।३।५९॥

कवर्गादेर्धातोः चजोः कुत्वं न स्यात् ॥ गर्ज्यम् ॥

**अजिव्रज्योश्च** ॥७।३।६०॥

एतयोर्न कुत्वम्[2] ॥ व्राज्यम् । चाद्वजेरपि । वाज्यम् । अजेर्वीभावाण्ण्यति नोदाहरणम् ।

**वञ्चेर्गतौ** ॥७।३।६३॥

गतौ वञ्चः कुत्वं न स्यात् ॥ वञ्च्यम् । गतौ किम् ! वङ्क्यं काष्ठम्[3][4] ।

**ण्य आवश्यके** ॥७।३।६५॥

आवश्यकेर्थे ण्ये परे कुत्वं न स्यात् ॥

---

**ऋहलोः** । सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठीत्याह—**ऋवर्णान्तादिति** । **कुत्वमिति** । 'होहन्तेः—' इति ।

**चजोः** । यथासंख्यमत्र न भवति 'तेन रक्तं रागात्' इति लिङ्गात् । **पाक्यम्** । **रोग्यमिति** । डुपचष् पाके । रुज रोगे । **गर्ज्यमिति** । गर्ज ध्वनौ । **वङ्क्यं काष्ठमिति** । कुटिलमित्यर्थः ।

---

१. भोग्यम् $D_1$, रोक्यम् । रोग्यम् । $N_1$. २. After it—स्यात् $D_2$. ३. अगतौ तु वङ्क्यं काष्ठम् P. ४. C drops it.

लुम्पेदवश्यमः कृत्ये । अवश्यपाच्यम् । मयूरव्यंसकादित्वात् समासः ।

**यजयाचरुचप्रवचर्चश्च** ॥७।३।६६॥

एषां ण्ये कुत्वं न स्यात् ॥ याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यम् । ऋच् । अर्च्यम् ।

ऋदुपधादपि ऋचेरत एव ण्यत् ॥ त्यजिपूज्योश्च* ॥ न कुत्वम् । त्याज्यम् । पूज्यम् ।

**वचोऽशब्दसंज्ञायाम्** ॥७।३।६७॥

वचः कुत्वं न स्यादशब्दाख्यायाम् ॥ वाच्यम् । शब्दाख्यायां तु वाक्यम् ।

---

लुम्पेदवश्यमः कृत्ये इति । 'लुम्पेदवश्यमः कृत्ये' इत्यादिना श्लोकेनेत्यर्थः ।

यजयाचेति । यज देवपूजादौ । टुयाचृ याच्ञायाम् । रुच दीप्तौ । प्रपूर्वो वच परिभाषणे । ऋच स्तुत्याम् । ननु प्रवचग्रहणं किम् । 'वचोऽशब्दसंज्ञायाम्' इत्येव सिद्धम् । न सिद्धम् । प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति । तत्र शब्दसंज्ञात्वान्न सिध्यति । अपरे आहुः । प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधः नान्योपसर्गपूर्वस्य । तेनाविवाक्यमहः इति सिद्धम् । दशरात्रस्य यद्दशममहस्तदुच्यते अविवाक्यमिति ।

---

१. ऋचः $B_2$. २. Dropped $N_1$. ३. °दशब्दसंज्ञायाम् C. ४. शब्दसंज्ञायां प्रतिषिद्धत्वान्न सिध्यति । PC.

प्रयोज्यनियोज्यौ शक्यार्थे ॥७।३।६८॥

एतौ शक्यार्थे निपात्येते ॥ प्रयोक्तुं शक्यः प्रयोज्यः । नियोज्यः[1] । अन्यस्तु प्रयोग्यः । नियोग्यः ।

भोज्यं भक्ष्ये[2] ॥७।३।६९॥

भोग्यमन्यत् ।

---

प्रयोज्य । युजिर् योगे । भोज्यमिति । भुज पालनाभ्यवहारयोः। अभ्यवहार्यमात्रमत्र भक्ष्यम् । भोग्यमन्यदिति । पालनीयमित्यर्थः । स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयं प्रसङ्गाद्व्याख्यायते । 'न्यङ्क्वादीनां च' ॥७।३।५३॥ एतेषां कवर्गादेशो निपात्यते । न्यङ्कुः । मद्गुः । भृगुः । उप्रत्ययान्ताः । तक्रम् । वक्रम् । रगन्तौ । मेघः । अर्घः । अवदाघः । निदाघः । घञन्ताः । व्यतिषङ्गः । निसर्गः । अवसर्गः । पत्राद्यजन्ताः । फलेपाकः । दूरेपाकः । क्षणेपाकः । फलेपाका दुरेपाका इति टाबन्तौ पठन्ति । केचिदकारान्तौ[4] । पाकः[5] । मांसपाकः । कपोतपाकः । उलूकपाकः । कर्मोपपदेभ्योण् । न्यग्रोधः । वीरुत् । 'भुजन्युब्जौ पाण्युपतापयोः' ॥७।३।६१॥ निपात्यौ । भुज्यतेनेनेति भुजः । पाणिः । 'हलश्च' इति घञ् । कुत्वाभावो गुणाभावश्च निपातनात् । न्युब्जिताः शेरतेत्र न्युब्जः । रोगः । घञ् । कुत्वाभावः । 'प्रयाजानुयाजौ यज्ञाङ्गे' ॥७।३।६२॥ घञन्तौ कुत्वाभावार्थं[6] निपात्यौ । प्रञ्च प्रयाजाः[7] । यज्ञाङ्गे किम् । प्रयागः[8] । अनुयागः । प्रयाजानुयाजाविति निदर्शनार्थम्[9] । अन्यत्रापि स्यादिति । उपयाजः । उपांशुयाजः । पत्नीसंयाजः । ऋतुयाजः । 'ओक उचः के' ॥७।३।६४॥ उचेर्धातोः के ओक इति निपात्यते ।

---

१. Dropped N. २. $D_1$, $D_2$, $D_4$, N drop it. ३. भक्षे $D_1$. ४. केचिदाबन्तौ $Dc_3$; केचित् टाबन्तौ PC. ५. श्वपाकः PC. ६. घञि कुत्वा° PC, $Dc_3$. ७. After it—पञ्चानुयाजाः PC, $Dc_3$. ८. प्रयोगानुयागः $Dc_3$. ९. प्रदर्शना° PC, $Dc_3$.

## ओरावश्यके ॥३।१।१२५॥

उवर्णान्ताण्ण्यत् स्यादावश्यकेर्थे । यतोपवादः । अवश्यलाव्यम् । विप्रेण शुचिना भाव्यम् । लव्यमन्यत् ।

## आसुयुवपिरपिलपित्रपिचमश्च ॥३।१।१२६॥

एभ्यो ण्यत् स्यात् यतोपवादः ॥ आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । त्राप्यम् । आचाम्यम् । दभेश्च ॥* दाभ्यम् । न्लोपिनो निर्देशात् न्लोपः । भेज्जप्यजानमां यद्वेति

---

न्योकः । अन्तोदात्तः फलम् । दिवोकसः । असुनि उणादिबाहुल्यात् कुत्वम् ।

ओः । अवश्यंभाव आवश्यकम् । मनोज्ञादित्वाद्वुञ् । विप्रेण शुचिना भाव्यमिति । अत्र हि अशुचित्वे प्रत्यवाय इति अवश्यंभावो गम्यते ।

आसु । यतोपवाद इति । षुञ् अभिषवे । यु मिश्रणे । अनयोरजन्तत्वाद्यत् प्राप्तः । डुवप । बीजतन्तुसंताने । रप लप व्यक्तायां वाचि । त्रपूष् लज्जायाम् । चमुछमुजमुझमु अदने । एषामदुपधपवर्गान्तत्वात् । दभेश्चेति । न्लोपिनो निर्देशादिति । ननु दम्भेरदुपधत्वाभावादेव यतोप्राप्तेः सिद्धौ किमर्थं पृथग् ण्यद्विधिः । अतो दभिरयमदुपधोन्य इति वाच्यम् । तथा सति तस्य नकाराभावात् 'न्लोपिनो निर्देशात् न्लोप' इति नोपपद्यते ।

---

१. C drops it. २. भजजपयजा° $N_1$. ३. दिवौकसः $Dc_3$, PC. ४. नलोपि° PC. ५. यलोपे प्राप्ते $Dc_3$. ६. नलोपि° PC. ७. नलोप PC.

केचित्। भाग्यम्। भज्यम्। जाप्यम्। जप्यम्। याज्यम्। यज्यम्। आनाम्यम्। आनम्यम्।

**आनाय्योऽनित्ये ॥३।१।१२७॥**

गार्हपत्ययोनौ दक्षिणाग्नावनित्ये आनाय्यो निपात्यते। आनेयोऽन्यः।

---

दभेः प्रकृत्यन्तरत्वं न्यासे उक्तम्। तथाहि। दाभिधातुर्ण्व-पठित एव प्रकृत्यन्तरमस्ति चुलुम्पतिवदिति। पाणिनीयमतदर्पणे चाप्युक्तम्। दभिरवमेऽर्थे सौत्र इति। क्षीरतरङ्गिण्यां च दभ इति चुरादावस्तीत्युक्तम्। दभादितिविपरिपडिपस्तेपक्षेप इति पठित्वा उदाहृतं दाभीयतीति। नन्दी तु दम्भयतीत्येवं मन्यते। इत्यप्युक्तम्। भेतस्मात् न्लोपिन इत्यादि कथम्। उच्यते। न्लोपिनो निर्देशात् न्लोप इत्यस्यायमर्थः। दभेश्चेति वार्तिके न्लोपिनो दभेर्निर्देशाल्लोपो दभिरस्तीति। नो लोपः छेदः नकाराभाव इत्यर्थः। स विद्यते यस्य न्लोपी तस्य निर्देशात्। नकाररहितस्य दभेर्निर्देशात् न्लोपः नो लोपो यस्य स न्लोपः नकारलोपसहितो नकाररहितो दभिरस्तीत्यर्थः। एवंविधाद्व्याख्यानात् सर्वं समञ्जसं भवति। अथवा दम्भे दंभने इत्यस्मादेव ण्यद्विधिः दभेश्चेति। ननु चोक्तं दम्भेरदुपधत्वाभावादेव सिद्धो ण्यदिति। सत्यम्। तथापि ण्यत्संनियोगेन नलोपार्थं दभेश्चेति वक्तव्यमिति आचार्याणामभिप्रायः।

**आनाय्यः**। अनित्यमात्रे चेदानाय्य इति निपात्यते तर्हि घटादिष्वतिप्रसङ्गः। अत आह—**दक्षिणाग्नाविति**। दक्षिणाग्नावपि यो वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वानीयते तत्राप्यतिप्रसङ्गस्तत्राह-**गार्हपत्य-योनाविति**। एतच्च रूढेर्बलवत्त्वाल्लभ्यते। अत्र च आङ्पूर्वा-न्नयतेर्ण्यदायादेशौ निपात्येते। **आनेयोऽन्य** इति। 'अचो यत्' इति यत्।

---

१. भाज्यम् C. २. °तुष पठित C. ३. अपि dropped PC, Dc3.

**प्रणाय्योऽसंमतौ ॥३।१।१२८॥**

दुर्मतौ निष्कामे वा वाच्ये । प्रणाय्यः साधुश्चौरो वा[1] । प्रणेयोऽन्यः ।

**पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥३।१।१२९॥**

एते मानादौ क्रमान्निपात्यन्ते ॥ पाय्यं मानम् । पेयमन्यत् । सांनाय्यं हविः । संनेयमन्यत् । निकाय्यो निवासः । निचेयोऽन्यः । दधात्यग्निमिति धाय्या सामिधेनी ऋक् । धाय्या ऋत्विजः । धेयमन्यत् ।

**क्रतौ कुण्डपाय्यसंचाय्यौ ॥३।१।१३०॥**

कुण्डैः पीयतेऽत्र सोम इति कुण्डपाय्यः क्रतुः । संचाय्यः क्रतुः ।

---

**पाय्यसान्नाय्य** । **पाय्यमिति** । माङो ण्यत् पत्वं च निपात्यते । **सांनाय्यमिति** । संपूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च । **निकाय्य इति** । निपूर्वात् चिनोतेर्ण्यत् आयादेशः कुत्वं च । **धाय्य इति** । धाञो ण्यत् ।

**क्रताविति** । **कुण्डपाय्य इति** । कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो युक् च निपात्यते । 'यतो नावः' इत्युत्तरपदाद्युदात्तत्वम् । **संचाय्य इति** । संपूर्वाच्चिनोतेर्ण्यदायादेशो निपात्यते । संचीयतेऽसौ संचाय्यः । क्रतौ किम् । कुण्डपानम् । संचेयः ।

---

१. चौरो वा साधुः $N_1$.

**अग्नौ परिचाय्योपचाय्यसमूह्याः ॥३।१।१३१॥**

अग्नावेते साधवः । अग्नौ किम् । परिचेयः । उपचेयः । संवाह्यः ।

**चित्याग्निचित्ये च ॥३।१।१३२॥**

एतौ निपात्येते । चित्योग्निः । अग्नेश्चयनमग्निचित्या[1] ।

**अमावस्यदन्यतरस्याम् ॥३।१।१२२॥**

अमोपपदाद्वसेः कालेधिकरणे ण्यत् तत्र च[2] वृद्ध्यभावो वा निपात्यते । अमा सह वसतोस्यां चन्द्रार्कावित्यमावस्या[3] अमावास्या वा[4] । यजन्त्यनयेति[5] याज्या ऋक् इति केचित् ।

**वदः सुपि क्यप् च ॥३।१।१०६॥**

वदेरनुपसर्गे सुबन्ते उपपदे क्यप् प्रत्ययः स्यात् चकाराद्यत् । उपपदमिति समासः । ब्रह्मणा उद्यत इति ब्रह्मोद्या कथा । ब्रह्मवद्या[6] ।

---

**अग्नौ** । पर्युपपूर्वस्य चिनोतेर्यदायादेशौ निपात्येते । संपूर्वाद्वहतेः संप्रसारणं दीर्घत्वं च ।

**चित्या** । चीयतेसौ चित्योग्निः । **अग्निचित्येति** । भावे यत्प्रत्ययः तुक् च निपात्यते । तेनोदात्तत्वं स्यात् । अग्नावित्येव । आचेयमन्यत् । **अमा** । अत्रोक्तम् ।

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ इति ॥

**वदः** । **ब्रह्मोद्येति** । कर्मणि क्यप् । संप्रसारणम् । आद्गुणः । सुपि किम् । वाद्यम् । अनुपसर्गे किम् । प्रवाद्यम् ।

---

१. After it—स्त्रीत्वं लोकात् P. २. C, P drop it. ३. °वास्या अमावस्या वा । $N_1$; °वास्या अमावस्या $D_4$. ४. च $D_2$. ५. यजन्तं अनये° $D_1$. ६. After it—वा $N_1$, $D_4$.

## भुवो भावे ॥३।१।१०७॥

अनुपसर्गे सुप्युपपदे भुवः क्यप् स्याद् भावे ॥ ब्रह्मणो[1] भावो ब्रह्मभूयम्[2] । सुपि किम् । भव्यम् । अनुपसर्गे किम् । प्रभव्यम् ।

## हनस्त च ॥३।१।१०८॥

अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात् तकारोन्ता-[3]देशश्च । ब्रह्मणो हननं ब्रह्महत्या । स्त्रीत्वं लोकात् ।

## एतिस्तुशास्वृदृजुषः क्यप् ॥३।१।१०९॥

एभ्यः[4] क्यप् स्यात् ॥

## ह्रस्वस्य पिति कृति तुक् ॥६।१।७१॥

धातोर्ह्रस्वान्तस्य[5] तुगागमः स्यात् पिति कृति ॥ इत्यः । स्तुत्यः । शास इदङ्हलोः । शिष्यः । वृ इति वृञो ग्रहणं न वृङः । वृत्यः । वृङस्तु वार्या ऋत्विजः । आदृत्यः । जुष्यः । पुनः क्यब्रुक्तिः क्यप्बाधकस्य ण्यतो बाधनार्था । अवश्यस्तुत्यः॥

---

भुवः । भावग्रहणमुत्तरार्थम् । पूर्वसूत्रे चानुकृष्टत्वाद्यदत्र नानुवर्तते ।

हनः । सुपि किम् । घातो वर्तते । भावे ण्यत् न भवत्यनभि-धानात् । अनुपसर्गे किम् । प्रघातो वर्तते ।

एति । इण् गतौ । ष्टुञ् स्तुतौ । शासु अनुशिष्टौ । वृञ् आवरणे । दृङ् आदरे । जुषी प्रीतिसेवनयोः । पुनः क्यबिति । 'वदः सुपि क्यप् च' इत्यतः क्यप्ग्रहणेनुवर्तमाने पुनः क्यबुक्तिरि-

---

१. $D_1$ drops ब्रह्मणो भावः; before it—चानुकृष्टमुत्तरत्र नानुवर्तत इति यतो नानुवृत्तिः । $N_1$. २. After it—क्लीबत्वं लोकात् P. ३. तकारान्ता° $D_4$. ४. Before it—सुप्युपसर्गे भावे इति निवृत्तम् । $N_1$. ५. °ह्रस्वाङ्गस्य C.

शंसिदु[1]हिगुहिभ्यो वा । शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् ॥ आङ्पूर्वादजेश्च संज्ञायाम् । अजेः क्यपि वीभावो नेति वाच्यम् ॥* आज्यम् । उपेयमिति ई[2] गतावित्यस्य रूपं नेणः ।

ऋदुपधाच्चाक्लृपिचृतेः ॥३।१।११०॥

ऋदुपधात् क्यप् स्यात् क्लृ[3]पिचृ[4]ती विना ॥ वृत्-वृत्यम् ।

---

त्यर्थः । शंसीति । शंसु स्तुतौ । दुह प्रपूरणे । गुहू संवरणे । आङ्पूर्वादिति । 'अजेर्व्यघञपोः ।' इति प्राप्तवीभावनिवृत्त्यर्थमाह-अजेरिति । आङ्पूर्वस्याज गतावित्यस्य रूपम् । ननु चाञ्जू व्यक्तिम्रक्षणकान्तिगतिषु इत्यस्यैतद्रूपमिति न्यासकार आह । भाष्यकारोऽप्याह । अञ्जेश्चोपसंख्यानम् । आज्यम् । यदि क्यप् वृद्धिर्न प्राप्नोति । तस्मात् ण्यदेव । यदि ण्यत् उपधालोपो न प्राप्नोति तस्मात् क्यबेव । ननु चोक्तं वृद्धिर्न प्राप्नोतीति । आङ्पूर्वस्यैष प्रयोग इति । तत् किमज गतावित्यस्येत्युच्यते । समज्येत्यत्र वीभावार्थं[5] च वक्तव्यम् अजेः क्यपि वीभावो नेति वाच्यमिति । तदत्र किमर्थं पठ्यते । त[6]त्रोच्यते । अज गतौ । अस्यापि आज्यमित्येतद्भवतीति प्रदर्शनार्थम् । द्रवरूपे घृतेनुगतार्थत्वात् । म्रक्षणार्थत्वेनाजेरनुगतार्थत्वमिति । उभयोरप्याज्यं भवतीत्यभिप्रायेणैतस्येत्युक्तम् ।

ऋदुपधात् । क्लृपिचृती विनेति । क्लृपू सामर्थ्ये । चृती हिंसायाम् ।

---

१. °गुहिदुहिभ्यो वा $D_2$, $D_4$. २. ई C; ईङ् $D_2$. ३. क्लपि $D_1$. ४. चृति $N_1$. ५. वीभावाप्राप्त्यार्थं च कर्तव्यम् PC; वीभावाभावार्थं $Dc_3$. ६. अत्रो° PC.

वृध्यम् । कॢपिचृत्योस्तु कल्प्यम् । चर्त्यम् । ऋदुपधेति तपरः किम् । कॄत्-कीर्त्यम् ॥ पाणौ सृजेर्ण्यत् ॥* पाणिसर्ग्या रज्जुः ॥ समवपूर्वाच्च ॥* समवसर्ग्या ॥

## ई च खनः ॥३।१।१११॥

खनः क्यप् स्यादीकारोन्तादेशश्च ॥ आद्गुणः । खेयम् । दीर्घोक्तिरिकारान्तरप्रश्लेषार्था । तेन येविभाषेत्यात्वं न ।

## भृञोसंज्ञायाम् ॥३।१।११२॥

भृञः क्यप् स्यान्न तु संज्ञायाम् ॥ भृत्यः । संज्ञायां तु भार्या नाम क्षत्रियाः । भार्या वधूः ॥

---

एतौ मुक्त्वा । कृपेर्लत्वस्यासिद्धत्वादृदुपधत्वम् । कल्प्यम् । चर्त्यमिति । 'ऋहलोर्ण्यत्' । कीर्त्यमिति । कॄत संशब्दे । 'अचो यत्' इत्यत्र भूतपूर्वग्रहणात् 'णेरनिटि' इति णिलोपेपि कृते यत् स्यात् । अनित्यण्यन्ताश्चुरादय इति पक्षे णेरभावे ण्यत् । तित्त्वात् 'तित् स्वरितम्' इति अन्तस्वरितत्वम् । क्यपि हि सत्याद्युदात्तत्वं स्यात् । खेयमिति । खनु विदारणे । ननु च किमर्थं दीर्घ ईकार उच्यते । न । ह्रस्व एवोच्येत । ह्रस्वेपि आद्गुणेनैव खेयमिति सेत्स्यतीति । अत आह—दीर्घोक्तिरिति ।

भृञः । भार्या वधूरिति । ननु चात्र 'संज्ञायां समज—' इति क्यपा भवितव्यम् । 'भृञोसंज्ञायाम्' इत्यस्य तु प्रतिषेधस्य पुंसि संज्ञाविषये भार्या नाम क्षत्रिया इत्यत्र सावकाशत्वात् । तन्न । तत्र भावाधिकारोस्ति । तेन कर्मणि भार्येत्यत्र ण्यतैव भाव्यम् । तथोक्तम् ।

---

१. कृपि $D_1$. २. कृती छेदने $D_1$. ३. न भवति $D_1$. ४. भार्या नाम क्षत्रियः $D_2$ $D_4$, $B_2$. ५. C drops it. ६. संशब्दने PC; $Dc_3$.

संभृञो वा* ॥ संभृत्यः । संभार्यः ।

**मृजेर्विभाषा** ॥३।१।११३॥

मृजेः क्यब् वा स्यात् पक्षे ण्यत् ॥ मृज्यः । मार्ग्यः ।

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** ॥३।१।११४॥

एते क्यबन्ता निपात्यन्ते ॥ राज्ञा सोतव्यो राजसूयः क्रतुः । सुवति सरति वा सूर्यः । मृषा उद्यते मृषोद्यं[1] नित्यम्[2] । रोचते रुच्यः । स्वर्णरूप्याभ्यामन्यत् कुप्यम्[3] । गोप्यमन्यत् ।

---

'संज्ञायां पुंसि दृष्टत्वात् न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' ॥

पूर्वेणैव व्याख्यातप्रायमेतत् ।

**संभृञो वेति** । असंज्ञायां नित्यं क्यपि प्राप्ते विकल्प उच्यते ।

**मृजेः** । ऋदुपधत्वात् प्राप्तविभाषेयम् । **मार्ग्य** इति । 'चजोः—' इति कुः । 'मृजेर्वृद्धिः' ।

**राजसूयेति** । **राज्ञा सोतव्यो राजसूय** इति । षुञ् अभिषवे । अस्माद्राजनि तृतीयान्ते उपपदे कर्मणि क्यप् । तस्य च तुगभावो दीर्घत्वं च निपात्यते । राजा वा सूयतेऽत्रेति राजसूयः । **सुवतीति सरतीति** । षु प्रेरणे । सृ गतौ । आभ्यां यथाक्रमं यति ण्यति च प्राप्ते क्यप् निपात्यते । सुवतीति कर्मणि लोकान् प्रेरयतीति । **मृषोद्यं नित्यमिति** । 'वदः सुपि क्यप् च' इत्यनेन पक्षे क्यपि पक्षे च यति प्राप्ते क्यबेव निपात्यते । तेन मृषोद्यं नित्यं रूपं भवतीत्यर्थः । **रोचते रुच्य इति** । रोचते इति कर्तृप्रत्ययेन तृजाद्यपवादः कर्तरि क्यप् निपात्यत इति दर्शयति । **कुप्यमिति** । गुप गोपने । गुपू रक्षणे । क्यप् । आदेः कत्वं[4]

---

१. मृषोद्यः । $N_1$. २. °मन्यद्धनं $D_2$. ३. कोप्य° C. ४. °कुत्वं च PC; $Dc_3$.

कृष्टे स्वयमेव पच्यत इति कृष्टपच्यो व्रीहिः । न व्यथते अव्यथ्यः ।[1]

**भिद्योद्ध्यौ नदे ॥३।१।११५॥**

कर्तरि क्यबन्तावेतौ नदे वाच्ये ॥ कूलं भिनत्तीति भिद्यो नाम नदः । वारि उज्झतीति उद्ध्यो नदः ॥

**पुष्यसिध्यौ नक्षत्रे ॥३।१।११६॥**

कार्यं पुष्णाति पुष्यत्यस्मिन् वा पुष्यो नक्षत्रम् । कार्यं साधयति सिध्यत्यस्मिन् वा सिध्यः । स एव तिष्योऽपि ।

**विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥३।१।११७॥**

पूनीजिभ्यः क्यब् निपात्यते ॥ विपूयो मुञ्जः ।

---

निपात्यते । कृष्टे स्वयमेव पच्यत इति कृष्टपच्य इति । कर्मकर्तरि क्यप् निपात्यते इति दर्शयति । अव्यथ्य इति । व्यथ भयसंचलनयोः । अस्मात् कर्तरि तृजपवादः क्यप् निपात्यते ।

भिद्य । भिदेर्नदेऽभिधेये कर्तरि क्यप् तृजपवादो निपात्यते । उद्ध्येति । उज्झ उत्सर्गे । अस्य धत्वं च कार्यम् ।

पुष्णातीत्यादिना पुष पुष्टौ अस्मात् तथा षिधू संराद्धौ इत्यस्मात् कर्तरि अधिकरणे चार्थे नक्षत्रेऽभिधेये क्यप् निपात्यते इति दर्शयति । स एव तिष्योपीति । तुष तुष्टौ इत्यस्य रूपम् ।

विपूय । पूञ् पवने । णीञ् प्रापणे । जि जये । त्रयाणामप्यजन्तत्वात् यति प्राप्ते कर्मणि क्यप् निपात्यते । विपूय इति । विपूयते इति विपूयः मुञ्जः ।

---

१. व्यथ्यते $D_1$, C. २. Before it—स्तः $D_2$; निपात्येते $B_2$, $N_1$, $D_4$. ३. Dropped in $D_1$.

विनीयः कल्कः । जित्यो हलिः । एषु किम् । विपत्यम् । विनेयम् । जेयम् ॥

प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥३।१।११८॥

आभ्यां ग्रहेः क्यप् स्याच्छन्दसि ॥ भाषायां वेति केचित् । प्रतिगृह्यम् । प्रतिग्राह्यम् । अपिगृह्यम् । अपिग्राह्यम् ।

पदास्वैरिबाह्यापक्ष्येषु च ॥३।१।११९॥

एष्वर्थेषु ग्रहेः क्यप् स्यात् ॥ प्रगृह्यं पदम् । गृह्यः । अस्वैरी । ग्रामगृह्या सेना । ग्रामबाह्येत्यर्थः । स्त्रीनिर्देशान्नान्यत्र । कृष्णगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

---

कश्चिदोषधिविशेषः । विनीयः कल्क इति । विनीयते सिद्धिं प्राप्यते इति विनीयः । तैलेन घृतेन वा त्रिफलादिद्रव्यसमवेतेन साध्यः कश्चिदोषधविशेषः कल्कः । जेतव्यो जित्यः । महद्धलं हलिरित्युच्यते ।

प्रत्यपि । 'ग्रहोपिप्रतिभ्यां ति वा' इति दुर्गोक्तेः भाषायां वेति तन्मतमाश्रित्याह—भाषायामिति । प्रतिगृह्यमिति । 'ग्रहिज्या—' इति संप्रसारणम् । 'कुगतिप्रादयः' इति समासः ।

पदा । एष्विति । पदे अस्वैरिणि बाह्यायां पक्ष्ये वार्थे । प्रगृह्यं पदमिति । प्रगृह्यत इति प्रगृह्यम् । असंनिकर्षोत्र ग्रहेरर्थः । स्वरो हि तत्र न संधीयते । यस्य पूर्वाचार्यैः प्रगृह्यसंज्ञा विहिता तत् प्रगृह्यम् । अस्वैरीति । स्वयमीरितुं शीलं यस्य । ताच्छीलिको णिनिः । स्वैरी स्वतन्त्रः । अस्वैरी परतन्त्रः । ग्रामबाह्येत्यर्थ इति । बहिर्भवा बाह्या । 'बहिषष्टिलोपो यण् च' । इति यण् टिलोपश्च । ग्रामबहिर्भूतेत्यर्थः । अन्यत्रेति । पुंसि नपुंसके च ।

---

१. पत्यम् । $N_1$. २. प्रतिगृह्यः । प्रतिग्राह्यः । अपिगृह्यः । $N_1$; ३. C drops अर्थेषु. ४. Before it—पक्षे भवः पक्ष्यः । $N_1$.

**विभाषा कृवृषोः ॥३।१।१२०॥**

आभ्यां वा क्यप् स्यात् ॥ कृत्यम् । कार्यम् । वृष्यम् । वर्ष्यम् ।

**युग्यं च पत्रे ॥३।१।१२१॥**

पत्रं वाहनम् । युग्यमश्वादि चेत् । योग्यमन्यत् ।

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥३।३।१६३॥**

प्रेषितस्त्वं त्वया गन्तव्यं गमनीयं गम्यम् । अनुज्ञातस्त्वं त्वया अध्येतव्यमध्ययनीयमध्येयम् । प्राप्तस्ते कालस्त्वया ध्यातव्यं ध्यानीयं ध्येयम् । सामान्यतः प्राप्तावप्यत्र लोटा बाधा मा भूदिति पुनः[1] कृत्यविधिः । स्त्रियां क्तिन ऊर्ध्वं[2] वासरूपविधेरभावात् ।

---

**वृष्यमिति** । वृषु सेचने । पक्षे ण्यत् ।

**पत्रं वाहनमिति** । पतत्यनेनेति पत्रम् । 'दाम्नी—' इति ष्ट्रन् । युग्यम् । युजिर् योगे । योजनीयं युग्यम् । युज्यतेनेन वा गमनम् ।

**प्रेषितस्त्वमित्यादि** । गमेस्तव्यत्तव्यानीयरः । 'पोरदुपधात्' इति यच्च । **अध्येयमिति** । इङ् अध्ययने । 'अचो यत्' । **ध्येयमिति** । ध्यै चिन्तायाम् । आत्वम् । यत् । 'ईद्यति' इति ईत्वं गुणः । ननु किमर्थं प्रैषादिषूच्यन्ते[3] । यतः सामान्येन भावकर्मणोर्विहिता एव ते प्रैषादिषु त्वान्यत्र भविष्यन्तीत्याशङ्क्याह—**सामान्यत इति** । प्रैषादिष्वर्थविशेषेषु विहितेन लोटा सामान्यविहितानां कृत्यानां बाधा मा भूदिति पुनः कृत्यविधिरित्यर्थः । ननु च वासरूपन्यायेन ते अपि भविष्यन्तीत्याशङ्क्याह—**स्त्रियां क्तिन्निति** । **लिङान्नेति** । व्याख्यातप्रायमेतत् ।

---

१. $D_1$ drops पुनः. २. अत ऊर्ध्वं $D_1$; इतऊर्ध्वं $B_2$, $D_4$; इत्यत्र for ऊर्ध्वं $N_1$. ३. प्रैषादिषु कृत्या उच्यन्ते PC.

अर्हे कृत्यतृचश्च ॥३।३।१६९॥

स्तोतुमर्हः[1] स्तोतव्यः । स्तवनीयः । स्तुत्यः । लिङात्र बाधो मा भूदिति कृत्यतृचोर्विधिः ।

भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥३।४।६८॥

एते कृत्यान्ता वा कर्तरि निपात्यन्ते ॥ भवतीति भव्यः । भव्यमनेन[2] वा । गायतीति गेयः । गेयं साम वटुना वा । इत्यादि ।

शकि लिङ् च ॥३।३।१७२॥

चात् कृत्याः ॥ वोढुं शक्यो वोढव्यः । वहनीयः । वाह्यः ।

---

भव्यगेय । 'तयोरेव' इति भावकर्मणोः प्राप्तौ पक्षे कर्तरीत्युच्यते । भव्यादिषु गेयप्रवचनीयोपस्थानीयानां कर्तरि कर्मणि च शेषाणां चाकर्मकत्वाद् भावे कर्तरि च । भव्य इति । 'अचो यत्' । गुणः । 'धातोस्तन्निमित्तस्यैव' इत्यव् । गेय 'ईद्यति' इतीत्वम् । इत्यादीति । आदिशब्देन प्रवचनीयो गुरुः स्वाध्यायस्य । प्रवचनीयः स्वाध्यायो गुरुणा । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयो गुरुः शिष्येण । जायतेसौ जन्यः । जन्यमनेन वा । आप्लवते आप्लाव्यः । आप्लाव्यमनेन वा । आपततीत्यापात्यः । आपात्यमनेन वा । इति संगृहीतं स्पष्टं कृत्यम् । वोढव्य इति । वह प्रापणे । तव्यः । 'हो ढः' । 'झषस्तथोः—' इति धः । ष्टुत्वम् । ढलोपः । 'सहिवहोरोद-

---

१. $D_1$ drops स्तोतुमर्हः ; स्तोतुमर्हति $D_2$. २. Before it—भूयते $B_2$.

लिङा बाधो मा भूदिति कृत्योक्तिः ॥

इति कृत्यप्रक्रिया ॥

---

वर्णस्य' इत्योकारः । लिङेत्यादि । पूर्ववद् व्याख्यातव्यम् । स्पष्टत्वात् त्यक्तमेकम् । 'कृत्याश्च' ॥३।३।१७१॥ आवश्यकाधमर्ण्ययोः कृत्याः स्युः । आवश्यके । कटः कार्यः । आधमर्ण्ये । शतं दातव्यम् । निष्को देयः । आवश्यकाधमर्ण्ययोर्विशेषाविहितेन णिनिना बाधा मा भूदिति विधिः । केचित्तु कर्तरि विहितो णिनिर्भावकर्मविहितानां कृत्यानां न बाधक इत्याशङ्क्य भव्यगेयादयः कर्तृवाचिन इहोदाहरणमित्याहुः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रिया कृत्यसंज्ञा ॥

---

१. बाधा N. २. °दमलप्रत्ययाः कृत्यसंज्ञाः Dc3 ; निरनुगुणाः प्रत्ययाः कृत्यसंज्ञाः PC.

ण्वुल्तृचौ ॥३।१।१३३॥

धातोर्ण्वुल्तृचौ स्तः कर्तरि कृदिति कर्त्रर्थे ॥ युवोरनाकौ । करोतीति कारकः । कर्ता । वोढुमर्हो वोढा । प्रत्ययस्थादितीत्वम् । कारिका । ऋन्नेति ङीप् । कर्त्री । गाङ्कुटेति ङित्त्वम् । कुटिता । कोटकः । विज इट् । विजिता । वेजकः । हनस्तोचिण्णलोः । घातकः । आतो युक् चिण्कृतोः । दायकः । नोदात्तोपदेशेति उपधावृद्धिर्न । शमकः । दमकः । अनिटस्तु

---

ण्वुल् । णकारो वृद्ध्यर्थः । उकारो युवोरिति विशेषणार्थः । लकारः प्रत्ययात्पूर्वस्योदात्तार्थः । चकारस्तृन्तृचोः सामान्यग्रहणार्थः 'तुरिष्ठेमेयस्सु' इत्यादिषु । नान्तोदात्तार्थः । तस्य प्रत्ययस्वरेणैव सिद्धत्वात् । **कारक** इति । डुकृञ् करणे । 'अचो ञ्णिति' इति वृद्धिः । रपरः । कृत्त्वात् प्रातिपदिकत्वम् । स्वादयः । **कर्तेति** । गुणः । 'ऋदुशनस्—' इत्यनङ् । 'सर्वनामस्थाने च' इत्युपधादीर्घः । नलोपः । **वोढेति** । वह प्रापणे । 'हो ढः' । 'झषस्तथोः—' इति धः । ष्टुत्वम् । 'ढो ढे लोपः' । 'सहिवहोः—' इत्योकारः । **कारिकेति** । 'अजाद्यतष्टाप्' । 'हल्ङ्याब्—' इति सुलोपः । **कुटितेति** । कुट कौटिल्ये । 'क्ङिति' इति गुणनिषेधः । **कोटक** इति । अञ्णितीति निषेधान्न ङित्त्वम् । **विजितेति** । ओविजी भयचलनयोः । **वेजक** इति । अत्रापि णित्त्वात् ङित्वाभावः । **घातक** इति । हन हिंसागत्योः । 'अत उपधायाः' इति वृद्धिः । 'हो हन्तेः —' इति कुत्वम् । **दायक** इति । डुदाञ् दाने । **नोदात्तोपदेशेति** । अनेन सेटो मान्तस्य वृद्धिनिषेध इति भावः । **शमको दमक** इति । शमु दम उपशमे । यम उपरमे । 'जनिवध्योः'

---

१. ऋन्नेभ्यो ङीप् P, C. २. गाङ् कुटादीति $D_1$. ३. °पदेशस्येत्यादि $D_2$, $D_4$; °पदेत्यादि C; °पदेशेत्यादि P. ४. शमु दमु PC. ५. यमु $Dc_3$, PC.

यामकः । जनिवध्योश्च । जनकः । वधकः । रधिजभोरचि । रन्धकः । जम्भकः । नेट्यलिटि रधेः । रधिता । रेद्धा ।[2] मङ्क्ता । नंष्टा । नंशिता । रम्भकः[4] । रब्धा । लम्भकः । लब्धा । तीषसहेति वेट्[5] । एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः । दरिद्रिता । ण्वुलि न । दरिद्रायकः । कृत्यल्युट इत्यत्र बहुलोक्तेः क्वचित् कर्मण्यपि ण्वुल् स्यात्[6] । पादाभ्यां ह्रियते पादहारकः । गले चोप्यते[7] गलेचोपकः । हलदन्तादित्यलुक्[8] । आत्मनेपदार्हात् क्रमेः कृत[9] इण्निषेधः ।

---

इति वृद्धिनिषेधः । जनकः । जन जनने । वधक इति । वध हिंसायाम् । 'रधिजभोरचि' इति । नुमिति भावः । रन्धक इति । रध हिंसायाम् । जम्भक इति । जभ गात्रविनामे । नेटीति । नुमुनिषेधः । मङ्क्ता । नंष्टेति । टुमस्जो शुद्धौ । णश अदर्शने । 'मस्जिनशोः—' इति नुम् । रम्भक इति । रभ राभस्ये । 'रभेरशब्लिटोः' इति नुम् । लम्भक इति । डुलभष् प्राप्तौ । 'लभेश्च' इति नुम् । तीषसहेति वेट् । एषितेति । इषु इच्छायाम् । सोढेति । षह मर्षणे । ढत्वम् । धत्वम् । ष्टुत्वम् । ढलोपः । 'सहिवहोः—' इत्योत् । दरिद्रायक इति । दरिद्रा दुर्गतौ । 'आतो युक् चिण्कृतोः' । गलेचोपक इति । चुप मन्दायां गतौ । आत्मनेपदार्हादिति । सत्यात्मनेपदे निषेध इत्युक्तत्वादिदं वक्तव्यमारभन्ते । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदयोग्यता ।

---

१. Before it:—रधेर्लिड्वर्जं इटि रधेर्नुम् न स्यात् । $B_2$. २. Before it—रधादिभ्यश्चेति वेट् । मस्जिनशोरिति नुम् $D_2$; मास्जिनशोर्झलीति । मज्जकः । $B_2$. ३. $D_1$, $D_4$ and C, $B_2$ drop it; नाशिता । नंष्टा N. ४. रम्भकः । नाशकः । $B_2$. ५. °सह P, $D_2$; सहेति $D_4$. ६. C drops it. ७. चुप्यते $B_2$, $D_4$. ८. हलदन्तात् सप्तम्याः संज्ञायाम् $D_2$ ; हलदन्तेत्यलुक् N. ९. कर्तरि कृत P.

प्रक्रन्ता । कर्तरीत्येव । प्रेक्रामितव्यम् । गमेरिट् । तङानाभाव इत्युक्तेः संजिगमिषिता । संजिगंसितेत्यपि केचित् । एवं न वृद्भ्यश्चतुर्भ्यः । विवृत्सिता । विवर्तिषितेत्यपि केचित् । चिक्लृप्सिता । न धातुलोप इत्यत्र इक एव गुणवृद्धिनिषेधात् पापाचकः । पापचिता । इत्यादि ज्ञेयम् ।

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥३।१।१३४॥

नन्द्यादेर्ल्युः । ग्रहादेर्णिनिः । पचादेरच् । नन्दनः । असि डसि अने च चक्षिङः ख्याञ् नेति वाच्यम् ॥ * विचक्षणः ।

---

गमेरिडित्यादि । संजिगमिषितेत्यत्र परस्मैपदाभावेपि इड् भवत्येव । कुतः । 'गमेरिट् परस्मैपदेषु' इति परस्मैपदग्रहणं तङानयोरभावं लक्षयतीति कृत्वा । संजिगंसितेत्यपि केचिदिति । पदशेषकारस्यायं पक्षः । विवृत्सितेति । वृतु वर्तने । सन् । द्वित्वम् । 'उरत्' इत्यत्वम् । 'सन्यतः' इतीत्वम् । 'हलन्ताच्च' इति कित्त्वम् । चिक्लृप्सितेति । कृपू सामर्थ्ये । सन् । 'कृपो रो लः' इति लत्वम् । 'तासि च कृपः' इतीण्निषेधः । पापाचक इति । डुपचष् पाके । 'धातोरेकाचः—' इति यङ् । 'सन्यङोः' इति द्वित्वम् । 'दीर्घोकितः' इति दीर्घत्वम् । ण्वुल् । 'अतो लोपः' । 'अत उपधायाः' इति वृद्धिः । भाष्यकारमते तु पापच्यते अस्मात् ण्वुलि 'अतो लोपे' 'यस्य हलः' इति यस्य लोपः । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । पापचक इति ।

नन्दीति । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इत्यभिप्रायेणाह—नन्द्यादेरिति । नन्दन इति । नन्दयतीति नन्दन इति । टुनदि समृद्धौ । विचक्षण इति । चक्षिङ् व्यक्तायां

---

१. क्रमितव्यम् । $N_1$. २. पापाचिता $D_2$, $B_2$. ३. स्वयमेव ज्ञेयम् $D_4$. ४. नन्दादे° C. ५. °रच् स्यात् $B_2$, $D_4$. ६. पापचक $Dc_3$, PC.

जनार्दनः । मधुसूदनः । ग्राही । स्थायी । प्रयायिणौ । पचः । देवट् । देवः । देवी । षोडन् शब्दाण्णिच् टिलोपः । पचाद्यच् ।

---

वाचि । जनार्दनः । मधुसूदन इति । जनानर्दयतीति जनार्दनः । मधुं सूदयतीति मधुसूदनः । अत्र कर्मण्यणि प्राप्ते ल्युः । नन्दनः । वाशनः । मदनः । दूषणः । साधनः । भूषणः । वर्धनः । शोभनः । एभ्यो ण्यन्तेभ्यः । सहितपिमदीभ्यः संज्ञायाम् । सहनः । तपनः । मदनः । कल्पनः । जल्पनः । रमणः । दर्पणः । संक्रन्दनः । संकर्षणः । संहर्षणः । जनार्दनः । पवनः । मधुसूदनः । विभीषणः । लवणः । निपातनात् णत्वम् । चित्तविनाशनः । कुलदमनः । इति नन्द्यादिः । ग्राहीति । ग्रह उपादाने । णित्वाद्वृद्धिः । 'सौ च' इति दीर्घः । स्थायीति । 'आतो युक्—' । प्रयायिणाविति । या प्रापणे । 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वम् । ग्राही । उत्साही । उद्दासी । उद्भासी । मन्त्री । समदी । रक्षश्रुवपृद्यो नौ । निरक्षी । निश्रावी । निवापी । निशायी । याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम् । अयाची । अव्याहारी[४] । अव्राजी । अवादी । अवासी । अचामचित्तकर्तृकाणाम् । प्रतिषिद्धानामित्येव । अकारी । अहारी । विशयी विषयी देशे । विशयी विषयी देशः । अभिभावी भूते । अभिभावी । अपराधी । परिभवी । इति ग्रहादिः । पच इति । डुपचष् पाके । देवीति[५] । 'टिड्ढाणञ्—' इति ङीप् । पच । वच । वद । वप । चल । पत । नदट्[६] । प्लवट् । गरट् । तरट् । चँरट् । चोरट् । गाहट् । जर । मर । क्षम । सदृट् । देवट् । देव । सेव । शोष । कोप । मेध । नर्त । प्राण । दर्श ।

---

१. °ण्णिचि कृते P. २. कर्मप्राप्ते $Dc_1$. ३. Before it—स्थायी PC. ४. After it—असंव्याहारी PC. ५. After it—देवसेवशोषकोपमेधनर्तप्राणदर्शजंघा $Dc_3$, PC. ६. After it—भषट् PC, $Dc_3$. ७. Dropped $Dc_3$, PC. ८. सेव $Dc_3$. ९. After it—जङ्क PC, $Dc_3$.

पोडः। यङोचि चेति यङो लुक्। न धातुलोपे इति गुणनिषेधः। नेन्यः। लोलुवः। पोपुवः। मरीमृजः। उदन्ताद् यङो लुग्नेति केचित्। रोरूयः॥ चरिचलिपतिवदीनां वा द्वित्वमच्याक्त्वमभ्यासस्य॥ *अभ्यासस्य कार्यमनचीति वक्तव्यमिति हलादिशेषाभावः। चराचरः। चलाचलः। पतापतः। वदावदः। हन्तेर्घत्वं च। घनाघनः। पाटेर्णिलुक् ऊक् चाभ्यासस्य। पाटूपटः। पक्षे। चरः। चलः। पतः। वदः। हनः। पाटः। घञर्थे कविधानमिति कृञः क्लिदेः क्रसश्च कप्रत्ययः। कृञादीनां के द्वे स्तः। चक्रम्। चिक्लिदम्। चक्रसः। पक्षे क्लिदक्नसोरजिति केचित्। क्लेदः। क्रसः।

---

जारभर। पङ्क। श्वपच। पचादिराकृतिगणः। षोड इति। षट् दन्ता यस्यासौ षोडन्। षष उत्वमित्युक्तम्। ष्टुत्वम्। षोडन्तमाचष्टे। 'तत्करोति तदाचष्टे' इति णिच्। 'णाविष्ठवत्' इति टिलोपः। अच्। 'णेरनिटि' इति णिलोपः। नेन्यः। लोलुवः। पोपुव इति। णीञ् प्रापणे। लूञ् छेदने। पूञ् पवने। एभ्यो धातुभ्यो 'धातोरेकाचः—' इति यङ्। 'सन्यङोः' इति द्वित्वम्। 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः। **मरीमृजः**। मृजूष् शुद्धौ। 'रीगृदुपधस्य च' इति रीक्। **रोरूय** इति। रु शब्दे। **चराचर** इत्यादि। चर गतिभक्षणयोः। चर गतौ। पत्लृ पथे च गतौ च। वद व्यक्तायां वाचि। **घनाघन** इति। हन हिंसागत्योः। **पाटूपट** इति। पट विस्तारे। चुरादिः। **चक्रमिति**। डुकृञ् करणे। **चिक्लिदमिति**। क्लिदू आर्द्रीभावे। **क्रस** इति। क्रसु हरणे।

---

१. °लोपेति $N_1$; °लोपे च $D_4$. २. °मच्याक्त्काभ्यासस्य $D_2$, P, N; °मच्याक्चाभ्यासस्य $B_2$. ३. च्याक् चाभ्या° $D_4$. ४. अभ्यासकार्य° $D_2$. ५. हलादिः शे° $N_1$. ६. पट्टूपटः $D_2$, $D_4$, N. ७. After this—क्लीबत्वं लोकात् P; चिक्लिदः N. ८. Dropped PC; $Dc_3$. ९, पट्टूपट Mss. $Dc_3$; PC.

## रात्रेः कृति विभाषा ॥६।३।७२॥

कृदन्ते परे रात्रेर्मुमागमो[1] वा[2] स्यात् ॥ रात्रिंचरः । रात्रिचरः । रात्रिमटः । रात्र्यटः ।

## इगुपधज्ञाप्रीकिरः कः ॥३।१।१३५॥

एभ्यः कः स्यात् ॥ क्षिपः । बुधः । भूरुहः । ज्ञः । इयङ् । प्रियः[3] । कॄ । ऋत इत् । किरः । गिरतेश्चेत्येके । गिरः । गिले परेगिलस्य पूर्वस्य मुम्वाच्यः ॥ * तिमिंगिलः । अगिलस्य[4] किम् । गिलगिलः । गिलगिले च ॥ तिमिंगिलगिलः । वासरूपविधिना[5] ण्वुल्तृचावपि । क्षेपकः । क्षेप्ता ।

## आतश्चोपसर्गे ॥३।१।१३६॥

उपसर्गे उपपदे आदन्तात् कः स्यात् । 'श्याद्व्यध—' इति णस्यापवादः । सुस्थः[6] । सुग्लः[7] । मज्ञः[8] ।

---

रात्रेः । अप्राप्तविभाषेयम् । रात्रिंचर इति । चरतीति चरः । पचाद्यच् । रात्रौ चरः । सप्तमीति योगविभागात् समासः । अथवा रात्रौ चरतीति रात्रिंचरः । 'चरेष्टः' इति टः । उपपदसमासः । रात्रिमट इति । अट गतौ । पचाद्यच् । सप्तमीति योगविभागात् समासः ।

इगुपध । क्षिप प्रेरणे । कित्त्वाद्गुणाभावः । बुध अवगमे । भूरुह इति । भुवि रुहः । रुह जन्मनि प्रादुर्भावे । सप्तमीसमासः । ज्ञ इति । ज्ञा अवबोधने । 'आतो लोप इटि च' इत्यालोपः । प्रिय इति । प्रीञ् तर्पणे । किर इति । कॄ विक्षेपे । गिर इति । गॄ निगरणे । तिमिंगिल इति । गॄ निगरणे । मूलविभुजादित्वात् कः । 'ऋत इत्—' । रपरः । 'अचि विभाषा' इति लत्वम् । सुग्ल इति । ग्लै हर्षक्षये । कप्रत्यये विवक्षिते 'आदेच उपदेशे—' इत्यात्वे कः ।

---

१. °र्मुगागमो $D_1$. २. स्याद्वा C. ३. प्रिया $N_1$. ४. अगिलः किम् $N_1$. ५. °विधानात् P, C. ६. सुज्ञः C; सुम्नः N. ७. Dropped C, $N_1$, $D_1$. ८. After it—सुम्नः $B_2$, $D_4$.

पाघ्राध्माधेट्दृशः शः ॥३।१।१३७॥

एभ्यः शः स्यात् ॥ शित्वात् पिबाद्यः । शप् । अतो गुणे । उत्पिबः । उज्जिघ्रः । विधमः । उद्धयः । विपश्यः । उपसर्गानुवृत्तिर्नेत्येके । पश्यः । जिघ्रः । संज्ञायां न । व्याघ्रः ।

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥३।१।१३८॥

एभ्योनुपसर्गेभ्यः शः स्यात् । शित्कार्यम् । लिम्पः ।

---

पाघ्रा । पा पाने । घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । धेट् पाने । एषामादन्तलक्षणे के णे च प्राप्ते शो विधीयते । दृशिर् प्रेक्षणे । अस्मात् इगुपधलक्षणे । उत्पिब इत्यादि । पाघ्राध्मेति पिबादेशः । उपसर्गानुवृत्तेरिति । तथोक्तं काशिकायाम् । 'उपसर्ग इति केचिन्नानुवर्तयन्ति' इति ।

अनुपसर्गात् । बहुवचनस्थाने सुब्व्यत्ययेनैकवचनम् । लिप उपदेहे । विद्लृ लाभे । सनुम्कयोर्ग्रहणमुपदेशावस्थायामेव नुमिति ज्ञापनार्थम् । धृङ् धारणे । हेतुमण्णिजन्तः । पार तीर कर्मसमाप्तौ । चुरादिण्यन्तः । यद्वा पॄ पालनपूरणयोः । हेतुमण्ण्यन्तः । विद चेतनाख्याननिवासेषु । चुरादिण्यन्तः । यद्वा ज्ञानाद्यर्थानां विदादीनामन्यतमो हेतुमण्ण्यन्तः । एजृ कम्पने । हेतुमण्ण्यन्तः । चिती संज्ञाने । चुरादिण्यन्तः । सातिः सौत्रः । षह मर्षणे । हेतुमण्ण्यन्तः । चुरादिण्यन्तो वा । लिम्पः विन्द इति । तुदादिभ्यः

---

१. उत्पश्यः $D_1$. २. $D_1$, $N_1$ drop अत्र. ३. जिघ्रतेः संज्ञायां न $B_2$, $D_4$. ४. विज्ञानार्थम् । $Dc_3$. ५. नाद्यर्थानां विदादीना° $Dc_1$, $Dc_4$.

विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सौत्रः ।[१] सातयः । साहयः । अनुपसर्गात् किम् । प्रलिपः । नौ लिम्पेर्वाच्यः[२] । निलिम्पा देवाः । गवादिषु विन्देः संज्ञायाम् ॥ * गोविन्दः । अरविन्दः[३] ।

ददातिदधात्योर्विभाषा ॥३।१।१३९॥

आभ्यां शो वा स्यात् ॥ शित्वात् श्लुकार्यम्[४] । ददः । दधः । पक्षे णः । अनुपसर्गादेव । प्रदः । प्रधः ।

ज्वलितिकसन्तेभ्यो णः ॥३।१।१४०॥

इतिशब्द आद्यर्थे । ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा ।

---

शः । 'शे मुचादीनाम्' इति नुम् । धारय इत्यादिषु शप् । प्रलिप इति । इगुपधलक्षणः कः ।

ददाति । णस्यापवादः । श्लुकार्यमिति । 'जुहोत्यादिभ्यः श्लुः' । 'श्लौ' इति द्वित्वम् । 'श्नाभ्यस्तयोः' इत्यालोपः[५] । पक्षे ण इति । दाय धाय इति रूपं तदा । प्रदः प्रधः इति । 'आतश्चोपसर्गे' इति कः । ननु दद दाने दध धारणे आभ्यामपि दद दध इति स्यात् । दाधाभ्यां णे दायो धाय इति । तत् किमनेन सूत्रेण । न । अचि 'अच्कावशक्तौ' इत्यन्तोदात्तः स्यात् । शे तु नञ्स्वर एव । अददः ।[६]

ज्वलि । ज्वल दीप्ताविति द्विः पठ्यते घटादिषु पुरस्ताच्च । एवं सति संदेहः स्यात् केभ्य इति । तत्राह—कसन्तेभ्य इति । तेन घटाद्यन्तर्गणः पर्युदस्तः स्यात् । कसः[७] परस्ताद्ये तन्निवृत्त्यर्थं

---

१. After it—सुखे वर्तते $N_1$. २. लिपे° $D_1$. ३. अरविन्दम् C, P.
४. शित्कार्यम् C. ५. इत्याकारलोपः PC. ६. After it—अदधः $Dc_3$, PC.
७. कसेः $Dc_3$.

पक्षे अच् । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादेव । प्रज्वलः । तनोतेर्णः ॥ * अवतानः ।

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥३।१।१४१॥

अनुपसर्गादिति निवृत्तम् । श्यैङ आदन्ताद् व्यधादेश्च णः स्यात् । आदन्तत्वेपि श्यैङुक्तिः कबाधार्था । अवश्यायः ।

---

कसन्तेति न । कसेः परं वृदिति पाठात् । ज्वल दीप्तौ । चल कम्पने । जल घातने । टलट्वल वैक्लव्ये । ष्ठल स्थाने । हल विलेखने । णल गन्धे । पल गतौ । बल प्राणने धान्यावरोधने च । पुल महत्त्वे । कुल संस्त्याने बन्धुषु च । शल हुल पत्लृ गतौ । हुल हिंसासंवरणयोः । क्वथे निष्पाके । पथे गतौ । मथे विलोडने । टुवम उद्गिरणे । भ्रमु चलने । क्षर संचलने । क्षल संचये च । षह मर्षणे । रमु क्रीडायाम् । षद्लृ विशरणगत्यवसादनेषु । शद्लृ शातने । क्रुश आह्वाने रोदने च । बुध अवगमने । रुह बीजजन्मनि । कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कस गतौ । वृत् ज्वलादिः ।

श्याद्व्यध । श्यैङ् गतौ । आदित्याकारान्ताः । व्यध ताडने । स्रु गतौ । अर्वाचीनाः श्रु श्रवणे इति मन्यन्ते । आङ्पूर्वः पुनः संपूर्वः । इण् गतौ । अतिपूर्वः । षोन्तकर्मणि । अवपूर्वः । हृञ् हरणे । अवपूर्व एव । लिह आस्वादने । श्लिष आलिङ्गने । श्वस प्राणने । अत्र ये सोपसर्गास्तेभ्यः सोपसर्गेभ्य एव । शेषेभ्यस्तु सोपसर्गेभ्योनुपसर्गेभ्यश्च । अनुपसर्गादिति । उत्तरसूत्रे पुनरनुपसर्गग्रहणात् तन्निवृत्तौ तत्संबद्धं विभाषाग्रहणमपि निवृत्तम् । आदन्तत्वेपीति । 'आतश्चोपसर्गे' इति

---

१. स्थल Dc3. २. °वरोधे च PC, Dc3. ३. बन्धे च PC, Dc3. ४. मथ PC. ५. टुवमु PC.

दायः । धायः । व्याधः । आस्रावः । संस्रावः । आश्रुसंश्रोर्णो वेति केचित् । आश्रवः । संश्रवः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥ दुन्योरनुपसर्गे ॥ * दावः । नायः । वेति केचित् । दवः । नयः । अनुपसर्गे किम् । प्रदवः । प्रणयः ।

## विभाषा ग्रहः ॥३।१।१४३॥

णो वा व्यवस्थया ॥ जलचरे ग्राहः । ज्योतिषि ग्रहः । भुवश्च वा वाच्यः ॥ * भावः । भवः ।

---

विशेषविहितत्वात् कः सामान्यविहितस्य णस्य बाधकः स्यात् । अतः श्यैङुक्तिः कबाधार्थेत्यर्थः । एतत् प्रयोजनमवस्यतेरपि ज्ञातव्यम् । अथवा तस्योपसर्गनियमार्थं ग्रहणम् । अवश्याय इति । आतो युक् । आश्रुसंश्वोरिति । तेषामयं भावः । श्याद्यधेति सूत्रे आस्रु इति स्रु गताविल्यस्य ग्रहणं न श्रु श्रवण इत्यस्य । तथा च न्यासे अत्र सूत्रे उक्तं स्रु गताविति । तेन श्रु श्रवणे अस्मादजेवेति । तथामरकोशे । 'वचने स्थित आश्रवः' इत्युक्तम् । दुन्योः । टु दु उपतापे । णीञ् प्रापणे । पञ्चम्यर्थे षष्ठीसप्तम्यौ । अनुपसर्गात् दुनोतेर्नयतेश्च णः स्यादित्यर्थः । दवः । नयः इति । अच् । प्रदवः । प्रणय इति । अच् । 'उपसर्गादसमासेपि' इति णत्वम् ।

विभाषा । णो वा व्यवस्थयेति । अनेन विभाषाया व्यवस्थितत्वं दर्शयति । तदेव स्पष्टयति—जलचर इति ।

---

१. संश्रावः $D_1$, $D_4$, $B_2$. २. °संश्वो° $D_1$, $D_4$, P, $B_2$. ३. संश्रवः $D_1$, $P_2$, $B_2$, $D_4$. ४. प्रवदः P, $N_1$. ५. After it—उपसर्गेति णः $N_1$. ६. अस्मिन् $Dc_3$. ७. तथा चामर° $Dc_3$.

गेहे कः ॥३।१।१४४॥

गेहे कर्तरि ग्रहेः कः स्यात् ॥ गृहम् । तात्स्थ्यात् गृहाः दाराः ।

शिल्पिनि ष्वुन् ॥३।१।१४५॥

[1]शिल्पिनि कर्तरि धातोः ष्वुन् स्यात् ॥ नृतिखनिरञ्जिभ्य एव । [2]नर्तकः । खनकः । असि अके अने विनुणि च रञ्जेर्न्लोपो वाच्यः ॥ * रजकः । षित्वान्नर्तकी ।

गस्थकन् ॥३।१।१४६॥

गायतेः स्थ[3]कन् स्यात् शिल्पिनि ॥ गाथकः ।

ण्युट् च ॥३।१।१४७॥

गायनः । टित्त्वात् गायनी ।

---

गेहे । गृहमिति । 'ग्रहिज्या—' इति संप्रसारणम् । तात्स्थ्यादिति । एतेन गौणेऽपि प्रत्यया भवन्तीति आचष्टे । नृतीत्यादि । नृती गात्रविक्षेपे । खनु अवदारणे । रञ्ज रागे । षित्त्वादिति । षिद्गौरेति ङीष् ।

गः । कै गै रै शब्दे इत्यस्य कृतात्वस्यायं निर्देश इत्याह— गायतेरिति । ननु गामादाग्रहणेष्वविशेष इति गाङ् गताविल्यस्यापि ग्रहणं भाव्यम् । न । गाथक इति गायत्यर्थविषयमेव शिल्पिनः कर्तृत्वं प्रतीयते न गत्यर्थविषयम् । नकार आद्युदात्तार्थः ।

ण्युट् च । गायतेः ण्युडपि स्याच्छिल्पिनि कर्तरि । गायन इति । 'आतो युक्' । टित्त्वादिति । 'टिड्ढाणञ्—' इति ङीप् । योगविभाग उत्तरार्थः ।

---

१. Before it—षो ङीबर्थः $B_2$. २. $D_2$ drops नर्तकः । खनकः ३. °स्छकन् $D_1$, P. ४. स्छकन् $D_1$, P.

## हश्च व्रीहिकालयोः ॥३।१।१४८॥

हाको हाङश्च ण्युट् स्याद् व्रीहौ काले च कर्तरि ॥ अम्बु जहाति जिहीते वा हायनो[1] व्रीहिः । भावान् जहाति जिहीते वा हायनो वर्षम्[2] ।

## प्रुसृल्वः समभिहारे वुन् ॥३।१।१४९॥

प्वादेर्वुन् स्यात् साधुकारिणि कर्तरि ॥ प्रवकः । सरकः । लवकः ।

## आशिषि च ॥३।१।१५०॥

धातोर्वुन् स्यादाशिषि ॥ जीवतादिति जीवकः । जीवका । [3]आशीरके मनेरत एत्वं वाच्यम् ॥ * मेनका ।[4]

---

हश्च । ओहाक् त्यागे । हाङ् गतौ । अम्बु इति । हायनशब्दस्य व्रीहौ प्रवृत्तिनिमित्तं दर्शयति । भावानिति । संवत्सरे प्रवृत्तिनिमित्तम् ।

प्रुसृ । प्रुङ् गतौ । सृ गतौ । लूञ् छेदने । प्रुसृल्व इति समाहारं कृत्वा निर्देशः । नुमागमस्तु सत्यपि क्लीबत्वे न कृतः । अनित्यत्वादागमशासनस्य । धातूनामनेकार्थत्वात् समभिहार इति साधुकारी उच्यते । अथवा शिल्पिनीत्यनुवर्तत इत्यभिप्रेत्याह-साधुकारिणीति ।

आशिषि । अप्राप्तप्रार्थना आशीः । तस्यामाशिषि गम्यमानायामित्यर्थः[5] । जीवतादिति जीवकः इति । जीवनं तव भूयादित्यर्थः । जीवक इति । 'आशिषि वुनश्च' इतीत्वाभावः ।

---

१. हायनं $D_2$, $D_4$. २. वर्षः $D_1$. ३. Before it—नन्दतात् । नन्दकः $B_2$, $D_4$. ४. After this—स्त्रीत्वं लोकात् $D_2$, $D_4$. ५. गम्यमानायां तेन चेत्संज्ञा गम्यते इत्यर्थः । $Dc_3$.

**क्विप्कौ च संज्ञायाम् ॥३।३।१७४॥**

धातोः क्विप् क्तश्चस्यादाशिषि संज्ञायाम् ॥

**तितुत्रतथसिसुसरकसेषु च ॥७।२।९॥**

एषां दशानां कृत्प्रत्ययानामिण् न स्यात् ॥ [1]भवतात् । भूतिः । देवा एनं देयासुः । देवदत्तः । [2]कौक्तिः क्विचा बाधा मा भूदिति ।

**अनुनासिकस्य क्विझलोः क्ङिति ॥६।४।१५॥**

अनुनासिकान्तस्य धातोरुपधाया दीर्घः स्यात् क्वौ झलादौ क्ङिति च ॥ इति [3]दीर्घे [4]प्राप्ते अनुदात्तोपदेशेति अनुनासिकलोपे प्राप्ते ।

---

'क्विप्—' इति पकारो 'न क्विचि दीर्घश्च' इति विशेषणार्थः। प्रत्ययान्तेन चेत् संज्ञा गम्यत इत्यर्थः ।

तितुत्रेति । तीति क्तिन्क्तिचोर्ग्रहणम् । तु इति सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्नित्यस्य । त्रेति 'दाम्नी–' इति ष्ट्रनः । सर्वधातुभ्यष्ट्रन्नित्यस्य च । तेति हसिमृग्रिण्वमिदमिलूपूधुर्विभ्यस्तन् इत्यस्य । न क्तस्य ग्रहणम् । 'ऊर्णोतेर्विभाषा' इत्यतो 'विभाषा' इत्यनुवृत्तेस्तस्याश्च व्यवस्थितविभाषात्वात् । थेति हनिकुषिनीरमिकाशिभ्यः क्थन् इत्यस्य ग्रहणम् । सीति प्लुषिशुषिकुषिभ्यः क्सिरित्यस्य । सु इति सुक् च इषेः इत्यस्य । सरेति । आस्तेः क्सरच् इत्यस्य । केति इण्भीकापाशल्यतिमर्चिभ्यः कन्नित्यस्य । सेति वृतृवदिहनिकमिकषियुमुचिभ्यः स इत्यस्य । देवदत्त इति । दाञः क्तप्रत्ययः । 'दोदद्घोः' इति ददादेशः । यन्तिरित्यादि । यमु उपरमे । रमु क्रीडायाम् । वनु [5]बोधने । तनु विस्तारे ।

---

१. Dropped $N_1$. २. कुकुक्तिः $N_1$. ३. दीर्घत्वे $N_1$. ४. प्रति $B_2$. ५. बोधे $Dc_3$, PC.

**न क्तिचि दीर्घश्च ॥६।४।३९॥**

क्तिचि परे अनिटां वनतितनोत्यादीनां[1] दीर्घानुनासिकलोपौ न स्तः ॥ यन्ति । रन्तिः[2] । वन्तिः । तन्तिः ।

**सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ॥६।४।४५॥**

सनोतेः क्तिचि परे आकारोन्तादेशो नस्य लोपश्च वा स्यात् ॥ सातिः । सतिः । सन्तिः ।

**कर्मण्यण् ॥३।२।१॥**

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् ॥ उपपदसमासः[3] ।

---

**सनः** । अस्यग्रहणमनन्तरस्य क्तिचो मा भूत् व्यवहितस्यापि सन एव लोपो यथा स्यादित्येवमर्थम् । स च लोपः सनो भवन् अलोन्त्यपरिभाषया नकारस्यैव स्यादित्याह-नस्येति । सातिरिति । षण दाने ।

**कर्माणि** । कर्मणीति न स्वरूपग्रहणम् । 'अशब्दसंज्ञा' इति निषेधात् । नापि क्रियाग्रहणम् । क्रियावाचिन उपपदस्याभावात् । तस्मात् 'कर्तुरीप्सिततमम्' इति पारिभाषिकमेव गृह्यते । तच्च कर्म त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं चेति । तत्राद्यं यदसदेवोत्पद्यते । विकार्यं तु यस्य सत एव विकारः क्रियते । प्राप्यं तु यस्य नोत्पादो नापि विकारः किं तु क्रियासंबन्धमात्रं क्रियते । तस्य त्रिविधस्यापि ग्रहणम्[4] । उपपदसमास इति । 'तत्रोपपदम्' इत्युपपदसंज्ञायाम् 'उपपदम्—' इति समास इत्यर्थः ।

---

१. °दीनां च $B_2$, $N_1$. २. नन्तिः $D_2$, $D_4$. ३. उपपदमिति समासः $D_1$. ४. °पीह PC, $Dc_3$.

कुम्भं करोतीति कुम्भकारः । अघटं घटं करोतीति घटीकारः । आदित्यं पश्यतीत्यादावनभिधानान्न ।[1]

**ह्वावामश्च ॥३।२।२॥**

एभ्यः कर्मण्युपपदेण् स्यात् । कापवादः । आतो युक् । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ।

**आतोनुपसर्गे कः ॥३।२।३॥**

आदन्तादनुपसर्गे कर्मण्युपपदे कः स्यान्नाण् ॥ आतो लोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसंदायः ।

---

**कुम्भकार** इति । 'अचोञ्णिति' इति वृद्धिः । **घटीकार** इति । 'अभूततद्भावे' इति च्विः । 'चुटू' इति च इत् । 'उपदेशेजनुनासिक—' इति इरित् । 'वेरपृक्तस्य' इति वलोपः । 'अस्य च्वौ' इतीत्वम् । **आदित्यं पश्यतीत्यादावनभिधानान्नेति** । अभिधानेसामर्थ्यादित्यर्थः । अत्र चैतद् द्वयं ज्ञातव्यम् ।[2] 'शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' । णे सति ङीप् न । मांसं शीलयतीति मांसशीलः । मांसशीला । मांसशब्दोन्तोदात्तः वृतुवदिहनिपचिकमिषिभ्यः सः मनेर्दीर्घश्चेति सप्रत्ययान्तत्वात् प्रत्ययस्वरेण । मांसकामा । मांसभिक्षा ।[3] कल्याणाचारा । कल्याणशब्दो मध्योदात्तो लघावन्ते द्वयोश्च बह्वषो गुरुरित्यनेन । 'ईक्षिक्षमिभ्यां च' । सुखप्रतीक्षा । बहुक्षमा ।

**ह्वावाम इति** । ह्वेञ् स्पर्धायां शब्दे च । वेञ् तन्तुसन्ताने । माङ् माने । मेङ्[4] प्रतिदाने । **कापवाद इति** । '**आतोनुपसर्गे कः**' इति प्राप्तस्य । **पार्ष्णित्रमिति** । त्रैङ् पालने । **गोसंदाय इति** । अण् । आतो युक् ।

---

१. After it—शीलिकामिभिक्षाचरिईक्षिक्षमिभ्यो ण इति वाच्यम् । मांसशीलः । मांसशीला । इत्यादि । $N_1$. २. $D_1$ drops it. ३. कल्याणाचारा । कल्याणचरा । PC. ४. प्रणिदाने PC, $Dc_3$.

सुपि स्थः ॥३।२।४॥

सुप्युपपदे तिष्ठतेः कः स्यात् ॥ समस्थः ।[1]

अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गु-
मञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥८।३।९७॥

एभ्यः परस्य स्थः सस्य षः स्यात् ॥[3] द्विष्ठः । त्रिष्ठः । सुपीति योगविभागादन्यस्मादादन्तात् कः[4] ॥ द्वाभ्यां पिबतीति द्विपः । पादपः । भावेपि कार्यं तिष्ठतिग्रहणम् । आखूनामुत्थानमाखूत्थं वर्तते । इत ऊर्ध्वं सकर्मकेषु कर्मानुवृत्ति-रन्यत्र सुपः ।

---

अम्बाम्ब । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः । स्थास्थिन् स्थृणामिति वक्तव्यम् । सव्येष्ठाः । परमेष्ठी । सव्येष्ठा सारथिः । सुपीति योगविभागादिति । अत्र 'सुपि' इत्येको योगः । तत्र च 'आतः' इत्यनुवर्तते । ततश्च सुप्युपपदे आदन्तेभ्यः कः प्रत्ययः स्यादित्यर्थः । द्वितीयः 'स्थः' इति । किमर्थमिदमुच्यते यतः पूर्वेणैव सिद्धमित्याशङ्क्याह-भावेपीति । आरम्भसामर्थ्यात् कर्तरि तावन्न । न चार्थान्तरमस्ति । तत्रानिर्दिष्टाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थ एव स्यादिति । आखूत्थं वर्तत इति । 'उदस्थाः स्तम्भोः पूर्वस्य' इति पूर्वसवर्णः । ननु आखूत्थमिति

---

१. After it—नाण् $D_4$. २. After it—वनस्थः $N_1$, $D_2$, $D_4$, C, $B_2$. ३. Before it—अम्बष्ठः $D_4$, $B_2$. ४. कः स्यात् C; कः is omitted in $D_1$. ५. अत C. ६. आखूत्थो K. ( नपुंसकपाठस्तु प्रामादिकः K.)

तुन्दशोकयोः परिमृजापनुदोः ॥३।२।५॥

आभ्यां कः स्यात् तुन्दशोकयोः कर्मणोरुपपदयोः ॥ तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता ।

मूलविभुजादेश्च ॥ *मूलविभुजः । कुमुदम् । आकृतिगणः ।

---

नपुंसकत्वं न घटते । 'ल्युः कर्तरीमनिच् भावे कः' (अमरको० ३।५।१९) इत्यमरकोशे भावे कस्य पुंस्त्वविधानात् । 'भावे नणकचिद्भ्योऽन्ये' (अमरको० ३।५।२९) इति नपुंसकविधाने कस्य पर्युदासाच्च । भाष्यादौ च पुल्लिङ्गस्यैव प्रयोगाच्च । मैवं वोचः । 'ल्युः कर्तरीमनिच् भावे कः' इति पुलिंङ्गत्वेपि[1] नपुंसकत्वाप्रतिषेधात् । 'भावे नणकचिद्भ्योऽन्ये' इति प्रतिषेधेपि[2] गुणवचनतव्यादय इत्यनुवर्तमाने प्राक् वञ इति घञः प्राक् तव्यादीनां लिङ्गानुशासने त्रिलिङ्गत्वविधानात् सर्वस्य प्रयोगेणेति चोक्तत्वादमरसिंहेपि 'शेषं शिष्टप्रयोगतः' (अमरको० ३।५।४६) इत्युक्तत्वान्नपुंसकत्वमपि घटते । अत एवेन्दुमत्यां वृत्तौ नपुंसकप्रयोगो दृश्यते इत्यलम् । [3]अथवात्रापि पुंलिङ्गपाठ एव ।

तुन्द । परिमृजापनुदोरिति सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठीत्यभिप्रेत्याह-आभ्यामिति । मृजूष् शुद्धौ । परिपूर्वः । नुद प्रेरणे । अपपूर्वः । अलससुखाहर्त्रोरेवैतौ प्रयोगावित्यभिप्रेत्याह-तुन्दपरिमृजोऽलस इत्यादि ।

मूलविभुज इति । भुज कौटिल्ये । कुमुदमिति । कौ मोदते ।

---

१. After it—रथः C. २. °पि नपुंसकविधानेपि नपुं° Dc1. ३. अथवा... एव Dropped Dc3, PC.

**प्रे दाज्ञः ॥३।२।६॥**

कर्मणि प्रपूर्वाभ्यामाभ्यां कः स्यात्। सोपसर्गार्थमेतत्। सर्वप्रदः। पथिप्रज्ञः।

**समि ख्यः ॥३।२।७॥**

गोसंख्यः।

**गापोष्टक् ॥३।२।८॥**

कर्मण्यनुपसर्गाभ्यामाभ्यां टक् स्यात् न कः ॥ सामगः। सामगी। पिबतेः सुरासीध्वोरिति वाच्यम् ॥ *सुरापी[1]। सीधुपी[2]। अन्यत्र क्षीरपा[3]। पिबतेः किम्। सुरापा[4]। उपसर्गे तु सामसंगायः।

---

प्रे। गामादाग्रहणेष्वविशेष इति दारूपा गृह्यन्ते। **सोपसर्गार्थमेतदिति**। अनुपसर्गात्तु 'आतोनुपसर्गे कः' इत्येव सिद्धम्। **पथिप्रज्ञ इति**। पन्थानं जानातीत्यर्थः। प्रे किम्। गोसंदायः।

**समि ख्य इति**। 'चक्षिङः ख्याञ्' इति ख्याञादेशग्रहणम्[5]। न ख्या प्रकथन इत्यस्य। एतच्च संपूर्वस्य ख्यातेः[6] प्रयोगासंभवाल्लभ्यते।

**गापोः**। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव पिबतेर्ग्रहणं न पातेः। यद्यपि गामादाग्रहणेष्वविशेषस्तथापि गायतेरेव ग्रहणं[7] न गातेरनभिधानात्। टकः कित्त्वमालोपार्थम्। टित्त्वं ङीबर्थं न तु 'आद्यन्तौ टकितौ' इत्येवमर्थम्। तत्राद्यन्तयोरवयवत्वात्। न च प्रत्ययोवयवो घटते। 'परश्च' इति वचनात्। किं चादित्वे कित्करणमनर्थकं स्यात्। **सामगीति**। 'टिड्ढाणञ्—' इति ङीप्। **क्षीरपेति**। 'आतोनुपसर्गे कः' इति कः। टित्त्वाभावाद् 'अजाद्यतष्टाप्' इति टाप्। **सुरापेति**। पा रक्षणे। **सामगाय इति**। 'कर्मण्यण्'। 'आतो युक्'।

---

१. सुरापः। सुरापी। सीधुपः। सीधुपी। $D_4$. २. सीधुपः $D_2$; सीधुपी। सीधुपः $B_2$. ३. क्षीरपः $D_4$. ४. सुरापः $D_4$. ५. °देशस्य $Dc_3$, PC. ६. ख्याधातोः $Dc_3$. ७. ग्रहो $Dc_3$.

**हरतेरनुद्यमनेच् ॥३।२।९॥**

कर्मणि हृञोच् स्यात् नोत्क्षेपणे ॥ अंशहरः । उत्क्षेपणे तु । भारहारः । शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहः ॥ * शक्तिग्रहः इत्यादि । सूत्रग्रहोपि ।

**वयसि च ॥३।२।१०॥**

वयसि द्योत्ये कर्मणि हृञोच् स्यात् ॥ उद्यमनार्थमेतत् । कवचहरः कुमारः ।

**आङि ताच्छील्ये ॥३।२।११॥**

फलान्याहरति तच्छीलः फलाहरः । ताच्छील्ये किम् । भाराहारः ।

---

**हरते** । **नोत्क्षेपण** इति । उत्क्षेपणमधः स्थितस्य वस्तुन ऊर्ध्वं नयनम् । **अंशहर** इति । योंशं स्वीकरोति न तूत्क्षिपति । **शक्तीति** । अत्र प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति घटग्रहणेनैव घटीग्रहणे सिद्धे पुनर्घटीग्रहणं तदस्याः परिभाषाया अनित्यत्वज्ञापनार्थम् । तस्य तु प्रयोजनं 'दित्यदित्यादित्य—' इत्येतत् सूत्रे उक्तम् । **शक्तिग्रह इत्यादि** । आदिशब्देन लाङ्गलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । घटीग्रहः । धनुर्ग्रहः । **सूत्रग्रहोपीति** । अयं च धार्यर्थे । यः सूत्रं धारयति स सूत्रग्रहः । यस्तु केवलं गृह्णाति न धारयति असौ सूत्रग्राह एव भवति ।

**वयसि** । कालकृता शरीरावस्था यौवनादिर्वयः । **उद्यमनार्थमिति** । अनुद्यमने पूर्वेणैव सिद्धत्वात् । **कवचहर** इति । कवचोत्क्षेपसमर्थे वयसि वर्तते इत्यर्थः ।

**आङि** । **ताच्छील्यं** तत्स्वभावता । फलाहरणे स्वाभाविकी प्रवृत्तिरस्येत्यर्थः ।

---

**अर्हः ॥३।२।१२॥**

अस्मादच् ॥ पूजार्हः । पूजार्हा ।[1]

**स्तम्बकर्णयो रमिजपोः ॥३।२।१३॥**

'हलदन्त—' इति ङेरलुक् ।[2] स्तम्बेरमो हस्ती ।[3] कर्णेजपः सूचकः ॥[4]

---

अर्हः । पूजार्हा इति । अजन्तत्वात् टाप् । अणि हि[5] ङीपा भाव्यम् ।

स्तम्ब । रमु क्रीडायाम् । जप जल्प व्यक्तायां वाचि । आभ्यां स्तम्बकर्णयोरुपपदयोरच् स्यादित्यर्थः । रमेरकर्मकत्वात् कर्म न संभवत्येव । जपेश्च शब्दकर्मकत्वात् कर्मणः कर्म न भवतीति । 'सुपि' इत्येतदिह संबध्यते । हस्तिसूचकयोरेवैतौ प्रयोगावित्याह— स्तम्बेरमो हस्तीत्यादि । व्याख्यातप्रायमेवेत्युपेक्षितं[6] सूत्रं व्याख्यायते—'शमि धातोः संज्ञायाम्' ॥३।२।१४॥ शम्युपपदे धातुमात्रात् संज्ञायां विषयेच् स्यात् । शंकरः । शंभवः । शंवदः । धात्वनुवृत्तौ धातुग्रहणं कृञो हेतुताच्छील्यानुलोम्येषु टप्रतिषेधार्थम् । शंकरा नाम काचित् तच्छीला तत्संज्ञा च ।

---

१. $D_2$, $D_4$ omit it. २. After it—हस्तिसूचकयोरिति वाच्यम् $D_2$, $D_4$, $B_2$. ३. After सूचकः—अन्यत्र स्तम्बेरन्ता । कर्णेजपिता मशकः । $D_2$, $D_4$, $B_2$. ४. After it the Sûtra—**शमिधातोः संज्ञायाम्** ॥३।२।१४॥ शम्युपपदे धातुमात्रात् संज्ञायामच् स्यात् । शंकरः । शंभवः । शंवदः । धातोरित्यनुवृत्तौ शमिधातुग्रहणं कृञो हेत्वादिषु प्रतिषेधार्थम् $D_1$, $D_3$, $B_1$, P, C, N (°त्यनुवृत्तेः P.; शमि [from शमिधातु°] dropped $D_1$; after प्रतिषेधार्थम् P has शङ्कराः परिव्राजकाः). ५. हि सति Pc. $Dc_3$. ६. °त्युपेक्षितमाचार्यवर्यैस्तदस्माभिः व्याख्यायते असूत्रपाठशान्त्यर्थम् Pc, $Dc_3$.

**अधिकरणे शेतेः ॥३।२।१५॥**

खे[1] शेते खशयः ॥ पार्श्वादौ च ॥ * पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः । उत्तानः शेते उत्तानशयः ॥ गिरौ शेतेर्डः ॥ * गिरिशः ।

**चरेष्टः ॥३।२।१६॥**

अधिकरणे चरेष्टः स्यात् ॥ कुरुचरी[2] ।

**भिक्षासेनादायेषु च ॥३।२।१७॥**

एष्वपि[3] चरेष्टः[4] । भिक्षां चरति[5] भिक्षाचरः । इत्यादि ।

---

अधिकरणे । अधिकरणे उपपदे शेतेरच् स्यात् । खशय इति । उपपदसमासः । पार्श्वादौ चेति । अनधिकरणार्थम् । पार्श्वाभ्यामिति । तृतीयान्तमुपपदमिति दर्शयति । उत्तानः शेते इत्य नेनविग्रहेण उत्तानादिषु कर्तृषु[6] उपपदेषु इति दर्शयति । दिग्धसहपूर्वाच्चेत्यपि वक्तव्यम् । दिग्धेन सह शेते इति दिग्धसहशयः । गिरौ शेते इति । छन्दसीति ज्ञातव्यम् ।

चरेः । प्रत्ययान्तरकरणं ङीबर्थमिति दर्शयति—कुरुचरीति ।

भिक्षा । अनधिकरणार्थोयमारम्भ इति दर्शयति—भिक्षां चरतीति । आदिशब्देन सेनाचरः । आदायचरः । आदायेति ल्यबन्तमेतत् । अस्य च कर्मसापेक्षत्वेपि वचनसामर्थ्यात् प्रत्ययः ।

---

१. $D_1$ drops खे शेते; C has खे शेते इति. २. कुरुचरः । कुरुचरी $B_2$, $D_4$. ३. Before it—अनधिकरणार्थोयमारम्भः । N. ४. After it—स्यात् $D_2$, $D_4$, $B_2$. ५. चरतीति $D_2$. ६. कर्तृषु dropped PC., $Dc_3$.

**पुरोऽग्रतोऽग्रेषु सर्तेः ॥३।२।१८॥**

एषु सरतेष्टः स्यात् ॥ पुरःसरः । अग्रतःसरः । अग्रेसरः ।

**कृञो हेतुताच्छील्यानुलोम्येषु ॥३।२।२०॥**

कर्मणि कृञष्टः स्यात् हेत्वाद्यर्थे ॥

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥८।३।४६॥**

कादौ परे अतः परस्य विसर्गस्य सः स्यात् समासे न

---

पुरः । पुराशब्दात् 'पूर्वाधरावराणामसि—' इत्यसिप्रत्ययान्तो व्युत्पादितः । अग्रतःशब्दोपि 'आद्यादिभ्य उपसंख्यानम्' इति तसिप्रत्ययान्तः । अग्रेशब्दस्यैदन्तत्वं निपात्यते अग्रेसरार्थम् । ननु च सप्तम्या अलुकापि सिध्यति । सत्यम् । यदा सप्तम्यन्तमुपपदं तदा सिध्यति । यदा द्वितीयान्तं तृतीयान्तं वोपपदं तदाग्रेसर इति न सिध्यतीति एदन्तत्वं निपात्यते । स्पष्टत्वात् त्यक्तं सूत्रमेकम्—'पूर्वे कर्तरि' ॥३।२।१९॥ पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः ।

कृञः । हेतुरैकान्तिकं कारणम् । ताच्छील्यं तत्स्वभावता । आनुलोम्यमनुलोमता ।

अतः । यशस्कारः । यशस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्कुम्भी । अयस्पात्रम् । अयस्कुशा । अयस्कर्णी । अनव्ययस्य किम् । पुनःकारः । समासे एव । यशः करोति । अनुत्तरपदस्थ-

---

१. Before it—पूर्वे कर्तरि ॥ पूर्वशब्दे कर्तृवाचिनि सरतेष्टः । पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरति । पूर्वसारः । N. २. 'पूर्वे कर्तरि' एतच्च सूत्रं स्पष्टत्वात् त्यक्तं व्याख्यायते PC. Dc has एतच्च &c. as in PC after the Sûtra. ३. After; it—कर्तरीति किम् । पूर्वदेशं सरति पूर्वसारः PC, $Dc_3$. ४. यशस्करः PC. ५. अयस्कामः $Dc_1$.

त्वव्ययस्य ॥ ×[1] कापवादः । यशस्करी विद्या । श्राद्धकरः[2] । वचनकरः ।[3]

**दिवाविभानिशाप्रभाभास्कारान्तानन्तादि-बहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्या-जङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥३।२।२१॥**

एषु कृञष्टः स्यादहेत्वादावपि ॥ दिवाकरः ।[4] भास्करः । निपातनात् सः । भास्करः । [5]कारकरः । इत्यादि ॥

---

स्येत्येव । परमपयःकामः । यशस्करी विद्येति हेतौ उदाहरणम् । श्राद्धकर इति ताच्छील्ये । वचनकर इति आनुलोम्ये ।

दिवा । इत्यादीति । आदिशब्देन विभाकरः । निशाकरः । प्रभाकरः । अन्तकरः । अनन्तकरः । कस्मिंश्चिदुपपदविधौ तदन्त-विधिर्नास्तीति अन्तानन्तयोर्ग्रहणम् । न च नान्तकरोनन्तकर इति समासः । अत्रोत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिष्टं तद्भङ्गप्रसङ्गात् । नञ्स्वरेणाद्युदात्तत्वापातात् । आदिकरः । बहुकरः । बहुशब्दोयं विपुलवाची । संख्याया वक्ष्यमाणत्वात् । नान्दीकरः । किंकरः । [6]लिपिकरः ।[7] लिबिकरः । [8]बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । संख्याकरः । जङ्घाकरः । बाहुकरः । अहस्करः । नकारस्य रेफस्य विसर्गः । तस्य 'अतः कृकमि—'

---

१. × क × पापवादः P. २. After it—ओत्रियः $B_2$. ३. After it—पूर्वे कर्तरि कर्तृवाचिन्यस्मिन् सरतेष्टः स्यात् । पूर्वः सरति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरति पूर्वसारः । C; $D_1$ has it also—(कर्तरि वाच्ये in $D_1$ for कर्तृवाचिनि). ४. भास्कर इत्यत्र $N_1$. ५. निशाकरः । $D_1$; कारस्कारः $B_2$. ६. om । $Dc_1$, ७. om लिविकरः । $Dc_1$. ८. om—वलिकरः $Dc_1$.

किंयत्तद्बहुष्वञ्वा ॥* किंकरा स्त्री । इत्यादि ।

कर्मणि भृतौ ॥३।२।२२॥

कर्मशब्दे[2] कृञष्टः स्याद् भृतौ ॥ कर्मकरो भृतकः । कर्मकारोन्यः ।

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥३।२।२३॥

एषु कृञष्टो न हेत्वादौ ॥ शब्दकारः । इत्यादि ।

स्तम्बशकृतोरिन् ॥३।२।२४॥

एतयोः कृञ इन्[3] स्यात् ॥ न इत् । [4]स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ।

---

इति सः । यत्करः । तत्करः । धनुष्करः । अरुष्करः । किंकरा स्त्रीति । अजन्तत्वाट्टाप् । आदिना । यत्करा । तत्करा । बहुकरा ।

कर्मणि । कर्मानुवृत्तौ पुनः कर्मग्रहणं स्वरूपग्रहणार्थमित्यभिप्रेत्याह—कर्मशब्द इति । भृतिर्वेतनं तस्मिन् गम्यमाने ।

न शब्द । 'कृञो हेतुताच्छील्य—' इति संप्राप्तष्टो निषिध्यते । आदिना । श्लोककारादि ।

स्तम्ब । नकारो 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तार्थ इत्याह—न इदिति । व्रीहिवत्सयोरेव वाच्ययोर्भवतीत्याह—स्तम्बकरिर्व्रीहिरित्यादि ।

---

१. °षु कृञोऽञ्श C. २. कर्मशब्दोपपदे $D_1$, $B_2$. ३. नकार N. ४. Before it—व्रीहिवत्सयोरितिवाच्यम् । N.

**हरतेर्दृतिनाथयोः पशौ ॥३।२।२५॥**

हृञ एतयोरिन् स्यात् पशौ कर्तरि ॥ दृतिहरिः पशुः। नाथहरिः।

**फलेग्रहिरात्मम्भरिश्च ॥३।२।२६॥**

एतौ निपात्यौ[1] ॥ चात् कुक्षिम्भरिः। उदरम्भरिः॥ देवानाप्नोति[2] देवापिः। वातापिः। रजोग्रहिः। मलग्रहिरिति[3] केचित्।

**एजेः खश् ॥३।२।२८॥**

कर्मणि ण्यन्तादेजेः खश् स्यात् ॥

**अरुर्द्विषदजन्तस्य मुम् ॥६।३।६७॥**

अरुषो द्विषतोजन्तस्य च[4] मुमागमः स्यात् खिदन्ते उत्तर-

---

हरते। 'पशौ' इति प्रत्ययार्थस्य कर्तुर्विशेषणमित्याह—पशौ कर्तरीति।

फले। फलानि गृह्णाति आत्मानं बिभर्तीति विग्रहः। यूथमसेवमानः कुक्षिम्भरिः। उदरम्भरिः। देवानित्यादि। तथोक्तं दुर्गेण। 'फलेमलरजस्सु ग्रहः देववातयोरापेः' इति।

एजेः। एजृ कम्पने। खकारो मुमर्थः। शकारः सार्वधातुकसंज्ञार्थः।

अरु। अन्तग्रहणेन कार्यान्तरस्यान्तेवसाने मुम् कर्तव्य इत्येषोर्थः सूच्यते। अतो ह्रस्वत्वे कृते पश्चान्मुम् स्यात्।

---

१. निपात्यौते $D_1$. २. Before it—देववातयोरापेः N. ३. मूलेग्रहिः C; मलग्रहिः। रजोग्रहिरिति केचित्। N. ४. Dropped in $C_1$, $D_1$.

पदे न त्वव्ययस्य ॥ शित्त्वाच्छेबादि[1] ॥ जनमेजयः । वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश्[2] ॥ * वातमजः ।

**खित्यनव्ययस्य** ॥६।३।६६॥

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्[3] । ततो मुम् ॥ शुनिन्धयः । तिलन्तुदः । शर्द्धञ्जहः[4] ।

**नासिकास्तनयोर्ध्माधेटोः** ॥३।२।२९॥

स्तने धेटः नासिकायां ध्माधेटोः खश् स्यात् ॥ स्तनन्धयः । नासिकन्धमः । नासिकन्धयः[5] । धेटष्टित्त्वात् स्तनन्धयी ।

---

**शित्त्वादिति** । खशः शित्त्वात् सार्वधातुकसंज्ञायां शप्गुणायादेशा इत्यर्थः । **जनमेजय** इति ।

**वातेति** । अज गतौ । धेट् पाने । तुद व्यथायाम् । ओहाक् त्यागे । वातमजतीति वातमजः । शप् । मुम् ।

**खिति** । उत्तरपदाधिकारेपीह तदन्तग्रहणस्यानव्ययस्येत्येष निषेधो ज्ञापक इत्यभिप्रेत्याह—**खिदन्त** इति । मुमा ह्रस्वबाधो न । अन्यथा ह्रस्वविधानमनर्थकं स्यादित्यभिप्रेत्याह—**ततो मुमिति** । शुनीं धयतीति तिलांस्तुदतीति शर्धं जहातीति विग्रहाः ।

**नासिका** । अल्पाच्तरस्यापूर्वनिपाताल्लक्षणव्यभिचारात् ज्ञायते यथासंख्यलक्षणस्याप्यत्र व्यभिचार इति चेतसि कृत्वाह—**स्तने धेटः नासिकायां ध्माधेटोरिति** । **नासिकंधम** इति । 'पाघ्रा—' इति धमादेशः । 'खिति—' इति ह्रस्वः । 'अरुर्द्विषत्—' इति मुम् । **धेट** इति । 'टिड्ढाणञ्—' इति ङीबिति भावः ।

---

१. च्छबादिः $D_1$. २. After it—वाच्यः C. ३. After it—नत्वव्ययस्य $D_1$, $B_2$. ४. गर्धंजहः $B_2$, $D_4$ (शर्धंजहः also noticed $D_4$). ५. C drops it.

**नाडीमुष्ट्योश्च ॥३।२।३०॥**

एतयोर्ध्माधेटोः खश् स्यात् ॥ नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः । चात् घटिन्धमः । घटिन्धयः । खरिन्धमः । खरिन्धयः । वातन्धमः । वातन्धयः । मुञ्जकूलास्यपुष्पेषु धेटः खशिति केचित् । मुञ्जन्धयः । इत्यादि ॥

**उदि कूले रुजिवहोः ॥३।२।३१॥**

उत्पूर्वाभ्यां रुजिवहाभ्यां कूले कर्मणि खश् स्यात् ॥ कूलमुद्रुजः [4]। कूलमुद्वहः ॥

**वहाभ्रे लिहः ॥३।२।३२॥**

वहंलिहः । अभ्रंलिहः । बाहुंलिहोपीति केचित् । अपित्सार्वधातुकत्वान्न गुणः ।

---

नाडी । अत्रापि घ्यन्तस्यापूर्वनिपातात् संख्यातानुदेशो नेत्यभिप्रेत्योदाहरति—**नाडिंधम** इत्यादि । **मुञ्जे**त्यादि । तथोक्तं दुर्गेण 'शुनीस्तनमुञ्जकूलास्यपुष्पे धेट' इति ।

उदि । रुजो भङ्गे । वह प्रापणे । **कूलमुद्रुज** इति । तुदादित्वाद्गुणाभावः ।

वहा । वहाभ्रयोः कर्मणोरुपपदयोर्लिह आस्वादने अस्मात् खश् स्यात् । वहं लेढि अभ्रं लेढि इति विग्रहौ । **अपित्सार्वे**ति । खशः 'सार्वधातुकमपित्' इति ङित्त्वाद्गुणाभावः । 'क्ङिति च' इत्यनेनेत्यर्थः ।

---

१. Dropped N. २. खारिन्धमः । खारिन्धयः $D_2$, $B_2$, $D_4$. ३. Dropped C. ४. After it—पूरः N. ५. ङित्त्वात् क्ङिति च इति गुणनिषेध इत्यर्थः $Dc_3$, PC.

**परिमाणे पचः ॥३।२।३३॥**

परिमाणे प्रस्थादौ[1] पचः[2] खश् स्यात्[3] ॥ प्रस्थम्पचा स्थाली।

**मितनखे च ॥३।२।३४॥**

एतयोः पचः[4] खश् स्यात्[5] ॥ मितम्पचः । नखम्पचः ।

**विध्वरुषोस्तुदः ॥३।२।३५॥**

विधुन्तुदः । संयोगान्तलोपः[6] । अरुन्तुदः ।

**असूर्यललाटयोर्दृशितपोः ॥३।२।३६॥**

एतयोः कर्मणोः क्रमात् दृशितपोः खश् स्यात् ॥ असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । सूर्यं[7] न पश्यन्त्यसूर्यम्पश्याः राजदाराः[8] । ललाटन्तपः सूर्यः ।

---

परि । अत्र प्रस्थादिशब्दः प्रस्थादिप्रमितेषु यवादिषु वर्तते । परिमाणविशेषस्य काष्ठादिमयस्य पाकस्य विक्लित्तिलक्षणस्यासंभवात् ।

मित । अपरिमाणार्थ आरम्भः ।

विध्वरुषोः । विधु अरुस् एतयोः[9] कर्मणोरुपपदयोस्तुदः खश् । संयोगान्तलोप इति । अरुस् तुद इति स्थिते 'अरुर्द्विषद्—' इति मुमि संयोगान्तस्य सस्य लोप इत्यर्थः । 'मोनुस्वारः' । 'अनुस्वारस्य यथि परसवर्णः' ।

असूर्य । असूर्यम्पश्या इति । 'पाघ्राध्मा—' इति पश्यादेशः । एवं गुप्ता दारा यदपरिहार्यं सूर्यमपि न पश्यन्तीत्यर्थः ।

---

१. After it—च C. २. पचेः $D_2$, P. ३. Dropped $B_2$. ४. पचेः $D_2$, $D_4$. ५. Dropped in $D_2$. ६. संयोगान्तस्य C, P. ७. न सूर्यं N. ८. दाराः for राजदाराः C, $D_1$, N. ९. अनयोः $Dc_2$, Pc.

**उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥३।२।३७॥**

एते निपात्याः । उग्रम्पश्यः । इरया माद्यति[1] इरम्मदः । पाणयो ध्मायन्ते[2] पाणिन्धमोऽध्वा । शुनिन्धमः । [3] [4] करन्धम इत्यपि केचित् ।

**प्रियवशे वदः खच् ॥३।२।३८॥**

एतयोर्वदेः[5] खच् स्यात् ॥ प्रियंवदः । वशंवदः ॥ गमेः सुपि वाच्यः । भुजङ्गमः । विहायसो विह च ॥* विहङ्गमः । खच्च[6] डिद्वाच्यः । विहङ्गः ।[7] भुजङ्गः ।

**द्विषत्परयोस्तापेः ॥३।२।३९॥**

एतयोर्ण्यन्तात् तपेः खच् स्यात् ॥ णिलोपः ।

---

उग्रम् । उग्रम्पश्य इत्यत्र कर्मण्यणि प्राप्ते इरम्मद इत्यत्र तृजादौ पाणिन्धम इत्यत्राधिकरणे ल्युटि खश् निपात्यते । इरया माद्यतीति[8] । इरया अम्भसा माद्यतीतीरम्मदो मेघज्योतिः । अविन्धनत्वात् ।

प्रिय । खकारो मुमर्थः[9] । चकारः 'खचि' इति विशेषणार्थः । प्रत्ययान्तरकरणमुत्तरार्थम् । भुजङ्गम इति । भुजेन कौटिल्येन गच्छति । विहङ्गम इति । विहायसा आकाशेन गच्छति । खच्च डिद्वाच्य इति । 'गमेः सुपि' इत्यस्मात् भेदेन पाठो डित्त्व-स्यानित्यत्वज्ञापनार्थः । अन्यथा विहङ्गम इति न स्यात् ।

द्विषत् । तप संतापे । भ्वादिः । तप दाहे । चुरादिः । द्वयोरपि ग्रहः । ण्यन्तावस्थायां विशेषाभावात् । णिलोप इति । 'णेरनिटि' इति ।

---

१. माद्यतीति $D_4$. २. ध्मायन्ते इति $D_4$. ३. Before it—अस्मिन्निति $D_3$. ४. करन्धमः । काकिन्धमः । इति केचित् $D_2$; करन्धमः । काकिन्धमः । काटिन्धमः । इति केचिन् $B_2$, $D_4$. ५. °र्वदः $D_1$. ६. खज्चा $D_1$. ७. Before it—डित्त्वात् टिलोपः $B_2$. ८. माद्यति स्फुरतीति $Do_3$. ९. मुं॰ र्थः $Do_4$.

**खचि ह्रस्वः ॥६।४।९४॥**

खच्परे णावुपधाया ह्रस्वः स्यात् ॥ द्विषन्तं परं वा तापयति द्विषन्तपः । परन्तपः । द्विषत्परेति द्वितकारोक्तेः स्त्रियां न । द्विषतीतापः ।

**वाचि यमो व्रते ॥३।२।४०॥**

वाक्शब्दे यमेः खच् स्यात् व्रते[1] ॥

**वाचंयमपुरन्दरौ च ॥६।३।६९॥**

मुमर्थमेतौ खचि निपात्यौ ॥ वाचंयमो मौनव्रती ।[2]

**पूः सर्वयोर्दारिसहोः ॥३।२।४१॥**

पुरि दारेः सर्वशब्दे सहेश्च खच् स्यात् ॥ पुरन्दरः । सर्वंसहः ।

**भगे च दारेः ॥*** भगन्दरः ।

---

**खचि** । 'मितां ह्रस्वः' इत्यतो मण्डूकप्लुतिन्यायेनानुवर्तमानेपि ह्रस्वे ह्रस्वग्रहो विस्पष्टार्थः । द्विषत्परेतीति । 'द्विषत्परयोः' इति सूत्रे द्वौ तकारावुच्येते । तयोरेको द्विषच्छब्दस्यावयवो द्वितीयस्तु विशेषणार्थः । द्विषच्छब्दे तकारान्ते उपपदे इति । तेन स्त्रियां न । अन्यथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति तत्रापि स्यादित्यर्थः । द्विषतीताप इति । कर्मण्यण् ।

**वाचि** । व्रतमिति शास्त्रीयो नियमः ।

**वाचं** । न च वाच्यं प्रत्ययो निपातनादेव स्यादिति । पचाद्यचा नियमे सिद्धे निपातस्यासंभवात् । एवं च सति नित्य उपपदसमासो न स्यात् । तस्मात् प्रत्ययश्च निपातनं च कर्तव्यम् । दारीति । दॄ विदारणे । अस्य णिचा निर्देशः । षह मर्षणे । पुरन्दर इति । 'खचि' इति ह्रस्वः । 'वाचंयम—' इति मुमर्थो निपातः ।

---

१. Dropped $N_1$. २. After it—व्रते किम् । वाग्यामः । $N_1$.

**सर्वकूलाभ्रकरीषेषु कषः ॥३।२।४२॥**

एषु कषः[1] खच् स्यात् ॥ सर्वङ्कषः । इत्यादि ।

**मेघर्तिभयेषु कृञः ॥३।२।४३॥**

एषु कृञः खच् स्यात् ॥ मेघङ्करः । इत्यादि ।

अभयादौ च ॥ *अभयङ्करः ।[2]

**क्षेमप्रियमद्रेण् च ॥३।२।४४॥**

एषु कृञोण् स्यात् खच् च ॥ क्षेमकारः । क्षेमङ्करः[3] । इत्यादि । अणुक्तेर्हेत्वादौ टो न ।

**आशिते भुवः करणभावयोः ॥३।२।४५॥**

आशिते सुपि भवतेः खच् स्यात्[4] करणे भावे चार्थे ॥ आशितो भवत्यनेन आशितम्भव ओदनः । आशितम्भवो[5] वर्तते ।

---

**सर्व** । कष हिंसार्थः । आदिना कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या ।

**मेघ** । अपवादत्वादणं बाधते । हेत्वादिविवक्षायां परत्वात् टो भवति । आदिना ऋतिङ्करः । भयङ्करः । अभयादौ चेत्यादिग्रहणं तदन्तविधिं सूचयति ।

**क्षेम** । ननु वेति खचि विकल्पिते पक्षेण् सिद्धः किमर्थं वाग्रहणं परित्यज्याण्ग्रहणं कृतमित्याशङ्क्याह—**अणुक्तेरिति** ।

**आशिते** । अत्र 'सुपि' इत्युपतिष्ठते न 'कर्मणि' इति । भवतेरकर्मकत्वादित्यभिप्रेत्याह—**आशिते सुपीति** । ल्युट्घञोरपवादोयम् । वासरूपविधानाद् ल्युड् भवत्येव । आशितं भवति आशितम्भवनम् ।

---

१. कषेः $D_2$. २. After it—इत्यादि N. ३. $D_2$, $B_2$ drop क्षेमङ्करः ४. $D_2$ drops it. ५. °म्भवं P, C, $N_1$.

**संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥३।२।४६॥**

एभ्यः सुपि खच् स्यान्नाम्नि ॥ विश्वम्भरः । रथन्तरं साम । पतिंवरा । धनञ्जयः । वसुन्धरा । शत्रुंसहः । शत्रुन्तपः । अरिन्दमः ।[2]

**[3]गमश्च ॥३।२।४७॥**

[4]गमः खच् स्यान्नाम्नि ॥ सुतङ्गमः ।

**[5]अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः॥३।२।४८॥**

एषु गमेर्डः स्यात् । डित्त्वकरणसामर्थ्यात् टिलोपः । अन्तगः । इत्यादि । सर्वत्रपन्नयोश्च ॥ * सर्वत्रगः । पन्नगः ॥ [6]उरसो लोपश्च ॥ * उरसा [7]गच्छति उरगः । उरङ्गमोपीति केचित् ॥

---

**संज्ञायाम्** । यथायोगं कर्मणि सुपीति संबध्यते । **विश्वम्भर** इति । विश्वं बिभर्ति । रथेन तरति । पतिं वृणोति । धनं जयति । वसुं धारयति । शत्रुं सहते । शत्रुं तपति । अरिं दाम्यतीति यथायथं विग्रहाः ।

**गमः** । योगविभागो गमेरेवोत्तरानुवृत्त्यर्थः ।

**अन्ता** । ननु डित्करणेप्यभत्वात् टिलोपो न स्यादित्याशङ्क्याह-डित्त्वकरणसामर्थ्यादिति । आदिना अत्यन्तगादि । **पन्नग** इति । पद्भ्यां न गच्छति । [8]उरङ्गमोपीति । तथा च **कौमारे** वदः खप्रिय—वशयोरित्यनुवर्तमाने 'उरोविहायसोरविहौ वा' इत्युक्तम् ।

---

१. After it—शत्रुञ्जयः $D_4$. २. After it—संज्ञायां किम् । कुटुम्बभारः। ३. गमेश्च $D_2$. ४. गमेः $D_2$. ५. Before it—संज्ञायामिति नानुवर्तते । N. ६. उरसोन्तलोपश्च $D_1$; उरसः सलोपश्च $D_2$. ७. गच्छतीति $D_2$. ८. From उरङ्गमो°...to इत्युक्तम् dropped in PC., $Dc_3$; PC. has अदिना अन्तङ्गेति । विहङ्गेत्यादी । $Dc_3$ has विहगेत्यादि ।

सुदुरोरधिकरणे ॥* सुखेन गम्यते[1]त्र सुगः । [2]दुःखेन गम्यतेत्र दुर्गः ॥ [3]निरो देशे ॥* निर्गो देशः । अन्यत्रापि दृश्यते ॥* [4]ग्रामगः । [5]विहगतुरगभुजगपतगप्लवगादयोऽप्येवं ज्ञेयाः ॥

### आशिषि हनः ॥३।२।४९॥

कर्मणि हन्तेर्डः स्यादाशिषि ॥ शत्रुं वध्यात् शत्रुहः । [6]दारावाहनोऽणन्त्यस्य च टः संज्ञायाम् ॥* दा[7]रावाङ्पूर्वाद्धन्तेरण्-प्रत्ययः स्यादन्त्यस्य च टो नाम्नि ॥ (दार्वाहन्तीति दार्वाघाटः ।)[9] कर्मणि समि च ॥* कर्मण्युपपदे संपूर्वस्य हन्तेरण्प्रत्ययः स्यात् अन्त्यस्य च टो वा । वर्णान् संहन्तीति वर्णसंघाटः । वर्णसंघातः ।

---

विहगेत्यादि । विहायसा गच्छतीति विहगः । विहायसो विह च । तुरया वेगेन गच्छतीति तुरगः । भुजेन कौटिल्येन गच्छतीति भुजगः । [8]पतेन गच्छतीति पतगः । प्लव उत्पतनं तेन गच्छति प्लवगः । आदिना प्रवगादयः ।

आशिषि । अप्रसिद्धत्वात् तज्जनितशब्दानामुपेक्षितं वक्तव्यत्रयं व्याख्यायते । 'दारावाहनोऽणन्त्यस्य च टः संज्ञायाम्' । 'चारौ वा टः । दार्वाघाटः । चार्वाघाटः । चार्वाघातः । 'कर्मणि समि च' ॥ कर्मणि संपूर्वाद्धन्तेरण् वा च टोऽन्त्यस्य । वर्णसंघाटः । वर्णसंघातः ।

---

१. अस्मिन् for अत्र $D_3$, $B_2$. २. दुःखेन गम्यतेत्र–Dropped $B_2$, N, $D_4$. ३. निरो N. ४. Before it—गुरुतल्पगः N. ५. विहगः। तुरगः। भुजगः। पतगः। प्रवगप्लवगा° C; विहगः। तुरगः। भुजगः। पतगः। प्लवगा° $D_2$, $D_4$. ६. P, $B_2$, $N_1$ drop from दारा° to वर्णसंघातः ७. दाराशब्दे आङ्पूर्वा.° $D_2$. ८. पतन् गच्छति पतङ्गः $Dc_3$; पतन् गच्छति पतगः PC. ९. After it—दारावुपपदे आङ्पूर्वाद्धन्तेरण् वक्तव्यः अन्त्यस्य च टो वक्तव्यः। दार्वाघाटः। चारावुपपद आङ्पूर्वाद्धन्तेरण् अन्त्यस्य च वा टः। चार्वाघाटः &c. PC.

**अपे क्लेशतमसोः ॥३।२।५०॥**

एतयोरपपूर्वाद्धन्तेर्डः स्यात् ॥ क्लेशापहः । तमोपहः ॥[1]

**लक्षणे जायापत्योष्टक् ॥३।२।५२॥**

अनयोर्हन्तेष्टक् स्याल्लक्षणे द्योत्ये ॥ जायाघ्नो ना । पतिघ्नी स्त्री ।

---

अपे । अनाशीरर्थ आरम्भः । स्पष्टत्वात् त्यक्तं सूत्रं प्रसङ्गाद्व्याख्यायते—'कुमारशीर्षयोर्णिनिः' ॥३।२।५१॥ कुमारशीर्षयोरुपपदयोर्हन्तेर्णिनिः स्यात् । निपातनाच्छिरसः शीर्षभावः । कुमारघाती । शीर्षघाती ।

लक्षणे । जायाघ्न इति । ङित्त्वात् 'गमहन—' इत्यादिनोपधालोपः । 'हो हन्तेः—' इति कुत्वम् । पतिघ्नीति । टित्त्वात् ङीप् ।

---

१. After this the Sûtra—'कुमारशीर्षयोर्णिनिः' ॥३।२।५१॥—एतयोरुपपदयोर्हन्तेर्णिनिः स्यात् ॥ कुमारघाती । शीर्षघाती । निपातनात् शिरसः शीर्षभावः $D_1$, $D_3$, $B_1$, $C_1$, N ($D_1$ drops the Vritti, and has कुमारघाती and शीर्षघाती after शीर्षभावः; After शीर्षभावः N has—दारावाहनोणन्तस्य च टः संज्ञायाम् ॥ दारौ उपपदे सति आङ्पूर्वाद्धन्तेरण् वक्तव्यः । अन्तस्य च टो वक्तव्यः । दारौ आहन्ति दार्वाघाटः । चारौ वान्तस्य च टः । आङ्पूर्वाद्धन्तेश्च रुशब्दे उपपदे अण् स्यात् अन्तस्य च टो वा । चार्वाघाटः । चार्वाघातः । कर्मणि समि च ॥ कर्मण्युपपदे संपूर्वाद्धन्तेरण् स्यात् वा च टोन्त्यस्य । वर्णान् संहन्ति वर्णसंघातः । वर्णसंघाटः. २. This is given after the Sûtra कुमार° and is as under:—स्पष्टत्वात् पूर्वसूत्रव्याख्यानेनैव व्याख्यातत्वाच्चोपेक्षितं सूत्रं व्याख्यायते $Dc_3$; PC omits from स्पष्ट° to व्याख्यायते. ३. निपाताच्छि° $Dc_3$.

अमनुष्यकर्तृके च ॥३।२।५३॥

कर्मणि हन्तेष्टक् स्यात् अमनुष्यकर्तृकेऽर्थे ॥ पित्तघ्नं घृतम् ।[1] मनुष्ये तु आखुघातः शूद्रः ।[2] बाहुल्याच्चोरघातो हस्ती ।[3]

(शक्तौ हस्तिकपाटयोः ॥३।२।५४॥

[4]एतयोरुपपदयोर्हन्तेष्टक् स्यात् शक्तौ गम्यमानायाम् । मनुष्यकर्तृकार्थ[5]मारम्भः ।[6] हस्तिघ्नः । कपाटघ्नः । )

पाणिघताडघौ शिल्पिनि ॥३।२।५५॥

एतौ निपात्यौ शिल्पिनि ॥ राजघश्च ॥ * [8]राजानं हन्ति राजघः ।[9]

---

अम । बाहुल्यादिति । 'कृत्यल्युटो बहुलम्' इति ।

[10]स्पष्टत्वात् त्यक्तमेकम्—'शक्तौ हस्तिकपाटयोः' ॥३।२।५४॥ हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक् स्यात् शक्तौ गम्यायाम् । मनुष्यकर्तृकार्थं आरम्भः । हस्तिघ्नः । कपाटघ्नः । यस्तु स्वयं शक्तः स उच्यते । यस्तूपायान्तरेण हन्ति हस्तिघात एव सः ।

पाणि । टक् घत्वं टिलोपश्च निपात्यते । शिल्पिनि किम् । पाणिघातः ।

---

१. After it—वातघ्नं तैलम् $D_2$, $B_2$, $D_4$. २. $D_2$, $B_2$, $D_4$ drop बाहु° ...हस्ती. ३. The Sûtra and its Vritti are omitted in P, C, N. ४. $D_2$ omits एतयो :...गम्यमानायाम्. ५. °र्थमेतत् $D_2$ $D_4$, $B_2$. ६. हस्तिनं हन्तुं समर्थौ हस्तिघ्नो ना । कपाटघ्नः । शक्तौ किम् । विषेण हस्तिनं हन्ति हस्तिघातः । बाहुल्याच्चौरघातो हस्ती $D_2$, $D_4$, $B_2$ (After °चौरघातो हस्ती $B_2$ has—ब्रह्मवृत्रशत्रुकृतादिषु च ठक् । ब्रह्मघ्नः) ७. Before it—ब्रह्मवृत्रशत्रुकृतादिषु च टक् । N. ८. राज्ञो $D_2$, $B_2$. ९. After it—कुमारशीर्षयोर्णिनिः । कुमारघाती $B_2$, $D_1$. १०. This is after the Sûtra as follows:—एतदपि स्पष्टत्वादुपेक्षितम् PC., $Dc_3$.

**आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थे-ष्वच्वौ कृञः करणे ख्युन् ॥३।२।५६॥**

एषु च्व्यर्थेष्वच्व्यन्तेषु कृञः करणेऽर्थे[1] ख्युन् स्यात् ॥ अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम् । सुभगंकरणम् । स्थूलंकरणम् । प्रियंकरणम्[2] । अच्वौ किम् । आढ्यीकुर्वन्त्यनेन । प्रतिषेधसामर्थ्याल्ल्युडपि न । न ह्यत्र ख्युन्ल्युटो रूपभेदः । च्व्यन्तस्याव्ययत्वेन सुमोभावात् ।[3]

**कर्तरि भुवः खिष्णुच्खुकञौ ॥३।२।५७॥**

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु[4] भुवः कर्त्रर्थे खिष्णुच्-खुकञ्[5] एतौ स्तः । अनाढ्यः आढ्यो भवति[6] आढ्यंभविष्णुः ।

---

आढ्यसुभगेति । आढ्यंकरणमिति । ‘अरुर्द्विषदजन्त—’ इति मुम् । ‘टिड्ढाणञ्—’ इति ङीप् । प्रत्याहारन्यायेन पलितंकरणम् नग्नंकरणम् अन्धंकरणम् एतान्यप्युदाहरणानि ज्ञातव्यानीत्यभिप्रायेण प्रियंकरणमित्युदाहृतम् । ननु आढ्यीकरणमिति न भाव्यमच्वाविति प्रतिषेधः[7] कृतः । तत्र ख्युनि प्रतिषिद्धेपि ल्युट् भविष्यत्येव किं प्रतिषेधेनेत्याशङ्क्याह—**प्रतिषेधसामर्थ्यादिति** । तदेवोपपादयति—**न हीति** । उत्तरार्थश्च प्रतिषेध इति **भाष्यकारमतम्** । च्व्यर्थेषु किम् । तैलेनाढ्यं कुर्वन्ति । अभ्यञ्जयन्तीत्यर्थः । धातूनामनेकार्थत्वात् ।

कर्तरि । आदिना सुभगंभविष्णुः । सुभगंभावुकः । स्थूलंभविष्णुः । स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । अन्धंभविष्णुः । अन्धंभावुकः । प्रियंभविष्णुः ।

---

१. P drops अर्थे. २. Dropped in $D_1$. ३. After it—च्व्यर्थेष्विति किम् । आढ्यं तैलेन कुर्वन्ति अभ्यञ्जयतीत्यर्थः । धातूनामनेकार्थत्वात् । $N_1$. ४. अच्व्यन्तेषु is dropped in $D_2$, $D_4$. ५. °खुकञौ स्तः C; °खुकञौ एतौ स्तः $D_1$. ६. भवतीति C. ७. निषेधः PC., $Dc_3$.

आढ्यंभावुकः । इत्यादि । त्यदादिषु दृश इति कञ्किनौ । तादृशः । तादृक् । समानान्ययोश्च ॥ सदृशः । सदृक् । अन्यादृशः । अन्यादृक् । दृशेः क्सश्च । सदृक्षः । तादृक्षः । अन्यादृक्षः ।

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेपि क्विप् ॥३।२।६१॥**

[1]एभ्यः सुप्युपपदे [2]उपसर्गे सत्यपि क्विप् स्यात् ॥

---

प्रियंभावुकः । कर्तरि किम् । करणे मा भूत् । च्व्यर्थे किम् । आढ्यो भविता । अच्वौ किम् । आढ्यी भविता ।

' उदात्तत्वाद् भुवः सिद्धमिकारादित्वमिष्णुचः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ॥ '

भवतेरुदात्तत्वात् प्रतिषेधाभावात् वलादिलक्षण इट् स्यात् । किमर्थमिष्णुच इकारेण । अत्रोत्तरम् । नञस्तु इति । नञ उत्तरस्य अनाढ्यंभविष्णुरस्य 'कृत्योकेष्णुच्चार्वादयश्च' इति अन्तोदात्तार्थमिकारादित्वमन्यथा लाक्षणिकत्वादस्य ग्रहणं न स्यादित्यर्थः । ' स्पृशोनुदके क्विन् ' ' ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ' इति सूत्रद्वयं सुबन्त एव व्याख्यातमितीह नोक्तम् । ' त्यदादिषु—' इति व्याख्यातमपि पुनरुच्यते । तत्र सर्वोदाहरणानामनुक्तत्वात् । तादृश इति । स इव दृश्यते । ' आ सर्वनाम्नः—' इत्यात्वम् । सदृक् इति । 'समानस्य सः' इत्यनुवर्तमाने ' दृग्दृशवतुषु ' इति सः ।

सत्सू । षद्लृ विशरणगत्यवसादनेषु । सू इति षूङ् प्राणिगर्भविमोचने इत्यस्यादादिकस्य ग्रहणम् । द्विषा साहचर्यात् । न सुवतेस्तौदादिकस्य न वा सूयतेः । द्विष अप्रीतौ । द्रुह जिघांसायाम् ।

---

१. Before it—सुपीति वर्तते । कर्मग्रहणं ' स्पृशोनुदके क्विन् ' इत्यतः प्रभृति न व्याप्रियते । N. २. उपसर्गे सत्यसत्यपि C, $B_2$, $N_1$, उपसर्गे सत्यसति P.

उपसर्गोक्तेर्ज्ञायते अन्यत्र सुबुक्तौ प्रादिग्रहणं नेति वदः सुपि क्यप् च सुपि च इत्यादौ । वेर्लोपः । शुचिषत्[1] । उपनिषत्[2] । अण्डसूः । प्रसूः । मित्रद्विट्[3] ॥ अग्रग्रामाभ्यां नयतेर्णो वाच्यः । अग्रणीः । ग्रामणीः । देवराट्[4] ।

**भजो ण्विः** ॥३।२।६२॥[5]

सुपि प्रादौ च भजेर्ण्विः स्यात् ॥ सुखभाक् । प्रभाक्[6] ।

---

दुह प्रपूरणे । युज समाधौ । युजिर्योगे वा । विद ज्ञाने । विद विचारणे । विद सत्तायां वा । न विद्लृ लाभे । अकारस्य विवक्षितत्वात् । भिदिर् विदारणे । छिदिर् द्वैधीकरणे । जि जये । णीञ् प्रापणे । राजृ दीप्तौ । सुपीति वर्तते । कर्मग्रहणं 'स्पृशोनुदके क्विन्' इत्यतः प्रभृति न व्याप्रियते इत्यभिप्रेत्याह—**सुप्युपपदे** इति । ननु 'सुपि' इति वर्तमाने किमुपसर्गग्रहणेनेत्याशङ्क्याह—**उपसर्गोक्ते**रिति । **वेर्लोप** इति । 'वेरपृक्तस्य' इत्यनेन । पकारस्तुगर्थः । ककारो गुणप्रतिषेधार्थः । इकारो वेरिति सामान्यग्रहणार्थः । **शुचिषदिति** । 'पूर्वपदात्—' इति षत्वम् । **उपनिषदिति** । 'सदिरप्रतेः' इति षत्वम् । 'स एषां ग्रामणीः' इति ज्ञापकान्नयतेः पूर्वपदादसंज्ञायां णत्वं भवतीति वाच्यमित्याह—**अग्रग्रामाभ्यामिति** । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । गोधुक् । अश्वयुक् । वेदवित् । काष्ठभित् । रज्जुच्छित् । मित्रजित् । विराट् इत्याद्युदाहरणानि ज्ञातव्यानि ।

**भजो** । **सुखभागिति** । 'वेरपृक्तस्य' इति वेर्लोपः । प्रत्ययलक्षणेन 'अत उपधायाः' इति वृद्धिः । 'चोः कुः' इति कुत्वम् । णो वृद्ध्यर्थः । इरिति सामान्यार्थः ।

---

१. सुपिस्थ $B_2$, $D_4$, N. २. शुचिषत् $B_2$. ३. मित्राजित्; मित्रद्विट् । मित्रध्रुक् । गोधुक् । अश्वयुक् । वेदवित् । काष्ठछित् । काष्ठभित् । मित्रजित् $B_2$, $D_4$; अमित्रजित् N. ४. Dropped N, $D_4$. ५. भजो ण्वि° N. ६. Dropped in C, $D_1$.

छन्दसि सहः ॥३।२।६३॥

सहेर्ण्विः स्यात् प्राग्वत् छन्दसि ॥ लोकेपीति केचित् । अन्येषामपि दृश्यते इति पूर्वपदस्य दीर्घः । तुराषाट् ।[1]

वहश्च ॥३।२।६४॥

पृष्ठवाट् ॥

परौ व्रजेः षः पदान्ते इति क्विप् तेनैव षः । परिव्राट् । अनसि वहेः क्विप् अनसो डश्च ॥ संप्रसारणम् । अनो वहतीत्यनड्वान् ।

---

छन्द । लोकेप्येतान् प्रयोगान् केचिदिच्छन्तीति तत्प्रदर्शनार्थमेतानि सूत्राण्यत्र पठ्यन्ते । अन्यथा वैदिकप्रक्रियायामेवापठिष्यत् । तथा च कुमारसंभवे प्रयोगः । 'तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः' इति । तुराषाडिति । 'हो ढः' इति ढत्वम् । 'सहेः साडः सः' इति षत्वम् । चर्त्वम् ।

वहः । योगविभाग उत्तरार्थः । 'पृष्ठवाड् युगपार्श्वगः' इत्यमरकोशेभिधानात् लोकेपि प्रयोगः । तथा नैषधेपि । 'धरातुरासाहि मदर्थयाञ्चा कार्या न कार्यान्तरचुम्बिचित्ते' इति ।

परौ व्रजेरिति । 'परौ व्रजेः षः पदान्ते' इति पञ्चपाद्युणादिसूत्रेषु पठ्यते ।

---

१. After it—जलाषाट् C, $B_2$, N, $D_4$; लाषराट् $D_2$. २. From तथा to इति dropped $Dc_3$, PC.

**जनसनखनक्रमगमो विट् ॥३।२।६७॥**

उपसर्गे[1] सुप्येभ्यो[2] विट् स्यात् छन्दसि ॥

**विड्वनोरनुनासिकस्यात् ॥६।४।४१॥**

अनुनासिकस्यात्[3] विटि वनि च ॥ अब्जाः ।[4]

**सनोतेरनः ॥८।३।१०८॥**

पूर्वपदस्थान्निमित्तात् परस्य सनोतेः सस्य षः स्यात् न तु नान्तस्य ।[5] गोषाः । कूपखाः । उदधिक्राः । अग्रेगाः ।[6]

---

जन । जन जनने । जनी प्रादुर्भावे । द्वयोरपि ग्रहणम् । विशेषानुपादानात् । षण[7] दाने । षण संभक्ताविति द्वावपि तथा । खनु अवदारणे । क्रम[8] पादविक्षेपे । गम्लृ गतौ । इकारो 'वेर-पृक्तस्य' इति सामान्यग्रहणाविघातार्थः[9] । 'विड्वनोः' इति विशेषणार्थश्च ।

**विड्व** । 'अनुदात्तोपदेश—' इत्यतोनुनासिकग्रहणेनुवर्तमानेपि पुनर्ग्रहणमनुनासिकमात्रस्य[10] परिग्रहार्थम् । अन्यथा ह्यनुदात्तोपदेशवन-तितनोत्यादीनामेव स्यात् । अब्जा इति । अप्सु जायन्त इत्यब्जाः ।

**सनो** । अनः किम् । गोसनिं वाचमुदीरयन् । पूर्वपदादित्येव सिद्धे नियमार्थं वचनम् । सनोतेरनकारस्यैवेति । तत्र केचित् सवनादिपाठात् गोसनीति नियमस्य फलं नेति सिसानयिषतीति ण्यन्तं प्रत्युदाहरन्ति । न सिसनिषतीति । तत्र 'स्तौतिण्योरेव' इति नियमादेव-नेति । सिसनिषतेः क्विप् । सिसनीरित्यपरे प्रत्युदाहरन्ति । **गोषा** इत्यादि । गां सनोतीति कूपं खनतीति उदधिं क्रामतीति अग्रे गच्छतीति विग्रहाः । **अग्रेगा** इति । 'तत्पुरुषे कृति—' इति सप्तम्या

---

१. अनुपसर्गे B₂, D₄. २. सुप्युपपदे जनादिभ्यो D₁. ३. After it—स्यात् D₁, D₂, N. ४. After it—चन्द्रः B₂. ५. Before it—षण दाने. ६. After it—अद्रोगाः B₂. ७. षणु PC. ८. क्रमु PC. ९. °ग्रहणाभिघा° Dc₃. १०. मात्रग्रहार्थम् PC., Dc₃.

**अदोऽनन्ने ॥३।२।६८॥**

छन्दसीति निवृत्तम् । अदो विट् स्यात् अनन्ने सुपि ॥ आमात् । सस्यात् । अन्ने तु । अन्नादः ।[1]

**दुहः कब् घश्च ॥३।२।७०॥**

दुहः[4] सुपि कप् स्यात् घश्चान्तादेशः । कामदुघा ।

**मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥३॥ २।७१॥**

एभ्यो ण्विन् स्यान्मन्त्रे ॥ अलाक्षणिककार्यार्थं समुदाया निपात्यन्ते । ण्विन् विधीयते । श्वेता एनं वहन्ति श्वेतवाः इन्द्रः ।

---

अलुक् । सर्वत्र 'वेरपृक्तस्य' इति वकारलोपे कृते 'विड्वनोः—' इत्यात्वम् ।

अदः । सस्यादिति । सस्यमत्ति । पूर्वेणैव व्याख्यातप्रायत्वादुपेक्षितमेकं सूत्रं व्याख्यायते—'क्रव्ये च' ॥३।२।६९॥ क्रव्यशब्दे उपपदे अत्तेर्विट् स्यात् । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे वचनमसरूपबाधार्थम् । तेनाण् न । तर्हि कथं क्रव्यादः । कृत्तविकृत्तशब्दे उपपदे अदेरण् कृत्तविकृत्तस्य च पृषोदरादित्वात् क्रव्यभावः । ततश्च कृत्तविकृत्तं पक्वं मांसमदन् क्रव्यादः अपक्वं तु क्रव्यादिति विशेषः ।

दुहः । पकारः 'अनुदात्तौ सुप्पितौ' इति स्वरार्थः । कामदुघेति । कामान् दुग्धे ।

मन्त्रे । श्वेतवा इति । श्वेतः कर्ता उपपदं प्रत्ययस्तु कर्मणि । उक्थशा इति । उक्थशब्दे कर्मणि करणे वोपपदे ण्विन् नलोपश्च

---

१. सुप्युपपदे $D_1$. २. Dropped in C; आममत्ति आमात् $B_2$; आममत्ति आमात् $D_4$. ३. After it—क्रव्ये च । कृत्तविकृतं मांसं तस्य क्रव्यभावो ऽत्र क्रव्यात् । क्रव्यादः । $N_1$. ४. दुहः $D_4$.

उक्थानि उक्थैर्वा शंसति[1] उक्थशाः । पुरो दाशन्ते[2] एनं पुरोडाः ।

**अवे यजः** ॥३।२।७२॥

अवयाः ।

**आतो मनिन्क्वनिब्वनिपश्च** ॥३।२।७४॥

सुपि प्रादौ च आदन्तादेते स्युः विच्[3] च छन्दसि ॥ सुष्ठु ददातीति सुदामा । घुमास्थेतीत्वम् । सुपीवा । वनिप् । घृत[4]-पीवा । भूरिदावा । [5]विच् । सोमपाः । अन्यभ्योपि दृश्यन्ते । अनादन्तेभ्योप्येते स्युः । भाषायामपि ।

**नेड्वशि कृति** ॥७।२।८॥

वशादेः कृत इण्न स्यात् ॥ [6]सुशर्मा । म्वोश्चेति नः । सुगन्मा । क्वनिप् । प्रातरित्वा । वनिप् । विड्वनोरित्यात्वम् ।

---

निपात्यते । पुरोडाश इति । दाशृ दाने । अस्य पुरस्पूर्वस्य डत्वं कर्मणि च प्रत्ययः । एषु सर्वेषु श्वेतवाहुक्थशास्पुरोडाशवयाजां डस्पदान्त इति वक्तव्येन डस् । 'अत्वसन्तस्य' इति दीर्घः ।

अवे । योगविभागो 'विजुपे छन्दसि' इत्यत्र यजेरनुवृत्त्यर्थ एव । आतः । मनिनो नकार आद्युदात्तार्थः । क्वनिब्वनिपोः पकारावनुदात्तार्थौ । इकार उच्चारणार्थः । ककारः कित्कार्यार्थः । **सुपीवेति** । सुष्ठु पिबति । **घृतपीवेति** । घृतं पिबति । **भूरिदावेति** । भूरि ददाति

नेड् । **वशीति** प्रत्याहारग्रहणम् । **सुशर्मेति** । शॄ हिंसायाम् । शोभनं शृणाति । **प्रातरित्वेति** । इणः प्रातःशब्दे उपपदे क्वनिप् ।

---

१. शंसतीति $D_1$. २. डाशन्ते C, $N_1$. ३. चाद्विच् $D_2$, $D_4$. ४. घृतपावा $B_2$; $N_1$. ५. चकाराद्विच् C; चाद्विच् (च् dropped) $B_2$. ६. Before it शॄहिंसायाम् । शृणातीति $D_1$; शृणातीति $N_1$. ७. Before it—आतः । PC.

विजावा ॥ ओणृ[1] । अवावा । वनो रच । अवावरी । विच् । रोट् । रेट् । अपिशब्दान्निरुपपदे[2]भ्योपि । सुत्वा । धीवा[3] । दृश्युक्तिः प्रयोगानुसारार्था ।

**क्विप् च ॥३।२।७६॥**

उपपदे सत्यसति च[4] धातोः क्विप् स्यात् सर्वत्र ॥ उखास्रत्[5] । पर्णध्वत् । वाह[6]भ्रट् ।

**अ[7]न्तः ॥८।४।२०॥**

प[8]दान्ते नस्याप्यनितेर्णत्वं स्यान्निमित्ते ॥ हे प्राण् ।

---

'ह्रस्वस्य—' इति तुक् । **विजावेति** । जनी प्रादुर्भावे । ओणृ अपसारणे । **अवावेति** । ओणो णकारस्यात्वम् । अवादेशः । 'वनो-रच' इति ङीब्रौ । **रोट् रेट्** इति । रुषरिष हिंसायाम् ।

क्विप् स्यात्सर्व त्रेति । सर्वधातुभ्यः छन्दसि भाषायां चेत्यर्थः । एतत् 'अन्येभ्योपि दृश्यन्ते' इत्यतोपिशब्दस्य सर्वविधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते ।[10] उखास्रत् । पर्णध्वत् । वाहभ्रट् इति । उखायाः स्रंसते । पर्णात् ध्वंसते । वाहात् भ्रश्यति । स्रंसु ध्वंसु अवस्रंसने । भ्रंशु अधः पतने । 'अनिदिताम्—' इति न्लोपः । 'वसुस्रंसु—' इति दत्वम् । 'वावसाने' इति चर्त्वम् । वाहभ्राडित्यत्र 'व्रश्च—' इति षः ।

अन्तः । 'पदान्तस्य' इति प्रतिषेधापवादोयम् । अन्तश्च पदापेक्षया गृह्यत इत्यभिप्रेत्याह—**पदान्ते नस्यापीति** । अक्षद्यूरिति ।

---

१. ओणृ अपनयने $D_2$, $D_4$, $B_2$ ओण् वृद्धौ C. २. पदेपि $N_1$. ३. $D_1$ drops it; धीवा | पीवा $B_2$, $N_1$. ४. C drops it. ५. After it—स्थाली $D_1$. ६. वाहान् भ्रश्यति Before it in $D_1$; वाहभ्रट् $B_2$. $N_1$. ७. अनितेः $B_2$. ८. पदान्तनस्या° $B_2$. ९. °स्यात्वे अवादेशः PC. १०. After this–अन्यथा 'विजुपे छन्दसि' इत्यतः 'छन्दसि' इत्यनुवृत्तेः 'आतो मनिन्—' इत्यतः 'आतः' इत्यनुवृत्तेरादन्तादेव छन्दस्येव च स्यात् PC.

छ्वोः शूडित्यूट् । [1]अक्षद्यूः । शास आशासश्च क्वावुपधाया इत्वं वाच्यम् ॥* मित्राणि शा[2]स्ति मित्रशीः । आशीः । गीः ।* अस्यैव प्रपञ्चः । सत्सूद्विषेति ।

[3]असुन् ।

[4]अयं प्रत्ययो धातोः स्यात् ॥ उरुव्यचाः । नृचक्षाः । [5]रजः ।

आर्चि[6]शुचिहुसृपि[7]छादिछृदिभ्य [8]इसुन् ॥ [9]अर्चिः । [10]शोचिः । सर्पिः ।

---

अक्षैर्दीव्यतीति । मित्रशीरिति । शासु अनुशिष्टौ । आशीरिति । आङः शासु इच्छायाम् । गीरिति । गॄ शब्दे । क्विप् । ‘ ॠत इत् ।’ रपरः । ‘ र्वोरुपधाया—’ इति दीर्घः । ‘ असुन् ’ इत्यादीनि चत्वारि सूत्राणि औणादिकानि । अत्र तेषां पाठः प्रक्रिया[11]विशेषार्थः । उरुव्यचा इति । व्यच व्याजीकरणे । ‘ व्यचेः कुटादित्वमन[12]सि वक्तव्यम् ’ इति ङित्त्वाभावः । नृचक्षा इति । ‘ असि उसि अने च चक्षिङः ख्याञ् नेति वाच्यम् ।’ इति ख्याञभावः । रज इति । रञ्ज रागे । भासि अके अने घिनुणि च रञ्जेर्नलोपो वाच्यः ’ इति न्लोपः । अर्चिः । शोचिः । हविः । छदिः । छर्दिः ।

---

१. अक्षैर्दीव्यतीत्यक्षद्यूः $D_1$. २. शास्तीति C. ३. असून् $D_3$, $D_4$, P, C, $B_1$, $B_2$. ४. असुन् प्रत्ययो $D_2$, N. ५. Before it—असि उसीति ख्याञ् न $N_1$. ६. रुचिशुचि $D_2$, $B_2$, $D_4$. ७. छादि $D_2$, $B_2$ $N_1$, $D_4$. ८. इसिः $D_2$, इस् P, $B_2$, $D_4$, $N_1$. ९. After it—रोचिः । शोचिः । हविः । छदिः । छर्दिः । सर्पिः । N. १०. P and $D_1$ and $D_2$, $B_2$, $D_4$ omit this. ११. क्रियाविशेषणार्थः D. $C_1$. १२. °सीति वक्तव्यात् ङि° PC.

धनर्तिचक्षिवपितपिजनियजेरुस्[1] ॥ धनुः । चक्षुः ।

सर्वधातुभ्यष्ट्रन्[2] ॥ तन्त्रम् ।[3]

**इस्मन्त्रन्क्विषु च ॥६।४।९७॥**

एषु परेषु छादेर्ह्रस्वः स्यात् ॥ छदिः[4] । छद्म । छत्रम् । तनुछत् । अनुनासिकस्य क्विझलोः क्ङिति । मो नो धातोः । प्रशान् । प्रतान् ।[5]

**ज्वरत्वरस्रिव्यविमवामुपधायाश्च[6] ॥६।४।२०॥**

एषामुपधाया वकारस्य च ऊठ् स्याद् क्वौ झलादौ क्ङिति[7] ॥ जूः । जूरौ । तूः[8] । स्रूः । स्रुवौ[9] । ऊः । ऊठ् । वृद्धिश्च । जनानवतीति जनौः । जनावौ । मूः ।[10]

---

धन । धन शब्दे । अरुः । वपुः । तपुः । जनुः । यजुः ।

सर्व । तन्त्रमिति । तनु विस्तारे । 'तितुत्र—' इति नेट् । एतान्यौणादिकानि ।

इस् । छद अपवारणे । चुरादिर्णिजन्तः । प्रशानिति । शमु उपशमे । प्रतानिति । तनु तमु ग्लानौ ।

ज्वर । जूरिति । ज्वर रोगे । तूरिति । ञित्वरा संभ्रमे । स्रूरिति । स्रिवु गतिशोषणयोः । ऊरिति । अवरक्षणे । जनौरिति । स एव । 'एत्येधत्यूठ्सु' इति वृद्धिः । मूरिति । मव बन्धने ।

---

१. चक्षिङ् त्रपिवपि $B_2$; चक्षिङ् $D_4$. २. Before it—अरुः N. ३. After it—शास्त्रम् N. ४. Before it—छाद्विम् संवृतौ $D_1$; छ (द?) संवरणे $N_1$. ५. Before it—मनिप् । धातोर्मनिप् स्यात् $N_1$. ६. श्रिव्य N. ७. अनुनासिके च क्ङिति । $D_4$. ८. C, $B_2$ have तुरौ after it स्तूः । स्तावौ । ऊः । ऊटि वृद्धौ $D_4$. ९. स्रूः । स्रुवौ । ऊः । ऊठि वृद्धौ $B_2$, N ( N drops ऊः) for श्रुवौ...वृद्धिश्च. १०. After it-मुवौ । मुवः । मूर्तिः $D_2$ ; मुवौ । मुवः । मूर्तिः । करत्वं रउपधावकारस्य स्रिव्यवमवामन्तभूतवकारस्य ऊद् । $B_2$, $D_4$ (ज्वरत्वर° $D_4$.)

**राल्लोपः ॥६।४।२१॥**

रेफादुत्तरयो[1]श्छ्वोर्लोपः स्यात् क्कौ झलादौ च क्ङिति[2] ॥ मूर्च्छा[3] । मूः । धुर्वी[4] । धूः ।[5] विरुहः[6] धोन्तादेशो[7] वेर्दीर्घ इति केचित् । वीरुत् ।

**गमः क्कौ ॥६।४।४०॥**

गमः क्कौ परेनुनासिकस्य लोपः स्यात् ॥ ह्रस्वेति[8] तुक् । अङ्गगत् । यममनतनां[9] च वाच्यः ॥* संयत् । परिमत् । परितत् ।

ऊ च गमादीनाम् ।[10] अग्रेगूः ॥[11] अग्रेभ्रूः ।[12]

---

रात् । राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्यते । मूरिति । मूर्च्छा मोहसमुच्छ्राययोः । धुर्वीति । तुर्वी धुर्वी हिंसायाम् । विरुहः ध इति । विपूर्वस्य रुह जन्मनि प्रादुर्भावे चेत्यस्य ।

**गमः** । अज्झलार्थोयमारम्भः । **ऊ च गमादीनामिति** । अलोन्त्यपरिभाषयान्त्यस्य । **अग्रेगूः अग्रेभ्रूरिति** । गमेर्भ्रमेश्चानुनासिकलोपे कृते अकारस्य ऊ आदेशः । स्पष्टत्वादुपेक्षितम्[13] 'स्थः क च' । ३।२।७७॥ सुपि उपसर्गे च स्थः कः स्यात् क्किप् च । किमर्थमिदम् । यतः 'सुपि स्थः' इति कः सिद्धः । अन्येभ्योपि क्किप् । बाधकबाधनार्थं पुनर्वचनम् । शमि धातोः संज्ञायामत्रं बाधते । शंस्थः । शंस्थाः । 'आतो लोपः' इत्यालोपः ।

---

१. रेफात्परयोः $D_2$, P. २. क्ङिति च P, $D_2$. ३. मूर्च्छा मोहसमुच्छ्रयोः $D_1$. ४ धुर्वी हिंसायाम् $D_1$; धूर्वी $D_4$, P., $D_2$. ५. After it—पुर्वी । पूः C. ६ विरुहः क्कौ N. ७. धान्ता° $D_1$, $N_1$. ८. ह्रस्वस्येति $D_2$, P, $D_4$, $B_2$. ९. यमुमनु° C, $N_1$ जनयममनुतनां वाच्यः । प्रजत् । संयत्, &c., $B_2$, $D_4$. १०. Dropped N. ११. After it—गमादीनां स्यात् । अनुनासिकलोपश्च अग्रेगूः । अग्रेयूः । N. १२. After it—अग्रेभूः $D_1$; अग्रेभूः $D_2$; अग्रेजूः । अग्रेयूः । अग्रेमूः । अग्रेनूः । अग्रेभूः । $B_2$. १३. After the Sutra—एतत् सूत्रं स्पष्टत्वादुपेक्षितम् PC.

## सुप्यजातौ णिनिस्ताच्छील्ये ॥३।२।७८॥

अजात्यर्थे सुपि धातोर्णिनिः स्यात् ताच्छील्ये ॥ उष्णभोजी । सुबुक्तिः प्रादिनिवृत्त्यर्था ।

---

सुपि । उष्णभोजीति । उष्णं भोक्तुं शीलमस्य उष्णभोजी । अजाताविति किम् । ब्राह्मणानामन्त्रयिता । ननु 'सुपि स्थः' इत्यतः 'सुपि' इत्यनुवर्तते । किं पुनः सुब्ग्रहणेनेत्याशङ्क्याह—सुबुक्तिरिति । उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् । उदासारिणी [2] । उपसर्गार्थम् । साधुकारिणि । अताच्छील्यार्थं जात्यर्थं वासरूपनिवृत्त्यर्थं च । साधुदायी । ब्रह्मणि वदः । ब्रह्मवादी । अताच्छील्यार्थं जात्यर्थं वासरूपनिवृत्त्यर्थं च । अतो न ब्रह्मवाद इति । त्रीणि सूत्राणि पूर्वसूत्रव्याख्यानेनैव व्याख्यातप्रायत्वादुपेक्षितानि—'कर्तर्युपमाने' ॥३।२।७९॥ कर्तृवाचिन्युपपदे धातोर्णिनिः स्यात् । उपपदकर्ता प्रत्ययार्थकर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । अताच्छील्यार्थो जात्यर्थो वारम्भः । कर्तरि किम् । अपूपानिव भक्षयति मनुष्यान् । उपमाने किम् । उष्ट्रः क्रोशति । 'व्रते' ॥३।२।८०॥ सुपि धातोर्णिनिः स्यात् धातूपपदप्रत्ययसमुदायेन चेद्व्रतं गम्यते । सति शयने स्थण्डिल एव शेते स्थण्डिलशायी । व्रते किम् । स्थण्डिले शेते मैत्रः । जात्यर्थमताच्छील्यार्थं वा । 'बहुलमाभीक्ष्ण्ये' ॥३।२।८१॥ आभीक्ष्ण्यं पौनःपुन्यं ताच्छील्यादन्यत् । सुप्युपपदे आभीक्ष्ण्ये गम्ये धातोर्णिनिः । कषायपायिणो गान्धारा इति । तत्र देशे कषायादिकं पुनः पुनः पिबतां सामर्थ्यं स्यादतस्ते कषायं पिबन्ति न ताच्छील्यात् । बहुलग्रहणात् कुल्माषखाद इत्यत्र न ।

---

१. सुप्यजातौ णिनिः स्यात् ताच्छील्ये । $D_1$. २. After it—प्रत्यासारिणी Pc, $Dc_3$. ३. After it—इत्यादीनि त्रीणि सूत्राणि &c, Pc, $Dc_3$.

**मनः ॥३।२।८२॥**

सुपि मन्यतेर्णिनिः स्यात् ताच्छील्येपि[1] ॥ दृश्यमानी ।

**आत्ममाने खश् च ॥३।२।८३॥**

मनः सुपि खश् स्यादात्ममाने[2] चाण्णिनिः ॥ शित्वात् श्यन् । आत्मानं[3] पण्डितं मन्यते[4] पण्डितम्मन्यः । पण्डितमानी । खित्यनव्ययस्य ।[5] कालिम्मन्या । अनव्ययस्य किम् । दिवामन्या ।

---

मनः । मन मनने इत्यस्य दैवादिकस्य ग्रहणं न मनु बोधने इत्यस्य तानादिकस्य । णिनौ रूपान्तराभावेपि उत्तरसूत्रे खशि मन्येर्दिवादित्वात् श्यन् स्यात् मनुतेस्तनादित्वादुप्रत्ययः स्यादिति विशेष इति सर्वं चेतसि कृत्वा श्यना निर्दिशति—मन्यतेरिति । दृश्यमानीति । दृश्यं मन्यते । णित्वात् 'अत उपधायाः' इति वृद्धिः ।

आत्म । यदा प्रत्ययार्थः कर्ता आत्मानमेव पण्डितत्वादिना धर्मेण मन्यते तदायं विधिः । पण्डितंमन्य इति । 'अरुर्द्विषदजन्त—' इति मुम् । खशः खकारो मुमर्थः । शकारः सार्वधातुकार्थः । आत्ममाने किम् । पण्डितमानी देवदत्तस्य । खित्यनव्ययस्येत्यादि । कालिंमन्येत्यत्र 'क्यङ्मानिनोश्च' इति प्राप्तात् पुंवद्भावाद्विप्रतिषेधेन 'खित्यनव्ययस्य' इति ह्रस्व एव स्यादित्यर्थः ।

---

१. Before it–'उत्प्रतिभ्यामाङि सर्तेः ॥ उदासारिण्यः । प्रत्यासारिण्यः । न्साधौ च णिनिः' ॥ साधुकारी । साधुदायी ॥ 'ब्रह्मणि वदो णिनिः*' ॥ ब्रह्मवादी । 'कर्तर्युपमाने ॥' कर्तृवाचिन्युपमाने धातोर्णिनिः । उपपदकर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति । उष्ट्रक्रोशी । अयमारम्भो ताच्छील्यार्थे । जात्यर्थश्च । 'व्रते' ॥ व्रते गम्यमाने धातोर्णिनिः । स्थण्डिलशायी । अश्राद्धभोजी । 'बहुलमाभीक्ष्ण्ये' ॥ आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं णिनिः । क्षीरपायिण उशीनराः । कुल्माषखादा । अत्र न ॥ N. २. अताच्छील्येपि $B_2$, $D_4$. ३. आत्ममाने dropped C. ४. पण्डितमात्मानं P. ५. After it—असौ $D_1$; इति C. ६. After it—इति ह्रस्वः C.

**इच्च एकाचोऽम्प्रत्ययवच्च ॥६।३।६८॥**

इजन्तादेकाचोम् स्यात् स च स्वाद्यम्वत् खिदन्ते परे ॥ औतोम् शसोः । गाम्मन्यः । वाम्शसोः । स्त्रींमन्यः स्त्रियंमन्यः । नृ । नरंमन्यः । भुवंमन्यः ।

**भूते ॥३।२।८४॥**

एतदधिक्रियते ।

---

इच्च । 'अम्' इति हि द्विरावर्तते । तेनाम् स्यात् स च द्वितीयैकवचनवत् स्यादित्याह—**अम् स्यात् स च स्वाद्यम्वदिति** । अतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशाः स्युः । 'औतोम् शसोः' इत्योकारस्याकारः । 'वाम्शसोः' इतीयङ् । **नरंमन्य इति** । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः । **भुवम्मन्य इति** । 'अचि श्नुधातु—' इत्युवङ् । श्रियमात्मानं मन्यते श्रिमन्यं ब्राह्मणकुलमित्यत्र किमित्यम्न । अत्रेदं भाष्यकारवचनम् । अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते यथा प्रस्थादयः स्त्रियाम् । तस्मात् 'स्वमोर्नपुंसकात् इत्यमो लुक्' इति । ननु यथा 'सुपो धातुप्रातिपदिकयोः' इति लुकं बाधते तथामुमपि बाधते । मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति 'सुपो धातु—' इतीमं लुकमम् प्रत्ययो बाधते न 'स्वमोर्नपुंसकात्' इति ।

भूते । धात्वधिकाराद् धात्वर्थे भूते इति विज्ञायते । एतदधिक्रियते इति । 'वर्तमाने लट्' इति पर्यन्तम् ।

---

**करणे यजः ॥३।२।८५॥**

करणे उपपदे यजेर्णिनिः स्याद् भूते ॥ सोमेनेष्टवान् सोमयाजी ।

**कर्मणि हनः ॥३।२।८६॥**

पितृघाती । निन्दायामेव । चौरं हतवान् ।

**ब्रह्मभ्रूणवृत्रेषु क्विप् ॥३।२।८७॥**

एषु हन्तेः क्विप् स्याद्भूते ॥ ब्रह्महा । भ्रूणहा । वृत्रहा । नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वात् न ह्रस्वस्येति तुक् । वृत्रहभ्याम् । ब्रह्मादिष्वेव हन्तेरेव क्विबेव भूत एवेति नियमार्थं सूत्रम् ।

---

**करणे** । स्वरितत्वात् 'णिनिः' अनुवर्तते न खश् । **सोमेनेष्टवानिति** । **सोमयाजीति** । सोमयागः फलोत्पादनाख्ये व्यापारे करणं भवति । ननु फलोत्पादनलक्षणं व्यापारं प्रति साधनत्वेनेप्सितत्वादनुष्ठीयमानो यागः कर्म भवति । सत्यम् । तथापि शक्तिभेदात् करणत्वं स्यादेव । यथा निपीयमानेन मधुना मत्त इत्यत्र कर्मत्वमनुभवतो मधुनः । तस्मात् सोमयाजीत्यस्यायमर्थः । सोमेन करणेन स्वर्गं भावितवानिति । स्वर्गशब्दो वृत्तावन्तर्भूतत्वान्न प्रयुज्यते ।

**कर्मणि** । **पितृघातीति** । 'हनस्त च' इति तत्वम् । 'हो हन्तेः—' इति कुत्वम् । 'सौ च' इति दीर्घः । **चौरं हतवानिति** । अत्र निन्दाया अभावान्न णिनिः ।

**ब्रह्म** । ननु च 'सर्वधातुभ्यः क्विब्वा' इति क्विप् सिद्ध एव किं सूत्रेणेत्याशङ्क्याह—**ब्रह्मादिष्वेवेति** । धातुनियमः कथम् । यत्रैवकारस्ततोऽन्यत्रावधारणमित्युपपदेभ्यः पर एवकारः प्रयुक्तो हन्तिं नियमयतीति धातुनियमः । तेन पुरुषं हतवान् अत्र न ।

---

१. Before it—नेह $B_2$. २. ह्रस्वस्येति न तुक् P., $D_2$, $B_2$, $D_4$; ह्रस्वस्येति तुक न N. ३. °यागीति $Dc_1$.

**सुकर्मपापमन्त्रपुण्येषु कृञः ॥३।२।८९॥**

एषु कृञः क्विप् भूते ॥ सुकृत् । इत्यादि । उपपदान्तरेऽपि । शास्त्रकृत् ।

**सोमे सुञः ॥३।२।९०॥**

सोमसुत् । अत्र चतुर्विधो नियमः ।

---

हन्तेरेवेत्युपपदनियममः । तेन ब्रह्माधीतवानित्यत्र न । क्विबेवेति कालनियमः । यदि क्विबेवेति नियमः निष्ठापि न स्यात् । ब्राह्मणं हतवानिति । मध्यापवादत्वात् पूर्वानणादीनेव बाधते न निष्ठाम् । एवमपि वृत्रस्य हन्तुरिति तृच् न स्यात् । प्रायिकत्वान्नियमस्यादोषः । भूत एवेति प्रत्ययनियमः । तेन ब्रह्माणं हन्ति हनिष्यति वेत्यत्र न । एष सर्वोऽपि नियमः प्रायिकः । तेन मधुहत्यादि सिद्धम् । प्रायिकत्वं 'बहुलं छन्दसि' इति उत्तरत्र बहुलग्रहणात् नियमोऽपि बहुलग्रहणात् ।

**सुक** । अत्र त्रिविधो नियमो बहुलग्रहणात् । आदिना कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । अत्र सूत्रे धातुनियमं वर्जयित्वा कालोपपदप्रत्ययविषय एव नियमो बहुलग्रहणानुवृत्तेस्तेनोपपदान्तरेऽपि कृञः क्विप् स्यादित्याह—**उपपदान्तरेपीति** ।

**सोमे** । **चतुर्विध इति** । कालधातूपपदप्रत्ययविषयः ।

---

१. Before it—षुञ् मन्थे । सुनोति स्म । $D_1$. २. कान्नियमः $Dc_3$.

**अग्नौ चेः ॥३।२।९१॥**

आग्निचित् । [1]नियमः प्राग्वत् ।

**दृशेः[2] क्वनिप् ॥३।२।९४॥**

कर्मणि दृशेः क्वनिबेव[3] स्याद्भूते ॥ पारदृश्वा ।

**राजनि युधिकृञः ॥३।२।९५॥**

राजनि कर्मणि युधिकृञोः[4] क्वनिप् स्यात् भूते ॥ अत्रान्तर्भावितण्यर्थो युधिः । राजानं योधितवान् राजयुध्वा[6] । राजकृत्वा[7] ।

---

**अग्नौ चेः** । **नियम** इति । कालधातूपपदप्रत्ययविषयः । द्वे स्पष्टत्वात् त्यक्ते—'कर्मण्यग्न्याख्यायाम्' ॥३।२।९२॥ कर्मण्युपपदे चिनोतेः कर्मण्येवार्थे क्विप् स्यात् धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते । श्येन इव चीयते श्येनचित् । कङ्कचित् । अग्न्यर्थ इष्टकानां रचनाविशेषः । 'कर्मणीनि विक्रियः' ॥३।२।९३॥ कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात् । 'कर्मणि' इति वर्तमाने पुनः कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात् । सोमविक्रयी । तिलविक्रयी । घृतविक्रयी । तैलविक्रयी । इह न । धान्यविक्रायः ।

**दृशेः** । 'अन्येभ्योपि दृश्यन्ते' इति सिद्धेपि प्रत्ययान्तरनिवृत्त्यर्थं पुनर्वचनमित्यभिप्रेत्याह—**क्वनिबेव स्यादिति** । न प्रत्ययान्तरमित्यर्थः ।

**राजनि** । ननु युधिरकर्मकस्तत्कथं कर्मवाच्युपपदं घटत इत्याशङ्क्याह—**अन्तर्भावित इति** । तस्मात् सकर्मक इति भावः ।

---

१. अत्र before it N. २. Before this Sûtra—**कर्मण्यग्न्याख्यायाम्** ॥ ३।२।९२॥ कर्मणि चिनोतेः क्विप् स्यात् धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्यायाम्। (चेदग्न्याख्याया गम्यते । N.)। श्येन इव चीयते श्येनचित् ॥ **कर्मणी विक्रियः** ॥ कर्मणि विपूर्वात् क्रीणातेरिनिः स्यात् कुत्साख्यायाम् ॥ सोमविक्रयी । (After it घृतविक्रयी $N_1$) इह न । धान्यविक्रायः । (विक्रयः N) $D_2$, $D_4$, $B_2$ (कुत्सायाम् $D_4$, $B_2$, N.), N. ३. क्वनिप् स्यादेव $D_2$. ४. कृञः $D_2$. ५. इति before it N. ६. Dropped N. ७. After it—इति द्वे सूत्रे स्पष्टत्वादुपेक्षिते PC., $Dc_3$.

**सहे च ॥३।२।९६॥**

सहयुध्वा[1] । सहकृत्वा ।

**सप्तम्यां जनेर्डः ॥३।२।९७॥**

अम्बुजम् । तत्पुरुषेति[2] ङेरलुक् । सरसिजम् । बहुलोक्तेः सरोजम् ।

**पञ्चम्यामजातौ ॥३।२।९८॥**

जातिवर्जे पञ्चम्यन्ते जनेर्डः स्यात् भूते ॥ पद्मजः[3] । अजातौ किम् । अश्वाज्जातः ।

**उपसर्गे च संज्ञायाम् ॥३।२।९९॥**

प्रजा ।

**अन्येष्वपि दृश्यते ॥३।२।१०१॥**

अन्येषूपपदेषु जनेर्डो[4] दृश्यते ॥ अजः । द्विजः ।

---

सहे । एतच्च कर्मणा न विशेष्यते । तस्यासत्त्ववचनस्य कर्मत्वानुपपत्तेः ।

सप्त । सप्तम्यन्ते उपपदे जनेर्डः स्यात् । डित्त्वाट्टिलोपः ।

पञ्च । पद्माज्जातः पद्मजः । पद्यते मा लक्ष्मीरस्मिन्निति क्रियावाची पद्मशब्दो न जातिवाचीत्यभिप्रेत्योदाहृतम् ।

उपस । उपसर्गे चोपपदे जनेर्डः स्यात् । समुदायेन चेत् संज्ञा गम्यत इत्यर्थः । स्पष्टत्वादुपेक्षितम्—' अनौ कर्मणि ' ॥३।२।१००॥ अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात् । पुमांसमनुजातः पुमनुजः । स्त्रियमनुजातः स्त्र्यनुजः ।

---

१. $D_2$ $D_4$ drop सहयुध्वा; $B_2$ has सहकृत्वा । सहयुध्वा । २. तत्पुरुषे कृति बहुलमिति N. ३. After it—संस्कारजः $D_1$, $B_2$; बुद्धिजः । संस्कारजः । N. ४. जातेर्डो C; $D_1$ drops जने; ५. This is after the sutra PC, $Dc_3$.

**सुयजोर्ङ्वनिप् ॥३।२।१०३॥**

आभ्यां ङ्वनिप् स्याद् भूते ॥ सुत्वा । यज्वा ।

**जीर्यतेरतृन् ॥३।२।१०४॥**

जरन् ।

**क्तक्तवतू निष्ठा ॥१।१।२६॥**

एतौ निष्ठासंज्ञौ स्तः ॥

**निष्ठा ॥३।२।१०२॥**

धातोर्निष्ठा स्याद्भूते ॥ तयोरेव कृत्येति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया ।

---

**सुय** । अग्रिमे अप्येते सूत्रे 'निष्ठा' इत्येतस्मात् तथापि तस्मिन् सूत्रे बहु वक्तव्यमस्ति । अतस्तत् परित्यज्य एते उक्ते । सुत्वेति । 'ह्रस्वस्य—' इति तुक् । 'सर्वनामस्थाने च' इति दीर्घः । नलोपः ।

जीर्यतेः । नित्त्वादाद्युदात्तं पदम् । 'उगिदचाम्—' इति नुम् ।

क्त[3] ।

**निष्ठा** । ननु च निष्ठासंज्ञायां क्तक्तवत्वोः सिद्धिस्तत्सिद्धौ च निष्ठासंज्ञा । असिद्धयोः संज्ञाभावादित्यन्योन्याश्रयत्वम् । मैवम् । भाविनी संज्ञा विज्ञायते । स भूते स्यात् यस्य उत्पन्नस्य निष्ठेत्येषा संज्ञा स्यात् । सामर्थ्यात् क्तक्तवत्वोर्विधिः यथा सूत्रस्य शाटकं वयेति । उकावितावित्ति । 'उपदेशेजनुनासिकः—' इति उकारः 'लशक्वतद्धिते' इति ककार इत्यर्थः । स्नातं मयेति । ष्णा शौचे ।

---

१. क्तवतुः कर्तरि N, D4. २. प्रथमत उक्ते PC., Dc3. ३. क्त क्तवतू निष्ठा । Dc3. PC.

स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ।

**निष्ठायामण्यदर्थे** ॥६।४।६०॥

ण्यदर्थो भावकर्मणी । ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् ॥

**क्षियो दीर्घात्** ॥८।२।४६॥

दीर्घात् क्षियो निष्ठातकारस्य नः स्यात् ॥ क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया ।

---

अस्माद्भावे क्तः । स्तुत इति । ष्टुञ् स्तुतौ । कर्मणि क्तः । कृता क्तेन कर्मणा उक्तत्वात् कर्मणि विष्णौ प्रथमैव जाता । विष्णुर्विश्वं कृतवानिति । कृञः क्तवतुः कर्तरि । ततः कर्तरि प्रथमा कृतोक्तत्वात् । 'न लोकाव्यय—' इति विश्वमित्यत्र न षष्ठी ।

**निष्ठायामण्यदर्थे** इति । 'ऋहलोर्ण्यत्' इति ण्यत् गृह्यते । ण्यतोर्थो ण्यदर्थः । **भावकर्मणी** इति । 'तयोरेव' इति वचनादित्यर्थः ।

**क्षियः** । ननु क्षेरिति निर्देशो कार्ये क्षिय इति इयङा निर्देशादेव दीर्घः प्रतीयते । किं दीर्घग्रहणेन । मैवम् । क्षियः निष्ठायामण्यदर्थे अत्र ह्रस्वान्तस्यापि धातुकरणस्येयङा निर्देशो दृश्यते । तस्माद् दीर्घग्रहणम् । 'विपराभ्यां जेः' इत्येवमादौ तु धातुत्वमनुकार्यगतं जेरित्यनुकरणे विद्यमानमप्यविवक्षितत्वाद्रूपसामान्यस्यानुकरणम् । तेनेयङा न निर्देशः ।

---

१. Before it—क्षीणः $D_1$. २. निष्ठायां ण्यदिति ऋहलोर्ण्यत् इति गृह्यते $Dc_3$, PC.

श्र्युकः क्किति ॥७।२।११॥

श्रिय एकाच उगन्ताच्च परस्य कितः इण्न स्यात् ॥ श्रितः । श्रितवान् । भूतः । भूतवती । क्षुतः ॥[४] ऊर्णोतेर्णुवद्भावो वाच्यः ॥* तेनैकाच्त्वान्नेट् । ऊर्णुतः । वृतः ।

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥८।२।४२॥

रेफदकाराभ्यां परस्य निष्ठातो नः स्यात् पूर्वस्य च दः ॥ शॄ । शीर्णः । भिन्नः ।

---

श्र्युकः । क्कितीति ङ्किककारको निर्देशस्तेन गकारप्रश्लेषः । भूष्णुरित्यत्रापि इट्निषेधार्थम् । सौत्रत्वाच्च निर्देशस्य 'श्र्युकः किति' इत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम् । 'क्ङिति च' इत्यत्रापि गकारप्रश्लेषात् भूष्णुरित्यत्र गुणोपि न । अत्र सर्वत्र गकारप्रश्लेषः 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नोर्गित्वस्याश्रयणात् । गित्वं च स्थास्नुरित्यत्रेत्वाभावार्थमाश्रीयते इति केचिद्वर्णयन्ति । अन्ये तु 'ग्लाजिस्थश्च ग्स्नुः' इत्यत्र स्था इत्याकारप्रश्लेषात् स्थाघ्वोः सिद्धत्वात् न कुत्रापि गकारनिर्देश इति वर्णयन्ति । भूतवतीति । 'उगितश्च' इति ङीप् । ऊर्णु इति । तथा च वार्तिकम्-

"वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥" इति ।

रदा । रेफदकाराभ्यां तकारो विशिष्यते न निष्ठेत्यभिप्रायेणाह—**रेफदकाराभ्यां परस्य निष्ठातस्येति** । अन्यथा चरितं मुदितमित्यत्रापि स्यात् । **शीर्ण** इति । शॄ हिंसायाम् । 'ॠत इत्' । रपरः । रदाभ्या किम् । कृतः । कृतवान् । निष्ठाग्रहणं किम् ।

---

१. D, and C drop परस्य. २. भूतम् N. ३. भूतवान् $B_2$. ४. After it—क्षुतवान् $B_2$, $D_4$, क्षुतः dropped N. ५. निष्ठातस्य परस्य $B_2$. ६. °तस्य $D_4$. ७. पूर्वदकारस्य च P., $D_2$, $B_2$, $D_4$; पूर्वदस्य च N. ८. स्थः $Dc_3$.

## संयोगादेरातो धातोर्यण्वतः ॥८।२।४३॥

यण्संयोगादेरादन्ताद् धातोर्निष्ठातस्य नः स्यात् ॥ द्राणः। ग्लानः।

## ल्वादिभ्यः ॥८।२।४४॥

एकविंशतेर्लूञादिभ्यो निष्ठातो नः स्यात् ॥ लूनः। ज्या। ग्रहिज्या। जीनः। दुग्वोर्दीर्घश्च ॥* दूनः। गूनः। पूञो विनाशे ॥* पूना यवाः। पूतमन्यत्।

सिनोतेर्ग्रासकर्मकर्तृकस्य ॥* सिनो ग्रासः स्वयमेव।

---

कर्ता। तः किम्। चरितम्। अत्र इटो नत्वं न। पूर्वस्य किम्। परस्य मा भूत्। भिन्नवद्भ्यामिति। कृतस्यापत्यं कार्तिरित्यत्र वृद्धेर्बहिरङ्गत्वादन्तरङ्गे नत्वे क्रियमाणे रेफस्यासिद्धत्वान्नत्वं न।

**संयो**। संयोग आदिर्यस्य स तथा। **द्राण** इति। द्रा कुत्सायां गतौ। संयोगादेः किम्। यातः। आतः किम्। च्युतः। धातोः किम्। निर्यातः। यण्वतः किम्। स्नातः।

**ल्वादि**। एकविंशतेरिति। पूञ्व्यतिरिक्ता ल्वादय एव ल्वादयः। एते च एकविंशतिः। ते क्र्यादिगणे 'ल्वादीनां ह्रस्वः' इत्यत्र सूत्रे कथिताः। 'ग्रहिज्या—' इति संप्रसारणम्। **जीन** इति। हल इति दीर्घः। **दुग्वोरिति**। दु गतौ। गु विष्ठोत्सर्गे। चकारान्निष्ठातस्य नः। **पूना** इति। तस्य नः। पूना यवाः। विनष्टा इत्यर्थः। **सिन** इति। षिञ् बन्धने। ग्रासकर्मकर्तृकस्य किम्। सिता पाशेन सूकरी। ग्रासोपि यदा कर्मैव स्यात् न कर्ता तदापि न। सितो ग्रासो देवदत्तेन।

---

१. ध्राणः $D_4$. २. ल्वादिभ्यश्च $D_2$, $D_4$ $B_2$. ३. निष्ठातस्य $B_2$, $D_4$. ४. ज्या-जीनः। $D_4$. ५. ते च PC. ६. नष्टा $Dc_3$, Pc.

## ओदितश्च ॥८।२।४५॥

ओदितो धातोर्निष्ठातस्य नः स्यात् ॥ भुजो[3] । भुग्नः । ओहाक् । प्रहीणः ।[2] स्वादय ओदितः । षूङ् दूङ् दीङ् डीङ्[4] धीङ् मीङ् रीङ् लीङ् व्रीङ् नवैते ओदितः स्युः । सूनः । सूनवान् । दूनः । ओदिन्मध्ये पाठबलान्नेट् । उड्डीनः ।

## स्फायः स्फी निष्ठायाम् ॥६।१।२२॥

स्फायः स्फी स्यान्निष्ठायाम् ॥ स्फीतः । वेति केचित् । स्फातः ।

## द्रवमूर्तिस्पर्शयोः श्यः ॥६।१।२४॥

द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम् ॥

---

**ओदि** । प्रहीण इति । 'घुमास्था' इतीत्वम् । **स्वादय इति** । धातुसूत्रम् । षूङ् प्राणिप्रसवे । दूङ् परितापे । दीङ् क्षये । डीङ् विहायसा गतौ । धीङ् अनादरे । मी हिंसायाम् । रीङ् स्रवणे । लीङ् श्लेषणे । व्रीङ् वरणे । **ओदिन्मध्य इति** । अयं भावः । यदा डीङ इट् स्यात् तदेटा व्यवहितत्वात्तकारस्य धातोः परत्वं न स्यात् । तदा तस्य नत्वं न स्यात् । तत ओदिन्मध्ये पाठो व्यर्थः स्यादिति । दीनः । धीनः । मीनः । रीणः । लीनः । व्रीणः ।

**स्फायः** । स्फायी वृद्धौ । **वेति केचिदिति** । तथोक्तं **मुग्धबोधे** । 'स्फायः स्फी वा' इति ।

**द्रव** । द्रवावस्थया उत्तरावस्थाविशेषः काठिन्याख्यो द्रवशब्देनोच्यत इत्याह—**द्रवस्य मूर्तौ काठिन्य इति** ।

---

१. तो $D_1$, N. २. भुजो कौटिल्ये $D_2$, $D_4$. $N_1$. ३. After it—कुटवच इति परत्वम् $B_2$, $D_4$. ४. डीङ् वीङ् । $D_2$. ५. Dropped N. ६. स्यात् dropped $B_2$. ७. Dropped $N_1$.

## श्योऽस्पर्शे ॥८।२।४७॥

श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे ॥ हल इति दीर्घः। शीनं घृतम्। अस्पर्शे किम्। शीतं जलम्। द्रवमूर्तिस्पर्शयोः किम्। संश्यानो वृश्चिकः। शीतात् संकुचित इत्यर्थः।

## प्रतेश्च ॥६।१।२५॥

प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायां काठिन्ये स्पर्शे ॥[1] प्रतिशीनः।

## विभाषाभ्यवपूर्वस्य ॥६।१।२६॥

अभ्यवपूर्वस्य श्यो निष्ठायां वा संप्रसारणं स्यात् ॥ आभिश्यानमभिशीनं घृतम्। अवश्यानः अवशीनो वृश्चिकः। अभ्यवेत्युक्तेर्नेह। समवश्यानः।

---

श्यः। श्यैङ् गतौ। अस्य।

**विभाषा**। द्रवमूर्तिविषये प्राप्ते पूर्वेणान्यत्राप्राप्ते च विभाषेयम्। अभ्यवेत्युक्तेरिति। पदैकदेशेन पदं लक्ष्यते। अभ्यवपूर्वस्येत्युक्तेरित्यर्थः। अयं भावः। पूर्वग्रहणाद्यत्र समुदायस्याभ्यवपूर्वता तत्रैव स्यात्। अन्यथा विभाषाभ्यवाभ्यामित्येवोच्येत। समवश्यान इत्यत्र तु श्यैङो यद्यपि अवपूर्वता तथापि समुदायस्य नावपूर्वता। तस्य संपूर्वत्वात्। तस्मादत्र संप्रसारणं न। **वृत्तिकारमतेन** नेदं पूर्वग्रहणप्रयोजनम्। किंतु अभिसंशीनम्। अभिसंश्यानम्। अवसंशीनम्। अवसंश्यानमिति। एवं चेत् समवश्यान इत्यत्रापि विकल्पः स्यात्। नैवम्। विभाषाग्रहणस्य व्यवस्थितविकल्पत्वान्नेति।

---

१. निष्ठायाः तस्य $D_1$. २. After it—च $D_1$; वाच्ये P.

**अञ्चोऽनपादाने ॥८।२।४८॥**

अञ्चो [1]निष्ठातस्य नः स्यान्न त्वपादाने ॥ समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् ।

**दिवोऽविजिगीषायाम् ॥८।२।४९॥**

दिवो निष्ठातस्य नः स्यादविजिगीषायाम् ॥ सनीवन्तेति विकल्पितेट्त्वात्—

**यस्य विभाषा ॥७।२।१५॥**

यस्य क्वचिद् [2]विभाषया इड् विहितस्ततो निष्ठायामिण् न स्यात् ॥ द्यूनः । विजिगीषायां तु द्यूतम् । ओव्रश्चू । ग्रहिज्या[3] । स्कोरिति [4]सलोपः । [5]नत्वम् । तस्यासिद्धत्वात् षत्वे कुत्वे च प्राप्ते निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः । इति झलोभावान्न षत्वम् । [6] वृक्णः ।

---

**अञ्चः** । अक्तमित्येतत्तु अञ्जे रूपम् ।

**दिवः** ।

**यस्य** । द्यून इति । 'च्छ्वोः शूड्—' इत्यूट् । द्यूतमिति । तत्र हि जिगीषयाक्षपातनादिकं क्रियते । 'ग्रहिज्या—' इति संप्रसारणमिति भावः । **नत्वमिति** । 'ओदितश्च' इति । **तस्यासिद्धत्वादिति** । पूर्वत्रासिद्धन्यायेन । **षत्वे कुत्वे चेति** । षत्वं 'व्रश्च—' आदिना । कुत्वं 'चोः कुः' इति । एते द्वे झलि पदान्ते च विधीयमाने प्राप्ते । तत्र 'निष्ठादेश—' इत्यनेन षत्वं प्रति नत्वस्यासिद्धत्वात् झलोभावात् न भवति । कुत्वं तु भवत्येव । तत्प्रति नत्वस्यासिद्धत्वादेवेत्याह—**निष्ठादेश इत्यादिना** ।

---

१. निष्ठायास्तस्य $D_1$. २. विभाषा इड् $D_4$, $D_2$, C; विभाषायां N. ३. After it—इति संप्रसारणम् $B_2$. ४. लोपः $D_4$, $D_2$, N. ५. नत्वस्या° $D_1$, $D_3$, C, $B_1$, $B_2$, N. ६. After it—कुत्वं प्रत्ययसिद्ध एव । N.

**निर्वाणोऽवाते ॥८।२।५०॥**

अयं निष्ठायां निपात्यते न तु वाते वाच्ये ॥ निर्वाणोऽग्निः मुनिर्वा । वाते तु निर्वातो वातः ।

**शुषः कः ॥८।२।५१॥**

शुषो निष्ठातस्य कः स्यात् ॥ शुष्कः ।

**पचो वः ॥८।२।५२॥**

पचेर्निष्ठातस्य वः स्यात् ॥ पक्वः ।[2]

**क्षायो मः ॥८।२।५३॥**

[3]क्षायः परस्य निष्ठातस्य मः स्यात् ॥ क्षामः । क्षामवान् ।

**प्रस्त्योऽन्यतरस्याम् ॥८।२।५४॥**

प्रपूर्वात् स्त्यायतेर्निष्ठातस्य मो वा स्यात् ॥[4]

**स्त्यः प्रपूर्वस्य ॥६।१।२३॥**

प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम् ॥ [5]प्रस्तीमः । मत्वा-

---

**निर्वा** । निस् पूर्वस्य वा इत्यस्य नत्वं निपात्यते । यतो न तु वाच्य इति व्याख्यातम् ततो निर्वाणो दीपो वातेनेति सिद्धम् ।[6]

**शुषः** । शुष शोषणे ।

**क्षायः** । क्षै क्षये ।

**स्त्यः** । स्त्य इति । स्त्यै ष्ट्यै शब्दसंघातयोरित्यनयो-र्द्वयोर्धात्वोः स्त्यारूपापन्नयोर्निर्देशः । **मत्वेत्यादि** । 'यण्वतः' इत्यनेन 'संयोगादेरातो धातोर्यण्वतः' इति सूत्रं लक्ष्यते । तस्य त्रिपादीपठितत्वा-

---

१. Dropped N. २. After it—क्षै क्षये $D_1$. ३. क्षै इत्यस्मात् परस्य C; क्षैपरस्य P. ४. After it—स्त्यै संहतौ ध्वनौ च $D_1$. ५. Before it—हल इति दीर्घः । $D_2$, $B_2$, $D_4$. ६. After it—भवति PC., $De_3$.

भावपक्षे यण्वत इत्यस्य संप्रसारणं प्रत्यसिद्धत्वान्नत्वाभावः। प्रस्तीतः। प्रात् किम्। स्त्यानः।

**अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥८।२।५५॥**

एते निष्ठान्ता निपात्यन्ते न चेत् प्रादेः परे स्युः॥ ञिफला। फुल्लः। क्षीबो मत्तः। कृशस्तनुः। परिकृशश्च। उल्लाघो नीरोगः। अनुपसर्गात् किम्।

**आदितश्च ॥७।२।१६॥**

आकारेतो निष्ठाया इण् न स्यात्॥

**ति च ॥७।४।८९॥**

तादौ किति परे चरफलोरत उत् स्यात्॥ प्रफुल्लः।

---

दसिद्धत्वम्। तस्मात् पूर्वं संप्रसारणं तस्मिञ्जाते यण्वत्ता विहतेति नत्वं नेति भावः। पूर्वग्रहणं प्रसंस्तीत इत्यत्र यथा स्यादित्येवमर्थम्। तस्मिन् हि सति ग्रन्थाधिक्यादर्थाधिक्यमिति प्रपूर्वस्य समुदायस्यापि स्यात्।

अनु। फुल्ल इति। ञिफला विशरणे। अस्मात्परस्य निष्ठातस्य लकारो निपात्यते उत्वमिडभावश्च। क्तवत्वन्तस्याप्यातिदिश्यते। फुल्लवान्। क्षीबकृशोल्लाघा इति। क्षीवृ मदे। कृश तनूकरणे। आभ्यां लाघृ शक्तौ अस्माच्च उत्पूर्वात्परस्य निष्ठातस्य लोप इडभावश्च निपात्यते। कृते वा इटि इत् इत्यस्य लोपो निपात्यते। परिकृशश्चेति। अयं भावः। परिकृश इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रकृतिं प्रत्यनुपसर्ग एव। तथा हि। परिगतः कृशः परिकृश इति।

आदि। चकारोनुक्तसमुच्चयार्थः। तेन आश्वस्तः। वान्तः। योगविभागः किम्। 'आदितश्च विभाषा भावादिकर्मणोः' इत्येव

---

१. नाभावः $B_2$, $D_4$. २. Before it—परेश्च $D_2$, $D_4$, $B_2$; after it—परिकृशः N. ३. °फलयो° $D_2$. ४. लो $Dc_3$.

प्रक्षीवितः । प्रकृशितः । प्रलाघितः ॥ उत्फुल्लसंफुल्लयोरुप-संख्यानम् ॥

## नुद्विदोन्दत्राघ्राह्रीभ्योन्यतरस्याम् ॥८।२।५६॥

एभ्यो निष्ठातस्य नो वा स्यात् ॥ नुन्नः । नुत्तः । विद विचारणे । विन्नः । वित्तः । उन्दी क्लेदने ।

## श्वीदितो निष्ठायाम् ॥७।२।१४॥

श्वयतेरीदितश्च निष्ठायामिण् न स्यात् ॥ उन्नः । उत्तः । त्राणः । त्रातः । घ्राणः । घ्रातः । ह्रीणः । ह्रीतः । वेत्तेस्तु विदितः । विद्यतेस्तु विन्नः ।

---

वक्तव्यम् । अन्यत्र भावादिकर्मभ्यां 'यस्य विभाषा' इति निषेधः स्यात् । सत्यं ज्ञापनार्थमेतत् ज्ञाप्यते यदर्थस्य विभाषा तदर्थस्यैव प्रतिषेधः । तेन 'विभाषा गमहनविदविशाम्' इत्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञानार्थस्य निषेधो न । विदितः । विदितवानिति । प्रक्षीवित इत्यादौ 'आर्धधातुकस्य—' इतीट् ।

नुद । ह्रीत्यस्याप्राप्तमितरेषां च नित्यप्राप्तं विकल्प्यते । उन्दी इति ईदित्वप्रदर्शनार्थमस्य पाठः ।

श्वीदितः । वेत्तेस्त्विति । विद ज्ञाने अस्य । विद्यतेरिति । विद सत्तायाम् अस्य । तथोक्तम्—

"वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः ॥" इति ।

---

१. Before it—लाघृ सामर्थ्ये N. २. विचारे N. ३. तु dropped N, $D_4$. ४. हि वक्तव्यम् PC., $Dc_3$. ५. After it इति $Dc_3$.

**न ध्याख्यापॄमूर्छिमदाम् ॥८।२।५७॥**

एभ्यो निष्ठातस्य नो न स्यात् ॥ ध्यातः । ख्यातः । पूर्तः । राल्लोपः । मूर्तः । मत्तः ।

**वित्तो भोगप्रत्यययोः ॥८।२।५८॥**

विन्दतेर्निष्ठान्तस्य निपातोयम् भोग्ये प्रतीते चार्थे । वित्तं धनम् । वित्तः पुरुषः । अनयोः किम् । विन्नः ।

**भित्तं शकलम् ॥८।२।५९॥**

भिन्नमन्यत् ॥

**ऋणमाधमर्ण्ये ॥८।२।६०॥**

एतन्निपात्यमाधमर्ण्यव्यवहारे ॥ ऋतमन्यत् ।

---

न ध्या । 'रदाभ्याम्—' इति 'संयोगादेः—' इति च प्राप्तस्य नत्वस्य निषेधोयम् ।

वित्तः । विद्लृ लाभे । अस्यैव ग्रहणमित्याह—विन्दतेरिति । भुज्यत इति भोगः । प्रतीयत इति प्रत्ययः । इत्येवं विग्रहं मत्वाह—भोग्ये प्रतीते चार्थे इति । वित्तं धनमिति । तद्धि भुज्यत इति भोग्यं भवति ।

ऋण । ऋ इत्येतस्माद्धातोर्निष्ठातकारस्य नकारो निपात्यते । आधमर्ण्य इति । अधम ऋणे अधमर्णः । अस्मादेव निपातनात् सप्तम्यन्तोत्तरपदे समासः । तस्य भाव आधमर्ण्यम् । तेन चाधमर्ण्योपलक्षितो व्यवहारो लक्ष्यत इत्याह—आधमर्ण्य इति । तेनोत्तमर्ण इत्यपि सिद्धम् । ऋतमन्यदिति । सत्यमित्यर्थः ।

---

१. भोगे $B_2$, $D_4$. २. विन्नम् $D_2$, $B_2$.

**इण् निष्ठायाम् ॥७।२।४७॥**

निरः कुषो निष्ठाया[1] इट् स्यात् ॥ निःकुषितः[2] ।

**वसतिक्षुधोरिट् ॥७।२।५२॥**

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात्[3] ॥ उषितः । क्षुधितः ।

**अञ्चेः पूजायाम् ॥७।२।५३॥**

पूजार्थादञ्चेः[4] क्त्वानिष्ठयोरिट् स्यात् ॥ अञ्चितः । गतौ तु[5] अक्तः ।

**लुभो विमोहने ॥७।२।५४॥**

लुभः क्त्वानिष्ठयोरिट् स्यान्न तु गार्ध्ये ॥ लुभितः । गार्ध्ये[6] लुब्धः ।

---

इण् । कुषि निष्कर्षे । 'इट्' इत्यनुवर्तमानेपि इड्ग्रहणं नित्यार्थम् । सूत्रारम्भस्तु 'यस्य विभाषा' इत्यस्य बाधार्थः ।

वसति । वस निवासे । क्षुध बुभुक्षायाम् । अनुदात्तत्वादिट्— प्रतिषेधे प्राप्ते वचनम् । पुनरिड्ग्रहणं नित्यत्वार्थम् । विकरणो निर्देशार्थ एव । वस्तेस्तूदात्तत्वाद् भवितव्यमेवेटा । उषित इति । यजादित्वात् संप्रसारणम् । 'शासिवसि—' इति षः ।

अञ्चेः । 'उदितो वा' इति क्त्वाप्रत्यये विकल्पे प्राप्ते निष्ठायां च 'यस्य विभाषा' इति निषेधे प्राप्ते वचनम् । अञ्चित इति । 'नाञ्चेः पूजायाम्' इति न्लोपाभावः ।

लुभः । 'तीषसह—' इति क्त्वायां विकल्पे निष्ठायां निषेधे प्राप्ते वचनम् ।

---

१. निष्ठायां C. २. निष्कुषितः $D_2$, P, N. ३. $D_1$, drops it. ४. °दञ्चतेः C. ५. $D_2$ drops it. ६. गार्ध्ये तु $B_2$, N, $D_4$.

## क्लिशः क्त्वानिष्ठयोः ॥७।२।५०॥

क्लिशः परयोरेतयोरिड् वा स्यात् ॥ क्लिशितः । क्लिष्टः । वमुजप्व्याश्वसो निष्ठाया इड् वेति केचित् ॥ वमितः । अनुनासिकस्य क्वीति दीर्घः । वान्तः । जपितः । जप्तः । विश्वसितः । विश्वस्तः । आश्वसितः । आश्वस्तः ।

## पूङश्च ॥७।२।५१॥

पूङः क्त्वानिष्ठयोरिड् वा स्यात् ॥

## पूङः क्त्वा च ॥१।२।२२॥

पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् ॥ पवितः । पूतः ।

---

क्लिशः । क्लिशू विबाधने इत्यस्य क्त्वायां विकल्पः सिद्धः । निष्ठायां 'यस्य विभाषा' इति निषेधः स्यात् तदर्थं निष्ठाग्रहणम् । [1]क्लिश उपतापे इत्यस्य क्त्वायां निष्ठायां च नित्यमिट् स्यात् तदर्थं क्त्वाग्रहणम् । वमुजपीति । विपूर्व आङ्पूर्वश्च श्वसिः ।

पूङ । 'श्र्युकः किति' इति उगित्त्वान्निषेधे प्राप्ते विकल्पार्थं वचनम् । सानुबन्धोच्चारणं पूञ्निवृत्त्यर्थम् ।

पूङः । द्वयोर्विभाषयोर्मध्ये विधिः स नित्य इति नित्योयं विधिः । क्त्वाग्रहणमुत्तरार्थम् । अस्मात् परस्य क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इत्येव निषेधः सिद्धः । सानुबन्धग्रहणं पवितः पवितवान् इत्यत्र यङ्लुगन्तात् प्रतिषेधो मा भूदित्येवमर्थं न तु पूञ्निवृत्त्यर्थम् । यतस्तस्मात् परयोः क्त्वानिष्ठयोः सेटोरसंभवः । 'श्र्युकः किति' इतीट्प्रतिषेधात् ।

---

१ यत् क्लिश PC.

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥१।२।१९॥

एभ्यः सेण्निष्ठा किन्न स्यात् ॥ शयितः ।[1]
आदिकर्मणि निष्ठा वक्तव्या ॥*

आदिकर्मणि क्तः कर्तरि च ॥३।४।७१॥

आदिकर्मणि यः क्तः स कर्तरि स्यात् चाद् भावकर्मणोः॥

विभाषा भावादिकर्मणोः ॥७।२।१७॥

भावे आदिकर्मणि च आदितो निष्ठाया[2] इड् वा स्यात् ॥ प्रस्वेदितश्चैत्रः । स्वेदितं तेन । मेदितम् । क्ष्वेदितम् । धर्षितम् । पक्षे । प्रस्विन्नः । स्विन्नं तेनेत्यादि[3] ।

---

निष्ठा । शीङ् स्वप्ने । ञिष्विदा[4] गात्रप्रक्षरणे । ञिमिदा स्नेहने । ञिक्ष्विदा स्नेहमोचनयोः । ञिधृषा प्रागल्भ्ये । यङ्-लुक्ग्रहणं मा भूदिति शीङ् अनुबन्धेन निर्दिष्टः । शयितः । आदिकर्मणीति । आदिभूतक्रियाक्षण आदिकर्म । प्रस्वेदितश्चैत्र इति । कर्तरि क्तः । अनेन कर्तुरुक्तत्वात् चैत्र इत्यस्य प्रथमा । प्रशब्द आदिकर्म द्योतयति । स्वेदितं तेनेत्यादि । भावे क्तः । कित्त्वाभावात् सर्वत्र गुणः । भावक्तत्वादिट् । पक्षे इति । इडभावपक्षे इत्यर्थः । प्रस्विन्न इति । कर्तरि क्तः । इडभावात् कित्त्वनिषेधो न । स्विन्नं तेनेति । भावे क्तः । आदिना प्रमिन्नः । प्रमिन्नं तेन । प्रक्ष्विण्णः । प्रक्ष्विण्णं तेन । प्रधृष्टः । प्रधृष्टं तेन ।

---

१. After it—प्रस्वेदितः । प्रमेदितः । प्रक्ष्वेदितः । प्रधर्षितः । $D_2$, $B_2$, $D_4$. २. निष्ठायां $B_2$. ३. For प्रस्विन्नः । स्विन्नं तेनेत्यादि प्रस्विन्नं तेनेत्यादि $D_1$, $D_3$, C, $B_1$. ४. ञिष्विदा $Dc_1$.

**मृषस्तितिक्षायाम्** ॥१।२।२०॥

क्षमार्थान्मृषेः[1] सेण्णिष्ठा किन्न स्यात्[2] ॥ मर्षितः । तितिक्षायां किम् । अपमृषितं वाक्यम् ॥

**उदुपधाद् भावादिकर्मणोरन्यतरस्याम्** ॥ ॥१।२।२१॥

उकारोपधात् परा भावादिकर्मणोः सेण्णिष्ठा किन्न स्याद्वा ॥ द्योतितम् । द्युतितं तेन । प्रद्योतितः । प्रद्युतितः[3] । भ्वादीनामिष्टिः । नेह । गुधितम् ।

**निष्ठायां सेटि** ॥६।४।५२॥

सेटि निष्ठायां परतो णेर्लोपः स्यात् ॥ भावितः ।

---

**मृष** । क्षमार्थादिति । क्षान्त्यर्थादित्यर्थः । अपमृषितमिति । अपमृष्टमित्यर्थः । अनेकार्थत्वाद्धातूनामेतल्लभ्यते । अनेकार्थत्वं धातूनां तितिक्षाग्रहणाल्लभ्यते । अन्यथा तद् व्यर्थं स्यात् । व्यवच्छेद्याभावात् ।

**उदु** । द्योतितमिति । भावे क्तः । प्रद्योतित इति । कर्तरि क्तः । गुधितमिति । गुध परिवेष्टने । दैवादिकः ।

**निष्ठा** । सेटि किम् । संज्ञपितः पशुः । 'सनीवन्तर्ध—' इति ज्ञपेरिटि[4] विकल्पिते 'यस्य विभाषा' इति इण्निषेधः[5] । ननु त्वत्र 'णेरनिटि' इति णिलोपः स्यात् । मैवम् । सेड्ग्रहणसामर्थ्यात्तेनापि[7] न । ननु 'यस्य विभाषा' इत्यत्रैकाच इत्यनुवृत्तेर्नित्यमत्रेट् स्यात् । ततश्च सेट्ग्रहणं व्यर्थं स्यात् । एवं तर्हि कालावधारणार्थमिडागमे कृते णिलोपो यथा स्यादिति । यदि सेड्ग्रहणं[6] न स्यात्तदा कृताकृत-

---

१. °न्मृषः C., P, N. २. किन्नु स्यात् C., वा किन्न स्यात् P, $B_2$, N. ३. प्रद्युतितो वा $D_4$. ४. °रिड् विकल्पात् PC., $Dc_3$. ५. इट्प्रतिषेधः PC., $Dc_3$. ६. °ग्रहणं PC., $Dc_3$. ७. °सामर्थ्यात्तत्रापि न.

भावितवान् । श्वीदित इति नेट् । संप्रसारणम् । शूनः । दीप्तः । गुहू । गूढः । वनु[1] । उदितो वेति विकल्पितेट्त्वात् निष्ठायां नेट् । वतः ।[2] ततः । पतेः[3] सनि वेट्[4]कत्वादिडभावे प्राप्ते श्रि[5]तातीत-पतितेति निपातनादिट् । पतितः । अनेकाच्त्वादिट् । दरिद्रितः । जाग्रोविचिण्णिति गुणः । जागरितः । आदिकर्मणि निष्ठायां शकिरनिड्वेति शौ[6]नगाः । शक्तः शकितोर्चितुं शिवस्तेन ।

---

प्रसङ्गित्वेनेटि अकृते एव णिलोपः स्यात् । एवं च सति कारित-मित्यत्र 'एकाच उपदेशेनुदात्तात्' इतीण्निषेधः प्रसज्येत । संप्रसारणमिति । 'वचिस्वपि—' इति । शून इति । टुओश्वि गतिवृद्ध्योः । 'ओदितश्च' इति नः । 'हलः' इति दीर्घः । दीप्त इति । दीपी दीप्तौ । गूढ इति । गुहू संवरणे । ऊदित्त्वेन वेट्कत्वात् 'यस्य विभाषा' इतीट्प्रतिषेधः[7] । वनु इति । वनु बोधने । उदित्त्व-प्रदर्शनार्थं पाठः । वत इति । 'अनुदात्तोपदेश—' इति नलोपः । तत इति । तनु विस्तारे । पूर्ववत् । पतेरिति । 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' इति वेट्कत्वादित्यर्थः । अनेकाच्त्वादिति । दरिद्रातेः सनि वेट्कत्वेपि 'यस्य विभाषा' इति निषेधो न । तत्र 'एकाचः' इत्यनुवृत्तेरिति भावः । जागरित इति । जागृ निद्राक्षये । शक्त इति । शकॢ शक्तौ । कर्मणि क्तः ।

---

१. वनु उदितो वेति क्त्वि विकल्पित उदित्वान्निष्ठायां नेट् $D_1$; वनु उदितो वेति क्त्वि विकल्पितेट्कत्वा° $D_4$. २. After it—मतः $D_2$; मतः । सतः $B_2$; ततः । यतः । N; मतः before पतेः $D_4$. ३. पतेः dropped $B_2$, $D_4$ ४. वेट्त्वा° $B_2$. ५. द्वितीयाश्रिता° $B_2$, ६. सौनगः C; असौनागः $D_1$; शौनागाः $B_2$, N; शौनागः $D_4$. ७. °तीट्प्रातिषेधः $Dc_3$, PC.

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्ट-
बाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वराना-
यासभृशेषु ॥७।२।१८॥

[1]मन्थादिष्वर्थेषु क्षुब्धादयोऽष्टौ क्तान्ता निपात्यन्ते ॥ फाण्ट-
मनायासः [2]कषायभेदः । [3]अन्यत्र क्षुभितम् । स्वनितम् । ध्वनितम् ।
लगितम् । म्लेच्छितम् । [4]विरेभितम् । फाणितम् । वाहितम् ।

धृषिशसी वैयात्ये ॥७।२।१९॥

[5]एतौ निष्ठायामविनये अनिटौ स्तः ॥ धृष्टः । [6]विशस्तः ।

---

क्षुब्ध । क्षुभ संचलने । अस्य इडभावो निपात्यते मन्थे वाच्ये । एवमुत्तरेष्वपि निपात्यते इडभावः । क्षुब्धो मन्थः । क्षुब्धा गिरिनदीत्याद्युपमानात् । स्वन शब्दे । स्वान्तं मनः । ध्वन शब्दे । ध्वान्तं तमः । लगिर्गत्यर्थः । लग्नं सक्तम् । निपातनादेव नत्वम् । म्लेच्छ अव्यक्तायां वाचि । इत्वं निपातनादेव । म्लिष्टमविस्पष्टम् । रेभृ शब्दे । इत्वं निपातनात् । विरिब्धः स्वरः । फण गतौ । फाण्टमनायासः कषायभेद इति । त्रिफलादीनां कषायसारमित्यर्थः । यदपक्वमपिष्टमुदकसंपर्कादभिव्यक्तरसमौषधं तदिहानायासशब्देनोपलक्ष्यते । अल्पप्रयाससाध्यत्वादित्यर्थः । वाहृ प्रयत्ने । बाढम् भृशम् । अन्यत्रेति । अर्थान्तर इत्यर्थः ।

**धृषि** । अविनये धृष्टत्वे इत्यर्थः । **विशस्त** इति । शसु हिंसायाम् । तत्र धृषेः 'आदितश्च' इति शसेरुदितः 'यस्य विभाषा' इति निषेधे सिद्धे नियमार्थं वचनम् । वैयात्ये एव नान्यत्रेति । वैयात्ये किम् । धर्षितः । विशसितः ।

---

१. मन्थादिष्वष्टसु $D_1$, P. २. काषाय° $D_2$. ३. Before it—क्षुभ संचलने । स्वन शब्दे । ध्वन शब्दे । लगे संगे । म्लेच्छ अव्यक्ते शब्दे । रिशब्दे सौत्रो विपूर्वः । फण गतौ । वाह प्रयत्ने । $D_2$, $B_2$, $D_4$ ( रिभ for रि & वाहृ for वाह $D_4$.) ४. विरिभितम् । फणितम् । $D_4$. ५. Before it—ञिधृषा प्रागल्भ्ये । $B_2$, $D_4$. ६. Before it—शसु हिंसायां विपूर्वः $B_2$, $D_4$.

**दृढः स्थूलबलयोः ॥७।२।२०॥**

स्थूले बलवति चायं निपातः ॥ दृहितोऽन्यः ।[1]

**प्रभौ परिवृढः ॥७।२।२१॥**

परिबृंहितोऽन्यः ।[2]

**कृच्छ्रगहनयोः कषः ॥७।२।२२॥**

कषो निष्ठायामिण् न स्यात् कृच्छ्रगहनयोः ॥ कष्टोऽग्निः । कष्टं वनम् ।[3] कषितमन्यत् ।

---

**दृढः** । बलवतीति । मतुब्निर्देशेन सूत्रे बलशब्दो मत्वर्थीयाकारान्त इति दर्शयति । दृहि वृद्धौ इत्यस्य धातोः क्तप्रत्यये इडभावः । हकारनकारयोर्लोपः परस्य ढत्वं च निपात्यते । ननु हलोपः किमिति निपात्यते परस्य ढत्वे 'हो ढः' इति च ढत्वे 'ढो ढे लोपः' इति लोपः स्यादेव । मैवम् । ढ्लोपे हि सति द्रढिमेत्यादौ पूर्वत्रासिद्धन्यायेनासिद्धत्वात् 'र ऋतो हलादेर्लघोः' इति रत्वं न स्यात् । इह च परिद्रढय्य गत इति 'ल्यपि लघु पूर्वात्—' इत्ययादेशो न स्यात् । इह च परिदृढस्यापत्यं पारिदृढी कन्येति गुरूपोत्तमलक्षणः ष्यङ्[4] स्यात् । तस्मात् पूर्वत्रासिद्धनिवृत्त्यर्थं हलोपनिपातनम् ।

**प्रभौ** । पूर्वेण समानमेतन्निपातनम् । वृहि वृद्धौ । अस्य प्रभौ वाच्ये । संग्रामयतेरेव सोपसर्गादुत्पत्तिरिष्यते नान्यस्मात् । तथा सति परिवृढयतीति 'तिङ्ङतिङः' इति निघातः परिव्रढय्य गत इत्यत्र च परिशब्दस्य क्त्वाप्रत्ययान्तेन सह समासे सति ल्यबादेशश्च सिध्यति ।

**कृच्छ्र** । कष हिंसार्थः । कृच्छ्रं दुःखं तत्करणं च । **कषितमन्यदिति** । सुवर्णादिकम् ।

---

१. After it—दृहि दीप्तौ $D_2$ ; दृंहितोऽन्यः । दृहि दीप्तौ $D_4$, $B_2$ (वृद्धौ $B_2$); दृंहितोऽन्यः । N. २. After it—वहि वृद्धौ । परिपूर्वः $D_4$ $D_2$, $B_2$. ३. After it—कष हिंसायाम् $D_2$, $B_2$, $D_4$. ४. ष्यङ् $Dc_3$, PC.

## घुषिरविशब्दने ॥७।२।२३॥

[1]घुषेर्निष्ठायामिण् न स्यात् ॥ घुष्टा रज्जुः ।[2] अविशब्दने किम् । घुषितं वाक्यम् ।

## अर्देः संनिविभ्यः ॥७।२।२४॥

एतत्पूर्वाद[3]र्देर्निष्ठायामिण् न स्यात् ॥ समर्णः । न्यर्णः । व्यर्णः । [4]अर्दितोन्यः ।

## अभेश्चाविदूर्ये ॥७।२।२५॥

अभिपूर्वाद[5]र्देर्निष्ठायामिण् न[6] स्यात् सामीप्ये ॥ [7]अभ्यर्णम् । अभ्यर्दितमन्यत् ।

---

घुषि । घुषिर् [8]विशब्दने इति चुरादिः । घुषिर् शब्दार्थे इति भ्वादिः । द्वयोरपि ग्रहणम् । विशब्दनं स्वाभिप्रायस्य शब्देनाविष्करणम् । विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिच् विशब्दनार्थस्यानित्य इति । तेनायमपि प्रयोगः सिद्धः । जुघुषुः पुष्पमाणवा इति । अपघुषितं वाक्यमिति । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ।

अर्देः । अर्द गतौ याचने च ।

अभेः । विदूरं विप्रकृष्टम् । ततोन्यदविदूरम् । तस्य भाव आविदूर्यम् । ब्राह्मणादित्वात् ष्यञ् । एतस्मादेव निपातनात् ' न नञ्पूर्वात् तत्पुरुषात् ' इति ष्यञः प्रतिषेधो नेति चेतसि कृत्वाह—सामीप्ये इति ।

---

१. घुषिर्निष्ठायामनिट् स्यात् $D_2$. २. After it—घुष स्तुतौ $D_2$, $D_4$ ३. °दर्देर्नि° $D_2$, P. ४. $D_2$ drops it. ५. °दर्दतेर्नि° C. ६. स्यान्न $D_2$; स्यात् dropped $D_4$. ७. अभ्यर्णः । N. ८. शब्दने PC, $Dc_3$.

**णेरध्ययने वृत्तम् ॥७।२।२६॥**

ण्यन्ताद्वर्ततेर्वृत्तमिति निपात्यते अध्ययनेर्थे ॥ वृत्तं छन्दश्छात्रेण । वर्तितमन्यत् ।

**शृतं पाके ॥६।१।२७॥**

श्रा इत्यस्य शृभावो निपात्यते निष्ठायां क्षीरहविषोः पाके ॥ शृतं क्षीरम् । श्राणमन्यत् ।

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥७।२।२७॥**

एते णिचि निष्ठान्ता वा निपात्यन्ते ॥ पक्षे । दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञापितः ।

**रुष्यमत्वरसंघुषास्वनाम् ॥७।२।२८॥**

एभ्यो निष्ठायामिण् न स्याद्वा ॥ रुष्टः । रुषितः ।

---

णेः । इडभावो णिलुक् च निपात्यते ।

शृतं । श्रा पाके ।

वा दान्त । इट्प्रतिषेधो णिलुक् च निपात्यते । क्वचिदुपधाह्रस्वत्वं च । दमु शमु उपशमे । पूरी आप्यायने । दसु उपक्षये । स्पश बाधनस्पर्शनयोः । छद अपवारणे । ज्ञप मारणतोषणनिशामनेषु । शमित इति । 'मितां ह्रस्वः' इति ह्रस्वः । 'निष्ठायां सेटि' इति णिलोपः ।

रुष्य । रुष रोगे । अम गत्यादिषु । अम रोगे अस्य चौरादिकस्य ग्रहणं न । 'एकाचः' इत्यधिकारात् । ञित्वरा संभ्रमे । संपूर्वः पूर्वोक्तो

---

१. क्षीरं हविर्वा $B_2$. २. Dropped in $D_1$, P. ३. संपूर्वोक्तो घुषिः PC.

आन्तः । अमितः । तूर्णः । त्वरितः । संघुष्टः । संघुषितः । आस्वान्तः । आस्वनितः ।

**हृषेर्लोमसु ॥७।२।२९ ॥**

हृषेर्निष्ठायामिड्वा स्याल्लोमस्वर्थे ॥ हृष्टं हृषितं लोम ॥ विस्मितप्रतिघातयोश्च ॥* हृष्टो हृषितो मैत्रः । विस्मितः प्रतिहतो वेत्यर्थः ।

**अपचितश्च ॥७।२।३०॥**

चायतेर्निपातोयं वा । अपचितः । अपचायितः ।

---

घुषिः । आङ्पूर्वः स्वनिः । आन्त इति । अनुनासिकस्य क्वीति दीर्घः । **तूर्ण** इति । 'ज्वरत्वर—' इत्यूट् । संपूर्वस्य घुषेरपि अविशब्दनेपि परत्वादयं विकल्पः स्यात् । संघुष्टौ दम्यौ । संघुषितौ दम्यौ । आङ्-पूर्वस्य **आस्वान्तः** । आङ्पूर्वस्य स्वनेरपि परत्वादयं विकल्पः 'क्षुब्ध-स्वान्त—' इति निपातनं बाधते । आस्वनितं मनः । आस्वान्तं मनः ।

हृषेः । हृषु अलीके इत्युदित्त्वान्निष्ठायामनिट् । हृष तुष्टावयं सेट् । तयोर्द्वयोर्ग्रहणमित्युभयत्र विभाषेयम् । लोमानि मूर्धजानि अङ्गजानि च सामान्येन गृह्यन्ते । यथा लोमनखे स्पृष्ट्वा शौचं कर्तव्यमिति । तद्विषये हर्षे वर्तमानो हृषिर्लोमसु वर्तत इत्युच्यते । **हृष्टमिति** । 'गत्य-र्थाकर्मक—' इति कर्तरि क्तः ।

**अप** । चायृ पूजानिशामनयोः । अयं योगश्चिनोतेः पूजायां वृत्तिंयो नेच्छति तं प्रत्यारभ्यते । यस्त्विच्छति तं प्रति न । तथोक्तम् । चिनोतेरपचितः स्यात् चायतेस्त्वपचायित इति ।

---

१. आमितः N. २. °र्निष्ठाया P. ३. °मिण् न स्याद्वा $D_1$, $B_2$, $D_4$. ४. हृषितो वा $D_2$. ५. तथा चोक्तं PC, $Dc_3$.

**प्यायः पी ॥६।१।२८॥**

प्यायतेर्निष्ठायां पीभावः स्यात् ॥ पीनं मुखम् । स्वाङ्गा-दन्यत्र वा ॥ प्यानः पीनः स्वेदः । सोपसर्गस्य न ॥ प्रप्यानः । आङ्पूर्वस्यान्धूधसोः स्यादेव । आपीनोऽन्धुः । आपीनमूधः ।

**ह्लादो निष्ठायाम् ॥६।४।९५॥**

ह्लादो ह्रस्वः स्यान्निष्ठायाम् ॥ प्रह्लन्नः ॥[1, 2]

**द्यतिस्यतिमास्थामित्ति किति ॥७।४।४०॥**

एषामिकारोन्तादेशः स्यात्तादौ किति परे ॥ दितः । सितः । मितः । स्थितः ।

---

प्यायः । ओप्यायी वृद्धौ । स्वाङ्गादित्यादि व्यवस्थितविभाषा-विज्ञानात् लभ्यते ।

ह्लादः । ह्लाद सुखे । प्रह्लन्न इति । 'रदाभ्याम्—' इति नः ।

द्यति । दो अवखण्डने । षोन्तकर्मणि । मा माने । माङ् माने । मेङ् प्रतिदाने ।[3] त्रयाणां ग्रहणम् । गामादाग्रहणेष्वविशेषात् ।[4] ष्ठा गतिनिवृत्तौ । आद्यस्य 'दो दद्—' इति दद्भावे शेषाणां 'घुमास्था—' इतीत्वे प्राप्ते इत्त्वविधिः । तपरकरणं मुखसुखार्थम् । न दीर्घनिवृत्त्यर्थम् । भाव्यमानत्वादेव तन्निवृत्तिसिद्धेः । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । दादत्तः ।

---

१. ह्लादेर्ह्रस्वः D4. २. After it—योगविभागः कर्तव्यः । प्रह्लत्तिः D2, B2, D4. ३. इति त्रयाणां Dc3, PC. ४. ग्रहेष्व° Dc3.

**शाच्छोरन्यतरस्याम्** ॥७।४।४१॥

शितः । शातः । छितः । छातः । श्यतेर्नित्यमित्वं व्रते ॥* संशितं व्रतम् ।

**द्धातेर्हिः** ॥७।४।४२॥

धाञो हिः स्यात्तादौ किति ॥ हितः ।

**दो दद् घोः** ॥७।४।४६॥

घुसंज्ञस्य दा इत्यस्य दत् स्यात्तादौ किति ॥ आदेशस्य तान्तत्वे दस्तीति दीर्घत्वं दोषः । दान्तत्वे निष्ठानत्वम् । धान्तत्वे भष्भावः स्यात् । तस्मात् थान्तः । चर्त्वम् । दत्तः । घोः किम् । दातः ।

---

शाच्छोः । शो तनूकरणे । छो छेदने ।

द्धातेः । 'द्युमास्था—' इतीत्वे प्राप्ते हिरादेशः । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । दाधीतः ।

दो दद् । दस्तीति दीर्घत्वं दोष इति । विदत्तमित्यादौ उपसर्गस्येत्यर्थः । निष्ठानत्वम् । 'रदाभ्याम्—' इति । भष्भाव इति । 'झषस्तथोः—' इति धत्वं लक्ष्यते । अथवा तान्तादावपि दोषो नेति भाष्ये प्रतिपादितम् । दात इति । दाप् लवने । अदाप् इति प्रतिषेधात् घुसंज्ञाभावः । दः किम् । धीतम् । धेट् पाने ।

---

१. Before it—उपसर्गात् C; $D_2$ has–श्यतेर्व्रतेति नित्यामित्वम् । तेन संशितं व्रतम् ।; $B_3$ follows $D_2$ but has श्यतेः व्रते नित्य° &c. २. $D_1$ drops इत्वम्; $D_4$ drops व्रते. ३. After it धात्वम् । $B_2$. ४. Dropped $Dc_3$. PC.

अच उपसर्गात् तः ॥७।४।४७॥

अजन्तादुपसर्गात् परस्य दा इत्यस्य घोस्तः स्यात्तादौ किति ॥ प्रत्तम् । अवत्तः ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

दस्ति ॥६।३।१२४॥

इगन्तस्योपसर्गस्य दीर्घः स्यात् दादेशे[2] तकारे परे ॥ नीत्तम् । सूत्तम् । घुमास्थेतीत्वम्[3] । धेट्[4] । धीतम् । गीतम् । पीतम् । जनसनेत्यात्वम् । जातम् । सातम् । खातम् ।

---

अचः[1] । प्रत्तमिति । अलोन्त्यपरिभाषया आकारस्य तत्वे कृते दकारस्य चर्त्वे तकारः । अचः किम् । निर्दत्तम् । उपसर्गात् किम् । दधि दत्तम् । घोः किम् । अवदातम् । दैप् । 'उपसर्गात्' इति पञ्चमीनिर्देशादादेरलः प्राप्नोति । अत्र उत्तरम् । 'अचः' इत्येतद् द्विरावर्तते । तत्रैकं पञ्चम्यन्तमुपसर्गविशेषणार्थम् । द्वितीयं षष्ठ्यन्तं स्थाननिर्देशार्थम् । तेनाकारस्य तकारः । द्वितकारको वा निर्देशस्तेन अनेकालत्वात् सर्वस्य स्यात् । अवदत्तमित्यादि । ताभावार्थं निपात्यते । अथवानुपसर्गा एते क्रियान्तरविषयाः । यत्क्रियायुक्तास्तां प्रति गत्युपसर्गसंज्ञे भवत इति । अथवोपसर्गप्रतिरूपकाण्यव्ययानि नोपसर्गाः ।

दस्ति । 'अच उपसर्गात् तः' इत्यन्त्यस्य तकारः क्रियते तथापि चर्त्वभूतस्याश्रयणात् सिद्धं तकारादित्वम् । अथवा द्वितकारकोयमादेशः । घेडिति । धात्वो निवृत्त्यर्थमुक्तम् । तस्य हि हितामित्येव स्यात् । गीतमिति । गै गाने । पीतम् । पा पाने । जातमित्यादि । जन जनने । षण दाने । खनु अवदारणे ।

---

१. Dropped $B_2$, $D_4$. २. तादेशे $D_2$. ३. °तीत्वे $B_2$. ४. Dropped $D_4$.

## अदो जग्धिर्ल्यप्ति किति ॥२।४।३६॥

अदो जग्धिः स्याल्ल्यपि तादौ किति च ॥ इकार इत् । धत्वम् । झरो झरि सवर्णे । जग्धः । आदिकर्मणि क्तः कर्तरि च । प्रकृतः कटं सः । प्रकृतः कटस्तेन । निष्ठायामण्यदर्थे । प्रक्षीणः सः ।

## वाक्रोशदैन्ययोः ॥६।४।६१॥

क्षियो निष्ठायां दीर्घो वा स्यात् आक्रोशे दैन्ये च गम्ये ॥ क्षीणायुर्भवान् क्षितायुर्वा । क्षीणोयं तपस्वी क्षितो वा । भावे दीर्घो वेति केचित् । प्रक्षितं प्रक्षीणं तेन ।

## निनदीभ्यां स्नातेः कौशले ॥८।३।८९॥

आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये ॥ निष्णातः शास्त्रेषु । नदीष्णः । सुपीति कः ।

---

अदः । इकार उच्चारणार्थः । तेन नुम् न । धत्वमिति । 'झषस्तथोर्धोधः' इति । प्रकृतः कटं स इति । कर्तुः क्तेनोक्तत्वात् कर्तरि प्रथमा । कर्मणि द्वितीया अनभिहितत्वात् । प्रकृतः कटस्तेनेति । कर्मणि क्तः । प्रक्षीणः स इति । 'आदिकर्मणि—' इति क्तः कर्तरि । [६] 'निष्ठायाम्—' इति दीर्घः । 'क्षियो दीर्घात्' इति नत्वम् ।

निनदी । कौशले किम् । निस्नातः । नद्यां स्नातो नदीस्नातः ।

---

१. दीर्घो वा स्यान्निष्ठायां $D_1$. २. $D_2$ drops it; P, $B_2$ has गम्ये च. ३. क्षीणायुर्भव क्षितायुर्वा $B_2$; क्षीणायुर्भव । क्षितायुर्भव । $N_1$. ४. $D_2$ drops it. ५. Before it—'निष्ठायाम्' इत्यनेन दीर्घः । PC, $Dc_3$. ६. निष्ठा...... दीर्घः dropped $Dc_3$, PC.

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥३।४।७२॥**

एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च ॥ गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितो विष्णुः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातोऽच्युतः । गरुडमारूढो गोविन्दः । विश्वमनुजीर्णोऽनन्तः । पक्षे प्राप्ता गङ्गा तेने स्यादि । शीङादेरकर्मकत्वेऽपि उपसृष्टस्य सकर्मकत्वात् पृथगुक्तिः ।

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥३।४।७६॥**

निश्चलार्थाद् गत्यर्थाद् भोजनार्थाच्चाधिकरणे क्तः स्याद् यथाप्राप्तं च ।

---

**गत्यर्थ** । **गत** इति । 'अनुदात्तोपदेश—' इति मलोपः । **ग्लान** इति । 'संयोगादेः—' इति नत्वम् । **शेषमित्यादि** । 'अधिशीङ्—' इत्याधारस्य कर्मत्वात् कर्मणि द्वितीया । **अधिष्ठित** इति । 'द्यतिस्यति—' इतीत्वम् । 'उपसर्गात् सुनोति—' इति षः । **उपोषित** इति । 'वसतिक्षुधोरिट्' । 'वचिस्वपि—' इति संप्रसारणम् । 'शासिवसि—' इति षः । **अनुजात** इति । 'जनसन—' इत्यात्वम् । **आरूढ** इति । 'हो ढः' । धत्वम् । ष्टुत्वम् । 'ढो ढे लोपः' । 'ढ्रलोप—' इति दीर्घः । **अनुजीर्ण** इति । जॄष ऋत इत् । 'हलि च' इति दीर्घः । 'रदाभ्याम्'— इति नत्वम् । णत्वम् । ननु श्लिषादीनामकर्मकत्वादेव कर्तरि स्यात् किमेषां ग्रहणेनेत्याशङ्क्याह—**शीङादेरिति** ।

**क्तोऽधि** । **यथाप्राप्तं चेति** । ध्रौव्यार्थेकर्मकत्वात् कर्तरि भावे च गत्यर्थेभ्यः कर्तरि कर्मणि भावे च प्रत्यवसानार्थेभ्यः कर्मणि भावे च क्तः स्यादित्यर्थः ।

---

१. म्लानः $D_2$, $B_2$. २. पक्षे च C. ३. ननु च $Dc_3$, PC.

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

भुक्तमेषामस्तीति मत्वर्थीयाकारेण भुक्ताः पीता इत्यादि स्यात् ।

**ञीतः क्तः ॥३।२।१८७॥**

ञीतो धातोर्वर्तमाने क्तः स्यात् ॥ ञिक्ष्विदा । क्ष्विण्णः । ञिइन्धी । इद्धः ।

**मतिबुद्धिपूजार्थेभ्यश्च ॥३।२।१८८॥**

एतदर्थेभ्यो वर्तमाने क्तः स्यात् ॥ राज्ञां मतः इष्टः बुद्धः विदितः । पूजितः । अर्चितः । चादनुक्तमपि ।

---

'मुकुन्दस्य' इत्यादि । आसितमित्यादौ सर्वत्राधिकरणे क्तः । 'अधिकरणवाचिनश्च' इति मुकुन्दस्येत्यादौ षष्ठी । **मत्वर्थीयाकारेणेति** । 'अर्शआदिभ्योच्' इत्यनेन । भावादावुदाहर्तव्यम् ।

**ञीतः** । **ञिक्ष्विदेति** । मोक्षस्नेहयोर्वर्तते । 'आदितश्च' इति नेट् ।

**मति** । मतिः संमतिः । बुद्धिर्ज्ञानम् । **राज्ञां मत इति** । 'क्तस्य च वर्तमाने' इति षष्ठी । **इष्ट इति** । इष इच्छायाम् ।

---

१. °मेतच्च कृष्णस्येत्यूचु° B₂, D₄. २. Before it—मतिरिच्छा । बुद्धिर्ज्ञानम् । पूजा सत्कारः । N₁. ३. कृष्टः C. ४. Dropped in C, D₁. °दनुक्तानामपि । B₂.

शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट इत्यपि ।[2] सुप्तः । शयितः । तृप्तः । इत्याद्या वर्तमाने ज्ञेयाः ।

**नपुंसके भावे क्तः ॥३।३।११४॥**

धातोः क्तः स्याद् भावेऽर्थे स च क्लीबे ॥ हसितं जल्पितं शयितं छात्रस्य ।

**लिटः कानज्वा ॥३।२।१०६॥**

लिटः कानजादेशो वा स्याच्छन्दसि । प्रयोगवशात् लोकेपीति केचित् । तङानावात्मनेपदम् । द्वित्वादि । चक्राणः ।

---

'तीषसह—' इति वेट्कत्वात् 'यस्य विभाषा' इतीण्निषेधः । **शीलित** इत्यादि । शील समाधौ । रक्ष पालने । क्षमूष् सहने । क्रुश आह्वाने रोदने च । जुषी प्रीतिसेवनयोः ।

नपुं । 'तयोरेव—' इत्येव भावे क्तः सिद्धः । नपुंसकविशेष-विहितेन ल्युटा बाधा मा भूदिति सूत्रारम्भः । **शयितं छात्रस्येति** । नपुंसके भावे क्तस्य योगे शेषविवक्षायां वेति षष्ठी ।

लिटः । चित्करणमन्तोदात्तार्थं कित्करणं कित्कार्यार्थम् । 'छन्दसि लिट्' अतो लिट्ग्रहणेनुवर्तमानेपि पुनर्लिट्ग्रहणं सर्वस्य लिट आदेशो यथा स्यादित्येवमर्थम् । अन्यथा तस्यैव स्यात् । **प्रयोगे**-ति । तथा **चामरसिंहे** कानचः प्रयोगः । 'शिश्विदानोकृष्णकर्मा' इति । **क्षीरस्वामिना** च व्याख्यातम् । श्विदि श्वैत्ये । लिट् । कान-जिति । **द्वित्वादी**ति । 'लिटि धातोः—' इति **द्वित्वम्** । आदिना अभ्यासकार्यं च । **चक्राण** इति । कृञः परोक्षे लिट् । तस्य कर्तृगे फले विवक्षिते कानच् । यणादेशः । 'द्विर्वचनेचि' इति द्वित्वे कर्तव्ये स्थानिवद्भावः । 'उरत्' इत्यत्वम् । 'कुहोश्चुः' ।

---

१. इत्यादि $D_2$; जुष्टः सुप्तः शयितः तृप्त इत्यपि इत्याद्या &c. $B_3$; इत्याद्या वर्तमाने ज्ञेयाः for इत्यपि । $D_4$ (*i. e.* सुप्तः to तृप्तः dropped $D_4$.)
२. After it—हृष्टश्चहर्षितश्चोभावभिव्याहृत इत्यपि । हृष्टतुष्टौ तथो-त्कुष्टस्तथोभौ संयतोद्यतौ ॥ N. ३. इत्यादयो C.

क्वसुश्च ॥३।२।१०७॥

लिटः क्वसुरादेशो वा स्यात् ॥ बेभज्वान्। जागर्विचीत्यत्र इकार उच्चारणार्थः । तेन क्वसावपि न गुणः । जजागृवान् । येषां नोच्चारणार्थस्तेषां क्वसौ गुणः । जजागर्वान् ।

वस्वेकाजाद्घसाम् ॥७।२।६७॥

कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषाम् ॥ आदिवान् । आरिवान् । ददिवान् । दरिद्रातेरशिति

---

क्वसुः । किर्त्वं संयोगान्तानां नलोपार्थमन्येषां तु 'असंयोगाल्लिट् कित्' इत्येव सिद्धत्वात् । ऋकारान्तानां क्किति प्राप्तगुणनिषेधार्थं च । उकारो नुमर्थो ङीबर्थश्च । योगविभागादुत्तरत्र क्वसोरेवानुवृत्तिः । बभज्वानिति । भञ्जो आमर्दने । द्वित्वादि । जाग्र इति । अत्र वृत्तिकारादिभिः पक्षद्वयं दर्शितम् । वीत्यत्र इकार उच्चारणार्थस्तेन वकारादौ क्वसावपि न गुणः । केषांचिन्नोच्चारणार्थस्तेषां क्वसौ गुणः ।

वस्वे । कृतद्विर्वचनानामेकाचामिति । कृतं द्वित्वं येषां ते तथा । द्वित्वे कृते ये एकाचस्तेषामित्यर्थः । क्रादिनियमात् प्रतिषेधाभावात् य इट् प्रसक्तः स नियम्यते । आदिवान् । आरिवानिति । अद भक्षणे । धात्वभ्यासयोरेकादेशे कृते कृतद्वित्वोयमेकाच् । ऋ गतौ । 'ऋच्छत्यृताम्' इति गुणत्वे धात्वभ्यासयोरेकादेशे कृते कृतद्वित्वोयमेकाच् । ददिवानिति । डुदाञ् दाने । अयं कृतद्वित्वोनेकाजित्यप्राप्त इट् आद्ग्रहणेन प्राप्यते । ननु चात्र लोपे कृते एकाजेवायं कृतद्वित्वस्तद् व्यर्थमाद्ग्रहणम् । मैवम् । इटि सति पश्चात् 'आतो लोप इटि च' इत्यातो लोपः । तस्मादनेकाजेव । दरिद्रातेस्त्वनेकाच्त्वादामा

---

१. चक्रवान् $D_2$, $D_4$; बभञ्ज्वानिति मौलः पाठः । चक्रवान् $B_2$. २. क्वसाव-पि $B_2$. ३. °रिडागमः $D_1$.

नित्याल्लोपित्वेनादन्तत्वाभावान्नेट् । ददरिद्वान् । जक्षिवान् । एषां किम् । बभूवान् । वसोः संप्रसारणम् । वुगागमः । बभूवुषः ।[1] बभूवुषी । वसुस्रंस्विति दः । बभूवत्[2] । वकारादौ क्किति च्छ्वोः शूठौ वेति केचित् । दुद्यूवान्[3] । दिदिवान् । दिदिवुषः । विविश्वान् । विविच्छ्वान् ।

**विभाषा गमहनविदविशाम् ॥७।२।६८॥**

एभ्यो वसोरिड् वा स्यात् ॥ जग्मिवान् । जगन्वान् ।

---

भाव्यं दरिद्रांचकृवानिति । केषांचिन्मतेन वाम् । तेषां मते यदाम् न तदा कथमित्याशङ्क्याह—दरिद्रातेरिति । जक्षिवानिति । घस्लृ अदने । ननु 'घसिभसोर्हलि च' इति उपधालोपे कृते कृतद्वित्वोयमेकाच् । तत् किमस्य ग्रहणेन । मैवम् । परत्वात् द्वित्वात् पूर्वमुपधालोपः स्यात् ततस्त्वनच्कत्वात् द्वित्वमेव न स्यात्[4] । इह हि घसिग्रहणादुपधालोपमपि परत्वादिडागमो बाधते । 'गमहन—' इति पश्चादुपधालोपः । स च द्वित्वे कर्तव्ये स्थानिवद् भवति । तेन जाक्षिवानिति स्यात् । बभूवुषीति । 'उगितश्च' इति ङीप् । बभूवदिति क्लीबे प्रथमैकवचनम् । दुद्यूवानिति । प्रथममूठ् पश्चाद् द्वित्वम् ।

**विभाषा** । 'वस्वेकाच्—' इति नियमाद् गमादीनां न स्यादिति विभाषेयमारभ्यते । **जग्मिवानिति** । परत्वादिट् ततो 'गमहन—' इत्युपधालोपः । ततो द्वित्वम् । **जगन्वानिति** । 'मो नो धातोः ।' 'म्वोश्च' इति नत्वम् ।

---

१. Before it—बभूवुषा D2, D4. २. बभूवद्भ्याम् D2, B2, D4. ३. दिद्यूवान् N1. ४. Dropped PC. ५. °दिडभावो Dc3, PC. ६. Before it—दिवु PC, Dc3.

जघ्निवान् । जघन्वान् । तौदादिकौ विदविशी । विविदिवान् । विविद्वान् । विविशिवान् । विविश्वान् । दृशेश्चेति वाच्यम् ॥*
ददृश्वान् । ददृशिवान् ।

**दाश्वान् साह्वान् मीढ्वांश्च ॥ ६।१।१२॥**

एते क्वस्वन्ता निपात्यन्ते ॥

---

जघ्निवानिति । 'अभ्यासाच्च' इति कुत्वम् । तौदादिकौ विदविशी इति । विशस्तौदादिकत्वात् तेन साहचर्यात् विदेरपि लाभार्थस्य तौदादिकस्यैव ग्रहणं न ज्ञानाद्यर्थस्येत्यर्थः । तेन ज्ञानाद्यर्थस्य विविद्वानित्येव स्यात् ।

दाश्वान् । छन्दसि भाषायां वाविशेषेण निपात्यते । दाश्वानिति । दाशृ दाने । अस्य क्वसावद्वित्वमनिट्त्वं च निपात्यते । एवं सर्वत्र निपात्यते । साह्वानिति । षह मर्षणे । अस्य परस्मैपदमुपधाया दीर्घश्च । मीढ्वानिति । मिह सेचने । अस्योपधादीर्घो ढश्च । 'क्वसुश्च' इत्यनेनैव व्याख्यातप्रायत्वादुपेक्षितं व्याख्यायते— 'भाषायां सदवसश्रुवः' ॥३।२।१०८॥ सदादिभ्यः क्वसुः स्याद् भाषायाम् । आदेशविधानाद् भूतमात्रे भाषायामपि लिडनुमीयते । उपसेदिवान् । अनूषिवान् । उपशुश्रुवान् । लुङ्लङ्लिड्विषयेपि पुरस्तादनुवृत्तेः क्वसुः स्यात् । पक्षे उपासदत् । उपासीदत् । उपससाद । अन्ववात्सीत् । अन्ववसत् । अनूवास । उपाश्रौषीत् । उपाशृणोत् । उपशुश्राव ।

---

१. °विशौ $B_2$. २. वक्तव्यम् $D_2$. ३. ददृशिवान् । ददृश्वान् । $N_1$. ४. सर्वत्रैते निपात्यन्ते PC, $Dc_3$. ५. °मुपधादीर्घश्च PC, $Dc_3$.

**उपेयिवाननाश्वाननूचानश्च ॥३।२।१०९॥**

एते निपात्यन्ते । नात्रोपसर्गस्तन्त्रम् ॥[1] समीयिवान् । ईयिवान् । जाग्रः कानचि गुणो वेति केचित् । जजाग्राणः । जजागराणः ।

**लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ॥३।२।१२४॥**

लटः स्थाने शतृशानचौ स्तः प्रथमया चेदेकार्थता न स्यात् ॥[3] शबादि । पचन्तं चैत्रं पश्य । पचता चैत्रेण कृतम् । तङानावित्यात्मनेपदसंज्ञा । कर्तृगे[4] फले शानच् ।

---

उपे । उपपूर्वादिणो लिटः क्वसुर्द्वित्वमभ्यासस्य दीर्घस्तत्सामर्थ्यात् सवर्णदीर्घाभावः। क्रादिनियमात् प्राप्तस्य 'वस्वेकाजाद् घसाम्' इति निषेधस्येटः प्रतिप्रसवो निपात्यतेनेन । अजादौ न । उपेयुषः । उपेयुषी । नात्रेति । उपेत्युपसर्गोत्र प्रधानं न । तेनोपसर्गान्तरादप्यनुपसर्गादपि भवति । वानुवृत्तेः पक्षे लुङादयोपि । उपागात् । उपैत् । उपेयाय । अश्नातेर्नञ्पूर्वात् क्वसुरिडभावश्च निपात्यते । अनाश्वान् । नाशीत् । नाश्नात् । नाश । अनुपूर्वाद्ब्रवेः कर्तरि कानच् निपात्यते । अनूचानः । अन्ववोचत् । अन्वब्रवीत् । अनूवाच ।

लटः। शकारः सार्वधातुकत्वार्थः। ऋकार उगित्त्वार्थः। चकारोन्तोदात्तार्थः । अप्रथमासमानाधिकरणे इति पर्युदासोयम् । प्रथमाया अन्या द्वितीयादिका विभक्तिरप्रथमा । तया चेदेकार्थता तस्येति । पचन्तामिति । डुपचष् पाके । 'उगिदचाम्—' इति नुम् ।

---

१. After it—सत्युपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव $B_2$; अन्योपसर्गपूर्वात् निरुपसर्गाच्च भवत्येव । N. २. केचित् dropped $D_4$. ३. अप्रथमया चेदेकार्थता तस्य P, N. ४. कर्तृफले $N_1$. ५. निपात्यते । तेनाजादौ $Dc_3$, PC.

आने मुक् ॥७।२।८२॥

आने परे अदन्ताङ्गस्य मुगागमः स्यात् ॥ पचमानं चैत्रं पश्य । पचमानेन चैत्रेण कृतम् । लेड्डुक्तेः प्रथमासमानाधिकरणेपि क्वचित् । सन् द्विजः ।

माङ्याक्रोशे ॥* मा पचन् । मा पचमानः । मा पचत्वित्यर्थः ।

---

आने । ननु चादन्ताङ्गस्य चेन्मुगुच्यते पचमान इत्यत्र 'ङिदुपदेशाल्लसार्वधातुकानुदात्तत्वं न प्राप्नोति । मुका व्यवहितत्वात् । अङ्गभक्तोयमङ्गस्यैवावयवत्वान्न व्यवधायकः । अकारस्य तु व्यवधायक एव । तथा च काशिकायामुक्तम्—'अङ्गस्यात इति । तथा चाकारमात्रभक्तोयं मुक् अदुपदेशग्रहणेन गृह्यत इत्यदुपदेशादिति लस्य सार्वधातुकमनुदात्तं भवति' इति । अतोङ्गस्यात इति वृत्त्या भाव्यं न त्वदन्ताङ्गस्येति । एवं मन्यते । स्वरविधौ व्यञ्जनमविद्यमानवदितीयं परिभाषास्ति । तेन मुकोविद्यमानत्वेन व्यवधानाभावात् स्यादेवानुदात्तत्वम् । काशिकाकारस्त्वियं परिभाषा नास्तीति मन्यमान उक्तवान् । लड्डुक्तेरिति । 'वर्तमाने लट्' इत्यतो लड्ग्रहणेनुवर्तमानेपि पुनर्लड्ग्रहणमर्थाधिक्यार्थम् । तेन प्रथमासमानाधिकरणेपि स्यादित्यर्थः । सन् द्विज इति । अस् भुवि । 'श्नसोः—' इत्यलोपः । माङीति । माङि उपपदे आक्रोशे गम्यमानेपि शतृ स्यात् । केचित् 'नन्वोर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्तयन्ति । सा च व्यवस्थितविभाषा । तेन कुर्वद्भक्तिः कुर्वाणभक्तिः कुर्वन्तर इत्यादौ नित्यम् । सन्नास्ति विद्यते विद्यमान इत्यादौ पाक्षिकौ । पचतितरामित्यादौ आमि कृते न स्तः ।

---

१. लडिति वर्तमाने पुनर्लडुक्तेः &c. $B_2$, $N_1$. २. P, $N_1$, and $D_1$ drop it. ३. °ल्लोपः $Dc_3$.

**संबोधने च ॥३।२।१२५॥**

हे[1] पचन् । हे पचमान ।

**लक्षणहेत्वोः क्रियायाः ॥३।२।१२६॥**

क्रियाया लक्षणे हेतौ चार्थे सतो धातोर्लटः शतृशानचौ स्तः । शयाना भुञ्जते ।[2] अर्जयन् वसति ।

**कृत्यचः ॥८।४।२९॥**

प्रपीयमाणः ।[3]

---

**संबो०** । प्रथमासमानाधिकरणार्थ एवारम्भः ।

**लक्षण०** । लक्ष्यते चिह्न्यते येन तल्लक्षणम् । जनको हेतुः । **सतो धातोरिति** । वर्तमानाद्धातोरित्यर्थः । **शयाना इति** । अत्र भुजिक्रियायाः शयनं लक्षणम् । **अर्जयन्निति** । अत्रार्जनं वासक्रियाहेतुः । लक्षणहेत्वोः किम् । पचति पठति च । क्रियाग्रहणात् द्रव्यगुणयोर्न । यः कम्पते सोऽश्वत्थः । यत् प्लवते तल्लघु । ननु वर्षतीति धावति हन्तीति पलायते अत्र शतृशानचौ किमिति न भवतः । इतिना कारणहेतुत्वस्य द्योतितत्वात् । व्यवस्थितविभाषानुवृत्तेर्वा । लक्षणहेत्वोरिति निर्देशः पूर्वनिपातस्य व्यभिचारे लिङ्गम् ।

**कृत्यचः** । इति णत्वम् । **प्रपीयमाण इति** । पा पाने । कर्मणि लट् । यक् । 'घुमास्था—' इतीत्वम् । मुक् ।

---

१. Before it—प्रथमा समानाधिकरणार्थोऽयमारम्भः $B_2$, $D_4$. २. After it—यवनाः $N_1$, $D_4$. ३. After it—सोमः $N_1$, $D_4$, $D_2$, $B_2$ ; लक्षणहेत्वोः किम् । पचति च पठति च । क्रियायाः किम् । द्रव्यगुणयोर्मा भूत् । यः कम्पते सोऽस्वस्थः । यत् प्लवते तल्लघु । लक्षणहेतुनिर्देशः पूर्वनिपातव्यभिचारलिङ्गम् । हन्तीति पलायते । वर्षतीति धावतीत्यादौ न । $C_1$, $B_2$ (सोऽश्वस्थः, पूर्वमिमीतव्यभिचार° $B_2$). ४. स्तः PC, $Dc_3$.

**ईदासः ॥७।२।८३॥**

आसः परस्य ईत् स्यात् ॥ आदेः परस्येत्यादेरेव । आसीनः ।

**विदेः शतुर्वसुः ॥७।१।३६॥**

वेत्तेः परस्य शतुर्वसुरादेशः स्याद्वा ॥ विदन् । विद्वान् । विदुषी ।

**तौ सत् ॥३।२।१२७॥**

तौ शतृशानचौ सत्संज्ञौ स्तः ॥

**लृटः सद्वा ॥३।३।१४॥**

लृटः सत्संज्ञावादेशौ स्तो वा ॥ व्यवस्थितविकल्पेनाप्रथ-

---

ईदासः । आस उपवेशने ।

विदेः । विद ज्ञाने । स्थानिवत्त्वादेव उगित्कार्ये सिद्धे वसो-रुकारकरणं 'वसोः संप्रसारणम्' इत्यत्र क्वसोरपि सामान्य-ग्रहणार्थम् । तेनैकानुबन्धग्रहणे न द्व्यनुबन्धकस्येत्येतन्न । तथा सत्युकारकरणमनर्थकं स्यात् । विदुषीति । 'उगितश्च' इति ङीप् । 'वसोः संप्रसारणम्' ।

तौ सत् । तौग्रहणं वर्तमानलक्षणोपाध्यसंसर्गात् शतृशानच्-मात्रस्य संज्ञा यथा स्यादित्येवमर्थम् । तेन ब्राह्मणस्य करिष्यन्नित्यत्र सत्संज्ञासद्भावात् 'पूरणगुण—' इति षष्ठीसमासनिषेधसिद्धिः स्यात् ।

लृटः । 'लृट् शेषे च' इत्यतो लृड्ग्रहणेनुवर्तमानेपि पुनर्लृड्-ग्रहणं स्थानिनिर्देशार्थम् । तेन सत्संज्ञयोः प्रत्ययान्तरत्वं न । अप्रथ-

---

१. परस्यानस्य $B_2$, $D_4$. २. °रादेशो वा स्यात् P, $D_2$, $B_2$, $N_1$. ३. वा स्तः $D_1$. ४. °स्येत्युत्वं न $Dc_1$. ५. °निषेधः सिद्धः स्यात् $Dc_3$, PC.

मैकार्थादिषु नित्यमन्यत्र वा[१]। करिष्यन्तम् । करिष्यमाणम् । हे करिष्यन् । अर्जयिष्यन् वसति । [२]प्रथमैकार्थत्वे । करिष्यति करिष्यन् ।

**पूङ्यजोः शानन् ॥३।२।१२८॥**

[३]आभ्यां शानन्प्रत्ययः स्यात् ॥ पवमानः । यजमानः ।

**ताच्छील्यवयोवचनशक्तिषु चानश् ॥३।२।१२९॥**

[४]एषु गम्येषु धातोश्चानश् स्यात् ॥ भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रुं निघ्नानः ।

---

**मैकार्थादिष्विति** । आदिशब्देन 'संबोधने च' 'लक्षणहेत्वोः क्रियायाः' इत्यस्मिन् विषये प्रत्ययोत्तरपदयोश्च । करिष्यतोपत्यं कारिष्यतः । कारिष्यमाणिः । करिष्यतो भक्तिः । करिष्यद्भक्तिः । करिष्यमाणभक्तिः ।

**पूङ्यजोः** । पूङ् पवने । यज देवपूजादौ । शानन् अयं यदि लादेशः स्यात् तदा पवते यजते इति तिङोपि श्रवणार्थं वेत्यानियम् । प्रत्ययत्वे वासरूपविधिना तिङपि स्यात् । अन्यच्च लादेशत्वे भावकर्मणोरपि स्यात् । कर्तरि चेष्यते । निघातोपि तास्यनुदात्तेदिति स्यात् । आत्मनेपदत्वं च स्यादित्येते दोषाः प्रसज्येरन्निति चेतसि कृत्वाह—**शानन् प्रत्ययः स्यादिति** । शकारः सार्वधातुकत्वार्थः । नकार आद्युदात्तार्थः ।

**ताच्छील्य** । ताच्छील्यं तत्स्वभावता । वयः शरीरावस्था यौवनादिः । शक्तिः सामर्थ्यम् । **भोगमित्यादि** । ताच्छील्ये । **कवचमिति** । वयसि । **शत्रुमिति** । शक्तौ ।

---

१. विकल्पः $D_2$, $B_2$, $D_4$. २. Before it सति $D_4$. ३. पूङ्यजोः $D_1$. ४. एतेषु C.

**इङ्धार्योः शत्रकृच्छ्रिणि ॥३।२।१३०॥**

आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि ॥ अधीयन् । धारयन् ।

**द्विषोऽमित्रे ॥३।२।१३१॥**

द्विषन् ।

**अर्हः प्रशंसायाम् ॥३।२।१३३॥**

अर्हन् ।

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥३।२।१३४॥**

इतः परं क्विपमभिव्याप्य ये प्रत्ययास्ते तच्छीलादिषु ज्ञेयाः ।

---

इङ् । अकृच्छ्रः सुखसाध्यो धात्वर्थः । स विद्यते यस्य सोकृच्छ्री । तस्मिन् कर्तरीत्यर्थः । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते धारयति च ।

द्विषः । अमित्रः शत्रुः । अमित्रे किम् । पतिं द्वेष्टि । [1]स्पष्टत्वादुपेक्षितं व्याख्यायते—[2]'सुञो यज्ञसंयोगे' ।३।२।१३२॥ यज्ञेन संयोगो यज्ञसंयोगः । [3]यज्ञयुक्ते अभिषवे वर्तमानात् सुनोतेः शतृ स्यात् । सुन्वन्तो यजमानाः । संयोगग्रहणं प्रधानप्रतिपत्त्यर्थम् । याजकेषु मा भूत् । यज्ञसं[4]योगे किम् । सुनोति इक्षुम् ।

अर्हः । प्रशंसा स्तुतिः । प्रशंसायां किम् । अर्हति [5]चौरो वधम् ।

आक्वेः । 'भ्राजभास—' इति क्विपं च वक्ष्यति । तदन्तोयमर्थाधिकारः ।

---

१. After it—अमित्रे इति किम् । भार्या पतिं द्वेष्टि । $D_2$, $D_4$, $B_2$ (द्वेष्टि पतिं भार्या $B_2$, $D_4$.) २. The Sûtra 'सुञो &c.' precedes this $Dc_3$, PC. ३. यज्ञसंयोगे $Dc_3$; यज्ञसंयुक्ते PC. ४. योगे $Dc_1$, इक्षून् $Dc_3$, PC. ५. चौरो PC.

तृन् ॥३।२।१३५॥

धातोस्तृन् स्यात्तच्छीलादिषु ॥ कर्ता कटान् ।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यप-
त्रपवृतुवृधुसहचर इष्णुच् ॥३।२।१३६॥

एभ्य इष्णुच् स्यात् तच्छीलादौ ॥ अलंकरिष्णुः ।

---

तृन् । नकार आद्युदात्तार्थः । कर्ता कटानिति । ताच्छील्ये । 'न लोक—' इति षष्ठीनिषेधः । तद्धर्मणि वधूमूढां मुण्डयितारः श्राविष्टायनाः । तत्साधुकारिणि वसित्रीव वसनमङ्क्ता । तृन्-विधावृत्विक्षु चानुपसर्गस्य । अताच्छील्यार्थं वक्तव्यम् । होता । पोता । अनुपसर्गस्य किम् । उद्गाता । तृजेव । तृच् अन्तोदात्तं तृन् आद्युदात्तं पदमिति विशेषः । नयतेः षुक् च । तृनि कृते गुणो वक्तव्यः । नेष्टा । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च । त्वष्टा । क्षदेश्च नियुक्ते । क्षत्ता । उणादिनिपातनाद्वा होत्रादिसिद्धिः ।

अलम् । अलंपूर्वः करोतिः निराङ्पूर्वश्च । जनी प्रादुर्भावे प्रपूर्वः । पच व्यक्तीकरणे । पत्लृ पथे गतौ च । मदिमन्ये पठन्ति । मद तृप्तिशोभने । एते उत्पूर्वाः । रुच दीप्तौ । त्रपूष् लज्जाया-मपपूर्वः । वृतु वर्तने । वृधु वृद्धौ । षह मर्षणे । चर गतौ । तृनो-पवादोयम् ।

'निराकरिष्णू वर्तिष्णू वर्धिष्णू परितोषणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥'

प्रजनिष्णुः । उत्पचिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः

---

१. वस्त्र° $Dc_3$, PC. २. त्वनि $Dc_3$, PC. ३. गुणे $Dc_3$, PC. ४. From त्विषे°...to त्वष्टा dropped $Dc_1$. ५. च गतौ $Dc_3$, PC.

[1]चरिष्णुः इत्यादि । ता[2]च्छीलिकेषु वासरूपन्यायो न । तेन अलंकर्तीति न ।

**णेश्छन्दसि ॥३।२।१३७॥**

ण्यन्तादिष्णुच् स्याच्छन्दसि । लोकेपीति केचित् ॥ कारयिष्णुः ।

**भुवश्च ॥३।२।१३८॥**

भविष्णुः । [3]चादनुक्तेपि । भ्राजिष्णुः ।

**ग्लाजिस्थश्च ग्स्नुः ॥३।२।१३९॥**

एभ्यो ग्स्नुः स्यात्त[4]च्छीलादौ । चाद्भुवश्च ॥ ग्लास्नुः । गित्वान्न गुणः ।[5] जिष्णुः । स्था[6]स्नुः । श्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः ।

---

इत्यादिशब्दात् । ताच्छीलिकेष्विति । 'निन्दहिंस—' इत्यादिसूत्रेण वुञ्विधानं ताच्छीलिकेषु वासरूपन्यायाभावज्ञापकमिति भावः ।

णेः । कारयिष्णुरिति । हेतुमण्णिच् । 'अयामन्त—' इत्ययादेशः ।

भुवः । योगविभाग उत्तरत्र भवतेरेवानुकर्षणार्थः ।

ग्लाजि । अयं च गित् इति केषांचित् पक्षः । किदित्यन्येषाम् । तत्र पूर्वः पक्षः आचार्याणामभिप्रेतः । तथोक्तं वार्तिके ।

'ग्स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्त्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्युकोनिट्त्वं गकोरितोः ॥'

येष कित् तेर्गकारप्रश्लेषो न कार्यस्त्रिषु । स्थ इत्यत्र आकारप्रश्लेषः कार्यः 'घुमास्था—' इतीत्वप्रतिषेधार्थम् ।

---

१. निराकरिष्णुः $D_2$, $D_4$, $B_2$. २. ताच्छीलादिषु C. ३. चादनुक्तादपि C; चादनुक्तमपि $D_1$. ४. ताच्छील्यादौ $D_1$, $N_1$; शीलादौ C. ५. Before it—गित्वात्तिष्ठतेरीत्त्वं न $D_2$, $B_2$, $D_4$. ६. Dropped $B_2$.

## त्रसिगृधिधृषिक्षिपेः क्नुः ॥३।२।१४०॥

एभ्यः क्नुः स्यादुक्तेऽर्थे ॥[1] त्रस्नुः इत्यादि । म्लाक्षिपचूपरिमृजः स्नुरिति केचित् । म्लास्नुः । क्षेष्णुः । पक्ष्णुः । परिमार्क्ष्णुः ।

---

त्रसि । त्रसी उद्वेगे । गृधु अभिकाङ्क्षायाम् । ञिधृषा प्रागल्भ्ये । क्षिप प्रेरणे । त्रस्नुरिति । 'नेड्वशि—' इतीण्निषेधः । आदिना गृध्नुः । धृष्णुः । क्षिप्नुः । म्लेति । म्लै कान्तिसंक्षये । क्षि क्षये । डुपचष् पाके । मृजूष् शुद्धौ । परिपूर्वः । परिमार्क्ष्णुरिति । मृजेर्वृद्धिः । स्पष्टत्वादुपेक्षितं सूत्रसप्तकं व्याख्यायते—' शमित्यष्टाभ्यो घिनुण् ' ॥३।२।१४१॥ शमादिभ्योऽष्टाभ्यो घिनुण् प्रत्ययः स्यात् । शमुदमु उपशमे । शमी । दमी । तमु काङ्क्षायाम् । तमी । श्रमु तपसि खेदे च । श्रमी । भ्रमु अनवस्थाने । भ्रमी । क्षमूष् सहने । क्षमी । क्लम ग्लानौ । क्लमी । मदी हर्षे । उन्मादी । प्रमादी । अष्टाभ्यः किम् । असिता ।[2] तृन्नेव स्यात् । घः कुत्वार्थः । उकार उच्चारणार्थः । अनुबन्धत्वे हि उगित्वान्नुमादिप्रसङ्गः । ' संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ' ॥३।२।१४२॥ एभ्यस्तच्छीलादौ घिनुण् स्यात् । पृची संपर्के । रुधादिः । संपर्की । ' चजोः—' इति कुत्वम् । अदादिकस्य संपर्चितेत्येव[4] । रुधिर् । अनुरोधी । यमु । आयामी । यसु । आयासी । सृ । परिसारी । सृज । संसर्गी । देवृ देवने । भ्वादिः । परिदेवी । संज्वर । संज्वारी[5] । क्षिप प्रेरणे । दिवादिस्तुदादिश्च । परिक्षेपी । रट । परिराटी । वद । परिवादी । दह । परिदाही । मुह ।

---

१. Before it—नेड्वशीति नेट् $N_1$. २. After it असु क्षेपणे PC, $Dc_3$. ३. Dropped PC, $Dc_3$. ४. संपर्किते° $Dc_1$. ५. संज्वरी PC, $Dc_3$.

परिमोही । दुष । दोषी । द्विष । द्वेषी । द्रुह । द्रोही । दुह । दोही । युज समाधौ । युजिर् योगे । योगी । क्रीड । आक्रीडी । विचिर् । विवेकी । त्यज । त्यागी । रञ्ज । रागी । निपातनादनुनासिकलोपः । भज । भागी । चर । अतिचारी । अपचारी । मुष । आमोषी । अभ्याहन । अभ्याघाती । 'वौ कषलसकत्थस्रम्भः' ॥३।२।१४३॥ एभ्यो व्युपपदे घिनुण् । कष हिंसायाम् । विकाषी । लस श्लेषणक्रीडनयोः । विलासी । कत्थ श्लाघायाम् । विकत्थी । स्रंभु विश्वासे । विस्रम्भी । 'अपे च लषः ।' ३।२।१४४॥ लष कान्तौ । अस्मादपे वौ चोपपदे घिनुण् । अपलाषी । विलाषी । 'प्रे लपसृद्रुमथवदवसः ।' ३।२।१४५॥ एभ्यः प्र उपपदे घिनुण् । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । मन्थ विलोडने । निपातनात् न्लोपः । प्रवादी । प्रवासी । वस निवासे । नाच्छादनार्थः । तस्य लुग्विकरणत्वात् । 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ।' ३।२।१४६ ॥ एभ्यो वुञ् स्यात् तच्छीलादौ । णिदि । निन्दकः । हिसि । हिंसकः । क्लिश उपतापे । क्लिशू विबाधे । क्लेशकः । खाद । खादकः । णश । विपूर्वः हेतुमण्णिजन्तः । विनाशकः । क्षिप । परिक्षेपकः । रट । परिराटकः । वदिर्हेतुमण्ण्यन्तः । परिवादकः । भाष । व्याभाषकः । असूय । कण्ड्वादिषु यगन्तः । कण्ड्वादौ हि असूञ् इति पठ्यते । असूयकः । ण्वुलासिद्धे वुञ्विधिर्ज्ञापको न तच्छीलादिषु वासरूपविधिरिति । 'देविक्रुशोश्चोपसर्गे' । ३।२।१४७॥ दिवेर्ण्यन्तात् क्रुशेश्चोपसर्गे उपपदे वुञ् स्यात् । परिदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा ।

१. हन । PC, $Dc_3$. २. असूञ् $Dc_1$.

**चलनशब्दार्थादकर्मकाद्युच् ॥३।२।१४८॥**

चलनार्थाच्छब्दार्थादकर्मकाद्युच् स्यात्तच्छीलादिषु कर्तृषु ॥ चलनः । कम्पनः । शब्दनः । रवणः । अकर्मकात् किम् । पठिता विद्याम् ।

**अनुदात्तेतश्च हलादेः ॥३।२।१४९॥**

हलादेरनुदात्तेतो युच् स्यात् ॥ वर्तनः ।

---

चलन । चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः । शब्दः श्रोत्रविषयोऽर्थः । चलनः । चल कम्पने । कम्पनः । कपि चलने । शब्दनः । शब्द शब्दे आविष्करणे च । रवणः । रु शब्दे । पठितेति । तृन् ।

अनु । वर्तनः । वृतु वर्तने । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । ननु सर्वोऽनुदात्तेत् हलन्त एवेति हल्ग्रहणस्य व्यावर्त्याभावात् हल्ग्रहणादेव हलादेरित्यर्थसिद्धौ आदिग्रहणं गुपादेः सन्नन्तस्याजन्तस्य 'पूर्ववत् सनः' इति निमित्तातिदेशेनानुदात्तेतो व्यावृत्तिर्मा भूदित्येवमर्थम् । एतच्च 'अतो लोपः' 'आर्धधातुके' परसप्तमीयमिति पक्षस्य ज्ञापकम् । जुगुप्सनः । अकर्मकादेव । वसिता वस्त्रम् । स्पष्टत्वादुपेक्षितं सूत्रचतुष्टयं व्याख्यायते—'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः' ॥३।२।१५०॥ एभ्यो युच् स्यात् । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः । चलनार्थानां पदेऽोक्तिः सकर्मकार्था । 'क्रुधमण्डार्थेभ्यश्च' ॥३।२।१५१॥ क्रोधार्थेभ्यो भूषणार्थेभ्यश्च युच् तच्छीलादौ । तृनोपवादः । क्रोधनः । मण्डनः । 'न यः' ॥३।२।१५२॥ यकारान्ताद्धातोर्युच् न । क्नूयिता ।

---

१.° चाकर्मकात् $D_2$; $D_1$ drops अकर्मकात्; $N_1$ has अकर्मकात् in the beginning of the Vritti. २. प्रत्ययः स्यात् C. ३. After it—उक्तेर्थे $D_1$. ४. शब्दने PC. ५. वैर्व्यावृत्तिसि $Dc_3$.

**लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्**
**॥३।२।१५४॥**

एभ्य उकञ् स्यादुक्तेऽर्थे ॥ लाषुकः । पातुकः । स्थायुकः । घातुकः । शारुकः । इत्यादि ।

**जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥३।२।१५५॥**

एभ्यः षाकन् स्यादुक्तेऽर्थे ॥ जल्पाकः । जल्पाकी । वराकः । वराकी । इत्यादि ।

---

क्ष्मायिता । 'सूददीपदीक्षश्च' ॥३।२।१५३॥ षूद भक्षणे । दीपी दीप्तौ । दीक्ष मौण्ड्ये । इत्येतेभ्यो युच् न । सूदिता । दीपिता । दीक्षिता । दीपेर्युचो रेण विशेषविहितेन बाधितस्यापि निषेधो ज्ञापकस्ताच्छीलिकेष्वपि क्वचिद्वासरूपविधिरस्तीत्यस्य । तथा च युज्रयोः समावेशो दृश्यते । कम्रा युवतिः । कमना युवतिः । कथं मधुसूदनः । अनित्योऽयं निषेध इति योगविभागात् ज्ञायते । अथवा नन्द्यादिषु मधुसूदनादयो द्रष्टव्याः ।

लष । स्थायुक इति । 'आतो युक् चिण्कृतोः ।' घातुक इति । 'हो हन्तेः—' इति कुत्वम् । 'हनस्तो चिण्णलोः ।' आदिशब्दात् । पादुकः । भावुकः । वर्षुकः । कामुकः । गामुकः । तच्छीलादौ समावेशः क्वाप्यस्ति इत्यपालाषी पतनः पदनः स्थास्नुः कम्प्र इति घिनुणादयोऽपि ।

जल्पभिक्षकुट्ट । जल्पाकीति । 'षिद्गौर—' इति ङीष् । कुट्ट छेदने । लुण्ट स्तेये । चौरादिकः । आदिना भिक्षाकः । कुट्टाकः । लुण्टाकः । जल्पेः 'चलनशब्दार्थ—' इति भिक्षेः 'अनुदात्तेतश्च—' इति युचः प्राप्तौ कुट्टलुण्टाभ्यां 'णेश्छन्दसि' इतीष्णुचः वृङः

---

१. Before it—भावुकः । कर्षुकः । $D_4$. २. Before it—कामुकः । गमुकः । C. ३. षाकन् $D_4$. ४. षाकञ् $D_4$. ५. $D_2$ drops it. ६. वर्षुकः PC. ७. समावेशोऽपि PC, $Dc_3$. ८. कम्र PC.

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥३।२।१५८॥**

एभ्य आलुच् स्यादुक्तेर्थे ॥ स्पृहयालुः । गृह ग्रहणे । गृहयालुः । पतयालुः । एते त्रयश्चुरादावदन्ताः । दयालुः । निपूर्वो द्रातिः । निद्रालुः । तत्पूर्वो द्रा तदो नान्तता निपात्यते । तन्द्रालुः । श्रद्धालुः । शीङो वाच्यः ॥ शयालुः ।

**दाधेट्सिशदसदो रुः ॥३।२।१५९॥**

एभ्यो रुः स्यादुक्तेर्थे ॥ दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ॥

---

'आदृगम—' इति किकिनोः प्राप्तौ षाकन् । व्याख्यातप्रायत्वादुपेक्षितं सूत्रद्वयं व्याख्यायते । 'प्रजोरिनिः' ॥३।२।१५६॥ प्रपूर्वाज्जवतेरिनिः स्यात् । प्रजवी । 'जुचङ्क्रम्य—' इति युचि प्राप्ते । 'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च' ॥३।२।१५७॥ एभ्य इनिः स्यात् । जि । जयी । दृङ् आदरे । दरी । क्षि । क्षयी । श्रिञ् । विश्रयी । इण् । अत्ययी । टुवमु । वमी । व्यथ भयचलनयोः । अव्यथी । अम रोगे । अभ्यमी । भू । परिभवी । षू प्रेरणे । न षूङ्[1] । तस्य सानुबन्धकत्वात् । प्रसवी ।

**स्पृहिगृहि** । स्पृहि ईप्सायाम् । गृह ग्रहे । पत गतौ । दय दानगतिहिंसादानेषु । द्रा कुत्सायां गतौ । डुधाञ् श्रत्पूर्वः । **एते त्रय इति** । अदन्तत्वे सति अल्लोपस्य स्थानिवत्त्वाद् गुणवृद्धी नेति भावः

**दाधेट्** । दाञ् दाने । दो अवखण्डने । देङ् रक्षणे । धेट् पाने । षिञ् बन्धने । शद्लृ शातने । षद्लृ विशरणगत्यवसादनेषु । 'न लोक—' इत्युकारान्तप्रत्ययप्रयोगे षष्ठीनिषेधः । तेन धारुर्वत्सो मातरमिति सिध्यति ।

---

१. न तु PC.

**सृघस्यदः क्मरच् ॥३।२।१६०॥**

एभ्यः क्मरच् स्यादुक्तेर्थे ॥ सृमरः । घस्मरः । अद्मरः ॥

**भञ्जभासमिदो घुरच् ॥३।२।१६१॥**

एभ्यो घुरच् स्यात् ॥ भञ्जेः कर्मकर्तरि । घित्वात् कुत्वम् । भङ्गुरः । भासुरः । मेदुरः ।

**विदिभिदिच्छिदेः कुरच् ॥३।२।१६२॥**

एभ्यः कुरच् स्यात् ॥ वेत्तेरत्र ग्रहणम् । विदुरः । भिदिच्छिदोः कर्मकर्तरि । भिदुरः । छिदुरः ।[1]

---

**सृघ** । सृ गतौ । घसिः प्रकृत्यन्तरम् । परिसारी । प्रसारी । 'संपृच—' 'प्रे लप—' इति सूत्रसामर्थ्याद् घिनुण् च ।

**भञ्ज** । भञ्जो आमर्दने । भासृ दीप्तौ । ञिमिदा स्नेहने । भञ्जेरिति । तथोक्तं पाणिनीयमतदर्पणे—

'कर्मकर्तरिमेवास्मादभिधत्ते स्वभावतः ।

न कर्ममात्रमित्येष प्रत्ययः कर्मकर्तरि ॥' इति ।

भज्यते स्वयमेव । तथा भट्टिः—

'सृमरो भङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ।' इति ।

**विदि** । वेत्तेरिति । ज्ञानार्थस्येत्यर्थः । एतच्चाभिधानसामर्थ्यात् ।

---

१. भिदुरा । छिदुरा । $D_1$; भिदुरं काष्ठम् । छिदुरम् $D_2$. २. After it—ब्यधेः संप्रसारणं घुरच् । विधुरः । $B_2$.

**इण्नशजिसर्तिभ्यः क्वरप् ॥३।२।१६३॥**

एभ्यः क्वरप् स्यादुक्तेऽर्थे ॥ पित्त्वात्तुक् । इत्वरः । नश्वरः । जित्वरः । सृत्वरः । सृत्वरी ।

**गत्वरश्च ॥३।२।१६४॥**

अयं निपात्यते ॥ गत्वरी ।

**जागुरूकः ॥३।२।१६५॥**

जागर्तेरूकः स्यात् ॥ जागरूकः ।

**यजजपदशां यङः ॥३।२।१६६॥**

एभ्यो यङन्तेभ्य ऊकः स्यात् ॥ यस्य हलः । यायजूकः । जञ्जपूकः । दंदशूकः ॥ वदेश्च ॥* वावदूकः ।

**नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥३।२।१६७॥**

एभ्यो रः स्यात् ॥ नम्रः । कम्प्रः । स्मेरः । जसु मोक्षणे । नञ्पूर्वः । अजस्रम् । सततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ।

---

**इण्न** । पित्त्वात्तुगिति । 'ह्रस्वस्य पिति—' इति । **सृत्वरीति** । 'टिड्ढाणञ्—' इति ङीप् ।

**गत्वरः** । गमेः । **गत्वरीति** । पूर्ववत् ङीप् ।

**जागुः** । वासरूपविधेस्तृन्नपि ।

**यज** । 'यस्य हलः' इति । यलोपः । **यायजूक इति** । यजेर्यङ् । 'दीर्घोऽकितः' इति दीर्घः । 'अतो लोपः ।' **जञ्जपूक इति** । 'जपजभ—' इत्यभ्यासस्य नुक् ।

**नमि** । णम प्रह्वत्वे शब्दे च । कपि चलने । स्मिङ् ईषद्धसने । कमु कान्तौ । हिंस हिंसायाम् । दीपी दीप्तौ । कम्पेश्चलनार्थात् कम्पिदीपिभ्यां चानुदात्तेत्त्वाद्युचि प्राप्ते रः ।

---

१. सृत्वरी $D_1$. N. २. जस् $D_2$.

## सनाशंसभिक्ष उः ॥३।२।१६८॥

सन्नन्तादाशंसिभिक्षिभ्यां च उः स्यात् ॥ रिरंसुः । आशंसेरिच्छार्थस्य ग्रहणम् । आशंसुः । भिक्षुः ।

## विन्दुरिच्छुः ॥३।२।१६९॥

एतौ निपात्यौ । वेदनशीलो विन्दुः । एषणशील इच्छुः । भाषायां धाञ्कृसृजनिनामिगामिभ्यः किकिनौ वाच्यौ ॥* तौ च लिड्वत् । द्वित्वादि । दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमिः । जग्मिः । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वाच्यौ ॥* सासहिः । वावहिः । चाचलिः । पापतिः ।

## स्वपितृषोर्नजिङ् ॥३।२।१७२॥

आभ्यां नजिङ् स्यादुक्तेऽर्थे ॥ स्वप्नक् । तृष्णक् । तृष्णजौ । धृषोपीति केचित् । धृष्णक् ।

---

**सना** । अत्र सन् प्रत्ययो न धातुरित्याह—**सन्नन्ता**दिति । **आशंसे**रिति । एतदाङा सह निर्देशात् ज्ञायते । इच्छार्थो हि तेन सह पठ्यते । आशंसेः भिक्षेश्च 'अनुदात्तेतश्च—' इति युचि प्राप्ते ।

**विन्दु** । विदेर्ज्ञानार्थस्य इषेरिच्छार्थस्य निपातः । **भाषायाम्** । **दधि**रिति । आतो लोपः । **चक्रिः** । यणादेशः । **जज्ञि**रिति । 'गमहन—' इत्युपधालोपः । 'स्तोश्चुना श्चुः' इति चुत्वम् । जञोर्ज्ञः । **नेमि**रिति । 'अत एकहल्मध्येनादेशा—'इत्येत्वाभ्यासलोपौ । **सहि**त्यादि । भाषायामिति वर्तते । **सासहि**रिति । यङ् । आकारयकारलोपौ ।

**स्वपि** । ङकारस्तृषेर्गुणनिषेधार्थः । इकार उच्चारणार्थः ।

---

१. °रिच्छार्थग्रहणम् C. २. स्तोश्चुना...ज्ञः—Dropped Dc3, PC.

**शॄवन्द्योरारुः ॥३।२।१७३॥**

आभ्यामारुः स्यात् ॥ शरारुः । वन्दारुः ।

**भियः क्रुक्लुकनौ ॥३।२।१७४॥**

भीरुः । भीलुकः । क्रुकन्नपि वाच्यः ॥* भीरुकः ।

**स्थेशभासपिसकसो वरच् ॥३।२।१७५॥**

एभ्यो वरच् स्यात् ॥ स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः । प्रमद्वरोपीति केचित् ।

**यश्च यङः ॥३।२।१७६॥**

यातेर्यङन्ताद्वरच् स्यात् ॥ अतो लोपः । तस्य न पदान्तेति यलोपं प्रति स्थानिवत्त्वाभावात् लोपोव्योर्वलीति यलोपः । पुनर्यङोकारलोपस्य स्थानिवत्त्वादातो लोपे प्राप्ते न पदान्तेति वरचि यङ्वर्णनिमित्त आतो लोपो न । यायावरः ।

---

शॄ । शॄ हिंसायाम् । वदि अभिवादनस्तुत्योः ।

भियः । ञिभी भये ।

स्थेश । ष्ठा गतिनिवृत्तौ । ईश ऐश्वर्ये । भासृ दीप्तौ । पिसृ गतौ । कस गतौ । ईश्वर इति । 'नेड्वशि—' इतीडभावः ।

यश्च । या प्रापणे । अस्माद्यङ् । द्वित्वम् । यायाय वर इति स्थिते 'अतो लोपः' इति यङकारलोपः । यलोप इति । यङः । पुनरित्यादि । 'अचः परस्मिन्—' इति यङकारस्य स्थानिवत्त्वात् 'आतो लोप इटि च' इत्यालोपे प्राप्ते 'न पदान्त—' इति सूत्रेण वरे योजादेशस्तस्य स्थानिवद्भावनिषेधात् यङो योकारस्तन्निमित्त आकारलोपो न स्यादित्यर्थः ।

---

१. भास्वरः । पेस्वरः । $D_4$. २. Before it--लोपो व्योर्वलि । न पदान्तेत्यनेन वरचि अतो लोपस्य स्थानिवत्त्वाभावात् आतो लोपो न । यायावरः । $D_4$. ३. लोपः P. ४. After it—अतो लोपस्य स्थानिवत्त्वाभावात् $N_1$. ५. अकार° $Dc_1$.

**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥३।२।१७७॥**

एभ्यस्तच्छीलादौ क्विप् स्यात् ॥ विभ्राट् । भाः । धूः । विद्युत् । ऊर्क् । पूः । जवतेर्दीर्घश्च । जूः । ग्रावस्तुत् ।

**अन्येभ्योऽपि दृश्यते ॥३।२।१७८॥**

अन्येभ्योऽपि[1] क्विप् दृश्यते तच्छीलादौ ॥ भित् । छित् । क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ॥* वक्त्यनया[2] वाक् । पृच्छति[3] प्राट् । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । जवति जूः । श्रयन्त्येतां[4] श्रीः ।

---

**भ्राज** । भ्राजृ भासृ दीप्तौ । धुर्वी हिंसायाम् । द्युत दीप्तौ । ऊर्ज बलप्राणनयोः । पॄ पालनपूरणयोः । जुः सौत्रो गतौ । ष्टुञ् स्तुतौ । **विभ्राडिति** । 'व्रश्च—' इति षः । जश्त्वचर्त्वे । **धूरिति** । 'राल्लोपः' इति वलोपः । 'र्वोरुपधायाः —' इति दीर्घः । **पूरिति** । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । पूर्ववद्दीर्घः । ग्रावाणं स्तौतीति ग्रावस्तुत् । 'ह्रस्वस्य—' इति तुक् । उत्तरसूत्रस्यायं प्रपञ्चः ।

**अन्ये** । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद् द्वित्वम् । क्वचिदसंप्रसारणम् । तथा च **भाष्यकारोक्तमनुवदति** । **क्विब् वची-त्यादि** । **पृच्छति प्राट्** इति । प्रच्छेः 'च्छ्वोः शूठ्—' इति शः । व्रश्चादिना षः । प्राशौ प्राशः इत्यादि ज्ञेयम् । शेषं सोदाहरणं स्पष्टम् ।

---

१. From अन्ये° to दृश्यते dropped $D_4$. २. उच्यतेनया C. ३. पृच्छत्यनया प्राट् $D_1$. ४. श्रयत्येतां $B_2$.

द्युतिगमिजुहोतीनां द्वे च ॥* द्योतते दिद्युत् । गच्छति जगत् । जुहोतेर्दीर्घश्च ॥* जुहोत्यनया जुहूः । ध्यायतेः संप्रसारणं च ॥* धीः । दॄ भये अस्य ह्रस्वद्वित्वे च । दीर्यति दद्दत् ॥ स्रुद्रु[1]परिव्रजां दीर्घश्चेति केचित् । स्रवति स्रूः । द्रवति द्रूः । परिव्र[2]जति परिव्राट् । दृशिग्रहणात् मित्रं ह्वयति मित्रह्वूः । वयति ऊः । आप्यायते आपीः । इत्यादि ।

## भुवः संज्ञान्तरयोः ॥३।२।१७९॥

भुवः क्विप् स्यात् संज्ञायामन्तरे च ॥ मित्रभूः । धनिकाधमर्णयोरन्तरेऽस्तीति प्रतिभूः ।

## विप्रसंभ्यो[3] ड्वसंज्ञायाम् ॥३।२।१८०॥

एभ्यः पराद्भुवो डुः स्यान्न तु संज्ञायाम् ॥ विभुः[4] । प्रभुः । संभुः । मितद्र्वादिश्च ॥* मितद्रुः । शंभुः[5] । स्वयंभुः ।

---

भुवः । अन्तरशब्दो न ग्रामाद्यन्तरवचनः । किं तूत्तमर्णाधमर्णयोरन्तरे तिष्ठति[6] यः स एव । शब्दशक्तिस्वाभाव्यादित्याह—धनिकेति । ननु संज्ञायामित्येव वक्तव्यम् । किमन्तरग्रहणेन । न । यावद्द्रव्यभाविनी हि संज्ञा प्रतिभूशब्दः पुरुषे कादाचित्क इति ।

विप्र । असंज्ञायां किम् । विभूर्नाम कश्चित् । स्पष्टत्वादुपेक्षितम्[7]—'धः कर्मणि ष्ट्रन्' ॥३।२।१८१॥ धेटो धाञो वा कर्मणि प्रत्ययार्थे ष्ट्रन् स्यात् । धयति तां धात्री उपमाता । दधति[8] तां भेषजार्थमिति धात्री आमलकी ।

---

१. स्रुत $D_2$. २. व्रजतीति N. ३. शंभ्यो $B_2$. ४. विभुः । शंभुः । विभुनमि कश्चित् $B_2$. ५. Dropped $B_2$. ६. यस्तिष्ठति स एव PC, $Dc_3$. ७. स्पष्टः...क्षितम् given after the Sûtra PC, $Dc_3$. ८. दधत्ते $Dc_3$.

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥३।२।१८२॥

दाबादेष्ट्रन् स्यात् करणेऽर्थे[1] ॥ दात्यनेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ।

## अर्तिलूधूसूखनसहचर इत्रः ॥३।२।१८४॥

एभ्यः करणे[2] इत्रः स्यात् ॥ अरित्रम् । लवित्रम्[3] । इत्यादि ।

---

दाप् । दाप् लवने । णीञ् प्रापणे । शसु हिंसायाम् । यु मिश्रणे । युजिर् योगे । ष्टुञ् स्तुतौ । तुद व्यथने । षिञ् बन्धने । षिच क्षरणे । मिह सेचने । पत्ल पथे च गतौ । दश दंशने । णह बन्धने । दंष्ट्रेति । अनित्यः षितां ङीष् । 'हलसूकरयोः पुवः' ॥३।२।१८३॥ उपेक्षितम् । पूङः पूञश्च करणे ष्ट्रन् तच्च करणं हलसूकरयोरवयवो यदि स्यात् । पोत्रं हलस्य । सूकरस्य पोत्रम् । मुखमित्यर्थः ।

अर्ति । ऋ गतौ । लूञ् छेदने । धू विधूनने । षू प्रेरणे । खनु अवदारणे । षह । चर । आदिशब्दात् धवित्रम् । धू इत्यस्य कुटादित्वात् ङित्त्वेन गुणो न स्यादेव । धुवित्रम् । अथवा 'भञ्जभासमिदो घुरच्' 'विदिभिदिच्छिदेर्कुरच्' इति वक्तव्ये प्रत्ययान्तरकरणं ज्ञापकमातिदेशिकङित्त्वमनित्यमिति । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

---

१. C drops अर्थे. २. करणेर्थे $B_2$, $D_4$. ३. $D_2$ drops it; After it—धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् (dropping इत्यादि) N.

**पुवः संज्ञायाम् ॥३।२।१८५॥**

अस्मात् करणे इत्रः स्यान्नाम्नि ॥ पवित्रं दर्भः ।

**उणादयो बहुलम् ॥३।३।१॥**

उणादयः प्रत्यया वर्तमाने संज्ञायां च बहुलं स्युः ॥

---

पुवः संज्ञायाम् । पवित्रं दर्भ इति । समुदायेनात्र दर्भादेः संज्ञा गम्यते । स्पष्टत्वादुपेक्षितम्—'कर्तरि चर्षिदेवतयोः' ॥३।२।१८६॥ ऋषौ करणे देवतायां कर्तरि पुव इत्रः स्यात् । पूयतेऽनेनेति पवित्रोऽयमृषिः । सोमः पवित्रम् ।

उणादयो बहुलम् ।

'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥' इति वचनात्

बहूनर्थान् लातीति बहुलम् । पञ्चपाद्यादावुणादीनामुक्तत्वात् । ननु बहुलग्रहणं किमर्थमित्याशङ्क्य वार्तिककृतोक्तम्—

'बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥ १ ॥'

बहुलस्य भावो बाहुलकम् । तदुक्तम् । कुतः । प्रकृतेस्तनुदृष्टेः । प्रकृतीनामल्पदर्शनात् । तथा तेषामुणादीनां प्रायेणाकार्त्स्न्येन समुच्चयनाद्विधानात् । तथा कार्यसशेषविधेरेव । प्रकृताद्याश्रयाणां कार्याणां सशेषाद्विधेश्च । अयं भावः । अल्पाः प्रकृतय उक्ताः । अल्पे च प्रत्ययाः । अल्पानि च कार्याणि । तस्माद्बहुलग्रहणादनुक्ताः प्रकृतयः प्रत्ययाः

---

१. पुङः पूञ्च इत्रः स्यात् करणेऽर्थे नाम्नि N. २. करणेऽर्थे C. ३. Given after the Sûtra Dc3. PC. ४. कात्यायनेनोक्तम् PC, Dc3. ५. कुतः PC, Dc3.

ते च केचिद्विहिताः केचित् प्रयोगादुन्नीयन्ते ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥
कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥

---

कार्याणि त्रोन्नेयानीत्येवमर्थं बहुलग्रहणम् । हि यस्मान्नैगमरूढिभवं बाहुलकात् सुसाधु स्यात् । नैगमा वैदिकाः । रूढिभवा लोकसिद्धाः । सर्वो द्वन्द्वो विभाषयैकवत् । वैदिकानां रूढानां व्युत्पाद्यत्वमन्यैरप्यङ्गीकृतमित्याह—

'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्' ॥

नाम प्रातिपदिकं **निरुक्तकारो निरुक्ते** धातुजमाह । व्याकरणे **शकटस्य** तोकमपत्यं **शाकटायनोऽ**प्याह । एवं जातिगुणक्रियावाचित्वाच्छब्दानां त्रय्येव प्रवृत्तिर्न चतुष्टयी । यादृच्छिकानामभावात् । अथवा सर्वे क्रियाशब्दा एव स्युः । सर्वेषां धातुजत्वात् । तत एकैव प्रवृत्तिर्न त्रयी न चतुष्टयी । अथाव्युत्पन्नशब्दानां कथं धातुजत्वावधारणम् । अत आह—यन्नेति । पदमर्थः प्रयोजनमस्य[4] तथा प्रकृत्यादिपदार्थविशेषात्[5]समुत्था[6] प्रादुर्भावो यस्य तत् । यत् प्रतिपदोक्तप्रत्ययविशेषादनिष्पन्नं डित्थादि तत्र थादेः प्रत्ययात् डीत्यादेर्धातोरूह्यम् । स ऊहः कीदृशः । अत आह—

संज्ञास्विति । संज्ञासु रूढशब्देषु धातुरूपाणि कल्प्यानीति शेषः । ततः परे प्रत्ययाश्च कल्प्याः । कार्याद् गुणाभावादेरनुबन्धं ककारादिकं विद्यात् । एतदुणादिषु शास्त्रं शास्त्रनिबन्धत्वात् शास्त्रविषयत्वाद्वा । तत्रोणादीन् दर्शयति—कृवापेति । डुकृञ् करणे । वा गतिगन्धनयोः विशेषणे च । पा पाने । जि जये ।

---

१. प्रयोगवशादु° C. २. °दनुबन्ध° P., D4. ३. स्विदि N1. ४. °मर्थं Dc3, PC. ५. मस्य स तथा Dc1. ६. समुत्थः PC, Dc3.

कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः ।

साधु । आशु । गमेर्डोः ॥ गौः ।

ग्लानुदिभ्यां डौः ॥ ग्लौः । नौः ।

सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥[1]

सेतुः । तन्तुः[2] । क्रोष्टा । इत्यादि[3] ।

अवितॄस्तृतन्त्रिभ्य ईः ॥ अवीः । तरीः । स्तरीः । तन्त्रीः ।

---

डुमिञ् प्रक्षेपणे । ष्वद स्वादे । साध संसिद्धौ । अशू व्याप्तौ । कारुः । णित्त्वाद् वृद्धिः । 'अचो ञ्णिति' इति[4] । कारुः शिल्पी इन्द्रो वेधाः[5] । वायुः । 'आतो युक्' । पायुरिति । पायुर्वस्तिः । जायुरग्निरोषधं वा । मायुः पित्तम् । स्वादुः रसः । साधु । आश्वित्यव्ययं क्लीबं वा क्रियाविशेषणम् ।

गमेः । गच्छतीति गौः सौरभेयी ।

ग्लानुदि । ग्लायतीति ग्लौश्चन्द्रः । नुदतीति नौस्तरीः । सितनि । सिनोति सेतुः । तनोति तन्यते वा तन्तुः । गच्छतीति गन्तुः । मस्यति मस्तुः । सचते सक्तुः । अवति ओतुः । दधाति धातुः । क्रोशतीति क्रोष्टा । आदिनान्येपीत्थं ज्ञेया इति दर्शयति । तांश्चाग्रे दर्शयिष्यामः ।

अवि । अव रक्षणे । तॄ प्लवनतरणयोः । स्तृञ् आच्छादने । तत्रि कुटुम्बने । अवीर्भूपालभूभृतौ । तरीर्नौर्वायुः । स्तरीः शयानः शयनं वा । तन्त्रीः शुष्कस्नायुः ।

---

१. क्रुशभ्य° N. २. C drops it. ३. After it—गन्तुः । मस्तुः । सक्तुः । ओतुः । धातुः । क्रोष्टा &c. $B_2$. ४. 'अचो—' इति Dropped $Dc_3$, PC. ५. वेधाश्च । वायुर्वातः । पायुर्बस्तिः । $Dc_3$, PC.

लक्षेर्मुट् च । लक्ष्मीः ।

संस्त्याने स्त्यायतेर्ड्ट्[1] ॥ संस्त्यानं स्त्रीत्वम् । टित्त्वाद्[2] ङीप् । स्त्री ।

जॄविशिभ्यां झच् ॥ झोन्तः । जरन्तः । वेशन्तः । गण्डिमण्डोजनिनन्दिभ्यश्च[3] ॥ गण्डयन्तः । मण्डयन्तः । जनयन्तः । नन्दयन्तः ।

श्रु[4]दक्षिस्पृहिगृहिदजिभ्य[5] आय्यः ॥ श्रवाय्यः[6] । दक्षाय्यः । स्पृहयाय्यः । गृहयाय्यः । दराय्यः । जयाय्यः ॥

---

लक्षेः । लक्षेरीप्रत्ययस्तस्य मुडागमश्च । लक्षयन्ति कृतिनो लक्ष्यते वा कृतिभिर्लक्ष्मीः । इत उत्तरं विग्रहानुसारेण कर्त्राद्यर्था धातवश्च ज्ञेयाः । सौत्रा अपि धातवस्ततो ज्ञेयाः । तत एवार्थाश्च तेषां कल्प्याः । उदाहरणार्थास्तु[7] वक्ष्यामोप्रसिद्धान् । प्रसिद्धास्तु प्रसिद्धेर्ज्ञेयाः । केचित्तु धात्वर्थानुसारेण नेयाः ।

संस्त्याने । स्त्रीति । स्त्यायत्यस्यां गर्भ इति ।

जॄविशि । जीर्यते जरन्तः वृद्धः । विशति वेशन्तो योगी । विशत्यस्मिन् वा वेशन्तः पल्वलम् । गण्डि । गण्डयतीति गण्डयन्तो मेघः । मण्डयति मन्डयन्तो नटः । जनयतीति जनयन्तः । जनिस्थाने जीति पठन्ति केचित् । जीयते जयन्तः हस्तिजित्वरौ । नन्दयन्तीति नन्दयन्तः ।

श्रुदक्षि । शृणोति श्रवाय्यः । दक्ष्यते[8] दक्षाय्यः । स्पृहयतीति स्पृहयाय्यः । गृहयतीति गृहयाय्यः ।[9] दृणातीति दराय्यः । जयतीति जयाय्यः ।

---

१. ईट् $C_1$ $N_1$. २. $D_2$, $B_2$, N drop टित्त्वात्. ३. गडिमडि $D_2$. ४. शॄ $B_1$, $D_1$, $D_3$, P, C. ५. जृभ्य C. ६. शराय्यः $B_1$, $D_1$, $D_3$, P, C. ७. उदाहरणास्तु $Dc_1$. ८. दक्षते PC. ९. drop $Dc_1$.—दृणातीति दराय्यः

स्तनिदूषिपुषिगदिमदिहृदिभ्यो णेरित्नुच् । एभ्यो ण्यन्तेभ्य इत्नुच् स्यात् ॥ अदन्तत्वान्न वृद्ध्यादि । स्तनयित्नुः । दूषयित्नुः । पोषयित्नुः । गदयित्नुः । मदयित्नुः । हृदयित्नुः ।

कॄगॄस्तॄजागृभ्यः क्विन् ॥ कीर्विः । गीर्विः । स्तृविः । अविचिण्णलित्युक्तेर्न गुणः । जागृविः ।

असुनादयः प्रागुक्ताः ।

---

स्तनि । स्तनयित्नुर्घनः । दूषयित्नुर्दूषकः । दूषिस्थाने हृषिं पठन्ति । हर्षयित्नुर्हर्षक इत्युदाहरन्ति केचित् । पोषयित्नुः पोषकः कोकिलः । गदयित्नुर्वादी । मदयित्नुर्मद्यम् । हृदयित्नुर्हृदयंगमः । केचिदमुं न पठन्ति नोदाहरन्ति च ।

कॄगॄ । कीर्विः किरणम् । गीर्विः गिरणम् । स्तृणोतीति स्तृविरध्वर्युः । केचित् स्तॄ इति दीर्घं पठन्ति । स्तीर्विरित्युदाहरन्ति । जागर्तीति जागृविर्वह्निप्रबुद्धौ ।

असुनादय इति । 'असुन्—' इत्यादि सूत्रे । ते चास्माभिर्व्याख्याताः । इदानीमादिशब्दसूचितानुणादीन् मूलोक्तेभ्योऽन्यान् दशपाद्यनुसारेण इकारान्तादिक्रमेण कथयामः । तत्रैवं व्यवस्था । 'भूतेपि दृश्यन्ते' इति सूत्रेणान्यकालेपि ज्ञेयाः । तथा 'भविष्यति गम्यादयः' इति सूत्रेण गम्यादयो भविष्यत्येव स्युः । 'दाशगोघ्नौ संप्रदाने' इति सूत्रेण तौ संप्रदाने 'भीमादयोपादाने' इति भीमभीष्मादयोपादाने स्युः । 'ताभ्यामन्यत्रोणादयः' इति सूत्रेणान्यत्रोणादयः संप्रदानापादानाभ्यामन्यत्र ज्ञेया इति ।

---

१. मदि dropped $B_2$, $D_4$. २. $D_2$, $D_4$ drop these forms; $B_2$ drops मदयित्नुः only; N drops पोषयित्नुः only. ३. क्विम् $B_2$. ४. Before it—उणादय इति वा पाठः C.

अशवत्तृभ्योनिः । अशनिर्वज्रः । अवनिर्भूः । तरणिः सूर्यः । अर्तिसृधृधमिभ्यश्च । एभ्योनिः । अरणिः अग्निपात्रम् । सरणिः पन्थाः । धरणिर्भूः । धमनिर्वंशैकदेशे । आङि शुषेः सनश्छन्दसि । आङ्पूर्वाच्छुषेः सनन्तादनिः स्याच्छन्दसि । भाषायामपीति केचित् । आशुशुक्षतीत्याशुशुक्षणिः अग्निः । कृषेरादेश्च चः । कृषेरनिः स्यादादेश्च चकारः । कर्षति कृषतीति वा चर्षणिः बृषः । अदेर्मुट् च । अनिर्मुडागमः । अत्तीति अद्मनिरग्निरश्मो वा । वृत्तेः । वर्ततेनया वर्तिः पन्थाः । क्षिपेः किच्च । क्षिपतेरनिः कित् । क्षिप्यते क्षिपणिरस्त्रं वडिशं दण्डश्च । जसिसहोरुरिन् । जस्यते जासयते वा जसुरिः समाधिरशनिर्वा । सहते सहुरिः पृथिव्यक्रोधनौ । भुवोनिच् । भवतेरनिः स्यात् । भवन्त्यस्यां भूतानि भवनिर्लोकस्थितिः । असिसञ्जिभ्यां क्थिन् । अस्यते अस्थि कीकसम् । सज्जते सक्थि ऊरुः । प्लुषशुषकुषिभ्यः क्सिः । प्लुष्णाति प्लुष्यति वा प्लुक्षिः । अग्निजठरौ । शुष्यति तेन शुक्षिः तेजः । कुष्यति कुक्षिः उदरपार्श्वम् । अशेर्नित् । अशेः क्सिः निच्च । अश्नाति अश्नुते वानेन रूपमक्षि नेत्रम् । नियो मिः । नयति नेमिश्चक्रान्तः । अर्तेरूच्च । अर्तेर्मि ऊच्चादेश : । ऋच्छति इयर्ति अर्यते वा ऊर्मिस्तरङ्गः । अशे रश् च । अशेर्मिः स्यात् रशादेशश्च । अश्नाति अश्नुते रश्मिः । भुवः कित् । भवन्त्यस्यां भूमिः । दल्मिः । दलेर्निपातः । दलयति दल्यतेनेन वा दल्मिरायुधम् । वीज्याहाज्वरिभ्यो निः । वीयते वेणिः । बाहुलकात् णत्वम् । जिनाति ज्यानिः । हानिः । ज्वरति जूर्णिः । सृवृषिभ्यां कित् । आभ्यां निः स्यात् स च कित् । सरत्यनेन

१. क्षिपेरनिः स च कित् । PC, $DC_3$ २. हसि Pc, $Dc_3$. ३. हसति हस्यते वा हसुरिः PC, $DC_3$. ४. वारि $DC_3$, PC. ५. कुष्णाति PC, $DC_3$. ६. वा नेन $Dc_1$.

सृणिरङ्कुशः । वर्षति वृष्णिर्यादवः । अङ्गेर्नलोपश्च । अङ्ग्यते अङ्गति वा अग्निः । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । एभ्यो निः स च नित् । वहति हव्यं वह्निः । श्रयन्त्येतां श्रेणिः सङ्घः । श्रूयते पुम्भिः श्रोणिः कटिः । युवन्त्यस्यां योनिः प्रकृतिर्भगश्च । द्रोणिः । ग्लायन्त्यनया ग्लानिर्दौर्बल्यम् । हीयते हानं वा हानिः । त्वरते त्वरणं वा तूर्णिः । घृणिपृश्निपार्ष्णिचूर्णिभूर्णि । एते निपात्याः । जिघर्तीति घृणिः सूर्यः । स्पृशतीति पृश्निः । स्पृशन्त्यनया पार्ष्णिः । भवति भूर्णिः । बहुलात् घूर्णिः शनिः । कृणिः । वृदृभ्यां विन् । वृणाति वर्विः धात्री । दृणात्यनया दर्विः । जॄशॄस्तॄजागृभ्यः क्विन् । एभ्यः क्विन् । जीर्यतीति जीर्विः कायः । शृणाति शीर्विर्हिंसा । स्तृणाति स्तीर्विरध्वर्युः प्राणजातिश्च । जागृविः । दिवो द्वे दीर्घश्चाभ्यासस्य । दीव्यति अनेन दीदिविरन्नम् । कृविघृष्विछविस्थविर्दविकिकी दिविः । एते निपात्यन्ते । करोति कृविः कारुः । जिघर्ति घृष्विर्वाय्वग्नी । छादयति छविः शोभा । तिष्ठति स्थविः स्थावरः अग्निश्च । ददाति दविर्दाता । कौति कवते वा किकिर्विद्वान् । दीव्यति दिविः द्यूतकितवौ । वाहुलकाद् रविः । पातेर्डतिः । पाति पतिः । अमेरतिः । अमतीत्यमतिर्व्याधिर्गतिः । वहिवस्यर्तिभ्यश्चित् । एभ्योऽतिः स च चित् । वहतीति वहतिर्वायुरनड्वांश्च । वसत्यस्यां वसतिराश्रयः । ऋच्छतीत्यरतिर्वायुर्मरणं च । अञ्चेः को वा । अतिः स्यात् कादेशश्च वा । अञ्चति अच्यते वा अञ्चतिरङ्कतिर्ब्रह्मवाय्वग्निघृणयः । हन्तेरंह च । हन्तेरंहादेशश्च । हन्ति हन्यते वा अंहतिः पन्थाः कालो रथश्च । रमेर्नित् । स च नित् । रमतेस्यां रमतिः क्रीडा । सुञो रित् दीर्घश्च । सुनोति सूयते वा सूरिः

१. अङ्क्ते DC₃, PC. २. अभ्यासस्य च दीर्घः PC. ३. After it—दिवः क्वित् द्वे चाभ्यासस्य च दीर्घः । DC₃. ४. अग्निश्च dropped DC₃, PC. ५. दविः DC₃, PC. ६. व्याधिगती PC. ७. Before it—रमेरतिः PC, DC₃.

पण्डितः। अदिशदिभूशुभिभ्यः क्रिन्। अत्ति अद्यते वा अद्रिः। शद्यते शद्रिः वज्रम्। भवति भूरिः बहु। शोभते शुभ्रिर्दर्शनीयः। वङ्क्र्यादयः। निपात्याः। वञ्चते वङ्कते वा वङ्क्रिः शल्यम्। मङ्कते मङ्क्रिः शठः। अङ्क्रिरङ्क्यम्। राशतिभ्यां त्रिप्। राति निद्रां रात्रिः। शतिः सौत्रः। शततीति शत्रिः हस्ती। अदेर्निच्च। अदेस्त्रिः स च नित्। अत्ति अत्रिर्ऋषिः। मृकणिभ्यामीचिः। म्रियते मरीचिः। कणति कण्यते वा कणीचिः चक्षुःप्राणौ। वेञो डिच्च। ईचिः स च डित्। वयतीति वीचिः। श्वयतेश्चित्। ईचिः स च चित्। श्वयति श्वयीचिश्चन्द्रः। नौ षञ्जेर्घथिन्। निषजति निषज्यते वा निषङ्गथिः रथकूबरः। उद्यर्तेश्चित्। उत्पूर्वादर्तेर्घथिन् स च चित्। उदृच्छति उदर्यते उदरथिः वप्राग्धिकायाः। सर्तेर्णित्। घथिन् स च णित्। धावति सारथिः। अमेर्गुरी रश्च लो वा। अमेर्गुरिः स्यात् तस्य च वा लः। अमति अङ्गुरिः अङ्गुलिः। इञ् सर्वधातुभ्यः। कवते कविः। पविः वज्रम्। परिमोक्षमार्गः। हृपिशिरुहिवृतिविदिकीर्तिभ्यश्च। एभ्य इञ्। हरति हरिः विष्णुसिंहाद्याः। पिशति पिश्यते वा पिशिः केशोण्डकमण्डलवः पेशलश्च। रोहति रोहिः जन्म। वर्तते वर्त्यते वा वर्तिः। वेत्ति वेदिः त्र्यध्यधिष्ठानम्। कीर्तिः सौत्रः। कीर्तनं कीर्तिः। इगुपधात् कित्। इञ् स च कित्। भिनत्ति भिदिः वज्रम्। छिदिः परशुः शस्त्रम्। शोचति जनं क्लिश्यमानं शुचिर्विद्वान्। ऋषिः। कृषिः। भ्रमेः संप्रसारणं च। इञ् स च कित्। भ्रमति भ्राम्यति वा भृमिर्वायुः। क्रमितमिस्तम्भामत इच्च। एभ्य इञ् स च कित्। एषामस्य ईत्। क्रामति क्रिमिः प्राणी। ताम्यति तिमिर्मत्स्यः। स्तभ्नाति स्तिभिरम्भोधिः। मनेरुच्चोपधायाः। इञ् उपधाया उच्च। मन्यते मुनिः। वल्लेर्वलि-

१. सर्पः Dc3, PC. २. °रङ्कनम् PC. ३. परशुः dropped Dc3, PC. ४. इः PC.

आहिरण्ये । इञ् वलिरादेशश्च अहिरण्ये ।वल्लः सौत्रः । वल्लते वलिः त्वङ्मांससंकोचः । अहिरण्ये किम् । वल्लिर्हिरण्यशलाका । वसिवपिवदिराजिव्रजिध्वजिसदिहनिकमिकषिवाशिवारिभ्य इञ् । पुनरिञ्विधिबलान्नित्यम् । वसति वासिः तक्ष्णो भाण्डी । वपत्यस्यां वापिः पुष्करिणी । वदत्यस्यां वादिः वीणा । राजति राजिर्लेखा । व्रजति व्राजिर्मनः । ध्वजति ध्वाजिरश्वः । सीदति सादिरश्वारोहः । हन्ति हानिः । काम्यते कामिः कामुकः । कषति काषिर्हिंसकः । वाश्यते वाशिर्जलदः । वार्यते वारिः । नहो भश्च । इञ् भोन्तादेशश्च । नह्यते नाभिः । कृषेर्वृद्धिश्छन्दसि । इञ् वृद्धिश्च । कर्षति कार्षिः । छन्दसि किम् । कृषिः । शः शकुनौ । इञ् वृद्धिश्च । शृणाति शारिः । शकुनौ किम् । शारिर्हिस्रः शूलं च । कृञ उदीचां कारुषु । इञ् वृद्धिश्च । कारिः शिल्पी । उदीचां किम् । करिविष्णुः । जनिघसिभ्यामिण् । जायते जनिः प्रादुर्भावः । घासिरग्निः । अज्यतिभ्यां च । अजति आजिर्युद्धम् । अततीत्यातिः पक्षी । पादे च । अज्यतिभ्यामिण् । पादाभ्यामजति पदाजिः । पदातिः । 'पादस्य पद्' इति पद्भावः । अशिपणाय्यो रुडायलुकौ च । आभ्यामिण् यथाक्रमं रुट् आयलुक् चागमादेशौ स्तः । अश्नाति अश्नुते वा राशिः लग्नं यवादिसङ्घो वा । पंणाय्यतेनेनेति पाणिः । वेञो डित् । वयतीति विः पक्षी तन्तुवायश्च । प्रे हरतेः कूपे । इण् स च डित् । प्रहियतेस्मादुदकं प्रहिः कूपः । नौ व्यो यलोपः पूर्वस्य च दीर्घः । निपूर्वाद् व्येञ इण् स च डित् यलोपः पूर्वपददीर्घश्च । निवीयते नीविः । समाने ख्यः स चोदात्तः । समानपूर्वात् ख्याते रिण् स च डित् यलोपः समानस्य सादेशः स चोदात्तः । समानं ख्यायते सखा वयस्यः । आङि श्रिहनिभ्यां ह्रस्वश्च । आङ्पूर्वाभ्यामाभ्यामिण् डिच्च आङो ह्रस्वत्वं चोदात्तत्वं च । आश्रीयते अश्रिः कोणः । आहन्ति प्राणिनमहिः । अत्र इः ।

१. बलाण्णित्वम् Dc1. २. पणायते PC, Dc3. ३. समानः PC, Dc3.

पुनाति पविः । भवति भविः । खनिकष्यज्यसिवसिध्वनिसनिग्रन्थि-
चरिभ्यश्च । इः । खन्यते खनिः । कष्यते कषिः । अज्यते
अजिस्तेजः । अस्यते असिः । वसत्यस्यां वसिः । ध्वनति ध्वनिः ।
सनोति सनिः भक्तिर्दानं च । ग्रथ्यते ग्रन्थिः । चर्यतेस्मिन्
चरिर्विषयः । उभेर्द्वे च । उभेरिः द्वादेशश्च । उभति उभ्यते वा द्वौ ।
वृत्तेश्छन्दसि । वर्तिर्द्रव्यं दीपाङ्गं च । भुजेः किच्च । इः स च
कित् । भुनक्ति भुज्यते वा भुजिः सूपो भोगश्च । कॄगॄशॄपॄकुटिभिदि-
छिदिभ्यश्च । इः किच्च । किरति कीर्यते वा किरिराखुर्बिलं च ।
गिरिः । शिरिः शलभः शिला च । पुरिः पूर्भूपश्च । कुटिः
शरीरम् । भिदिः प्रहरणम् । छिदिः शस्त्रम् । कुडिकम्प्योर्नलोपश्च ।
इः किच्च नलोपश्च । कुडिः काय आलयश्च । कपिः कृशानुवानरौ ।
वसिवितसस्तिः । वसत्यस्यां वस्तिर्गुह्यमङ्गम् । वितस्यतेनया
वितस्तिः । पथेर्नित् । तिर्निच्च । पत्तिर्भागः । दृणातेः कित्
ह्रस्वश्च । दीर्यते दृतिः प्लवः । पातेरतिः । पाति पातिः ।
वातेर्नित् । अतिर्निच्च । वातीति वातिर्गन्धमिश्रपवनः । तनोतेर्ड्रिः ।
तनोति तन्द्रिः । 'जीर्यतेः' क्रिन् रश्च वः । क्रिन् रस्य वादेशः ।
जीर्यते जिव्रिर्देहम् । ग्रहे रनिः । गृह्णाति गृह्यते वा ग्रहणि-
रुदरान्तरस्थानम् ।

इतीदन्ताः ।

यापोः किद् द्वे च । ईः कित् द्वित्वं चानयोः । यास्यनेन
ययीर्मुक्तमार्गः । पिबति पातीति पपीः सूर्यः । वातप्रमीः । निपातः[3] ।
वातं प्रमिनोति वातप्रमीः ॥[4]

इति ईदन्ताः ।

छन्दसीणः । उण् । एति आयुः जरायुः । दृसनिजनि-
चरिचटिरहिभ्यो ञुण् । दृणाति दीर्यते दारुः । सनोति सन्यते

१. भूपो PC. २. इः स्यात् $DC_3$. ३. निपात्यः $DC_3$. ४. After it मृगः $DC_3$.

वा सानुः पर्वतैकदेशः । जायते जानुः । चरति चारुः । चटति चाटुः । रहयति राहुः । प्रत्ययान्तरं 'ञ्नित्यादिः—' इत्याद्युदात्तार्थम् । ञ्विरनुबन्धकरणं 'जनिवध्योश्च' इति ह्रस्वनिषेधार्थम् । किंजरयोः श्रिणः । किंजरापूर्वाभ्यां शृहण्भ्यां ञुण् । किंशृणातीति किंशारुः सस्यशूकम् । जरामेति जरायुर्गर्भवेष्टनम् । त्रो रश्च लः । तॄ ऋ आभ्यां ञुण् रस्य लः । तरन्त्यस्मिन् वर्णास्तालु वदनैकदेशः । ऋच्छतीत्यालुः शाकम् । कृके वचः कश्च । ञुण् । कृकं वक्ति कृकवाकुः कुक्कुटः कृकलासश्च । भृमृशीतॄचरित्सरितनिमिमस्जिभ्य उः । बिभर्ति भरुः धारयिता स्वामी च । म्रियन्तेऽस्मिन् मरुः अजलतृणो देशः । शेतेत्यर्थं शयुः अजगरः । तरन्त्यस्मिन् तरुः । चरन्ति देवाश्चरुः । त्सरन्ति त्सरुः खड्गादिमुष्टिः । तनोत्याहारं तनुः कायः । मीयते मयुः पशुराकूतं च । मज्जन्त्यस्मिन् मधूनि[1] मद्गुः पक्षी । न्यङ्क्वादित्वात् कुत्वम् । अणश्च । उः । अणतीत्यणु[2] सूक्ष्मम् । धान्ये नित् । अण उर्नित्त्व धान्ये । अण्यते प्राणिभिरणुर्धान्यविशेषः । बहुलादन्यत्रापि । कटति कटुः । बटति बटुः । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च । उः नित्त्व । शृणाति शरुः क्रोध आयुधं च । स्वरति स्वरुः वज्रम् । स्निह्यति स्नेहुः स्निग्धः । त्रपते त्रपुः । अस्यन्ते अस्यन्ति वासवः प्राणाः । वसति कृतिषु वसुर्देवो धनं वा । हन्ति हन्यते वा हनुर्मुखैकदेशः । क्लेदयति क्लेदुश्चन्द्रः । बध्नाति स्नेहेन बन्धुः । मन्यते मनुः प्रजापतिः । स्यन्देः संप्रसारणं धश्च । उर्नित्त्व धान्तादेशः संप्रसारणं च । स्यन्दतेत्यर्थं सिन्धुर्नद्यादि । उन्देरिच्चादेः । उर्नित्त्व आदेरिदादेशश्च । उनत्तीतीन्दुश्चन्द्रः । इषेः किच्च । उः किच्च नित्त्व । इष्यते इषुः । स्कन्देःसलोपश्च । उर्नित्त्वादेर्लोपः । स्कन्दत्यस्मिन् कन्दुः पाकस्थानम् । सृजेरसुमच् । उर्नित् असुम् चागमः सलोपश्च । सृज्यते रज्जुः । कृतेराद्यन्तविपर्ययश्च । उर्नित्त्व आद्यन्तविपरीत्यं च । कृत्यतेनेन तर्कुः सूत्रवेष्टना । नावञ्चेः ।

१. अम्बूनि $DC_3$. २. त्यणुः सूक्ष्मः $DC_3$, PC.

उर्निच्च । नियतमञ्चति न्यङ्कुर्मृगविशेषः । न्यङ्क्वादित्वात् कुत्वम् । फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च । उर्निच्च । फलेर्गुक् आगमः । फल्गु गिरिसारं च । पाटेः पटिः । पाटयतीति पटुः विशारदः । नमेर्नाकः । नम्यतेनेन नाकुः ऋषिर्वल्मीकश्च । मन्यतेर्धोन्तादेशः । मन्यतेत्यर्थं मधु । जनेस्तोन्तादेशः । जायते जतु लाक्षा । वलेर्गुक् च । गुगागमश्च । वलतीति वल्गुर्बलवान् मधुरस्वभावश्च । शः कित् सन्वच्च । उर्निच्च किच्च सन्वच्च । मातुः स्तन्यं श्यति शिशुः । यो द्वे च । उः किच्च निच्च यातेर्द्वित्वं च । यान्ति तेन पुण्यं ययुरश्वमेधीयोश्वः । कुर्भ्रश्च । भृञः कुः स्याद् द्वित्वं च । बिभर्ति भरति वा तेजो बभ्रुः पिङ्गलः । प्राक्प्रत्ययनिर्देशोन्येषां सिद्धये । करोति सत्यं चक्रुः । हन्ति जघ्नुः । पूर्यतेसौ पपुश्चन्द्रः । पॄभिदिव्यधिगृधिधृषिहृषिभ्यः । कुः । पृणाति पुरुः धर्मो राजा च । भिनत्ति भिदुः दम्भोलिः । विध्यतीति विधुः नागाग्निकामचन्द्रशस्त्राणि । गृध्यति गृधुः लुब्धः । धृष्णोति धृष्णुः प्रगल्भः । हृष्यति हृषुः हृष्टः । कृग्रोरुच्च । कुः उश्चान्तादेशः । करोति कुरुर्जनपदो राजा च । गृणाति गुरुः । अपदुस्सुषु स्थः । अपतिष्ठति अपष्ठुः बालः । दुःखेन तिष्ठति दुष्ठुरशोभनः । सुखेन तिष्ठतीति सुष्ठुः शोभनः । भावेपि । अपष्ठु । दुष्ठु । सुष्ठु ।[1] रपेरिच्चोपधायाः । कुः । रपति दुष्टं रिपुः । अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च । कुः । अर्जेर्ऋजिरादेशः । अर्जयति यशः ऋजुः । दृशेः पश् । पश्यति पशुः । कमेस्तुगागमः । काम्यते कन्तुः कामकामुकौ । अमेर्धुक् च । अमतीत्यन्धुः । पशेः सौत्रस्योपधादीर्घः । पश्यते वायुना पांशुः । बाधेर्हः । बाधतेरीन् बाहुः । प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च । कुः । प्रथते पृथुः विशालो राजा च । म्रदते मृदुः । भृज्जति भृगुः । न्यङ्क्वादित्वात् कुः । लङ्घिबंह्योर्न-

१. After it दुष्ठु PC.

लोपश्च । कुः । लङ्घ्यते लघुः । बंह्यते बहुः । ऊर्णोतेर्नुलोपश्च । कुः । ऊर्णोति ऊरुः । महति ह्रस्वश्च । ऊर्णोति ऊर्णूयते त्र उरु-र्महान् । श्लिषेः कश्च । कश्चान्तादेशः । श्लिष्यति श्लिकुर्भृत्योद्यमौ । आङ्परयोः खनिशॄभ्यां डिच्च । कुः डिच्च । आखनत्याखुः । परान् शृणाति परशुः । हरिमितयोर्द्रुवः । कुः डिच्च । हरिभिर्द्रूयते हरिद्रु-र्द्रुमः । मितं द्रवति मितद्रुः समुद्रः । बहुलादन्यत्रापि । शतधा द्रवति शतद्रुः नदी नदश्च । खरुशङ्कुपीयुनीलङ्गुलिगु । क्वन्ता निपा-त्यन्ते । खनति खोरति खुरति वा खरुः मूर्खकथनखुराः । शङ्कतेस्मात् शङ्कुः कीलः । पिबति तेजः पीयुः स्वर्णम् । पिबत्यायुः पाति महान्तं पीयुः कालो भूपश्च । नीलं गच्छति नीलङ्गुः क्रिमिः । लगति लिगुर्मूर्खः । मृगय्वादयश्च । क्वन्ता निपात्यन्ते । मृगं याति मृगयुः । अस्माद्याति अस्मयुः जिह्मः । भुवं याति भुरण्युर्वह्निः । वरे याति वरेण्यः आदित्यमरुतौ । पः किच्च । तुः किच्च । पिबति पाति पाययति वा पातुः । अर्तेश्च तुः । स किच्च । ऋच्छत्यर्थते वा ऋतुः । कमिमनिजनिगाभापायाहिभ्यश्च । तुः । कामयते कन्तुः । मन्यते मनुते मन्तुः मनः अपराधश्च । जायते जन्यते जन्तुः । गायति गातुः । भाति भातुरर्चिष्मान् । पाति पातुः पालकः । यातीति यातुः पान्थः[१] । हिनोति हेतुः । चायः की । चाय्यते केतुः । आप्नोते-र्ह्रस्वश्च । आप्नोति अप्तुः यज्ञयोनिर्जन्तुश्च । बहुलादन्यत्रापि । अमतीत्यन्तुः । वसेस्तुन् । वसन्त्यस्मिन् वस्तु धनभावौ । अगारे णिच्च । वसन्ति तस्मिन् देवा वास्तु अगारम् । कृञः क्तुः । क्रियतेसौ धर्मार्थिभिः क्रतुः । एधिवह्योश्चतुः । एधते एधतुराढ्यः । वहति वहतुरनड्वान् । जीवेरातुः । जीवन्त्यनेन जीवातुः अन्नं जीवनौषधं च । कृहृभ्यामेणुः । करोति करेणुः करिणी । हरति चेतः हरेणुः सुरभिद्रव्यम् । बहुलादन्यत्रापि । गच्छति

१. After it—रक्षकः । PC.

गमेणुः पान्थः । पचति पचेणुः पाचकः । यजति यजेणुः ऋत्विक् । यजिमनिशुन्धिदसिजनिभ्यो युच् । यजति यज्युरध्वर्युः। मनुते मन्यते वा मन्युः कोपादिः । शुध्यति शुन्ध्युः अग्निः । दस्यति दस्युश्चौरः । जनयति जन्युः प्रजापतिः पिता च । भुजिमृङ्भ्यां युक्त्युकौ । भोजनं भुज्युः । मरणं मृत्युः । सर्तेरयुः । सरति सिसर्ति वा सरयुर्वायुः सरिच्च । कण्युच् क्षिपेश्च । क्षिपति क्षिप्यते वा क्षिपण्युर्वायुः । भुवश्च । कण्युच् । भुवण्युरीश्वरः। अनुङ् नदेश्च । नदेः क्षिपेश्चानुङ् । नदति नदनुर्मेघः सिंहो वा । क्षिपति क्षिप्यते वा क्षिपनुर्बाहुः। कृहनिभ्यां क्नुः । करोति कृणोति किरति वा कृणुः कारुः । हन्त्याहारं हनुः । बहुलान्नलोपः । गमेः सन्वच्च । क्नुः । आशु गच्छति जिगत्नुः प्राणोमीयो वा । दाभाभ्यां नुः । दीयते दानुः रक्षणाय धनम् । भाति भानुः । बहुलाच्च चित्रस्वर्विश्वेषु । चित्रं भातीति चित्रभानुः । स्वर्भानुः । विश्वभानुः । वचेर्गश्च । नुः गान्तादेशः । वग्नुर्वक्ता । धेट इच्च । नुः इच्चान्तादेशः । गुणा धयन्ति तां धेनुः । सूङः कित् । नुः किच्च । सूयते सूनुः । स्थाणुः । तिष्ठति स्थाणुः शंभुस्तम्भौ । अजिवृरीभ्यो निच्च । णुर्निच्च । अजति वेणुः । वीभावः । वृणोति व्रियते वर्णुः देशविशेषः । रीयते रेणुः । विषेः किच्च । णुः किच्च निच्च । वेवेष्टीति विष्णुः । कुडिकुषिभ्यां काकुः । कुडति कुडाकुर्दुर्गतः । कुषाकुराखुः कपिः परोपतापी[1] च । सर्तेर्मुक् च । काकुर्मुगागमश्च । धावत्यत्यर्थं सृमाकुः मृगवारिबाहवः । डुगागममन्ये इच्छन्ति । सृदाकुः । पर्देर्नित्संप्रसारणमल्लोपश्च । पर्दति पृदाकुः सर्पः कुशब्दकृत् । ह्रियः कुक् रश्च लो वा । कुः रेफस्य लो वा । जिह्रेति ह्रीकुः ह्लीकुर्लज्जितः कुवेषः । इषः क्सुः । इष्यते इक्षुः । आदौ प्रत्ययोच्चारणादशेरपि । अश्नाति

१. करोपतापी PC, परोपकारी Dc3.

अश्नुते वा अक्षुरर्कः। वेहरपि। वक्षुर्नटः। अर्तेररुः। ऋच्छति अर्यते वा अररुः अलंकारः। कुटः किच्च। कुटरुः शश्वप्लवगौ। मापो रुरी च। रुः ई चान्तादेशः। मान्त्यमरा अत्र मीयते वा सूर्येन्दुभ्यां मेरुः। पाति पिबति पीयते वा पेरुः गिरिराजवायुपतङ्गाः। जत्र्वादयश्च। निपात्याः। जायते जत्रु। शृणाति शत्रुः। शृणाति शिम्रुः शाखी। अत्तीत्यत्रुः क्षुद्रजन्तुः। हन्ति हन्तुर्हिंस्रः। रुशादिभ्यां क्रुन्। रौति रूयते वा रुरुः। शीयते शत्रुः। जत्र्वादित्वात् सिद्धे वचनं नित्स्वरार्थम्। तनोतेर्डउः सन्वच्च। तनोति पिष्टद्रव्याणि तितउः चालनी। प्रत्ययसामर्थ्याद्गुणो न। श्मनि श्रयतेर्डुन्। श्मनि श्रयते श्मश्रु। अश्र्वादयश्च। निपात्याः। अश्नाति अश्नुते चक्षुः अश्रु। न स्रूयते स्रवति वा अस्रु।

इत्युदन्ताः।

कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः। कर्षति कर्षते कर्षूः करीषाग्निः[1]। चमति परान् तैश्चम्यते वा चमूः। तनोति तन्यते वा तनूः। धनति धन्यते वा धनूः राशिः। सर्जति सर्जूः वणिक्। खर्जति खर्जूः कण्डूः। बहुलात् यौति यवागूः। मृजेर्गुणश्च। ऊः। मार्ष्टि मर्जूः रजकः। मार्जनं मर्जूः शुद्धिः। वहो धश्च। धोन्तादेशश्च। उह्यते वधूः। कषेः कच्छः। ऊः कच्छादेशः। कषति शरीरं कच्छूः कण्डूः। णिच्च कसिपद्यर्तेः। ऊः णिच्च। कसति कासूः विकलाङ्गविधिशक्तयः[2]। पद्यते पादूः पादुका। ऋच्छत्यर्यते वा आरूः वारिपृथुतरवः। अणो रुश्च[3]। ऊः णिच्च रुरन्तादेशश्च। अणति तेनोदकमारूः भृङ्गारः। नञि लम्बेर्नलोपश्च। ऊः णिच्च नञि। न लम्बत इत्यलाबूः। के श्र एरङ् च। कपूर्वात् शृणातेरूरेरङादेशश्च। कं शृणाति कशेरूः वीरुत्। त्रो दुट्

१. करीषोग्निः PC. २. विकलाङ्गरावि आधिशक्तयः PC, Dc3. ३. रुच PC, Dc3.

च। तरतेर्दुडागमश्च। तरति तीर्यते वा तर्दूः जलतरणोपकरणे। दरिद्रातेर्यालोपश्च । अस्य इ आ अनयोर्लोपः । दरिद्रात्यनयाङ्गं दर्द्रूः कुष्ठविशेषः । नृतिशृध्योः कूः । नृत्यति नृतूः [1]वाल्याक्रिमिनीतयः । शर्धते शृधूः पायुशब्दधिषणे । अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः । निपात्याः । अमति अम्यते अन्दूः भूषणविशेषः । दृम्भति दृम्भूः [2]कंथुरागौ । जायते जम्बुः । [3]कफं लाति कफेलूः श्लेष्मातकः । कर्कं दधाति कर्कन्धूः बदरी । [4]दिधिं स्यति दिधिषूः पुनर्भूः । भ्रमेश्च डूः । भ्रमति भ्रूः ।

ऊदन्ताः ।

प्रथमः पादः ।

तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ । शंसति शंस्ता। क्षदति क्षत्ता। प्रशास्ति प्रशास्ता। ऋत्विक्संज्ञा एताः । [5]अनिन्त्वार्थं तृच् । बहुलमन्यत्रापि । तृन्तृचौ संज्ञायामनिटौ [6]च। प्रस्तोता । प्रतिहर्ता । प्रतिहन्ता। उपद्रष्टा । उद्गाता। होता। उन्नेता। एतेपि ऋत्विजः । नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृभ्रातृजामातृपितृदुहितृ । एते निपात्याः । [7]नं पतति नप्ता। नयति नेष्टा ऋत्विक्सारथी । [8]त्विषति त्वष्टा रविप्रजापती। क्षत्ता सारथिः। जुहोति होता। पुनाति पोता। [9]मान्यते माता । भ्राजते भ्राता। जायां मिनोति जामाता । पाति पिता। दुनोति पितरं दोग्धि वा दुहिता। सावसेर्ऋन्। सुष्ठु अस्यति स्वसा। यतेर्वृद्धिश्च। ऋन्। यतन्ते यातरः भ्रातृभार्याः परस्परम्। नञि च नन्देः । ऋन् वृद्धिश्च । न नन्दन्ति भ्रातृजाया यस्यां ननान्दा पतिभगिनी । दिवेश्च ऋन् । दीव्यति देवा। नयतेर्डिच्च।

१. वात्यानङ्क्रीमि Dc3. २. कन्थु PC. ३. कफलाति PC, Dc3. ४. दिधेष्टि PC, Dc3 दिधिषुः ५. अनिदमहार्थे वचनम्। PC, Dc3. ६. वा Dc1. ७. नमति नम्रा Dc3, PC. ८, त्वेषति Dc3, PC. ९. मन्यते Dc3, PC.

क्रन् डिच्च। नयति ना। सव्ये स्थश्छन्दसि। क्रन् डिच्च। सव्ये तिष्ठति सव्येष्ठा भाषायामपि।

ऋदन्ताः।

रातेर्डैः। राति श्रेयोर्थं पात्रेभ्यस्तां[1] राति रायते वा राः रायौ धनं भानुश्च।

द्वितीयः पादः।

जीवेरातृकन् वृद्धिश्च। जीवति जीवयति वा जैवातृकः आयुष्मांश्चन्द्रो भूतानि च। समि कस उकन्। समन्तात् कसति संकसुकः स्थिरः। पचिनश्योर्णुकन् कनुमौ च। कादेशानुमागमौ। पचति पाकुकः सूपकारोऽध्वर्युश्च। नश्यत्यल्पेन वायुना नंशुकः पांशुः। भियः क्रुकन्। बिभेति भीरुकः। क्रुन् शिल्पिसंज्ञयोरपूर्वस्यापि। अपूर्वस्य तावत् शिल्पिनि। तक्षतीति तक्षकः। अपिशब्दात् सपूर्वस्यापि। तिलान् पीडयतीति तिलपीडकः। संज्ञायाम्। जनयति जनकः। कलाआङ्पूर्वात् पिबतेः क्रुन्। कलापकः शास्त्रकर्ता। जहातेर्द्वे च। क्रुन्। जहाति जहकः कालः। ध्मो धम च। क्रुन् धमादेशश्च। धमति धमकः लोहकारः। हनो वध च। क्रुन्। हन्ति वधकः बिडालः। बहुलमन्यत्रापि। क्रुन्। कथयति कथकः। रोचते रुचकः। कृषेर्वृद्धिश्चोदीचाम्। क्रुन् च। कृषति कार्षकः कर्षकः कृषको वा। उदकं च। उदेः क्रुन्नन्तो निपातः। उत्स्वाद्यते उदच्यते उदकम्। वृश्चिकृष्योः किकन्। वृश्चति वृश्चिकः। कर्षति कृषिकः। प्राङि पणिकषः। प्रापणायते प्रापणिकः। प्राकर्षति प्राकृषिकः। मुषेर्दीर्घश्च। किकन्। मुष्णाति मूषिकः। स्यमेः संप्रसारणम्। किकन्। स्यमति सिमिकः वृक्षपत्रविभागकृत् कीटकः। क्रिय इकन्।

१. स्तां राति वा राः $Dc_3$; स्तां रायते वा राः PC.

क्रीणाति क्रयिकः । आङि पणिपनिखनिभ्यः । इकन् । आपणिकः । आपनिकः[1] पथिको वालश्च । आखनिको वराहः । कृदाधारार्चिकलिभ्यः कः । कृणोति करोति करति कर्कः सारङ्गः । ददाति दाकः । दधाति धाकः[2] । राति राकः[3] । अर्च्यते अर्कः । कलति कल्कः क्राथकितवौ । सृवृभूशुषिमुषिभ्यः कक् । कः किच्च । धावति सिसर्ति सृकः वायुसरकौ । वृणोति वृकः । भवति भूकः कालो भावमात्रं वा । शुष्यति शुष्कः । मुष्णाति मुष्कः चोरः । शुकवल्कोल्काः । निपात्याः । शोभते शृणोति वा शुकः पक्षी ऋषिश्च । वलति वयति वल्कं त्वक् वल्कलम् । उष्यति उल्का ज्वाला । इण्भीकापाशल्यतिमर्चिभ्यः कन् । एति एकः संख्यावाची मुख्यार्थश्च । बिभेति भेकः मण्डूकः । कायति काकः । पाति पिबति वा पाकः विष्णुबालौ । शलयति शल्कः काष्ठत्वक् मुद्गः । अतति अत्को गतिमदात्मानौ । मर्चति मचर्कः । नौ हः । नियतं हीयते नीहाकः निःस्नेहः । नीहाका गोधारः । स्यमेरिट् च । कन् । इडागमः । स्यमति स्यमिकः क्रिमिमेघौ । अजियुधूञ्भ्यो दीर्घश्च । कन् । अजतीति वीकः वायुरक्षि विमलं च । दीर्घविधिरिङ्गुणबाधार्थः । सुनोति सूकः अभिषवः । धूनोति धूको वायुः । ह्रियो रस्य लो वा । कन् । रेफस्य लो वा । जिह्रेति ह्रीकः ह्लीकः लज्जितः । आनकः शीङ्भियः । शेते शयानकः अजगरः । बिभेत्यस्माद्भयानकः । आणको लूधूशिङ्घिधाञ्भ्यः । एभ्य आणकः स्यात् । लूयतेनेन लवाणकः ।[4] शिङ्घ्यते शिङ्घाणकः श्लेष्मा । दधाति धाणकम् वसुपरिमाणम् । बहुलाण्णस्य नत्वमपीत्येके । लवानकादि । वृतेस्तिकन् । वर्तते वर्त्यते वा वर्तिका । कृतिभिदिलतिभ्यः कित् । तिकन् किच्च । कृन्तति कृत्तिका नक्षत्रम् । भिनत्ति भित्तिका कुड्यम् । लतिः

१. वाणिक् पथिको Dc3. २. After it स्तम्भः PC, Dc3. ३. After it दाता PC, Dc3. ४. After it दात्रम् PC.

सौत्रः । अवलम्बिका गोधा गन्धर्वभाण्डम् । इष्यशिभ्यां तकन् । किच्च । इष्यते इष्टका । अभ्यन्त्यस्यां पितरोष्टका । खजेराकः । खजति खजाकः मथा[1] पक्षी । बलाकादयश्च । साधवः । बलति बलाका । मन्यते मनाका करिणी इत्यादि । शलपटिपतिभ्यो रित् । ओको[2] रिच्च । शलति शलाका । पटति पटाकः पान्थः । पतति पताका । पिनाकादयश्च । साधवः । पिनह्यते[3]ऽनेनारीन् पाति वानेन पिनाकः । ताड्यते तडाकम् । भदते भदाकः अकुटिलः । न भाति नभाकः तमः । पिष्यते पिषाकः[4] तिलपिष्टम् । कौति कवाकः पक्षी । श्यायते श्यामाकः जघन्यो व्रीहिः । काषिदूषिभ्यामीकन् । कषत्यनया कषीका खनित्रम् । दूषयति दूषीका दृङ्मलम् । चङ्कणेः किङ्कणश्च । किङ्कणादेशश्च । चङ्कणिर्यङ्लुगन्तः क्वणिः । पुनः भृशं वा क्वणति किङ्किणीका क्षुद्रघण्टा । शॄपॄवृञां द्वे रुक् चाभ्यासस्य । ईकन् द्वित्वम् अभ्यासस्य च रुक् । शृणाति शर्शरीकं जालम् । पिपर्ति पर्परीको भूपः सूर्यो जलाशयश्च । वृणुते वर्वरीको युवा । पर्फरीकादयश्च । साधवः । स्फुरति पर्फरीकः चलः । दीर्यते दर्दरीकं वाद्यम् । जीर्यते जर्जरीकं जरद्वपुः । ताड्यते तित्तिडीकमौषधम् । ईषेः किद्ध्रस्वश्च । ईकन् कित् ह्रस्वश्च । ईषति इषीका दर्भशलाका । ऋजेश्च । ईकन् किच्च । अर्जते ऋजीकम्[5] पिष्टपचनम् । अनिदृशिभ्यां च । ईकन् किच्च । अन्यते अनीकं बलम् । पश्यन्ति तां विस्मिता दृशीका पुष्पवती । सर्तेर्नुम् च । धावति सृणीका लाला । अलीकादयश्च । साधवः । अनन्त्यनेनाधोगतिमलीकम् । वहन्ति हृदि व्यलीकम् । सृकणिभ्यामूकोकणौ । मारयति म्रियते मल्कों मयूरो मर्त्यो वा । कणति काणुकः काकः । बहुलाद्बलेरूकः । बल्यते बलूकः उत्पलं मूलं

१. मन्था: PC, Dc3. २. आको PC. ३. नि तेनारीन् Dc3. ४. पिण्याकः Pc, Dc3. ५, ऋजीकम् । दुष्टम् PC, Dc3.

जलं वा । उलूकादयश्च । साधवः । उत्क्रम्य दृष्टिमालोकयति उलूकः । भल्लते भल्लूकः । शलिमण्डिभ्यामूकण् । शलति शालूकं कन्दम् । मण्डयति प्रावृषं मण्डूकः । कृञादिभ्यः संज्ञायां वुन् । क्रियतेऽत्रोदकं करकः कमण्डलुः । स्त्रियते सरकः मद्यभाण्डपाने । चरको वैद्याचार्यः । दरको भीरुः । ऋजेः कीकन् । अर्जते ऋजीकं तपो धनं बलं च । अर्भकपृथुकपाका वयसि । साधवः । ऋच्छत्यर्भकः । प्रथते पृथुकः । पिबति पाकः बालः ।

एते कान्ताः ।

डन् खनेर्मुट्‌चोदात्तः । खनेर्डन् उदात्तः मुट्‌चागमो धातोः । खन्यते सुखिभिर्मुखम् । मुहेः खन् मूर्च । मुह्यति मोहयति वा मूर्खः । नहेर्ह-लोपश्च । खन् । नह्यति नखः । महेश्च । खन् हलोपश्च । महते मखः । शीङो नित् ह्रस्वश्च । खन् । शेते शिखा वृक्षावयवः । आ च । शेतेः खन् निच्च आ चान्तादेशः । शेतेस्यां पक्षी शाखा । माङ उखा । निपातः । मीयतेसौ उखा स्थाली । मीनातेरूखः । मीनाति मयूखः ।

खान्ताः ।

पतेरङ्गच् पक्षिणि । पतति पतङ्गः पक्षी । त्रादिभ्यश्च । अङ्गच् । तरन्ति तेन तरङ्गः । लुनाति लवङ्गः । बिडादिभ्यः कित् । वेड-यति बिडङ्गः । कुरङ्गः । मृदङ्गः । गन् गम्यद्योः । गम्यतेर्थि-भिर्गङ्गा जाह्नवी । अन्ति अङ्गः । प्राक् प्रत्ययनिर्देशो वर्गादिनिपात-नाय । वृणोति वर्गः । भृञः किन्नुट् च । गन् किच्च नुडागमश्च । बिभर्ति भृङ्गः । शृणातेर्ह्रस्वश्च । गन् कित् नुट् च । शृणाति शृङ्गम् । गण् शकुनौ । नुट् च । शृणाति शार्ङ्गः शकुनिः । मुदिग्रोर्गग्गौ । मोदयति मुद्गः । गिरति गृणाति गर्गः । दहेर्गो लोपो दश्च नः । गन् दस्य च नः । दह्यते वह्निना नगः । छोपूञ्खडिभ्यो गक् । छ्यति छागः । पवते पूगः । खण्डयति खड्गः ।

१. चराको PC; चरको $Dc_3$. २. मद्यते $Dc_1$, $Dc_4$. ३. गम्यादेः PC. ४. अग्निना PC, $Dc_3$.

गान्ताः ।

जनेः कः जङ्घ च । कः स्यात् जङ्घादेशश्च । जायतेस्यां रोम जङ्घा । दृणातेर्घक् । दृणाति दीर्घः ।

घान्ताः ।

तृतीयः पादः ।

स्रुवश्चिक् । स्रवत्यत्र हविः स्रुक् । तनोतेरनश्च वः । चिक् अकारनकारयोर्वादेशश्च । तनोति त्वक् । कुवश्चट् दीर्घश्च । कवते कूचः करी । समिणः । चट् दीर्घश्च । संयन्ति तास्मिन् समीचः । सिवेष्टेरू च । चट् । सीव्यति सूचः पिशुनः । सीव्यत्यनया सूची ।

चान्ताः ।

कचेश्छः । कच्यते तेन कच्छः । पुनातेः पुच्छ इत्यपि ।

छान्ताः ।

पारेरजिः । पारयति पारक् सुवर्णमन्नं वा । पणेरिज्यादेश्च वः । अजिः स्यात् तस्यादेरिदादेशश्च पणेरादेर्वादेशः । पणते वणिक् । वशेः कित् । अजिः कित् स्यात् तस्यादेरिच्च । वष्टि उश्यते उशिक् वह्निः । भृञ उच्च । अजिस्तस्यादेरिच्च । धातोरुच्च । बिभर्ति भरति मनुष्यान् भुरिक् ।

जान्ताः ।

चतुर्थः पादः ।

लङ्घेरटिर्नलोपश्च । लङ्घते लघट् वायुः । शकादिभ्योटन् । शक्यतेनेन गन्तुं शकटम् । अवत्यवटः । दीव्यति देवटः शिल्पी । मर्कति मर्कटः ।[१] चपति चपटः इषुः । चमति चमटः घस्मरः । भ्रियते भरटो भृत्यः । कॄतॄकृपिभ्यः कीटन् । कीर्यते किरीटम् । तीर्यते तिरीटम् । कल्पते कृपीटम् । जनेर्लोपश्च टः । धातोरन्त्यस्य लोपः । जायन्ते जटाः ।

टान्ताः ।

---

१. After it—कर्कति कर्कटः Do3.

कमेरठः । कम्यते कमठः भिक्षापात्रं कूर्मश्च । कणेष्ठः । कण्यते कण्ठः । कुणति कुण्ठः ।

ठान्ताः ।

अमन्ताड्डः । आन्तङान्तयोर्नोदाहरणम् । दाम्यतेनेनोद्धता दण्डः । मन्यते जैनैर्मण्डः अग्रम् । वनुते वण्डः अल्पशेषः दुश्चर्मा च । रण्यते रणत्यनया वा रण्डा । क्रादिभ्यः कित् । कवर्गादि-अमन्तेभ्यो डः किच्च । कुणति कुण्डा उपकरणभाण्डं परजातं च । काणति काण्डम् । गच्छत्युपधानं गण्डः । खन्यते खण्डः अपूर्णः इक्षुविकारः । बहुलादन्यत्रापि । कवते कुडः बालः । गवते गुडः । अण्डन् कृसृभृवृञः । करोति करण्डः । धावति सिसर्ति सरण्डः । भरति भरण्डम् । वृणोति वरण्डः पूगः । प्राक् प्रत्ययनिर्देशः शरण्डाद्यर्थः । शृणाति शरण्डः हिंस्रः । तरति तरण्डो वायुः । एति एरण्डः । सर्तेरडिः । सरति सरट् वातः ।

डान्ताः ।

शमेर्ढः । शान्तमस्येन्द्रियं शण्ढः । बहुलात् षः । षण्ढः ।

ढान्ताः ।

अथ णान्तप्रसङ्गेऽजन्तान् नोपधान् कथयति तेषां नस्य हि रेफ-षकारेषु निमित्तेषु सत्सु प्रायशो णः स्यात् । केवलान् नान्तांश्चाग्रे यथा-स्थाने वक्ष्यति । श्यास्त्याहृञविभ्य इनच् । श्यायते श्येनः । स्त्यायते स्त्येनः । बहुलाद्यलोपोपि । स्तेनः । हरत्यध्वानं हरिणः । अवति अविनः बुधनृपौ । वृजेः किच्च । वृज्यते वृजिनं पापचर्मकुटिलानि । अजेरज च । इनच् अजादेशश्च । वीयते अजिनम् । बहुलमन्यत्रापि । इनच् । कठति कठिनम् । द्रुदक्षिभ्यामिनच् । द्रूयतेर्थिभिर्द्रविणम् ।

१. जन्यै° $Dc_1$, $Dc_4$. २. विकारः । अनित्यं गर्भनिलयम् । बहुला $Dc_1$.

दक्षते दक्षिणः । अर्तेः किदिच्च । इनच् स च कित् इदादेशश्च । ऋच्छत्यर्थते वा इरिणमुखरम् । वेपितु[1]ह्योर्ह्रस्वश्च । इनच्च किच्च ह्रस्वश्च । वेपतेऽस्मिन् विपिनं वनम् । तु[2]ह्यतेनेन तुहिनम् । महेरिनण् च । चादिनन् । मह्यतेऽस्मिन् महिनं माहिनं राज्यम् । सुयुरुवृञो युच् । सुनोति सौति सवति सवनः कालः प्रातरादिः । यौति युवति वा यवनः । रौति रवणः वायुषट्पदौ । वृणोति वरणो भिक्षुः । अशो रश च । युच् रश चादेशः । अश्नुते कटी[3] रशना काञ्चिः[4] । उन्देर्न-लोपश्च । युच् । उनत्ति ओदनः । बहुलमन्यत्रापि । युच् । स्यन्दते स्यन्दनो रथः । मज्जत्यनेन मज्जनं रोम । रोचते रौचनम् । रजत्यनेन रजनं कुङ्कुमादिरागः । भूसूधूभ्रस्जिभ्यश्छन्दसि । युच् । भवन्ति भूतान्यस्मिन् भुवनम् । सूयते सुवनमादित्योऽङ्कुरो वा । धुनोति धुनाति धुवनं वाय्वग्नी । भृज्जत्यत्र भृज्जनमध्वरीषम् । कृपॄवृजिमन्दि-निधाञः क्युः । किरति तमः किरणो रश्मिः । पृणाति पूर्यते वा पुरणोऽब्धिः । वृणक्ति वृज्यते वृजनं नभः । मँन्दनम् । निधनम् । छन्दसीत्येव । परणः । धृषेर्धिष च संज्ञायाम् । क्युः धिषादेशश्च । धृष्णोत्यनया धिषणा धीः । संज्ञाग्रहणं छन्दोधिकारनिवृत्तये । हंनो जघ च । क्युः । हन्ति जनान् हन्यते वा जनैर्जघनम् । छन्दस्यसानच् शुजॄभ्याम् । शूयते शवसानः । जीर्यते जरसानः । प्राङ् निर्देशः प्रत्ययस्य शरसानाद्यर्थः । शृणाति शरसानः । चन्द्रसूर्यादिभिः तरति तरसानः अग्निः । वृणोति वरसानो मनोरथः । ऋजिवृधिमदिसहिभ्यः कित् । असानच् । ऋजति ऋजसानः मेघः । वर्धते वृधसानः गर्भः । मन्दते मदसानः स्तनः । सहते सहसानः शमी । अर्तेर्गुणः शुट् च ।

१. रुह्योः Dc₃. २. रुह्यतेनेन रुहिणम् । Dc₃. ३. कटिं PC, Dc₃. ४. काञ्ची PC, Dc₃. ५. रोचनः । रेवनः । PC. ६. मादि Dc₃, PC. ७. माद्यत्यनेन मदनं Dc₃; मदनं PC. ८. हनो PC., Dc₃. ९. तैर्ज° PC, Dc₃.

असानच् । ऋच्छत्यशंसानः पन्था इषुर्वा । सम्यानच् स्तौतेः । समः परात्स्तौतेरानच् । संस्तौति संस्तवानो वाग्मी । युधिबुधिदृशेः किच्च । युध्यते युधानः परिवारः । बोधयति बुधान आचार्यः । पश्यति दृशानः लोकपालः । हुर्छेः सनो लुक् छलोपश्च । सन्नन्तात् हुर्छेरानच् सनो लुक् छलोपश्च । जुहूर्छिषाति जुहुराणः कठिनहृदयः । इण्-सिञ्दीङुष्यविभ्यो नक् । अर्थिनो यन्ति तमिनः । सिनोति सीयते सिनः कार्यो बन्धो वा । दीयते दीनः । उष्यतेनेनोष्णम् । अव्यते ऊनः हीनः । फेनमीनौ । साधुं । स्फायते फेनः । मिनाति मीनः । कृषेर्वर्णे । नक् । कृषति कृष्णो वर्णः । बन्धेर्ब्रधिबुधी च । नक् एतौ चादेशौ । बध्नाति ब्रध्नः सूर्यः । बुध्नो भवानिशः मनश्च । धापॄवस्य-ज्यतिभ्यो नः । धीयन्ते प्राणिनो यासां विकारैस्ता धानाः । पृणाति तरुं पर्णम् । वस्तेनेन वस्नं वासः । अजति वेनः वातः । अतति अन्न आत्मा । लक्षेरट् च । नः । लक्ष्यतेनेन लक्षणम् । सिवेष्टेर्यू च । नः टेर्यूरादेशश्च । सीव्यतेनेन स्योनः राशिः सूरणं च । कॄवृजॄसिद्रुपन्यति-स्वपिभ्यो नित् । नः । निच्च । कीर्यते कर्णः । वृणोति वर्णः । जीर्यते जीर्णः । सिनोति सेना । द्रवति द्रोणः । पन्नः । अतत्यन्नः आत्मा वायुश्च । स्वपित्य-नेन स्वप्नो निद्रा । धेट इश्च । नः । धयन्ति तां धेना सरस्वती माता च । तृषिशुषिरसिभ्यः कित् । नः । तृष्यतेनया तृष्णा । शुष्यति तेन शुष्णम् । रस्यते रस्नः । सुञो दीर्घश्च । कित् । सुनोत्यस्यां सूना वधस्थानम् मांसद्रोणी । रमेस्त च । रमन्तेस्मिन् रत्नम् । रास्नासास्नास्थूणावीणाः । साधवः । राति रसति रस्यते वा रास्ना औषधः । स्वपित्यस्यां सास्ना गोगलकम्बलः । तिष्ठत्यनया धाम इति स्थूणा ।

१. °र्संसानः $Dc_1$, $Dc_4$. २. स्तुवः $Dc_1$, $Dc_4$. ३. स्तौति $Dc_1$, $Dc_4$. ४. एनमिनः $Dc_3$. ५. च साधू PC, $Dc_3$. ६. अन्नमात्मा PC. ७. °त्यन्न-मात्मा PC. ८. शुष्यन्त्यनेन PC; $Dc_3$. ९. °चर्म PC, $Dc_3$.

अजति वेति वा वीणा । गादाभ्यामिष्णुच् । गायन्त्यस्मिन् गेष्णुर्मेखः । ददाति देष्णुर्दाता । कृत्यशिभ्यां क्स्नः । कृत्यते तेन कृत्स्नम् । अश्नुते अक्ष्णो वृन्दम् तेजनं च । तिजेर्दीर्घश्च । क्स्नः । तितिक्षति तीक्ष्णम् । श्लिषेरच्चोपधायाः । क्स्नः । श्लिष्यति श्लक्ष्णम् मृदुसूक्ष्मौ । कॄवॄदारिभ्य उनन् । किरति मनः करुणा । वृणोति वरुणा । तरति तरुणः । दारयति दारुणम् । पिशेः किच्च । उनन् । पिशति पिशुनः । लपेः शच्च । उनन् । शोन्तादेशः । लपति लशुनम् । फलेर्गुक् च । उनन् गुगागमश्च । फलति फल्गुनः । त्रो रश्च लः । उनन् । रस्य लः । तरति तलुनः । अर्जेर्णिलुक् च । उनन् । अर्जयत्यर्जुनः । तृणाख्यायां चित् । अर्जुनं तृणम् । अर्तेश्च । उनन् चित् । ऋच्छत्यरुणः । धारेर्णिलुक् च । उनन् चित् । धारयति धरुणः ग्रहः । अजियमिशीङ्भ्यश्च । उनन् चित् । अजति वयुनश्चन्द्रः । यच्छति यमुना । शेतेत्यर्थे शयुनः अजगरः । तृहेर्नक् हलोपश्च । तृह्यते गवादिभिस्तृणम् । अर्तेर्युजुच्च । युच् उच्चास्यादेशः । ऋच्छत्युरणः पशुमेषौ उलूकौ वा । ऊर्णोतेर्डः । ऊर्णोत्यूर्णा अविलोमानि ।

नोपधा अजन्ताः ।

पञ्चमः पादः ।

मृग्रो रुतिः । म्रियते न कदाचित् मरुत् वायुः । गृणाति गिरति गरुत् मरकतः । गर्मुत् । साधुः । गिरति गर्मुत् सूर्यसुपर्णौ । हृसृरुहियुषिभ्य इतिः । हरति हरित् वायुदिङ्मृगाः । धावति सरित् । रोहति रोहित् सूर्यग्रावा वारुश्च । युषिः सौत्रः । योषित् । ताडेर्णिलुक् च । इतिः । ताडयति अभ्रं ताड्यते वा तडित् । वर्तमाने पृषद्बृहन्महज्जगच्छतृवत् । एते वर्तमाने साधवः शतृवच्च नुमादिकार्यमेषाम् । वर्षति वृणोति पिपर्ति वा पृषत् चित्रमृगजातिः आज्यं सीकरश्च । बर्हति बृहत् बृहती । महति महयति महान् । महती । गच्छति जगत् । संस्वत् तृपत्

वेहत् । साधवः । संव्ययति संस्वत् उदकम् । तृप्यति तृपत् चन्द्रः । वहति वेहत् गर्भघातिनी । हसिमृग्रिण्वामिदमितमिलूपूधुर्विभ्यस्तन् । हसत्यनेनारिं हस्तः । म्रियते मर्तः मर्त्यः । गिरति गर्तः श्वभ्रः । एति एतो वायुः । वाति वातः । अम्यतेन्तोवसानम् । दाम्यति दन्तः । ताम्यति तन्तः । लुनाति लोतः । पुनाति पोतः । धूर्वति धूर्तः । तनिमृङ्भ्यां किच्च । तन् । तनोति तन्यते वा ततं विशालम् । मवति मूयते वा मूतः आलानपाशः । अञ्जिघृसिभ्यः क्तः । अज्यते अक्तं म्रंक्षितम् । जिघर्ति घृतम् । सिनोति सितं शुक्लम् । दुतनिभ्यां दीर्घश्च । क्तः । दुनोति दूतः । तनोति तातः । जेर्मुट् चोदात्तः । क्तस्तस्य मूडागमः स चोदात्तः जेर्दीर्घश्च । जयति नभः जीयतेनलेन वा जीमूतः । हृश्याभ्यामितन् । हरति जिहर्ति हरितः वर्णः । श्यायते श्येतः वर्णः । रुहे रश्च लो वा । इतच् रस्य लो वा । रोहति लोहितः रोहितः । भृमृशीयजिपर्विपच्यमिनमिहर्यिभ्योतच् । बिभर्ति भरतः राजा । म्रियते मरतः आदृतः । शेते शयतः निद्रालुः । यजति यजतः अग्नियजमानौ । पर्वति पर्वतः । पचति पचतः अग्निरवी । अमति अमतः वासरानकौ । नमति नमतः नटः देवो वा । माम्यति नमतः निर्वेदः । हर्यति हर्यतः वायुः । पृषिरञ्जिभ्यां कित् । अतच् । पृषति पृषतो मृगः । वृषत इत्येके । रजतेत्र रजतः । रजतं रूप्यम् । खलतः । साधुः । स्खलति खलतः खलतिः । रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि । झच् स चषित् । रुह्यात् रोहन्तस्तरुः । नन्द्यात् नन्दयन्तोर्भकः । जीव्याज्जीवन्तो जन्तुः । प्राण्यात् प्राणन्तो योगः । स्त्री चेत् रोहन्तीत्यादि । तॄभूवहिवसिभासिसाधिगडिमण्डिजनिनन्दिभ्यश्च । आशिषि झच् षिच्च । तीर्यात् तरन्तः सूर्यः मार्गवर्ती । स्त्री चेत् तरन्ती । भूयात् भवन्तो बालः । उह्यात् वहन्तो वायुः ।

१. कुहकः PC, Dc3. २. म्रदितम् PC, Dc3.

उष्यात् वसन्तः ऋतुः । भासिषीष्ट भासन्तो भानुः । साध्यात् साधन्तो भिक्षुः । गण्डयन्तो मेघः । मण्डयन्तो नटः । जनयन्तो राजा । नन्दयन्तोऽर्भकः । हन्तेर्मुट् हि च । झच् मुडागमः हन्तेर्हिरादेशश्च । हन्ति पाप्मानं हेमन्तः । उषि-कुस्सिकुषिभ्यः कितन् । उच्यति उचितं न्याय्यम् । कुस्यति कुस्तिसम् । कुष्यति कुषितं क्लिष्टम्[1] । अदि भुवो डुतच् । अद् भवति अद्भुतम् । सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः । सुपूर्वाद्रमेः क्तो दमेर्थे । सुष्ठु रमते सूरतो दमितः । फलेरितजादेश्च पः । इतजादेः पश्च । फलति पलितम् । जनस्तो र च । तः स्याद्रान्तादेशः । जायते जर्तः वत्सं लोम । शकेर्ऋतिन् । शक्नोति शकृत् विष्ठा ।

तान्ताः ।

हनिकुषिनीरमिकाशिभ्यः क्थन् । हन्ति हथो व्याधिः । कुष्यति कुष्ठं गन्धद्रव्यम् । सुष्ठु नयति सुनीथो नीतिमान् । रमन्तेऽस्मिन् रथः । काशतेऽनेन काष्ठम् । अवे भृञः । क्थन् । अवभ्रियतेऽनेना-वभृथो यज्ञान्तस्नानम् । उषिकुषिगार्तिभ्यस्थन् । उष्यते व्यजनैरोष्ठः । कुष्णाति कोष्ठः कुशूल उदरं च । गीयतेऽसौ गाथा । ऋच्छति समर्थः । सर्तेर्णित् । थन् । धावति सिसर्ति सार्थः । जॄवृञ्भ्यामूथन् । जीर्यते जरूथं कश्मलम् । वृणोति वरूथं रथगुप्तिः । पातॄतुदिवचिरिचि-सिचिभ्यः क्थन् । पिबति तेजः पीथो रविः । तरत्यनेन तीर्थम् । तुदति तुत्थमञ्जनद्रव्यम् । उच्यते उक्थं साम । रिच्यते रिक्थं पित्रादिद्रव्यम् । सिच्यते सिक्थम् । अर्तेर्निरि । थक् । निरन्तरमृच्छति निर्ऋथः समाधिस्थानम् । निशीथगोपीथावगथाः । थकि निपात्याः । नियतं शेरतेऽस्मिन् निशीथोऽर्धरात्रः । गावः पिबन्त्य-स्मिन् गोपीथः जलद्रोणिः । अवगच्छत्यस्मिन्नवगीयते वा अवगथः प्रातः साम च । उदि गस्थक् । उद्गीयतेऽसौ उद्गीथः साम । समीगः ।

1. क्लिष्टम् PO, Dc3.

थक् । समेति समिथः अग्निः संगमश्च । तिथपृष्ठगूथयूथप्रोथाः । साधवः । तिष्ठति तिस्थाति वा तिथः कालः । तप्यत इति केचित् । स्पृशति पृथं पृष्ठम् । गवते गूथो वर्चः । युवन्ति तत्र यूथः संघः । प्रवते प्रोथः सर्पवराहमुखैकदेशः । शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योथः । शेते शयथः निद्रालुः । शपन्ति तेन शपथः सत्यम् । रौति रवयः कालः । गच्छति गम्यते वा गमथः कालः पान्थपन्थानौ । वन्दन्ति वन्दथः । जीवति जीवथः वायसुभृतौ । प्राणिति प्राणथः बलवान् । आङि वासः । अथः । आवसन्त्यत्र आवसथः वेश्म । भृञश्चित् । बिभर्ति भरथो राजा । रुदिविदिभ्यां कित् । अथश्चित् किच्च । रोदिति रुदथो बालः । वेत्ति विदथो विद्वान् ।

थान्ताः ।

शृदृभसोदिः । शीर्यतेस्यां शरत् । दृणाति दरत् भीरुम्लेंच्छः । दृशौ बभस्ति भसत् आमाशयस्थानम् । त्यजितनियतिभ्यो डित् । अदिर्डित् । त्यजति त्यत् । तनोति तद् । यतते यद् । एतेस्तुट् च । अदिस्तुट् च । एति एतद् । दृणातेः षुक् ह्रस्वश्च । अदिः षुक्च । दृणात्यत्र दृषत् शिला । कुणिपुल्योः किन्दच् । कुणति कुणिन्दः उपकरणम् । पोलति पुलिन्दः म्लेच्छजातिः । कुपेर्व च । किन्दच् । कुप्यति कुविन्दस्तन्तुवायः । शाशपिभ्यां ददनौ । क्रमात् । नः स्वरार्थः । श्यति शादः कुशः । शपन्ति तेन शब्दः । अब्दादयश्च । निपात्याः । आप्नोति सूर्यमब्दः वर्षम् । मन्यते मनुते मन्दः । बृहति बृह्यते बृन्दम् । कम्पते कन्दः कुन्दम् । युष्यसिभ्यां मदिक् । युष्यते युष्मद् । अस्ति अस्मद् ।

दान्ताः ।

कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः । कनिन् । यौति युवते युवा । वर्षति वृषा । तक्ष्णोति तक्षा । राजते राजा । धन्विः सौत्रः । धन्वति धन्वा मरुदेशः । द्यौति द्यूयते वा द्युवा

रत्रिः । प्रतिदीव्यत्यस्मिन् प्रतिदिवा । अन्येभ्योपि । अक्षा । ईक्षा ध्रुवा । नञि जहातेः । न जहात्यत्र कर्म अहः । सप्यशूभ्यां तुट् च । कनिन् । सपन्ति सप्त । अह्नुवतेष्टौ । नीतेर्गुणश्च । कानिन् गुणश्च धातोः । नीतीति नव संख्या । श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति । एतकानि साधवः । श्वयति धाष्टर्यात् श्वा । उक्षति उक्षा वृषः । पुष्णाति पुष्यति वा पूषा सूर्यः । प्लीहते प्लीहा व्याधिः । क्लिद्यति क्लेदा । स्निह्यत्यनया स्नेहा वसा । मुह्यत्यस्मिन् मूर्धा । मज्जत्यस्मिन् मज्जा धातुः । ऋच्छत्यर्यमा देवः । विश्वं प्सायति विश्वप्सा देवः । परिजायते परिज्मा चन्द्रोग्निश्च । मातरि श्वयति मातरिश्वा वातः । मह्यतेसौ मघवा इन्द्रः । वीपातिभ्यां तनन् । वीयते वेतनम् । पतन्त्यस्मिन् पत्तनम् । गमेरिनिः । गमिष्यतीति गमी जिगमिषुः । आङि णित् । इनिर्णित् । आगमिष्यतीत्यागामी प्रवासी । भुवश्च । इनिर्णिच्च । भविष्यति भावी । प्रे स्थः । इनिर्णिच्च । प्रस्थास्यति प्रस्थायी । परमे कित् । स्थः इनिः किच्च । परमे तिष्ठति परमेष्ठी । मन्थेश्च । इनिः किच्च । मथ्नाति मन्थाः । पतः स्थ च । इनिः थान्तादेशः । पतन्त्यनेन पन्थाः । अदेस्त्रिन् । अत्ति तपः स्वाध्यायमत्रिः ऋषिः । पतेरत्रिन् । पतत्यर्थं पतत्रिः । हृसृभ्यां क्वनिप् । हरति हृत्वा वायुः । धावति सृत्वा सर्पः । सृजेरम् च । क्वनिप् । अमागमश्च । सृजति स्रग्वा मज्जातन्तुः । स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् । स्नात्यस्यां स्नात्वा । स्नावरी नदी । माद्यत्यनया मद्वा मद्वरी मदिरा । पद्यते पद्वा रथः । पद्वरी गतिः । ऋच्छत्यर्वा अश्वः । पिपर्ति पर्वा । शक्नोति शक्वा शक्तः । शक्वरी छन्दः । शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् । शेते शीवा अजगरः । क्रोशति क्रुश्वा क्रोष्टा । रोहति रुह्वा तरुः । जयति जित्वा शक्रः । क्षयति क्षित्वा कालः । सरति सृत्वा । ध्रियन्तेस्मिन् भूतानि धृत्वा विष्णुः । ध्याप्योः संप्रसारणं च । ध्यायति

पीवा निषादः । प्यायते पीवा मांसोपचितः । अदेर्ध्म्श्च । क्वनिप् धोन्तादेशश्च । अत्ति बलमध्वा । प्रईरसद्योस्तुट् च । प्रेरयति प्रेर्त्वा वायुः । प्रसीदति प्रसत्त्वा मूढः । मनिन् । सर्वेभ्यो मनिन् । क्रियते फलार्थिभिः कर्म । बभस्ति भस्म । शृणाति दुःखं शर्म । जायते जन्म । बृंहेर्नोच्च । मनिन् स्यात् नस्यादादेशः । बृंहति ब्रह्म परमात्म-जीवजातिकमलासनशब्दराशयः । अशिशकिभ्यां छन्दसि । मनिन् । अश्नाति अश्नुते अश्मा । शक्नोति शक्मा समर्थः । हृभृधृस्तृसृभ्य ईमनिन् । छन्दसि । हरति हरीमा वायुः । बिभर्ति भरीमा राजा । ध्रियते धरीमा धर्मी । स्तीर्यते स्तरीमा आच्छादनम् । धावति सरीमा गर्भः । जनिहृभ्यामिमनिन् । जायते जनिमा संसारः । हरति हरिमा मृत्युः । वेञः सर्वत्र । भाषायां छन्दसि इमनिन् । वयति वेमा । नामन्सामन्स्तोमन्होमन्लोमन्व्योमन्विधर्मन्पाप्मन्व्यामन् । साधवः । नमन्ति तेन नाम । सिनोति स्वरान् साम । स्तुनोति स्तोम । हूयते होम । लूयते लोम रोम । वीयते वायुना व्योम । विविधं ध्रियते विधर्मा वायुः । पाति पिबत्यात्मानं वा पाप्मा । व्ययते व्याम संसारः । वसौ शृणातेर्मनिन् । वसवोऽस्य पापं शीर्यासुर्वसुशर्मा । एवमन्ये भविष्यन्ति । सातिभ्यां मनिन् मनिणौ । यथासंख्यम् । स्यति सामा । अतत्यात्मा । अर्तेर्भुक्षनक् । ऋच्छति ऋभुक्षा । हनो युन् । आद्यन्तयोर्घत्वतत्वे । हन्त्याचारं घातनः । बहुलाद् वृद्धिः ।

नान्ताः ।

षष्ठः पादः ।

आप्नोतेः क्विप् ह्रस्वश्च । आप्नुवन्त्यापः । पानीविषिभ्यः पः । पाति पीयते दुर्जनैः पापम् । नयति नेपः प्रवाहः । वेवेष्टि वेष्पः पर-मात्मा । तुवः कित् । पः । तौति तुपः मन्दः । स्तौतेर्दीर्घश्च । पः कित् । स्तौति स्तूपः बोधिसत्त्ववचनः । कुसुयुभ्यश्च । पः

कित् दीर्घश्च । कुप्यतेस्मिन् कूपः । सुनोति सूपः व्यञ्जनम् । यौति यूपः । सृशृभ्यामूर्च । पः ऊरादेशश्च । धावति सिसर्ति सूर्पः अहिः । शृणाति शूर्पः । खप्पशिल्पशष्पबाष्परूपतर्पतल्पाः । साधवः पान्ताः । खनति खप्पः खनित्रम् । शीलयन्ति तत् शिल्पम् । शस्यते गवादिभिः शष्पम् बालतृणम् । बाधते नेत्रं बाष्पं नेत्राम्बु । रूप्यते रूपम् । तरन्त्यनेन जनास्तर्पम् । तृप्यन्त्यत्र तल्पम् । बहुलात् चणतेः चम्पा । पान्ति पिबन्ति तां पम्पा । सर्तेरपः षुक् च । अपः षुक् च । धावन्ति तस्माद्रक्षांसि सर्षपः । उषिकुटिदलिकाजिखाजिभ्यः कपन् । उषति उषपोग्निः । कुटति कुटपः परिमाणम् । दल्यतेनेन दलपः प्रहरणम् । कञ्जति कञ्जपः शाकुनिको बन्धो वा । खज्यते खजपं दधि । क्कणेः संप्रसारणं च । कपन् । क्कण्यते श्वापदैः कुणपो मृतशरीरम् । कपश्चाक्रवर्मणस्य । क्कणः कपः संप्रसारणं च । कुणपम् । स्वरे भेदः । विटपविष्टपविशिपोलपाः । कपनि साधवः । विटन्त्यत्र पक्षिणो विटपः । विशति तत्र विष्टपं भुवनम् । विशन्ति तत्र विशिपं वेश्म । उष्यतेग्निना उलपं तृणम् । उह्यते वा ।

पान्ताः ।

कलेश्फगस्योच्च । फक् । अस्य उत् । कल्यते कुल्फः न्चतुरबन्धसंधिः । गलेश्च । फक् । अस्य उत् । गच्छति गुल्फश्चरणग्रन्थिः ।

फान्ताः ।

कदिकाडिकाटिभ्योम्बच् । कदति कदम्बः तरुः । कडम्बः । कटति कटम्बो वाद्यभेदः । कदेर्णित् पक्षिणि । अम्बच् णित् । कादम्बः कलहंसः । कृञश्च । अम्बच् । करोति करम्बः शाकभेदः । उल्बाबिम्बादयोपि ।

बान्ताः ॥

कृगृशृशलिगर्दिभ्योभच् । किरति करभः उष्ट्रादेः । गिरति गृणाति गरभः मृगः । शृणाति शरभः अष्टपात् । शलति शलभः पतङ्गः ।

गर्दति गर्दभः । ऋषिवृषिभ्यां कित् । ऋषति ऋषभः । वर्षति वृषभः । रुषेर्नित्त्व लश च । अभच् नित्त्व लशादेशः । रुषति लशभः मत्तेभः । रासिवल्लिभ्यां च । अभच् नित्त्व । रासते रासभः । वल्लति वल्लभः । गडेः कड च । अभच् । गडति कडभः करिशावः । डलयोरभेदात् कलभः । दृदलिभ्यां भः । दृणाति दर्भः । दलयति दल्भः वल्कलम् । अर्तिगृभ्यां भन् । ऋच्छत्यर्भः बालः । गिरति गीर्यते गर्भः । इणः कित् । एति इभः ।

भान्ताः ।

अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् । ऋच्छत्यर्मः नेत्ररोगः । स्तौति स्तूयते स्तोमः । सूयते सोमः । हूयते होमः । सरति सर्मः ध्वनिः । धरति ध्रियते वा धर्मः । क्षयति क्षेमम् । क्षौति क्षौमम् । बहुलाद्वृद्धिः । भाति भामः कोपादित्यनलाः । याति यामः । वाति वामः । पद्यते भृङ्गैः पद्मम् । यक्ष्यति[1] यक्ष्मा । बहुलान्नस्येत्वं न । नीयते नेमः अन्तिको देशः । अवतेष्टिलोपश्च । मन् । अवतेः 'ज्वरत्वर—' इत्यूठ् । ततो गुणः । ओम् प्रणवः । ग्रसते रा च । मन् । आ अन्तादेशः । ग्रसन्तेस्मिन् ग्रामः । प्रथेरट् च । मन् अट् च । प्रथन्तेस्मात् प्रथमः । अविसिविशुषिभ्यः कित् । मन् । अवत्युमा । ऊठ् । बहुलात् ह्रस्वः । सीव्यते तेन सूमः । शोषयति दर्पं शुष्म बलम् । इषियुधीन्धिदसिश्याधूसूभ्यो मक् । ईषति ईष्मः बाणवसन्तौ । युध्यते युध्मः शरशरदौ । इध्यतेनेनाग्निरिध्मः इन्धनम् । दस्यति दस्मः हीनः । श्यायते श्यामम् । धुनोति धूयते वा धूमः । सूयते सूते सुवति वा सूमः कालधर्मौ । गलेरुच्चोपधायाः । मक् । गच्छति गुल्मः व्याधिः । युजिरुचितिजां कुश्च । मक् कवर्गान्तादेशः । युनक्ति युज्यते युग्मम् । रोचतेत्यर्थं रुक्मं हेम । तितिक्षते तिग्मं तीक्ष्णम् । हन्तेर्हि च । मक् हिरादेशश्च । हन्ति सत्त्वान् हिमम् । बहुलात् हेमम् । भियः षुग्वा । मक् षुग्वा । बिभेत्यस्माज्जनो भीष्मः भीमः । घर्मः ।

१. यक्षति PC, Dc3.

निपातः । जिघर्ति तेजः घर्मः । ग्रीष्मः । ग्रसते तेजो ग्रीष्मः ।
पच एलिमच् । पचति पचेलिमम् । भिदेः केलिमत् । भिनत्ति
भिदेलिमः । कर्मकर्तरि । कर्दिकडोरमः । कर्दति कर्दमः । कड्यते
कडमः । डलयोरभेदात् कलमः । सूचेः स्मन् । सूचयति सूक्ष्मम् ।
गुधेरूमः । गुध्यति गोधूमः । इणो दमुक् । एति इध्मम् । कायते-
र्डिमन् । कायते किम् । क्रमिगमिक्षमिभ्यस्तुम् वृद्धिश्च । क्रामति
क्रान्तुम् । गच्छति गान्तुम् । क्षाम्यते क्षान्तुम् । प्रथेरमच् । प्रथतेऽस्मात्
संख्या प्रथमः । 'प्रथेरट्च' इति सिद्धे स्वरार्थं सूत्रम् । चरेश्च ।
अमच् । चरति चरमः ।

मान्ताः ।

सप्तमः पादः ।

दिधिषाय्यः । दधातेराय्ये निपातः । धीयते दिधिषाय्यम्
मद्यम् । वृञ एण्यः । वृणीते व्रियते वा वरेण्यो वरिष्ठः परब्रह्म-
धाम वा । स्तुवः कसेय्यश्छन्दसि । स्तूयते सौ स्तुषेयः स्तोता देवो वा ।
राजेरन्यः । राजते राजन्यः ज्योतिरग्निः क्षत्रियो वा । अर्तेर्नित् ।
अन्यः नित् । अर्यते मृगैररण्यम् । पर्जन्यः । साधुः । वर्षत्यर्जति वा
पर्जन्यः । शॄरम्योश्च । अन्यः निच्च । शृणाति भयं शरण्यः
त्राता । रमन्ते ऽस्मिन् रमण्यः शोभनः । वदेरान्यः । वदति वदान्यः
वक्ता दाता वा । वलिमलितनिभ्यः कयन् । वलति तत् वलयं
भूषणम् । मलति क्षितिं मलयो गिरिः । तनोति कुलं तनयः पुत्रः ।
वृहोः षुग्दुकौ च । कयन् आगमौ च क्रमात् । वृणोति वृषयः आशयः ।
ह्रियते तत् हृदयं मनः । माछाससिसूभ्यो यः । मात्यनया माया
मिथ्या । छ्यति तेजश्छाया । सस्तीति सस्यं यवादि ।
सुवत्यनेन सव्यं वामम् । जनेर्यक् । जायतेऽस्यामपत्यं जाया । अघ्न्या-

१. जगतस्तेजो $Dc_3$, PC. २. कडते PC. ३. च $Dc_3$.

दयश्च । निपात्या यकि । हन्ति अध्न्यो धर्मः । देवता वाघ्न्या । सम्यक् ध्यायन्त्यस्यां विप्राः संध्या । संधीयते वा । काम्यतेसौ कन्या । हतमस्याः कर्मभिर्जीवितं बन्ध्या । ईर्ष्यति ईर्ष्या मात्सर्यम् । शक्यते वक्तुं शक्यमसारम् । रुचिभुजिभ्यां किष्यन् । रुच्यते रुचिष्यं प्रियम् । भुज्यते भुजिष्यः परिचारकः । पूञो यत् णट् ह्रस्वश्च । यत् णडागमो ह्रस्वश्च । पुनाति पूयतेनेन पुण्यम् । स्रंसेः शिः कुट् किच्च । यत् । शिरादेशः कुडागमः । स्रंसते शिक्यम् भिक्षुरज्जुः । हर्यतेः कन्यन् हिर् च । कन्यन् । हिरादेशः । हर्यति हिरण्यम् दधातेर्यत् नुट् च । दधाति सत्त्वान् धान्यम् । कवतेर्यक् डुक् च । कवतेर्यक् डुक् चागमः । कवते कूयते वा कुड्यं भित्तिः ।

यान्ताः ।

मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् । मन्दन्तेस्यां वाजिनो मन्दुरा वाजिशाला । वारयते वाशुरः गर्दभः । मथ्यते जनैर्मथुरा । चतते चतुरः । चङ्क्यते चङ्कुरः । अङ्क्यते अङ्कुरः । व्यथेः संप्रसारणं किच्च । उरच् थोन्तादेशः । व्यथस्तेस्माज्जनो विधुरोग्निः राक्षसः । मुकुरदर्दुरौ च । मङ्क्यतेनेन मुकुरः चन्द्रदर्पणौ । दृणाति दर्दुरः मण्डूकः । बहुलात् शृणाति शर्कुरः शिशुः । कौत्यत्यर्थं कुक्कुरः । असेरुरन् । अस्यन्ते देवैरसुराः । शावशेराप्तौ । शुपूर्वादशेरुरन् आप्तौ । श्वश्यन्तेस्मिन् कामाः श्वशुरः । इषिमदिमुदिखिदिच्छिदिभिदिर्मान्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिशुषिबन्धिभ्यः किरच् । इष्यते इषिरोग्निः । माद्यतेनया मदिरा । मोदन्तेनेन मुदिरो मेघः । खिद्यतेनेन खिदिरो वक्रश्चन्द्रः देवलो वा । छिनत्ति छिदिरः शस्त्रम् । भिनत्ति भिदिरं वज्रम् । मन्दतेस्मिन् मन्दिरम् । चन्दति चन्दिरो मलयानिलः । तिम्यति

१. अध्न्यः धर्मः PC. २. भिक्षारज्जुः PC.

तिमिरम् । मेहति मिहिरोंशुमान् । मुह्यते मुहिरः स्मरः । मुञ्चति मुचिरो वायुः । रोचति रुचिरं भासुरम् । रुणद्धि रुधिरम् । शुष्यति शुषिरम् । बद्धमस्यश्रोत्रं बधिरः । अजिरशिशिरशिथिलस्थिरस्फिर-स्थविरखदिराः । किरजन्ताः साधवः । अजत्यस्मिन्नजिरम् । शीर्यन्ते तेजांस्यत्र शिशिरः । श्रयते शिथिलम् । रलयोरभेदात् । तिष्ठति स्थिरम् । स्फायते स्फिरम् । स्थितो यौवनात् स्थविरः । खादति खाद्यते वा खदिरः । बहुलात् शेतेस्मिन् सैन्यं शिशिरम् । पच्यतेस्मिन् पिठरम् । मीनातेरूरन् । मीनाति मयूरः । कठिचकिभ्यामोरन् । कठति कठोरः चिरन्तनः अमृदुर्वा । चकति चकोरः । किशोरादयश्च । ओरन् । साधवः । काशते किशोरः । एवमन्येपि । स्फायितञ्चि-वञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदि-खिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवहिवसिवासिशीङ्हसिसिधि-शुभिभ्यो रक् । स्फायते स्फारं बहु । तञ्चयते तक्रम् । वच्यते वक्रम् कुटिलम् । शक्नोति शक्रः । क्षिप्यते क्षिप्रम् । क्षुद्यते क्षुद्रः । सर्पति सृप्रः वायुसोमौ । तृप्यतेनेन तृप्रमाज्यम् । दृप्यति दृप्रो हर्षमोहौ । वन्द्यते वन्द्रो गुरुः । समुन्दति समुद्रः । श्वेतते श्वित्रम् । वर्तते वृत्रो दानवः । अजति वीरः । नीयते नीरं जलम् । पद्यतेस्मिन् पद्रो जन-पदः । माद्यन्त्यत्र मद्रो देशः । मोदतेनया मुद्रा चिह्नम् । खिद्यतेनेन खिद्रः श्रमः । छिद्यते छिद्रम् । भिनत्ति भिद्रं वज्रम् । मन्दते मन्द्रो मधुरः स्वरः । चन्दति चन्द्रः । दहति दह्रोग्नितरू । दस्यति दस्रः । दभ्नोति दम्भ्रो दाम्भिकः शूरः । वहति उह्रोनड्वान् । वसति तेजोत्र उस्रः किरणः । वास्यते वास्रः शकुनिगर्दभौ । शेते शीरोजगरः । हसति हस्रो हर्बुकः । सिध्नोति सिध्र आसवप्रकारः । शोभते शुभ्रं सितम् । चकिरम्योरुच्चोपधायाः । चक्यतेनेन चुक्रो रसः । रम-न्त्यस्मिन् रुम्रो रमणः । वेः कसेः । रक् । विकसतीति विकस्रः शशी पुष्पितं च । शदेरू च । रक् ऊ चोपधायाः । शीयते शूद्रः ।

स्थश्च । रक् ऊ च । तिष्ठतीति स्थूरः । रलयोरभेदात् स्थूलः । अमितम्म्योर्दीर्घश्च । रक् । अमति आम्रश्चूतः । ताम्यति ताम्रो लोहविकारः । दुरीणो लोपश्च । दुर्पूर्वादिणो रक् धातोर्लोपश्च । दुःखेनेयते दूरम् । कृतेश्छक् क्रू च । रक् छगागमः क्रू आदेशः । पक्षं[2] कृन्तति यत्नेन कृच्छ्रं दुःखम्[1] । क्रूरो दारुणः । रोदेर्णिलुक् च । रक् । रोदयति दैत्यान् रुद्रः शिवः । बहुलमन्यत्रापि संज्ञाछन्दसोः । अन्यस्माद्धातोरन्यस्मिन् प्रत्यये बहुलं णेर्लुक् संज्ञाछन्दसोः । देवयति द्यौः । क्विप् । पुण्यं कारयति पुण्यकृत् । चक्रं धारयति चक्रधरः । वर्धन्तु त्वा सुष्टुतयो गिरो मे । वर्धयन्त्विति प्राप्ते । संज्ञाछन्दसोरन्यत्रापि ।

'वान्ति पर्णशुषो वातास्ततः पर्णमुचोपरे ।
ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति ' ।। इति ।।

जोरी च । रक् । ईरन्तादेशः । जुवते जीरः वाय्वग्नी । सुसूधागृधिभ्यः क्रन् । सुन्वन्ति सुरा देवा मदिरा वा । सूते सुवति सूयते वा सूरः रविः । दधात्यापत्सु चित्तं धीरः । गृध्नाति गृध्रः लुब्धकश्येनौ । शुसिचिमीभ्यो दीर्घश्च । क्रन् । शवति शरणं शूरः । सिनोति सीरो हलः । चिनोति चीरं वल्कलम् । मिनोति मीरं देशसीमा । वाविन्धेः । विविधमिन्धे वीध्रः निर्मलः[3] पूर्णचन्द्रमण्डलं वा । वृधिवपिभ्यां रन् । वर्धते वर्ध्रं चर्म चन्द्रोपि । उप्यतेस्मिन् वप्रो देशः प्राकारोपि । ऋज्रेन्द्राग्रवज्रविप्रकुप्रचुप्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लतीव्रवर्गैरामालाः[4] । रन्नन्ताः साधवः । अर्जयति अर्जयते वा ऋज्रो नायकः । इन्दति इन्दते वा तेजोभिरिन्द्रः । अङ्गति अग्रम् आदिरन्तश्च । व्रजति सर्वत्र वज्रम् । विविधं दातारं पाति विप्रः । कुम्प्यते कुप्रं गृहच्छादनम् । चुम्पते चुप्रं मुखम् । क्षुरति क्षुरः नापितशस्त्रम् । खुरति खुरः शफः । भन्दते भद्रं कल्याणम् । उद्गच्छत्युग्रं तीव्रम् । उद्गिरत्युग्रो रुद्रः । बिभेति भेरः । भेलः

१. दुःखं धातुविशेषः । Do3. २. पक्षे PC, Do3. ३. वीध्रोग्निर्निर्मलश्च Do3. ४. शुक्रगौरवर्वेरामालाः Do1.

शारो मण्डूको वा । शोभते शुक्रः शुक्रः । तिप्यते तीव्रम् । वृणोति वर्ण्यते वा वर्णः । ईर्यते ईरा पानजातिः । मान्यतेनया मेलयति तां माला स्रक् । कॄगॄशॄवृञ्चतिभ्यः ष्वरच् । किरति कर्वरः हिंस्रः । स्त्री चेत् कर्वरी । गिरति गर्वरः अहंकारो गन्धर्वो वा । शृणोत्यस्मिन् शर्वरः । वृणोति वर्वरः कामः । चतन्तेस्मिन् चत्वरः । नौ सदेः । ष्वरच् । नियतं सीदन्त्यस्मिन् निषद्वरो जम्बालः आसनं च । छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंयद्वराः । ष्वरचि साधवः । छिनत्ति छित्वरो धूर्तः । छादयति छत्वरो निकुञ्जश्छादनं वा । ध्वंसते धीवरो निषादजातिः । पिबति पीवरो मांसलः । मीवरः । चिनोति चीयते वा चीवरं मुनिवासः । नीवरो नेता । गूहति गह्वरं गहनम् । कटति कट्वरं व्यजनम् । संयच्छति संयद्वरो वाग्यतः समवायोपि । उपह्वयन्त्यास्मिन् उपह्वरः संधिरहस्यम् । अशेः सरन् । अश्नुते अक्षरा-ण्यक्षरम् वर्णो मोक्षपदं च । वसेश्च । सरन् । वसन्त्यास्मिन् नक्षत्राणि वत्सरोब्दः । संपूर्वाच्चित् । सरन् चित् । समेत्य वसन्त्यत्र संवत्सरः । एवं परिवत्सरादयः । कृधूमदिभ्यः कित् । सरन् । क्रियते कृसरस्तिलान्नम् । धूनोति धूसरः । माद्यत्यनेन मत्सरः । पतेरश्च लो वा । सरन् । पतति पत्सलः पत्सरः पादप्रहारः । तन्यृषिभ्यां क्सरन् । तनोति तसरः । ऋषति ऋक्षरा तोयधारा । अमिनक्षियजिवधिपतिभ्योत्रन् । अमत्यन्नममत्रम् । नक्षति नक्षत्रम् । इज्यन्तेत्र देवा यजत्रमग्निहोत्रम् । हन्यतेनेन वधत्रम् । पतत्यनेन पतत्रं वाहनम् । गडेरादेश्च कः । अत्रन् आदेश्च कः । स्नेहेन गडयति कडत्रम् । डलयोरभेदात् कलत्रम् । वृञश्चित् । अत्रन् चित् । वृणोति व्रियते वा वरत्रा चर्मरज्जुः । सौ विदेः कत्रन् । सुष्ठु वेत्ति विद्यते सुविदत्रं ज्ञानम् । कृतेश्च नुम् । कृन्तति कृन्तत्रं छेदनं वेष्टनम् । ऋच्छेररन् । ऋच्छति ऋच्छरमिन्द्रियप्रलयः । अर्तिकमिभ्रमि-

१. इरः Dc3. २. मालति Dc3. ३. चंति Dc3. ४. तिलान्नं dropped Dc1, Dc4. ५. नक्षति dropped Dc1, Dc4. ६. यं प्रलयः Dc3.

चमिदेविशाशिभ्यश्चित् । अरन् चिच । ऋच्छत्यर्यते वा अररः रणः । काम्यते सौ कमरः कान्तः कोमलः । भ्राम्यति भ्रमरः । चमरः । देवते देवरः भर्तुः कनीयान् भ्राता । वाशयते वाशरः । बहुलात् वासयतीति वासरः । एवमन्ये । कुवः क्ररन् । कवते कौति वा कुररः पक्षी । अङ्गिमदिमन्दिभ्य आरन् । अङ्ग्यतेसौ अङ्गारः । माद्यति मदारः पाकशौण्डः । मन्दतेनेन मन्दारो देवतरुः । गडेः कड च । आरन् कडादेशः । गडति गड्यते वा कडारः पिङ्गः । शृङ्गारभृङ्गारौ । आरनि साधू । श्रियते जनैः शृङ्गारः श्रयति सौभाग्य शृणोति माधुर्येण श्रोत्रैर्यं शृङ्गारो रसविलासौ । बिभर्त्यम्भो भृङ्गारो जलकलशः । कञ्जिमृजिभ्यां चित् । आरन् स चित् । कञ्जति कञ्जारः कुशूलः । मार्ष्टि भवनं मार्जारः । कमेरुच्चोपधायाः । आरन् स चित् । काम्यते कुमारः महासेनो बालश्च । तुषारादयश्च । आरन्नन्ताः साधवः । तुष्यन्त्यस्मिन्निति तुषारो हिमम् । कसति तस्मात् कासारः । शृणातेः करन् । शृणाति चित्तं शर्करा । पुषः कित् । करन् । पुष्यति पुष्करम् । लभुतेः पुष्कलम् । कॄशॄपू-कटिपटिशौटिभ्य ईरन् । कीर्यते करीरः विटपी । शीर्यते शरीरम् । पुनाति पवीरं पवित्रम् । कट्यते कटीरं जघनम् जनपदो वा । पटति पटीरः शरः । शौटति शौटीरो वीरः कम्बलः । बहुलात् कुटीरम् । कशेर्मुट् च । ईरन् । कशति कश्मीरो देशः । कृञ उच्च ।

१. After it पिकः $Dc_3$.

२. कलसः $Dc_3$.

कर्मणि दृशिविदोः साकल्ये ॥ ३।४।२९ –सकलविशिष्टे कर्मण्युपपदे दृशिविदत्योर्णमुल् स्यात् ॥ कन्यादर्शं वरयति । कन्यां दृष्ट्वा वरयतीत्यर्थः । द्विजवेदं भोजयति । तं विचार्य भोजयतीत्यर्थः ॥

चर्मोदरयोः कर्मणोः पूरेर्णमुल् ॥ ३।४।३१—पूरिण्यन्तोत्र । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । $D^2$, $D^3$, $B^1$, N.

३. कम्बलः dropped $Dc^1$, $Dc^4$.

वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३।४।३२ ॥—कर्मणि पूरेर्णमुल् । अस्य ऊलोपो वा स्याद्वर्षप्रमाणं गम्ये ॥ सीतापूरं वृष्टः सीताप्रं वृष्टः । सीता पूरयितयेत्यर्थः ॥ $D^2$, $D^3$, $B^1$, N.

ईरन् उदन्तादेशः । क्रियते कुरीरः मैथुनं वेश्म वा । घसेः कित् । ईरन् स कित् । घस्यते क्षीरम् । उपधालोपादि । गभीरगम्भीरौ । ईरन्नन्तौ । गाधते गभीरं गम्भीरम् । बहुलात् कटीरम् । चतेरुरन् । चतते चतुरः । बहुलात् अकारस्येत्संज्ञापि । चत्वारः । ष्ट्रन् । छाद्यते-नेन छत्रम् । वस्तेऽङ्गं वस्त्रम् । पतति पत्रम् । राजते राष्ट्रम् । भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च । ष्ट्रन् । भृज्जत्यस्मिन् भ्राष्ट्रम् । गच्छति गात्रम् । नमति नात्रं शिरः । हन्ति हात्रं रक्षा । वेवेष्टि वेष्ट्रः विष्णुः । अश्नुते अश्नाति आष्ट्रं नभः । दिवेर्द्यु च । ष्ट्रन् द्युरादेशः । वृद्धिश्च । दीव्यत्यस्मिन् द्यौत्रं स्वर्गः । उषिखनिभ्यां कित् । ओषति वनस्पतीन् उष्ट्रम् । खन्यते खात्रं तडागः । सिविमुच्योष्टेरू च । सीव्यत्यनेन सूत्रम् । मुच्यते तन्मूत्रम् । हुयामाश्रुभसिभ्यस्त्रन् । हूयते होत्रं हविः । यानं यात्रा गतिः । मानं मात्रा अल्पपरिमाणम् । शृण्व-न्त्यनेन श्रोत्रं कर्णः । बभस्त्यनया भस्त्रा दृतिः । गमेरा च । त्रन् आ अन्तादेशश्च । गच्छति गात्रं देहः । अमिचिमिदिशसिभ्यः क्त्रः । अमत्यस्मिन्नन्त्रम् । चीयते चित्रम् । मेद्यति मित्रम् । शसत्य-नेन शस्त्रम् । पुवो ह्रस्वश्च । पुवस्त्रप्रत्ययः । पुनाति पुत्रः सुतः । गुधृवीपचिवचियमिमनितनिसदिक्षदिभ्यस्त्रः । गूयते गोत्रं नामादि । ध्रियते धर्त्रं धर्मेश्वरौ । वीयतेनेन वेत्रं वल्ली । पच्यतेनेन पक्त्रं तेजः । उच्यतेनेन वक्त्रम् । यच्छति यन्त्रम् । मन्यते मनुतेनेन मन्त्रः । तनोति तन्यते तन्त्रम् । सादयति[1] तेन सत्त्रं यज्ञादि । क्षदति क्षत्त्रं राजा । दादिभ्यश्छन्दसि । त्रन् । दात्यनेन दात्रम् । पूयते पोत्रम् । पिबत्य-नेन पात्रम् । लूयते लोत्रम् । भूवादिगृभ्यो णित्रन् । भवति भवित्रं विधानम् । वाद्यते वादित्रम् । गीर्यते गारित्रमनुपानं गुरुश्च । चरेर्वृत्ते ह्रस्वश्च वा । णित्रन् । चरन्तितेन चारित्रम् । चरित्रम् । अशित्रादिभ्य इत्रोत्रौ । अश्नन्ति येन तदशित्रमन्नपात्रम् । तरति तेन तरुत्रम् । एवमन्येपि चरुत्रादयः । अमेर्द्विषति चित् । इत्रः चित् । अमत्रमित्रः

१. सीदति Dc₃, PC.

शत्रुः । मसेरूरन् । मस्यते मसूरः सस्यम् । हिंसेरीरन्नीरचौ । हिनस्ति हिंसीरः । स्वरे भेदः । उदि दृणातेरच् पूर्वपदान्त्यलोपश्च । उदीर्यते वायुना उदरम् । जनेरर ठः । अरः ठान्तादेशः । जायतेऽस्मिन् व्याधिर्जठरम् । वनिमनिभ्यां चिद्वा । अरः ठान्तादेशः वा चित् । वनति वठरः मुर्खः । मन्यते मठरः पण्डितः । कृदरादयश्च । दरे साधवः । कुर्वन्ति तस्मिन् कृदरः कुसूलः । म्रियतेनेन मृदरो व्याधिः । दृणाति दृदरं विषम् । शृणाति शृदरः सूर्यः । अश्नोतेराशुकर्मणि वरट् चोपधायाः । वरट् उपधाया ई च । अश्नुते विश्वमीश्वरः । व्याङि घ्रो जातौ कन् । व्याजिघ्रति व्याघ्रः । करोतेर्ह्रे च । कन् । करोति क्रियते चक्रः । हने रन् घ च । हन्ति हन्यते घरः गृहम् ।

रान्ताः ।

भूसलिकलिमहानिभडिभण्डिचण्डिशण्डिगण्डिपिण्डिभ्यः किलच् । भविलं भुवनम् । सलति सलिलम् । कलयति कलिलम् । महयति[1] महिला । अनित्यनेनानिलः । भडिः सौत्रः । भडिलो निन्दकः । भण्डिलो दूतः । चण्डते चण्डिलः श्वा । शण्ड्यते शण्डिला तटम् । गण्डिलं भटम् । पीड्यते पिण्डते वा पिण्डिलः पिण्डः गणकश्च । तुण्डते तुण्डिलो मुखरः । मुण्डयति मुण्डिलोऽग्निः । कोकिलः [illegible][2] । कमेः पश्च । इलच् पश्चान्तादेशः । कम्यते कपिलो वर्णो मुनिर्वा । मिथिलादयश्च । मथतेऽस्यां मिथिला । इंमिलः । कपिगडिपटिभ्य ओलः । कम्प्यते कपोलः । गण्ड्यते गण्डोलः हर्षणः । पट्यते पटोलः द्रव्यम् । हृषेरुलच् । हृष्यति हर्षुलः क्रीडनमृगौ । कलस्तृपश्च । कलः । तृप्यति तृपला लता । चात् काम्यते कमलम् । मण्ड्यते मण्डलम् । कुण्ड्यते कुण्डलम् । कुश्यते कोशलो देशः । तोसते तोसलः । शपेर्बश्च । कलः । बश्चान्तादेशः । शप्यतेऽसौ शबलः । वृषादिभ्यश्चित् । कलः चित् । वृषति वृषलः शूद्रः । दीव्यति देवलः ऋषिपूजकौ । केव्यते केवलः । पटति पटलम् ।

१. महति महिला Dc3. २. Before it—कुटिलः PC, Dc3.

मृजेष्टिलोपश्च । कलः । मृज्यतेसौ मलः । चुपेरच्चोपधायाः । चोपति मुहुश्चपलः । शकिशम्योर्नित् । शक्यतेपनेतुं शकलम् । शम्यते शमलं शकृत् । द्रमिमस्योरुच्च उपधायाः । कलः । द्रमति द्रुमलम् । मस्यतेनेन मुसलम् । कम्बलादयश्च । साधवः । काम्यते कम्बलः । कोमलः । शम्यते पथि दुःखमनेन शम्बलः । छायते यज्ञे छगलम् । पलति पल्यते पललं तिलान्नम् । पटत इति पाटला लता इत्यादि । तमिविडिविलिमृणिकुलिकपिपलिविशि-पञ्चिकुणिभ्यः कालन् । ताम्यति तमालः । वेडयत्याखून् विडालः । विलति विलालः भिदुरः । मृणति मृणालम् । कुल्यते कुलालः । कपयति कपालम् । पलयति पलालम् । विशति तत् विशालम् । पञ्चयति पञ्चालः । कुणति कुणालं नगरम् । पतिचण्डिभ्यामालञ् । पतन्ति तत्र पातालम् । चण्डते चण्डालः । पीयुक्वणिभ्यां कालन् ह्रस्वश्च । कालन् धातोर्ह्रस्वश्च । पीयते पियालं शाकं वीरुच्च । क्वणति क्वणालं नगरम् । पुषः कलन् । पुष्कलम् । मूङ्शक्यविभ्यः क्लः । मवते मूलम् । शक्नोति हृदयं मार्जयितुं शुक्लम् । अव्यते अम्लं शल्कादिरसः । कुडिकुषिभ्यां क्मलन् । कुड्यते कुड्मलम् । कुष्यते कुष्मलं विकसितम् । वृङ्लुटितनिताडिभ्य उलच् तण्डश्च । व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्ते तण्डुलाः । तण्डुलशब्दो निपातितः । सत्यम् । स्वरविशेषार्थं वचनम् । मव्यतेर्यलोपो मश्चायुडालः । आलः यलोपः मान्तादेशः आयुडागमः । मव्यति ममायालः प्रीतिः स्नेहो वा । मङ्गेरलच् । मङ्ग्यते मङ्गलम् ।

लान्ताः ।

प्रथेः षिवन् संप्रसारणम् । प्रथते पृथिवी । गौरादित्वात् ङीषि सिद्धे षित्त्वं गणकृतस्यानित्यत्वज्ञापनार्थम् । अशूप्रुषिलटिकटिकणिखटि-विशिभ्यः क्वन् । अश्नुतेध्वानमश्वः । प्रोषति प्रुष्वः अग्निबिन्दू । लटति लट्वश्चपलः । कटति कट्वः । कणति कण्व ऋषिः । खटति

खट्वा । विशति विश्वम् । इण्शीङ्भ्यां वन् । एति एवम् । शेते शेवः सर्पः । सर्वनिघृष्वरिष्वलिष्वशिवपट्वप्रह्वेष्वा अतन्त्रे । अतन्त्रे अकर्तरि निपात्याः । सृतमनेन विश्वं सर्वम् । निघृष्यते निघृष्वः निशान्तः क्षुरो वा । रिष्यन्तेनेन रिष्वं शस्त्रम् । लिष्यते लिष्वः कान्तः । शेते शिवम् श्यति वा । पट्यते पट्वो देशः । प्रह्वयतेसौ प्रह्वः । इष्यतेसौ इष्वः । अतन्त्रे किम् । सरति सर्ता । शेवयह्वजिह्वाग्रीवाप्वाग्रीवाः । वनि निपात्याः । शेतेत्यर्थं शेवः अजगरः । यान्त्यनया तांस्तानर्थान् यह्वा धीर्वृद्धिः । लिह्यत्यनया रसान् जिह्वा । गिरत्यनयान्नपानं ग्रीवा । आप्नोति सर्वमाप्वा वायुः । मीयते मीवा परिमाणजातिः । कॄगॄशॄदॄभ्यो वः । कृणाति किरति वा कर्वः समुद्रमूषकौ । गिरति गृणाति गर्वः । शृणात्यसुरान् भक्तानां पापं वा शर्वः ईशः । दृणाति सर्वान् दर्वः । स्रुवः कः । स्रवन्ति तस्माद्धवींषि स्रुवः । शपेर्वन् । शपति शपते वा शप्व आक्रोशः । उल्वादयश्च । वनि साधवः । उह्नीयते उल्वम् बभ्रुजरायुः तरक्षुः । शलति शल्यते वा शुल्वं स्त्रीपुंयोगः ।

वान्ताः ।

अष्टमः पादः ।

क्लिशेरीच्चोपधायाः शन् लोपश्च लो नाम् च । शन् उपधाया ईत् लस्य लोपे नामागमः । क्लिश्नाति कीनाशः कदर्यः । क्लिशेरन् लोपो लः । क्लिश्यते यैस्ते केशाः ॥

शान्ताः ॥

अविमह्योष्टिषच् । अवति अविषः नृपसमुद्रौ । अविषी गङ्गा । मह्यतेसौ महिषः यमवाहनं राजा च । महिषी मुख्यस्त्री । रुहेर्वृद्धिश्च । टिषच् । रोहत्यत्यर्थं रौहिषं तृणम् । रौहिषी वा दूर्वा । तवेर्णिद्वा ।

१. विशति तस्मिन् PC, Dc3. २. कन्धारः PC. ३. तरक्षः Dc3. Before it—अन् रस्य लोपः Dc3. ५. रोहिषा Dc3.

टिषच् णिच्च वा। वृद्धिः। तवति ताविषः ताविषः स्वर्गः। ताविषी ताविषी गङ्गा। नञि व्यथेः। टिषच्। न व्यथते अव्यथिषः सूर्याग्निभूमयः। सहः षट् लुक् च क्विप्। सहेः षषादेशः प्रत्ययस्य लुक्। सहन्ते षट्। परौ व्रजेः षः पदान्ते क्विप् दीर्घश्च। क्विप् दीर्घः पदान्ते षान्तादेशः। परिव्रजति परिव्राट्। कॄतॄभ्यामीषन्। कीर्यते करीषं गोमयविकारः। तरन्ति तेन तरीषः प्लवबोधौ। शॄपॄभ्यां कित्। शृणाति तं शिरीषः वृक्षः। पूर्यतेनेनोदरं पुरीषं विष्ठा। अजेर्ऋज च। ईषन् कित् ऋजादेशश्च। अर्ज्यते ऋजीषं धनम्। अम्बरीषम्। निपातः। पचन्त्यस्मिन्नम्बरीषं भ्राष्ट्रम्। आप्यते तद्वायुभिरम्बरीषमाकाशम्। ऋनहिभ्यामुषच्। ऋच्छत्यर्यते वा अरुषः प्राणः। नह्यति नहुषो नृपः। पुरः कुषन्। पृणाति पूर्यते पुरुषो नरः। पृकलिभ्यामुषच्। पृणाति परुषो निष्ठुरः। कलते कलुषोप्रसन्नः। पीयेरूषन्। पीयते पीयूषममृतम्। मृङ्व्योर्लोपश्च। ऊषन् अन्तलोपश्च। मूयते मूषा द्रुतधातुपात्रम्। यौति यूषं व्यञ्जनम्। मस्जेर्नुम् च। ऊषन्। मज्जन्त्यस्यां मञ्जूषा जलद्रोणी। अङ्कूषः। साधुः। अङ्कत्यङ्कूषो गजबाणवेगाः। बहुलात् खलति खलूषः म्लेच्छः। फलति फलूषा वीरुत्। विषेर्व्याप्तिकर्मणि कन्। वेवेष्टि विश्वं विषम्।

षान्ताः।

वृतॄवदिहनिकमिकषियुमुचिभ्यः सः। वृणाति वर्षम् वत्सरः। तरन्त्यनेन तर्षं प्लवः। वदत्यभीक्ष्णं मातरं वत्सः बालः। हन्त्यध्वानं हंसः पक्षिसूर्यौ। काम्यते कंसः दनुजमानपात्राणि। कष्यते गवादिभिः कक्षं वनम्। यूयते योषा स्त्री। मोचनं मोक्षः अपवर्गः। प्लुषेश्चोपधायाः। प्लुष्यति प्लक्षः। मनेर्दीर्घश्च। सः। मन्यते-

१. पिबन्ति तस्मि°. Dc3. २. प्राणः Dc3. ३. मूङ्यो° PC. ४. फलुषः Dc3. ५. वृणोति Dc3. ६. तर्षः Dc3; PC. ७. After it वृक्षः PC.

त्यर्थं मांसं पिशितम् । अशेर्देवने । सः । अश्नुतेत्यर्थमक्षः देवनादिः । स्नुव्रश्चिकृत्यृषिभ्यः कित् । सः । स्नौति स्नुषा पुत्रस्त्री । वृश्चत्युर्णं वृक्षः[1] । कृन्तति कृत्सः पापम् । ऋषति ऋक्षं भम् । ऋषेर्जातौ । सः किच्च । ऋषति ऋक्षः श्वापदम् । मा सः । मीयतेनेन वर्षं मासः । सानुवृत्तौ पुनः सग्रहणं कित्त्वाभावार्थम् । अन्यथा इत्वं स्यात् । अथवा निपातः । उन्दिगुहिकुषिभ्यः कित् । सः । उन्दतीत्युत्सः प्रस्रवणम् । अमत्यनेनांसः स्कन्धः । गुह्यति गुत्सः रोषः । कुष्णाति कुक्षः गर्भः । गृधिपत्योर्दषौ च । सः किच्च क्रमादन्तादेशौ च । गृध्यति गृत्सः अभिलाषः ऋषिः । पतति पक्षः मासार्धम् । बृंहेर्नलोपश्च । इसिः । बृंह्यते बर्हिः वेद्यास्तरणम् । द्युतेरिसिन्नादेशश्च जः । द्योतते ज्योतिर्ग्रहनक्षत्रादयः । वसौ रुचेः संज्ञायाम् । इसिन् । वसवोस्मिन् रोचन्ते वसुरोचिः क्रतुः । स्तुवः कित् । इसिन् । स्तूयन्तोस्मिन् देवाः स्तविः यज्ञः । सहो धश्च । इसिन् धान्तादेशः । सहते सधिर्भूमिः । पिबतेस्थुक् च । इसिन् । पिबति पाथिः सूर्यः । जनेरुसिः । जायते इति जनुर्जन्म । मनेर्धश्छन्दसि । उसिर्धोन्तादेशः । मन्यते मनुते वा मधुः पवित्रम् । अर्तिपॄवपियजितनिधनितपिभ्यो नित् । उस् । ऋच्छत्यर्यते वा अरुः सूर्यप्राणौ । पृणाति पूर्यते वा परुः समुद्रः । उप्यते वपुर्देहः । इज्यते यजुश्छन्दसि । तनुः । धनति धनुः धन्वा । तपति तपुः सूर्याग्निशत्रवः । एतेर्णिच्च । उसिः । एति आयुः जीवनम् । चक्षेः शिच्च । चष्टे रूपं चक्षुर्नेत्रम् । बहुलमन्यत्रापि ।[2] संचष्टे संचक्षुः । परिचष्टे परिचक्षुः । दमेर्डोस् । दमयति दाम्यति दोर्बाहुः । अत्यविचमितमिनभिरभिलभिनमितपिपतिपनिपणिमहिभ्योसच् । अतत्यतसः अन्ननृपौ वायुरात्मा च । अवति अवसः समयः । चमत्यनेन चमसः पात्रम् । तम्यतेस्यां

१. After it तरुः । Dc3. २. After it उस् PC, Dc3.

तमसा नदी । रभते रभसः संभ्रमः । लभते लभसः पावकः । नभति नभसः हिंस्रः । पनायति पनसः रुरुतरुविशेषौ । पतति पतसः पतङ्गः इत्यादि । वेञस्तुट् च । वीयते वेतसः वानीरः । वयो णित् । असच् । वयते वायसः ध्वाङ्क्षः । वहियुभ्यां नित् । असच् । वहति वहसः अनड्वान् । यूयते यवसं तृणम् । पातेर्डुम्सुन् । पाति पुमान् नरः । पिबतेरि च । असुन् । पीयते पयो जलम् । अशेर्देवने युट् च । अश्नाति अश्नुते वाशुभं यशः । उब्जेर्बले बलोपश्च । असुन् । उब्जति ओजः बलम् । श्वयतेः संप्रसारणं च । असुन् श्वयति शवः । श्रयतेः स्वाङ्गे शिरः किच्च । असुन् शिरादेशः । श्रयत्यस्मिन् शिरो मूर्धा । अर्तेरुच्च । असुन् कित् । अर्यते रहसि स्त्रीभिरुरो वक्षः । व्याधौ शुट् च । अर्तेरसुन् । अर्यते पाणिभिरर्शांसि रोगः । उदके नुट् च । अर्तेरसुन् । अर्यते पिपासुभिरर्णो जलम् । इण आगसि । असुन् नुट् च । एति कर्मणा एनः पापम् । रिचेर्धने घिच्च । असुन् घिच्च । रिच्यते रेको धनम् । चायतेरन्ने ह्रस्वश्च । असुन् । चायते चणः अन्नम् । बहुलात् णत्वम् । वृङ्शीङ्भ्यां रूपस्वाङ्गयोः फट् च । असुन् । व्रियते वर्फो रूपम् । शेते शेफः मेढ्रः । स्रुरीभ्यां तुट् च । असुन् । स्रवति स्रोतः स्रवणम् । रीयते रेतः शुक्रम् । पातेर्बले जुट् च । असुन् । पातीति पाजो बलम् । उदके थुट् च । पातेरसुन् । पाति जीवितं पाथो जलम् । अन्ने च । पाथोऽन्नम् । अदेर्नुमुधौ च । असुन् नुमागमः धोऽन्तादेशः । अद्यतेऽन्धोऽन्नम् । स्कन्देश्च स्वाङ्गे । असुन् धोऽन्तादेशः । स्कन्दति स्कन्धः देहाङ्गम् । आपः कर्माख्यायाम् ह्रस्वश्च नुड् वा । असुन् ह्रस्वः नुड् वा स्यात् । आप्नुवन्ति तत् अप्नः[1] अपः व्यवसितम् । रूपे जुट् च । आपोऽसुन् ह्रस्वो जुट् च । आप्यते अब्जो रूपम् । उदके नुम्भौ च । आपः असुन् नुमागमो भान्तादेशो ह्रस्वश्च । आप्नोति सर्वमम्भः । नहेर्दिवि भश्च । असुन् । नह्यते

१. आप्नः for अप्नः । अपः Dc3.

तन्मेघैर्नभ आकाशम् । इण आग अपराधे । असुन् आगादेशः । एत्यनेन आगः अपराधः । अमेर्हुक्च । असुन् । अमन्त्यंहः पापम् । रमेर्देशे हश्च । असुन् । होन्तादेशः । रमन्तेस्मिन् रहो विविक्तो देशः । अञ्च्यजियुजिभृजिभ्यः कुश्च । असुन् । कवर्गोन्तादेशः । अज्यते अङ्कः क्षेम । अजति अगः । युनक्ति योगः मनः । भृज्यते भर्गः हरिर्हरश्च । भूरञ्जिभ्यांकित् । असुन् । भुवः अन्तरिक्षम् । रजः अशुभं रेणुश्च । वसेर्णित् । असुन् । वस्ते शरीरं वासः वस्त्रम् । चन्देरादेश्च छः । असुन् । चन्दयति छन्दः वेदः । पचिवचिभ्यां सुट् च । असुन् । पचति तेन पक्षः । उच्यतेनेन वक्षः उरः । वहिहाधाञ्भ्यश्छन्दसि । असुन् सुट् च । उह्यते वक्ष उरो दासो वा । प्रहाण प्रहासः हर्षः । दधाति स धासः शरणम् । इणोसिः । एतीत्ययः उरः । मिथुनेसिः । पूर्ववच्च सर्वम् । धातूपसर्गसंबन्धो मिथुनम् । तत्र असिः । पूर्ववच्च सर्वं कार्यम् । सुष्टु अश्नुते सुयशाः । सुष्टु श्रवति सुश्रोताः । सुष्टु वर्चते सुवर्चा इत्यादि । ने हन एह च । नञ्पूर्वात् हन्तेरसिः एहादेशश्च । नं आहते अनेहाः कालः । विधाञो वेध च । असिः वेधादेशः । विदधाति वेधाः । नुवो धुट् च । नूयते नोधाः ऋत्विक् । गतिकारको-पपदयोः पूर्वपदप्रकृतिस्वरत्वं च । चन्द्रे मो डित् । चन्द्रे उपपदे मा अस्मादसिर्डिच्च । चन्द्रं मिमीते मीयते वा चन्द्रमाः शशी । वयसि धाञः । असिः । वयो दधातीति वयोधाः प्राणश्चन्द्रश्च । पयसि च । पयो दधातीति पयोधाः समुद्रः । पुरसि च । धाञोसिः । पुरो दधा-तीति पुरोधा उपाध्यायः । पुरूरवाः । निपातः । पुरूरूयते स्वयशः स-र्वत्रेति पुरूरवा राजा । चक्षेर्बहुलं शित् । आचष्टे आचक्षाः वाग्मी । आख्याः । प्रख्याः । बृहस्पतिः । वसेः कित् । वसति तस्यामुषा रात्रिः । दमेरूनसिः । दाम्यति दमूनाः शुक्रः । अङ्गिराः । साधुः । अङ्गारेभ्यः सृतोङ्गिराः मुनिः । अप्सरसः । असौ साधुः । अद्भ्यः सृता

१. भूषि Dc3, PC. २. भूषः Dc3, PC. ३ ने Dc3.

अप्सरसः स्वर्गस्त्री । विदिभुजिभ्यां विश्वे । असिः । विश्वं वेत्ति विन्दति विद्यते वा विश्ववेदाः । विश्वं भुनक्ति विश्वभुजः अग्निः । वशेः कनसिः । वष्टि उश्यते उशनाः शुक्रः । अमेरसः । अमत्यमसो-व्याधिः । अपि सर्तेरसुन् । अद्भ्यः सृता अप्सरसः । कृञः पासन् । क्रियते कार्पासः वस्त्रयोनिः । दंसेष्टटनौ नस्य आच । दंसेष्टतुअतु एतौ स्तः । नस्य चाकारः । दस्यते दासः । तित्त्वात् स्वरितः । दासा । दासी । दाशतेश्च तटनौ । दाशन्ति तस्मै जना दाशः । दाशा । दाशी ।

सान्ताः ॥

गुहेः कन् । गूहति गुहः सेनानीः । गुहा अद्रिः[1] । सिचेर्नुम् हौ च कन् । सिञ्चति सिंहः । वहेः क्विबनसो डश्च । अनो वहतीत्यनड्वान् ।

हान्ताः ।

नवमः पादः ।

स्थाचतिमृजेरालज्वालजालीयचः । एते क्रमात् स्युः । तिष्ठ-त्यत्रान्नं स्थालः । चल्यते चत्वालः । मार्ष्टि मार्जालीयः । बहुलात् चषालः । सृयुवचिभ्योन्युजागूजलुचः । क्रमात् । धावति सरण्यु-र्मेघो वायुः । यूयते यवागूः पेया । वक्ति वचलुर्वाग्मी । शके-रुनोन्तोन्त्युनयः । एते । शक्नोति नभो गन्तुं शकुनः शकुन्तः शकुन्तिः शकुनिः । इणस्तशस्तशसुनौ । एति एतशाः वाय्वग्न्यर्काः । स्वरे भेदः । उल्मुकदर्विहोमिनः । साधवः । उषयत्युल्मुकम्[2] अर्धदग्धं काष्ठम् । दर्विः साधनं भाण्डम् । जुहोति होमी ऋत्विक् । विसाविहा । क्विपि साधू । विस्यति विसा । विजहाति विहा स्वर्गः । शीङो धुग्लग्वलन्वालनः । शीङ एते स्युः । शेरतेस्मिन् जना सीधु मदिरा । बहुलात् सत्वम् । साधु कर्मणि शेते शीलं धर्मसमाधिः । शेवलं शेवालं जलमलम् । खर्जिविजादि-

१. अद्रिः Dc3. २. उषत्यु° Dc3, PC.

भ्य ऊरजूलचौ । खर्ज्यादेरूरच् । विजादेरूलच् । खर्जति खर्जूरः । कर्जति कर्जूरः वृक्षजातिः । कल्पते कर्पूरः गन्धद्रव्यम् । विजते विजूलम् । हन्ति वधूलः घातकः । मृडः कीकनूकङ्कणौ । मृड्यते मृडीकम् । मृडङ्कः । ऋतन्याञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निव्यतुजलिजिष्टुजिष्ठजनिस्यन्निषन्नसन्नूषानुकः । एभ्यः क्रमादेते स्युः । ऋच्छत्यर्यते वा अरत्निः बाहुमध्यभागः । तनोति तन्यतुर्वायुः सूर्यश्च । अनक्ति अज्यते वानेनाञ्जलिः करद्वयपुटः । वनाति वनोति वा वनिष्ठुः अपानोपरिस्थानम् । अनक्ति अञ्जिष्ठः गतिरग्निश्च । अर्पयति अर्पयते वा अर्पणिरार्द्रमांसम् । माद्यत्युदकं प्राप्येति मत्स्यो मीनः । अङ्गत्यनेनेत्यङ्गिषः । कौति कवते कूयते वा कवसः । यौति यूयते वा यवूषः । कृश्यत इति कृशानुरग्निः । स्पृशेः श्वण्शुनौ पृ च । स्पृशति स्पृश्यते वा पार्श्वं पर्शु गतमस्थि । कुसेरूलोम्भोण्वोमेदेताः कित् । कुसेरेते स्युः । कुस्यति तानि कुसूलः कुसुम्भः कुसुण्वः कुसुमम् कुसीदम् कुसितम् । जनिदाच्युसृवृमदिशमिगमिभृञ्भ्य इत्वनूत्वनूत्नण्क्नि नुशकूस्यखाकटश्च । जायते जन्यते वा जनित्वं लोकः । ददाति दात्वो यज्वा । च्यवते च्यौत्नोण्डजः । धावति सृणिः रविः । वृणोति वृशः । माद्यति मत्स्यः । शाम्यति शङ्खः । गच्छति गमकः । भरति भरटः । अन्येभ्योपि दृश्यन्ते इत्वादयः । पीयते पीत्वा । प्यायते प्यात्वं लवनं लूतिः । एवमन्ये । सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः । एते साधवः । सनोति सन्यते वा सानसिः स्नेहो हिरण्यम् । ध्रियते धारयति वा धर्णसिः लोकपालः । पृणातीति पर्णसिः आभरणक्रिया । ताड्यते तण्डुलो व्रीहिसारः । अङ्क्यतेङ्कुशः प्रतोदः । चषति चषालो यज्ञभाण्डम् । एति इल्वलः । पिबन्ति तस्मिन् पल्वलः । धिषति धिष्ण्यम् ।

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्॥३।३।१०॥

क्रियायां क्रियार्थायामुपपदे धातोर्भविष्यति तुमुन्ण्वुलौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको

---

शलति शल्यम्। आः समिण् निकषिभ्याम्। समेति समया। निकषणं निकषा। लोष्टफलितौ। निपातौ। ऋति लोष्टः। फलयत्यनेन फलितम्। अवद्यावमाधमार्वरेफाः कुत्सिते। साधवः। अवद्यम्। न वदन्ति तत्पुरुषाः॥ अवमम्। अधमम्। अर्वतेसौ अर्वा। रिफति रेफः। लीङ्रीङो ह्रस्वश्च पुट् तरौ श्लेषकुत्सनयोः। एतयोः क्रमात् तरौ पुट् ह्रस्वश्च। लीयते लिप्तम्। रीयते रिप्तम्। स्थः स्थ चावजवकौ। अवजवकौ स्थ इत्यादेशश्च। तिष्ठति स्थवः। स्थवकः। इत्यादयोन्येपि कल्प्याः। येत्र साधिता अप्युक्तास्तेर्थभेदाद्धातुभेदात् स्वरभेदाद्वा यथायोगं ज्ञेयाः।

मिश्राः।

दशमः पादः॥

एवमादिशब्दसूचिता उणादयो दशपाद्यनुसारेण व्याख्याताः॥

तुमुन्। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था। मान्तत्वादिति। 'कृन्मेजन्तः' इत्यनेन। ०वुल् 'कर्तरि कृत्' इति कर्तरि। तुमुन् भावे। कुत एतत्। 'तुमर्थे सेसेन—' इत्यत्र तुमर्थग्रहणात्। यदि तुमुन् कर्तरि स्यात् तदा सेसेनादयोपि 'कर्तरि कृत्' इति कर्तरि स्युरिति तुमर्थग्रहणं न कुर्यात्। कृतवांश्च। ततो ज्ञायते तुमुन् कर्तरि नेति। तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भाव एव तुमुन्। कृष्णमिति। कृष्णदर्शनार्था गमनक्रियात्रोपपदम्। क्रियायां किम्। भिक्षिष्य इत्यस्य जटाः। क्रियार्थायां किम्। धावतस्ते पतिष्यति

---

१. क्रियार्थायां क्रियायां $D_2$, P, $D_4$. २. $D_2$ drops it. ३. फलस्य° PC. ४. नेयाः $Dc_3$. ५. After it—स्यात् PC, $Dc_3$. ६. भिक्षिष्यत $Dc_3$. ७. पतति $Dc_3$, PC.

याति । पुनर्ण्वुल्उक्तेर्ज्ञायते नात्र वासरूपन्यायेन तृजादय इति ।

**समानकर्तृकेषु तुमुन् ॥३।३।१५८॥**

अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् ॥ इच्छति भोक्तुं वेष्टि वाञ्छति वा । इच्छन् करोतीत्यादावप्रयोगान्न ।

**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥३।४।६५॥**

एषूपपदेषु धातोस्तुमुन् स्यात् ॥ शक्नोति भोक्तुम् । एवं धृष्णोत्यादौ । अस्ति भवति विद्यते वा भोक्तुम् ।

---

दण्डः । 'ण्वुल्तृचौ' इति सामान्येन विहितो ण्वुल् वासरूपेणात्रापि स्यात् । किं पुनर्ण्वुल्ग्रहणेनेत्यत आह—**पुनर्ण्वुलुक्तेरि**ति । तेन कर्ता यातीत्यादि न स्यात् । तुमुनो नकार आद्युदात्तार्थः । उकार उच्चारणार्थः । ण्वुलो णकारो वृद्ध्यर्थः । लकारो 'लिति' इति प्रत्ययात् पूर्वस्योदात्तार्थः ।

**समान** । अक्रियार्थोपपदार्थमेतत् इति अग्रिमसूत्रद्वयस्य प्रयोजनकथनपरं संभवादत्रापि लाघवार्थमुक्तम् । अस्य तु प्रयोजनमिच्छार्थेष्विति लिङ्लोटौ परत्वात् प्राप्नुतस्तद्बाधा ण्वुल्बाधा च समानकर्तृके च विधिरिति । समानकर्तृकेषु किम् । त्वां भुञ्जानमिच्छाम्यहम् । वर्तमाने लडेव । **वष्टीति** । वश कान्तौ ।

**शक** । पूर्वसूत्रेण सिद्धावपि अक्रियार्थेष्वपि शक्यादिषूपपदेषु तुम्सिद्ध्यर्थं वचनम् । **शक्नोतीति** । नात्रोपपदस्य क्रियार्थता । सामर्थ्यमर्थान्तरं गम्यते । एवं धृष्णोत्यादावुपपदे उदाहार्यमित्यर्थः । धृष्णोति भोक्तुम् । जानाति भोक्तुम् । ग्लापयति भोक्तुम् । घटते भोक्तुम् । आरभते भोक्तुम् । आलभते भोक्तुम् । प्रक्रमते भोक्तुम् । उत्सहते

---

१. Before it—कामयते $D_2$, $B_2$, $D_4$. २. °त्यादयः $D_1$; °त्यादि C.
३. तुमुन्सिद्ध्य° $Dc_3$, PC.

**कालसमयवेलासु तुमुन् ॥३।३।१६७॥**

एषु धातोस्तुमुन् स्यात् ॥ कालः समयो वेला वा भोक्तुम्।

**भाववचनाश्च ॥३।३।११॥**

क्रियार्थायां क्रियायां भविष्यति घञादयः स्युः ॥ जयाय याति । पाकाय व्रजति ।

---

भोक्तुम् । स्पष्टत्वात् त्यक्तम्—' पर्याप्तिवचनेष्वलमर्थेषु ' ॥३।४।६६॥ अन्यूनतोच्यते यैस्तेष्वलमर्थेषूपपदेषु धातोस्तुमुन् स्यात् । पर्याप्तो भोक्तुम् । पारयति भोक्तुम् । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । पूर्वसूत्रे शक्तिग्रहणं नालमर्थम् । शक्यमेव कर्तुमिति ।

**काल** । इह कस्मान्न । भूतानि कालः पचतीति वार्तेति । प्रैषादिग्रहणमिहानुवर्तते । तेन प्रैषादिष्वेव स्यान्नान्यत्र । इह कस्मान्न । कालो भोजनस्येति । वासरूपेण ल्युडपि स्यात् ।

**भाववचना** इति । ब्रुवन्तीति वचनाः । भावस्य वचना भाववचना इत्यधिकृत्य घञजादय इत्याह—**घञादय** इति । **जयाय यातीति** । ' एरच् ' । **पाकायेति** । घञ् । ' चजोः—' इति कुत्वम् । ' तुमर्थाच्च—' इति चतुर्थी । वचनग्रहणं यथैव स्वैर्याभ्यः प्रकृतिभ्यो येन विशेषणेन प्रोक्ता घञादयस्तथानेनापि स्युरित्येवमर्थम् । ' अण् कर्मणि च ' ॥३।३।१२॥ व्याख्यातप्रायत्वादुपेक्षितम् । धातोः कर्मण्युपपदे क्रियार्थायां भविष्यत्यण् स्यात् । वासरूपविधेरभावात् ण्वुला बाधितोण् प्रतिप्रसूयते । तेन ण्वुलं बाधते परत्वाच्च कादीन् । अश्वदायो व्रजति । गोदायो व्रजति ।

---

१. C and D drop it. २. °वचनाच्च $D_4$. ३. यागाय $D_1$, $D_2$, $D_3$, $D_4$, C, $B_1$, $B_2$. ४. याति C. ५ Before it—' प्रैषादिसर्ग ' इत्यतः Pc. ६. शरलावो $Dc_3$, PC.

**पदरुजविशस्पृशो घञ् ॥३।३।१६॥**

एभ्यो घञ् स्यात् कालत्रये[1]॥ पचाद्यजादेरपवादः । पद्यतेसौ पादः । रोगः । वेशः । स्पर्शः ।

**सृ स्थिरे ॥३।३।१७॥**

सर्तेः स्थिरे कर्तरि घञ् स्यात् ॥ सारः । व्याधिमत्स्य-बलेषु च ॥* उपसर्गस्य घञ्यमनुष्ये बहुलम् ।[4] अतीसारः । विसारः । प्रसारः ।

**भावे ॥३।३।१८॥**

धात्वर्थे वाच्ये धातोर्घञ् स्यात् ॥ पाकः ।

---

पद इति । अयं ण्वुल्तृचोरपवादः । पदमित्येतत्तु 'अनुदात्तं पदमेकवर्जम्' अस्मान्निपातनात् । रोगः वेशः इति । रुजति विशति—आभ्यामिगुपधलक्षणस्य कस्यापवादः । स्पर्श इति । स्पृशति । स्पृश उपतापे इति वक्तव्यम् । अत्र च पचाद्यचोपवादः । घञि पद-स्याद्युदात्तत्वमचि त्वन्तोदात्तत्वमिति विशेषः ।

सृ । स्थिरं चिरस्थायि । सार इति । खदिरादीनाम् । स हि खदिरादौ चिरं तिष्ठन् कालान्तरे सरतीति धात्वर्थस्य कर्ता । स्थिरे किम् । सर्ता । सारकः । व्याधीति । अस्थिरार्थम् । अतीसारो व्याधिः । विसारो मत्स्यः । प्रसारो बलम् ।

भावे ।

नित्यानामेव शब्दानां सौकर्यात् प्रतिपत्तये ।
अन्वाख्यानाद्भावशब्देप्यस्ति नान्योन्यसंश्रयम् ॥

इति वचनाद् भावशब्दोपि घञन्तः सिद्धः । भवतेर्धात्वर्थ-सामान्यवाचित्वाद्भावशब्देन धात्वर्थसामान्यमुच्यते । तेन भवतेरेव भाव इत्याह—धात्वर्थे वाच्य इति । यथा पचति पाचक इत्यादौ प्रकृतिः क्रियामाह प्रत्ययस्तु साधनं तथा पाक इत्यादौ प्रकृतिः साध्यमर्थमाह प्रत्ययस्तु तस्यैव सिद्धतां द्रव्यधर्मलिङ्गसंख्याकारक-शक्तिसंबन्धयोग्यमाकारमाह । तदुक्तम्—

---

१. C drops it. २. °त्रयेपि $N_1$. ३. मत्स्यव्याधि° C. ४. After it—स्यात् $D_2$. ५. अतीसारम् $D_2$.

**इकः काशे ॥६।३।१२३॥**

काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात् ॥ नीकाशः अनूकाशः । इकः किम् । प्रकाशः ।

**अकर्तरि च कारके संज्ञायाम् ॥३।३।१९॥**

धातोर्घञ् स्यात् कर्मादौ वाच्ये संज्ञायाम् ॥ प्रास्यति प्रासः । चादसंज्ञायामपि । कस्त्वया दायो दत्तः । दारजारौ कर्तरि णिलुक् च ॥*[4]

---

' आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभागस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति ।

लिङ्गवचने अतन्त्रे । तेन पाकौ पक्तिः पचनमित्यादयोपि स्युः ।

इकः । ' उपसर्गस्य घञि—' इत्येव सिद्धे नियमार्थमाह—इगन्तस्यैवेति ।

**अक** । **प्रास्यतीति** । असु क्षेपणे । कर्मणि । अकर्तरि किम् । मिषतीति मेषः । बिभर्तीति भर्ता । अच् । संज्ञायां किम् । कर्तव्यः । चादिति । चकारो भिन्नक्रमः संज्ञायामित्यस्यानन्तरं द्रष्टव्यः । ततः संज्ञायां चासंज्ञायां च स्यात् । दाय इति । कर्मणि घञ् । ' आतो युक् ' । दारेति । तृजादिप्राप्तौ । दारयन्ति जरयन्ति । इतः परं ' भावे ' ' अकर्तरि च कारके ' इत्यनुवर्तते ' कृत्यल्युटो बहुलम् ' इति यावत् । स्पष्टत्वादुपेक्षितान्येकात्रिंशत् सूत्राणि घञ्विधायकानि

---

१. कस उत्तर° $D_2$. २. $D_1$ drops एव. ३. प्रास्यति तं $D_1$, $D_4$, $B_3$; प्रास्यन्ति तं P $D_2$, $N_1$. ४. After it दाराः । जारः $B_2$. ५. सत्त्व° PC. $Do_3$. ६. Before it—इतःपरं PC.

व्याख्यास्यामः—'परिमाणाख्यायां सर्वेभ्यः' ॥३।३।२०॥ परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् कर्मादौ। एकस्तण्डुलनिश्चायः। निष्पावः। धातोरित्येव सिद्धे सर्वग्रहणमपोपि बाधनार्थमन्यथा पुरस्तादपवादत्वादच्मेव बाधेत। स्त्रीप्रत्ययास्तु न बाध्यन्ते। एका तिलोच्छित्तिः। परिमाणाख्यायां किम्। निश्चयः। आख्याग्रहो रूढिनिरासाय। तेन संख्यापि न प्रस्थाद्येव। 'उपसर्गे रुवः' ॥३।३।२२॥ रु शब्दे। घञ्। अपोपवादः। संरावः। उपरावः। उपसर्गे किम्। रवः। 'समि युद्रुदुवः' ॥३।३।२३॥ घञ्। संयावः। संद्रावः। संदावः। समि किम्। प्रयवः। 'श्रिणीभुवोनुपसर्गे' ॥३।३।२४॥ पञ्चम्यर्थे सप्तमी। एभ्यो घञ्। नाजपौ। श्रायः। नायः। भावः। अनुपसर्गे किम्। प्रश्रयः। प्रणयः। प्रभवः। कथं नयः। 'कृत्यल्युटो बहुलम्' इति। प्रभाव इति प्रकृष्टो भाव इति। 'वौ क्षुश्रुवः' ॥३।३।२५॥ घञ्। नाप्। विक्षावः। विश्रावः। वौ किम्। क्षवः। 'अवोदोर्नियः' ॥३।३।२६॥ अचोपवादो घञ्। अवनायः अधोनयनम्। उन्नायः ऊर्ध्वनयनम्। बहुलादुन्नयोपि। 'प्रे द्रुस्तुस्रुवः' ॥३।३।२७॥ घञ्। नाप्। प्रद्रावः। प्रस्तावः। प्रस्रावः। प्रेति किम्। द्रवः। 'निरभ्योः पूल्वोः' ॥३।३।२८॥ घञ्। नाप्। निष्पावः धान्यविशेषः। अभिलावः। निरभ्योः किम्। पवः। लवः। 'उन्न्योर्ग्रः' ॥३।३।२९॥ घञ्। नाप्। उद्गारः। अतिप्रवृत्तो ध्वनिशब्दः। निगारो भक्षणम्। उन्न्योः किम्। गरः। 'कॄ धान्ये' ॥३।३।३०॥ कॄ विक्षेपे। अस्मादुन्न्योर्घञ् नाप् धान्यविषये। उत्कारो निकारो वा धान्यस्य। धान्ये किम्। भैक्ष्यस्योत्करः। पुष्पनिकरः।[2] 'यज्ञे समि स्तुवः' ॥३।३।३१॥ घञ्। नाप्। संस्तावः समेत्य स्तुवन्ति छन्दोगा यत्र स देशः। यज्ञे किम्। संस्तवः। परिचयः। 'प्रे स्त्रोयज्ञे' ॥३।३।३२॥ घञ्। नाप्। शङ्खप्रस्तारः। अयज्ञे किम्। प्रस्तरः। 'छन्दोनाम्नि च' ॥३।३।३४॥ वौ स्तृणातेर्घञ्

१. यवः PC, Dc3. २. निकरः for पुष्पनिकारः। Dc3, PC.

वृत्तनामधेये । विष्टारपङ्क्तिश्छन्दः । ‘उदि ग्रहः’ ॥३।३।३५॥ घञ् । नाप् । उद्ग्राहः । ‘समि मुष्टौ’ ॥३।३।३६॥ ग्रहेर्घञ् नाप् । अङ्गुलिसंनिवेशविषये संग्राहो मुष्टिः । मुष्टौ किम् । संग्रहो धान्यस्य । ‘परिन्योर्नीणोर्द्यूताभ्रेषयोः’ ॥३।३।३७॥ परिन्योरुपपदयोः क्रमान्नयतेरिणश्च घञ् नाप् क्रमेण द्यूते उचिते च वाच्ये । परिणायः शारीणाम् । न्यायः । अन्यत्र परिणयो विवाहः । न्ययं गतः पापः । नाशमित्यर्थः । ‘परावनुपात्यय इणः’ ॥३।३।३८॥ अनुक्रमे वाच्ये घञ् नाप् । पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः अतिपातः । ‘व्युपयोः शेतेः पर्याये’ ॥३।३।३९॥ तव राजविशाय उपशायो वा । पर्याये किम् । विशयः । अनुपात्ययानुवृत्त्यैव सिद्धौ पर्यायग्रहः परमिनुणं बाधितुम् । ‘हस्तादाने चेरस्तेये’ ॥३।३।४०॥ घञ् । नाप् । पुष्पप्रचायः । हस्तादानयोगत्वे किम् । तालफलप्रचयः । अस्तेये किम् । पुष्पप्रचयश्चौर्येण । ‘संघे चानौत्तराधर्ये’ ॥३।३।४२॥ चेर्घञ् । नाप् । आदेश्चस्य कः प्राणिस्तोमे वाच्ये अनौत्तराधर्ये सति । वैयाकरणनिकायः । अनौत्तराधर्ये किम् । सूकरनिचयः । स्तनपानेन यदोत्तराधरभावेनाशेरते तदेदं प्रत्युदाहरणम् । संघे किम् । प्रमाणसमुच्चयः । ‘आक्रोशेवन्योर्ग्रहः’ ॥३।३।४५॥ घञ् । नाप् । अवग्राहो निग्राहो वृषल ते भूयात् । शपने किम् । अवग्रहः पदस्य । ‘प्रे लिप्सायाम्’ ॥३।३।४६॥ ग्रहो घञ् लिप्सायाम् । पात्रग्राहेण चरति भिक्षुः । लिप्सायां किम् । प्रग्रहः कृष्णस्य । ‘परौ यज्ञे’ ॥३।३।४७॥ ग्रहेर्घञ् । परिग्राहः । यज्ञे किम् । परिग्रहः । ‘नौ वृ धान्ये’ ॥३।३।४८॥ नौ वृङ्वृञ्भ्यां घञ् नाप् । नीवारः । धान्ये किम् । निवार्यते निवरा कन्या । ‘उदि श्रयतियौतिपूद्रुवः’ ॥३।३।४९॥ घञ् । नाजपौ । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । वक्ष्यमाणविभाषाग्रहणानुवृत्तेः समुच्छ्रय इत्यपि । ‘विभाषाङि रुप्लुवोः’ ॥३।३।५०॥

१. सारीणां $Dc_3$, PC.

एरच् ॥३।३।५६॥

इवर्णान्तादच् स्यात् भावादौ ॥ घञोपवादः । चयः । जयः ।

ऋदोरप् ॥३।३।५७॥

ऋकारान्तादुवर्णान्ताच्चाप् स्याद्भावादौ ॥ करः । गरः । स्तवः । लवः ।

---

आङि वा घञ् । पक्षे अप् । आरावः । आरवः । आप्लावः । आप्लवः । 'अवे ग्रहो वर्षप्रतिबन्धे' ॥३।३।५१॥ वा घञ् । नाप् । अवग्राहः । अवग्रहः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य । 'प्रे वणिजाम्' ॥३।३।५२॥ वणिक्संबन्धिनि सूत्रे ग्रहेर्घञ् वा नाप् । वणिक् प्रग्राहवान्यद्वत् काले चरति सिद्धये । अन्यत्र प्रग्रहः । 'रश्मौ च' ॥३।३।५३॥ ग्रहेर्घञ् वा । प्रग्रहः । प्रग्राहः । खलीसूत्रम् । 'वृणोतेराच्छादने' ॥३।३।५४॥ प्रे घञ् वा । प्रवारः । प्रवरः । आच्छादने किम् । प्रवरा गौः[1] । 'परौ भुवोवज्ञाने' ॥३।३।५५॥ वा घञ् । परिभवः । परिभावः । अवज्ञाया किम् । सर्वतो भवनं[2] परिभवः ।

'एरच् ।' चकारः 'थाथघञ्क्ताजबित्रकाणाम्' इत्यत्र 'अच्' इति विशेषणार्थः । अन्यथात्र 'अप्रत्ययात्' इत्यस्यापि ग्रहणं स्यात् । चयः जयः इति । चिञ् चयने । जि जये । भयादीनामुपसंख्यानम् । भयम् । वर्षम् । नपुंसके भावे क्तादिनिवृत्त्यर्थम् । भाष्यप्रयोगात् कामवर्षणादस्मात् वर्षणमित्यपि स्यात् । कल्पादिभ्यो नेति वाच्यम् । कल्पः । अर्थः । मन्त्रः ।[3]

ऋदो । पकारः 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वार्थः । ऋदोरिति न तकारः । किं तु दकारो मुखसुखार्थः । तेन तादपि तपर इति तत्कालग्रहणं नेत्यभिप्रेत्या ह-उवर्णान्ताच्चेति । कर इत्यादि । कॄ विक्षेपे । गॄ निगरणे । ष्टुञ् स्तुतौ । लूञ् छेदने ।

---

१. प्रवरी गौः PC, Dc3. २. भवः PC, Dc3. ३. After it घञ् PC, Dc3.

इङश्च ॥३।३।२१॥

अस्माद् घञ् स्याद् भावादौ नाच् ॥ अध्यायः । उपेत्यास्मादधीते उपाध्यायः ।

प्रथने वावशब्दे ॥३।३।३३॥

विपूर्वात् स्तॄञो घञ् स्यात् विस्तीर्णार्थे न तु शब्दे ॥ पटस्य विस्तारः । शब्दे तु वाचो विस्तरः ।

घञपोश्च ॥२।४।३८॥

अदेर्घस्लृ स्याद् घञि अपि च ॥

उपसर्गेऽदः ॥३।३।५९॥

अदेः प्रादावप् स्याद्भावादौ ॥ प्रघसः । प्रादौ किम् । घासः ।

---

इङ । ननु घञ्प्रकरणे एव किमिति न पठितान्येतानि सूत्राणि । अजपोरपवादत्वात् तौ विधाय पठितानीत्यदोषः । इङ् अध्ययने । उपाध्यायं इति । अपादाने स्त्रियां च वक्तव्यं तदन्ताच्च वा ङीष् । उपाध्याया । उपाध्यायी । श्रो वायुवर्णनिवृत्तेषु । शॄ हिंसायाम् । शारो वायुर्वर्णश्च । निवृत्तं सीतादिदुःखवारणार्थमावरणम् ।

गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतावरण इत्यर्थः ।

प्रथ । स्तॄञ् आच्छादने ।

घञ ।

उपसर्गे । घञोपवादः । अन्यत्रापि हलन्तादप् ।

---

१. उपेत्यस्मादधीयते $D_2$, $B_2$. २. विस्तीर्णतार्थे $D_2$, P; $N_1$. ३. अदः $D_1$.

समुदोरजः पशुषु ॥३।३।६९॥

समुत्पूर्वादजतेरप् स्याद् भावादौ पशुविषये ॥ अघञपो-रित्युक्तेर्वीभावो न । समजः पशुसङ्घः[1] । उदजः पशुप्रेरणम् । अन्यत्र समाजः । उदाजः । नोदात्तोपदेशेति[2] न वृद्धिः । शमः । [3]आचमादेस्तु । आचामः । [4]कामः । वामः । अमा-देस्तु । आमः । अमः । चामः । चमः । विश्रामो । विश्रमः । विश्र्[5]ामोपशब्द इति काशिकायाम् । हनस्तोचिण्णलोः । आ[6]घातः ।

हनश्च वधः ॥३।३।७६॥

हन्तेरनुपसर्गाद्भावे अप् स्यात् हन्तेर्वधादेशश्च ॥ वधः । घञोपीष्टिः[7] । घातः । निमिमीलियां ल्यचोरात्त्वनिषेधः ।

---

समु । अज गतिक्षेपणयोः । अन्यत्रेति । सधर्मिसंघे । शम इति । घञ् । आचाम इति । चमु अदने । आङ्पूर्वः । कमु कान्तौ । टुवम् उद्गिरणे । अमादेरिति । केषांचिन्मतेन वा वृद्धिः । विश्रामोपशब्द इति । तथा च काशिकायां वामनेनोक्तम् । विश्राम-भूमिरित्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते । आघात इति । घञ् । 'हो हन्तेः—' इति [8]कुत्वम् ।

हनः । अत्र सूत्रे वधशब्दस्यान्तोदात्तस्योच्चारणादपि कृते 'अतो लोपः' इत्यकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यु-दात्तनिवृत्तिस्वरेणापि उदात्तत्वम् । निमिमीति । 'मीनातिमिनोति-दीङां ल्यपि च' 'विभाषा लीयतेः' इति प्राप्तस्यात्वस्य निषेधः ।

---

१. पशुसंघातः $D_1$. २. °पदेशस्येति $D_2$. ३. Before it—अनुदात्तो-पदेशेति किम् । रामः । $N_1$. ४. $D_2$ drops it. ५. विश्रमोपशब्दः काशिका- $D_1$. ६. घातम् $D_2$. ७. घञपीष्टः C. ८. कुः । $Dc_3$, PC.

निमयः । मयः । विलयः । लयः ।

---

निमय इति 'एरच् ।' इतःपरं स्पष्टत्वादुपेक्षितानि अब्विधायकानि सूत्राणि सप्तविंशतिं व्याख्यामः । 'ग्रहवृदृनिश्चिगमश्च' ॥३।३।५८॥ एभ्योऽप् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः । निश्चिग्रहो मध्योदात्तार्थः । वशिरण्योश्च । वशः । रणः । स्थास्नापाव्यधिहनियुधां कः । स च घञर्थेकविधानमिति । प्रतिष्ठन्तेऽस्मिन् प्रस्थः सानुः । प्रस्नान्त्यस्मिन् प्रस्नः कटाहः । प्रपिबन्ति तस्यां प्रपा पानीयशाला । आविध्यन्त्यनेनाविधमायुधम् । विहन्त्यस्मिन्निति विघ्नः । आयुध्यतेऽनेनायुधम् । 'नौ ण च' ॥३।३।६०॥ नौ अदेर्णः अप् च । न्यादः । निघसः । 'व्यधजपोरनुपसर्गे' ॥३।३।६१॥ अप् । व्यधः । जपः । अनुपसर्गे किम् । आव्याधः । उपजापः । 'स्वनहसोर्वा' ॥३।३।६२॥ अनुपसर्गे वाप् । स्वनः । स्वानः । हसः । हासः । उपसर्गे प्रस्वानः प्रहासः । 'यमः समुपनिविषु च' ॥३।३।६३॥ एषु अनुपसर्गाच्च यमो वाप् । संयमः । उपयमः । नियमः । वियमः । यमः । पक्षे घञ् । 'नौ गदनदपठस्वनः' ॥३।३।६४॥ एभ्यो नौ अब्वा निगदः । निनदः । निपठः । निस्वनः । पक्षे घञ् । 'क्वणो वीणायां च' ॥३।३।६५॥ वीणाविषयाच्च निपूर्वाच्चानुपसर्गाच्च क्वणोऽब् वा । कल्याणप्रक्वणा वीणा । निक्वणः । क्वणः । पक्षे घञ् । एषु किम् । अतिक्वाणो वर्तते । 'नित्यं पणः परिमाणे' ॥३।३।६६॥ अप् । शाकपणः । संव्यवहाराद् द्वित्रादिपरिमिता शाकमुष्टिः । परिमाणे किम् । पाणः । 'मदोऽनुपसर्गे' ॥३।३।६७॥ विद्यामदः । उपसर्गे उन्मादः । 'प्रमदसंमदौ हर्षे' ॥३।३।६८॥ निपात्यौ । 'अक्षेषु ग्लहः' ॥३।३।७०॥ अक्षसंबन्धे देवने ग्रहेर्ग्लहो नित्यं निपात्यः । अक्षेषु किम् । ग्रहः । यद्वा ग्लहिः प्रकृत्यन्तरम् । ग्लाहः । 'प्रजने सर्तेः' ॥३।३।७१॥ अप् गर्भग्रहणे । गवामुपसरः । 'ह्वः संप्रसारणं च न्यभ्युपविषु' ॥३।३।७२॥ एषु ह्वयतेरप् संप्रसारणं च । निहवः ।

अभिह्वः । उपह्वः । विह्वः । एषु किम् । प्रह्वायः । 'आङि युद्धे' ॥३।३।७३॥ ह्वः संप्रसारणं च । आहवः । युद्धे किम् । आह्वायः । 'निपानमाहावः' ॥३।३।७४॥ जलाधारः आहावः । अन्यथा आह्वायः । 'भावेनुपसर्गस्य' ॥३।३।७५॥ ह्वोप् संप्रसारणं च । हवः । अनुपसर्गस्य किम् । आह्वायः । भावोक्तेः कर्मादौ न । 'मूर्तौ घनः' ॥३।३।७७॥ हन्तेरप् घनादेशश्च काठिन्ये । दधिघनः । काठिन्ये किम् । घातः । कथं घनं दधि । उपचारात् । 'अन्तर्घनो देशे' ॥३।३।७८॥ निपात्यः । णान्त इति केचित् । देशे किम् । अन्तर्घातः । 'अगारैकदेशे प्रघणः प्रघाणश्च' ॥३।३।७९॥ द्वारबाणप्रकोष्ठके प्रघणः प्रघाणश्च निपात्यौ । अन्यः प्रघातः । 'उद्घनोत्याधानम्' ॥३।३।८०॥ निपात्यः । निधाय तक्ष्यते यत्र काष्ठैः काष्ठं स उद्घनः । अन्यत्र उद्घातः । 'अपघनोङ्गम्' ॥३।३।८१॥ निपात्यः । अङ्गं किम् । अपघातः । 'करणेयोविद्रुषु' ॥३।३।८२॥ एषु हनोप् करणेर्थे घनादेशश्च । अयो हन्यतेनेन अयोघनः । विघनः । द्रुघनः । द्रुघण इति केचित् । 'पूर्वपदात्—' इति णत्वम् । 'स्तम्बे क च' ॥३।३।८३॥ हनः करणे कः अप् घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करणे किम् । स्तम्बघातः । 'परौ घः' ॥३।३।८४॥ हन्तेः करणेप् स्यात् घोन्तादेशः । परिहन्यतेनेनेति परिघः । पलिघोपि । 'उपघ्न आश्रये' ॥३।३।८५॥ निपात्यते । आश्रयेण सामीप्यं लक्ष्यं स्यात् । उपघ्नोन्तिकाश्रये । 'संघोद्घौ गणप्रशंसयोः' ॥३।३।८६॥ निपात्यौ । सङ्घो गणः । उद्घः प्रशस्तः । अन्यत्र संघातः । उद्घातः । 'निघो निमितम्' ॥३।३।८७॥ निपात्यः । समन्तान्मितं निमितम् समोन्नतिविस्तारम् । निघा वृक्षाः । निघातोन्यः ।

१. संह्वायः Dc3, PC. २. देशश्च PC.

**कर्मव्यतिहारे णच् स्त्रियाम् ॥३।३।४३॥**

क्रियाव्यतिहारे गम्ये धातोर्णच् स्याद् भावादौ स च स्त्रियाम् ॥

**णचः स्त्रियामञ् ॥५।४।१४॥**

स्त्रियां [1]विहितणजन्तात् स्वार्थेञ् स्यात् ॥ तद्धितत्वा-न्ञ्ख्वाभ्यामित्यैचि प्राप्ते

**न कर्मव्यतिहारे ॥७।३।६॥**

कर्मव्यतिहारे[2] प्रत्यये परे नैच् स्यात् ॥ आदिवृद्धिः । टिड्ढाणञिति ङीप्[3] । [4]व्यावहासी ।

---

**कर्म** । क्रियाव्यतिहारः परस्परकरणम् । चकारो विशेषणार्थः 'णचः स्त्रियामञ्' इति । बाधकविषयेपि क्वचिदिष्यते । व्यावचोरी । व्यावचर्चीति । अत्र चुरादिणिजन्तत्वात् परत्वात् युच् प्राप्नोति । व्यात्युक्षीति । अत्र अकारो बाधकः । क्वचिन्न । व्यतीक्षा । व्यतीहा । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादिदं वैचित्र्यम् ।

**णचः** । **विहितणजन्तादिति** । विहितश्चासौ णच् च विहितणच् । सोन्तो यस्य विहितणजन्तः । तस्मात् । कर्मव्यतिहारे णच् स्त्रियाम् इति विहितणजन्तात् स्वार्थेञ् स्त्रियां स्यादित्यर्थः । स्त्रियामेव हि णच् विहितः । किं पुनः स्त्रियामित्यनेन । एवं तर्ह्येतत् ज्ञाप्यते स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इति । तेन देव एव देवता त्रय एव लोकास्त्रैलोक्यमित्येवमादि सिध्यति । अञ् च सगति-कारकपूर्वात् स्यात् ।

**न कर्म** । **आदिवृद्धिरिति** । 'तद्धितेष्वचामादेः' इति ।

---

१. विहिताण्णज° P., C. २. ञ्णिति णिति तद्धिते परे नैच् स्यात् $D_1$. ३. ङीष् $D_4$. ४. Before it—व्यावक्रोशी C.

**अभिविधौ भाव इनुण् ॥३।३।४४॥**

अभिव्याप्तौ गम्यायां भावे इनुण् स्यात् ॥

**अणिनुणः ॥५।४।१५॥**

इनुणन्तात् स्वार्थेण् स्यात् ॥ आदिवृद्धिः । इनण्यनपत्ये । सांराविणं वर्तते ।

**उपसर्गात् खल्घञोः ॥७।१।६७॥**

उपसर्गाल्लभेर्नुम् स्यात् खलि घञि च ॥ प्रलम्भः ।

**न सुदुर्भ्यां केवलाभ्याम् ॥७।१।६८॥**

सुदुर्भ्यां परस्य लभेर्नुम् न स्यात् ॥ सुलाभः । दुर्लाभः । केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः ।

**स्फुरतिस्फुलत्योर्घञि ॥६।१।४७॥**

अनयोरेच आत्वं स्याद् घञि ॥ स्फारः । स्फालः ।

---

अभि । क्रियागुणाभ्यां कार्त्स्न्येन संबन्धोभिव्याप्तिः । भाव इति स्थिते पुनर्भावग्रहणं वासरूपनिरासार्थम् । तेन घञा क्तेन च समावेशो न । ल्युटा त्वस्ति । बहुलग्रहणात् । 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न ।

उप । 'लभेश्च' इत्येव सिद्धे वचनं नियमार्थम् । उपसर्गादेव लभेर्नुम् खल्घञोरिति ।

स्फुर । स्फुर स्फुल चलने ।

---

१. Before it—केवलाभ्याम् N.

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥३।३।४१॥**

एष्वर्थेषु चिनोतेर्घञ् स्यान्नाच्[1] आदेश्च कः ॥ निवासो निकायः । चितौ । आकायोग्निः । कायः शरीरम् । राशीकरणे । गोमयनिकायः ॥

**घञि च भावकरणयोः ॥६।४।२७॥**

भावेर्थे[2] करणार्थे च घञि रञ्जेर्नस्य लोपः स्यात् ॥ रागः । अनयोः किम् । रजत्यस्मिन्निति रङ्गः[4] ॥

**स्यदो जवे ॥६।४।२८॥**

निपातो[5] वेगे । स्यदः । अन्यत्र स्यन्दः ।

**अवोदैधौद्मप्रश्रथहिमश्रथाः ॥६।४।२९॥**

एते निपात्यन्ते ॥ अवोदः अवक्लेदनम् । एधः इन्धनम् ।

---

**निवास** । निवासादीनर्थान् व्याकुर्वन्नुदाहरति— **निवासो निकाय** इत्यादि ।

**घञि च** । रञ्ज रागे । **राग** इत्यादि । रञ्जनं रागः रज्यतेनेन वा । घञ् । 'चजोः—' इति कुः ।

**स्यदः** । स्यन्दतेर्नलोपो वृद्ध्यभावो निपात्यते । अनिग्लक्षणाया वृद्धेः 'न धातुलोप आर्धधातुके' इति निषेधो नास्ति यतः ।

**अवोदै** । **अवोद** इति । उन्देरवपूर्वस्य घञि नलोपो निपात्यते । अवक्लेदनमिति । किंचिदार्द्रत्वमित्यर्थः । अत्र सर्वत्र

---

१. $D_2$ drops स्यान्नाच्. २. भावार्थे N. ३. इति dropped P, N. ४. After it—पात्रम् $B_2$, $D_4$. ५. निपातोयं जवे $D_1$; निपातोयं वेगे P, $B_2$, N.

ओझः उन्दनम् । प्रश्रथः । हिमश्रथः ।

**ड्वितः क्त्रिः ॥३।३।८८॥**

डु इत् यस्य ततो धातोर्भावादौ क्त्रिः स्यात् ॥

**क्त्रेर्मम्नित्यम् ॥४।४।२०॥**

क्त्रिप्रत्ययान्तात् नित्यं मप् स्यान्निर्वृत्तेर्थे ॥ करणेन निर्वृत्तं कृत्रिमम् । पक्त्रिमम् ।

**ट्वितोऽथुच् ॥३।३।८९॥**

टु इत् यस्य ततो धातोर थुच् स्याद् भावादौ ॥ वेपथुः । श्वयथुः ।

---

घञि नलोपो निपात्यते । एध इति । इन्धेर्गुणश्च । अन्यथा न धातुलोप इति निषेधः स्यात् । ओद्म इति । उन्दतेर्गुणश्च । **प्रश्रथः** । **हिमश्रथः** । श्रन्थेर्वृद्ध्यभावश्च ।

**ड्वितः** । स्वभावतो भाव एव क्त्रिः । कौ गुणनिषेधार्थः ।

**क्त्रेर्मम्** । त्रिशब्देनात्र संख्या न गृह्यते अनभिधानात् । किंतु 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययो गृह्यत इत्याह— **क्त्रिप्रत्ययान्तादिति** । अयं च तद्धितः । भावप्रत्ययान्तान्निर्वृत्तेर्थे इमनिच् वाच्यः । पाकिमम् । रागिमम् । **कृत्रिममिति** । डुकृञ् करणे । **पक्त्रिममिति** । डुपचष् पाके ।

**ट्वितः** । भावादावित्यमेनुवृत्तिसिद्ध्यर्थमुक्तम् । अथुच् भाव एव स्वभावतो भवति । घञजपामपवादश्च । वासरूपन्यायेनापि घञ् न । अनभिधानात् । **वेपथुः** । टुवेपृ कम्पने । **श्वयथुः** । टुओश्वि गतिवृद्ध्योः । चकारोन्तोदात्तार्थः ।

**यजयाचयतविच्छप्रच्छरक्षो नङ् ॥३।३।९०॥**

एभ्यो नङ् स्याद्भावादौ ॥ चुत्वम् । यज्ञः । याच्ञा । यत्नः । च्छ्वोः शूठ् । विश्नः । प्रश्ने चासन्नेति ज्ञापकान्न संप्रसारणम् । प्रश्नः । रक्ष्णः ।

**स्वपो नन् ॥३।३।९१॥**

स्वपो भावादौ नन् स्यात् ॥ स्वप्नः ।

**उपसर्गे घोः किः ॥३।३।९२॥**

प्रादावुपपदे घुसंज्ञकात् किः स्याद्भावादौ ॥ आतो लोपः । अन्तर्धिः । आदिः । आधिः ।

**कर्मण्यधिकरणे च ॥३।३।९३॥**

कर्मण्युपपदे अधिकरणेर्थे घोः किः स्यात् ॥ उदकं धीयतेस्मिन्निरयुदधिः । पयोनिधिः ।

---

**यज** । वासरूपविधिश्च यथाभिधानं स्यात् । ङकारो विच्छेस्तुगभावपक्षे गुणनिषेधार्थः । तथा हि । **पाणिनीयमतदर्पण-कारः** । ‘ तुगागमे सत्यलघूपधत्वाद्गुणो न दृष्टः स्वत एव विछः । विज्ञायते ङित्करणेन तस्मादनित्यता ह्यागमशासनस्य ’ इति ।

**स्वपः** । नकारः ‘ ञ्नित्यादिर्नित्यम् ’ इत्याद्युदात्तार्थः ।

**उप** । घञोपवादः । कित्करणमालोपार्थम् ।

**कर्मणि** । अधिकरणग्रहणमर्थान्तरनिरासार्थम् चकारः प्रत्ययानुकर्षणार्थः । उदधिरिति । ‘ पेषं वासवाहनधिषु च ’ इत्युदकस्योदादेशः ।

---

१. प्रश्न $D_3$. २. भावादौ किः स्यात् $D_1$; किः $B_2$. ३. आतो लोप इति च C. ४. निधीयते $D_2$. ५. °त्करणे $Dc_1$. ६. अपि $Dc_3$.

## स्त्रियां क्तिन् ॥३।३।९४॥

धातोर्भावादौ क्तिन् स्यात् तदन्तश्च स्त्रीलिङ्गः ॥ कृतिः । बुद्धिः । स्मृतिः । ह्लाद इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लत्तिः । ति च । चूर्तिः । फुल्लिः । चायतेः क्तिनि नित्यं चिभावः । अपचितिः । कण्डूयतेः क्तिन् । अतो लोपः । तस्य च लोपे

---

स्त्रियाम् । घञजपामपवादः । ह्लाद इतीति । 'ह्लादो निष्ठायाम्' इत्यत्र ह्लाद इति योगविभागः । ति चेति । चरफलोरत उत्तादौ । चायतेरिति । चायृ पूजानिशामनयोरिति । कण्डूयतेरिति । 'कण्ड्वादिभ्यो यक् ।' तस्मात् क्तिन् स्यादिति वाच्यम् । एतच्च 'क्तिन्नाबादिभ्यश्च' इति वार्तिकात् सिद्धम् । अन्यथा 'अ प्रत्ययात्' इत्यः स्यात् । अथवा प्रत्ययान्तादपि क्तिन् स्यादिति 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति वर्तीति ण्यन्तात् क्तिनमुत्पाद्य निर्देशः कृतः सूत्रकारेण । ततो ज्ञायते । तथा च काशिकायां 'न पदान्त—' इति सूत्रे उक्तम् । 'कण्डूयतेः क्तिनि कृते' इति । न्यासकारेण च तत्रैवोक्तम् । 'कण्डूतिरिति । कण्ड्वादिभ्यो यक् । तदन्तात् स्त्रियां क्तिन्' इति । पदमञ्जरीकारेण चैवमुक्तम् क्तिनि कृते इति । क्तिन्नाबादिभ्यो वक्तव्य इत्यनेनेति भावः । क्तिचिति तु युक्तः पाठ इति । भाष्यकारस्य त्वयमभिप्रायः । कण्डूतिरिति क्तिजयं न क्तिन् । तथा च 'न पदान्त—' सूत्रे उक्तवान् । इदं तर्हि कण्डूतिरिति । नैतदस्ति प्रयोजनम् । कण्डूया वल्गूया इति भवितव्यम् । इदं तर्हि । कण्डूयतेः क्तिच् । ब्राह्मणकण्डूतिरिति । अतो लोप इत्यादि ।

---

१. Dropped in $D_2$. २. Dropped in C. ३. स्थितिः $D_1$. ४. यस्य N, $D_1$. ५. कण्डूति वल्गूतिरिति $Dc_3$. ६. भविष्यति $Dc_3$.

कर्तव्ये स्थानिवत्त्वाभावात् यलोपः ।[1] कण्डूतिः । शान्तिः । दान्तिः । तितुत्रेति नेट् । दीप्तिः । तितुत्रेतीण्निषेधोग्रहादीनामिति वाच्यम् ॥[2]* नेह[3] । निगृहीतिः[4] । निकुचितिः । निपठितिः । उपस्निहितिः[5] ।

ग्लाज्याहात्वरिभ्यो निः[6] ॥ ग्लानिः[7] । ज्यानिः । हानिः । 'ज्वरत्वर–'[8] इति । तूर्णिः । ॠल्वादिभ्यः क्तिन् निष्ठावत् ज्ञेयः ॥

---

कण्डूय् ति इति स्थिते अलोपस्य 'लोपो व्योर्वलि' इति यलोपं प्रति 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवत्त्वे प्राप्ते 'न पदान्त—' इति सूत्रेण यलोपविधिं प्रति स्थानिवत्त्वनिषेधात् यलोपः स्यादित्यर्थः । शान्तिः । दान्तिरिति । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । दीप्तिरिति । ननु चात्र 'गुरोश्च हलः' इत्यप्रत्ययो बाधकः । न । तत्र 'निष्ठायां सेटः' इत्युक्तेः । निगृहीतिरिति । 'ग्रहिज्या ।' 'ग्रहो लिटिदीर्घः ।' ज्वरत्वरेति । अनेनोपधावकारयोरूठ् । अत्रानुनासिके इत्यनुवर्तते । यदि क्वौ झलादौ च क्ङिति इत्येवानुवर्तते नानुनासिक इति तर्ह्ययं निप्रत्ययः क्तिन्नर्थे औणादिक एव वार्तिकेनानूदित इति 'उणादयो बहुलम्' इति बहुलादूडिति ज्ञेयम् । ॠल्वेति । ॠकारान्तेभ्यो ल्वादिभ्यश्च ।

---

१. After it—स्यात् $D_2$. २. वक्तव्यम् N. ३. तेन नेह । $D_4$. ४. विगृहीतिः N. ५. C drops it. ६. ग्लाग्ला° $D_2$; ग्लाम्लाहाज्या-त्वरिभ्यो $B_2$, $D_4$. ७. Before it—म्लानिः $D_2$, $D_4$, $B_2$. ८. त्वर for 'ज्वरत्वर–' इति N. ९. इत्यूठ् $D_2$, $D_4$, $B_2$.

कीर्णिः । शीर्णिः[1] । लूनिः । धूनिः ॥ संपदादेः[2] क्विब् वा[3] । संपत् । विपत् ।[4] पक्षे संपत्तिः । आकृतिगणोयम् ॥

ऊतियूति[6]जूतिसातिहेतिकीर्तयश्च ॥३।३।९७॥

एते निपात्याः । अव । ऊतिः । यु । यूतिः । जु । जूतिः । षो षिञ् वा । सातिः । हि हन् वा । हेतिः । कॄत् । कीर्तिः ।

---

कीर्णिरिति । कॄ विक्षेपे । 'ऋत इत् ।' रपरः । 'उपधायां च' इति दीर्घः । निष्ठावत्त्वात् 'रदाभ्याम्—' इति तस्य नः । णत्वम् । स्पष्टत्वात् त्यक्तम्—'स्थागापापचो भावे' ॥३।३।९८॥ स्थादिभ्यः 'आतश्चोपसर्गे' इति पचेः 'षिद्भिदादिभ्योङ्' इति प्राप्तस्याङोपवादः क्तिन् विधीयते स्त्रियाम् । स्थितिः । गीतिः । पीतिः । पक्तिः । 'व्यवस्थायामसंज्ञायाम्' इति ज्ञापकात् संस्थेत्यादि सिद्धम् ।

ऊति । उदात्त इत्यनुवृत्तेरन्तोदात्ता एते । अवतेः स्वरार्थं निपातनम् । ज्वरत्वरेत्यूठश्च क्तिनि सिद्धत्वात् । युजुवोर्दीर्घत्वोदात्तार्थम् । षो षिञ् वेति । षोन्तकर्मणि इति 'द्यतिस्यति—' इतीत्वे प्राप्ते तन्निषेधार्थं षिञ् बन्धने इत्यस्य वात्वान्तोदात्तार्थम् । वृत्तिकारादिमते तु षणु दाने इत्यस्य 'जनसनखनाम्' इत्यात्वसिद्धौ अन्तोदात्तार्थं न षिञः । तथामरसिंहेपि 'सातिर्दानावसानयोः' इति । हि हन्वेति । हि गतावित्यस्य गुणार्थं हन एत्वार्थं वा । कॄत संशब्दने । 'उपधायां च' इतीत्वम् । 'ण्यासश्रन्थ—' इति युचि प्राप्ते तद्बाधार्थम् । कालापकास्तु युचमपीच्छन्ति कीर्तनेति ।

---

१. Dropped $D_1$. २. संपदादौ $D_2$, $B_2$. ३. वा dropped N. ४. After it—प्रतिपत् P, N. ५. After it—इत्यादि N. ६. जूतियूति° C. ७. षण् $D_4$. ८. स्थितेः $Dc_3$. ९. क्तिनः $Dc_1$.

**व्रजयजोर्भावे क्यप् ॥३।३।९८॥**

आभ्यां भावे क्यप् स्यात् स्त्रियाम् ॥ व्रज्या । इज्या । क्त्यधिकारत्वान्न वासरूपविधिना पक्षे क्तिन् । भावे किम् । कर्मादौ न ।

**संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥३।३।९९॥**

एभ्यः क्यप् स्यात् संज्ञायां स्त्रियाम् ॥ अजेः क्यपि वीभावो नेति वाच्यम् । समज्या । निषद्या । निपत्या । मन्या । विद्या । सुत्या । अयङ् यि क्ङिति । शय्या । भृत्या । इत्या ।

---

व्रज । उदात्त इत्येव । पित्करणमुत्तरार्थम् । इज्येति । 'वचिस्वपि—' इति संप्रसारणम् ।

**संज्ञायाम्** । अनन्तरभावग्रहणं न स्वर्यते तेन भावादावर्थ उदात्त इत्येव । **समज्या** सभा । **निषद्येति** । निषीदन्ति तस्यां निषद्या आपणः । निपतन्ति तस्यां **निपत्या** पिच्छिला भूमिः । मन्यतेनया **मन्या** गलपार्श्वशिरा । विवदन्त्यनया तत्त्वमिति **विद्या** । सूयतेस्यां सोम इति **सुत्या** । शय्यते तस्यां **शय्या** । शिविका । खट्वा । भरणं **भृत्या** । अयनमित्या एति तयेति वा । संज्ञायां किम् । संवीतिः । निषत्तिः । निपत्तिरित्यादि । अथ कथं भूतिः मतिः आसुतिः । कर्मणि भृतौ इति मतिबुद्धीति आस्रुति परिषदः इति निपातनात् । 'अकर्तरि—' इत्यतः संज्ञायामित्यनुवर्तमाने पुनः संज्ञाग्रहणं संज्ञायामेवेत्येवमर्थम् । तत्र तु कारक एव संज्ञायां प्रत्ययः ।

---

१. C drops it. २. Before it—समजन्ति तस्याम् $D_1$, P, N; समजन्त्यस्यां $B_2$. ३. °मुत्तरत्र तुगर्थम् PC., $Dc_3$. ४. पिच्छला PC., $Dc_3$.

**कृञः श च ॥३।३।१००॥**

कृञो भावादौ शः स्यात् क्यप् चं स्त्रियाम् । शित्त्वाद्भावे यक् । रिङादेशः । क्रिया । कृत्या । योगविभागात् क्तिन्नपि । कृतिः ।

**इच्छा ॥३।३।१०१॥**

इषेः शे निपातोयम् ॥ परिचर्या । परिसर्या । मृगया । अटाट्यादयश्च । जागर्तेरकारो वा । जागर्या । जागरा । आस्या । चर्या । इति केचित् ।

---

कृञः । **योगविभागादिति** । कृञः क्यप् स्यात् । ततः शच । चकाराद् यथाप्राप्तमिति । क्तिन्नपीत्यर्थः ।

**इच्छा** । यगभावो निपात्यते । **परिचर्येत्यादि** । चर गतौ । सृ गतौ । मृग अन्वेषणे । अट गतौ । एभ्यो भावे शः । यक् । सर्तेर्गुणः । मृगयतेर्णेरियादेशः । अटतेर्द्वित्वमात्वं चाकारस्य । **जागर्येति** । 'जाग्रः—' इति गुणः । **आस्येति** । आस उपवेशने । तथा **चामरसिंहे** 'स्यादास्या चासना स्थितिः' । तथा 'चर्या त्वीर्यापथे-स्थितिः' इति । तथाह **काशिकाकारः** । कथमास्येति । 'ऋहलोर्ण्यत्' इति ण्यन्ताद् भविष्यति । वासरूपनिषेधश्च स्त्रीप्रकरणविषयस्यापवादाय' इति ।

---

१. शः स्याद्भावादौ C. २. $D_2$ drops it. ३. इत्यपि N. ४. °प्राप्तं चेति P, $Dc_3$. ५. °वादस्य PC, $Dc_3$.

अः प्रत्ययात् ॥३।३।१०२॥

प्रत्ययान्ताद्धातोर्भावादौ स्त्रियामः स्यान्न क्तिन् ॥ चिकीर्षा । अटाटा ।[2] लोलूया । कण्डूया । कण्डूतिरपि ।

गुरोश्च हलः ॥३।३।१०३॥

हलन्ताद्गुरुमतः अः स्याद्भावादौ स्त्रियां न क्तिन् ॥ ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः ॥ निष्ठायां सेट इति वाच्यम् ॥* तेनेह न । आप्तिः । राद्धिः । प्रशस्तिः । प्रशंसेत्यपि ।

षिद्भिदादिभ्योऽङ् ॥३।३।१०४॥

षितो भिदादेश्चाङ् स्यात् स्त्रियां भावादौ ॥ जॄष् । ऋदृशोऽङि गुणः । जरा । त्रपा । क्षमूष् । क्षमा । क्षम इत्यस्य

---

अप्र । चिकीर्षेति । सन्नन्तात् प्रत्ययः । अटाटेति । यङ् । द्वित्वम् । 'यस्य हलः' इति यलोपः । कण्डूयेति । 'कण्ड्वादिभ्यो यक् ।' कण्डूतिरपीति । आबादित्वादित्यर्थः ।

गुरोः । ईहा । ऊहेति । ईह चेष्टायाम् । ऊह वितर्के । प्रशंसेत्यपीति । 'प्रशंसायां रूपप्' इति निपातनात् ।

षिद्भि । भूषेत्यादिशब्देन क्षिपा । कुटा । वपा । वसा

---

१. After it—यस्य हल इति यलोपः $D_2$, $D_4$. २. After it— धातोः D
३. After it—धातोः C.

क्षान्तिः । भिदा । छिदा । क्षिपा । गुहा । मेधा ।[2] गोधा । कारा । हारा[3] । तारा[4] । धारा । लेखा[5] । कृपा । पीडा । भूषा ।[6] इत्यादि ।

**चिन्तिपूजिकथिकुम्बिचर्चश्च ॥३।३।१०५॥**

एभ्योऽङ् स्याद्भावादौ स्त्रियाम् ॥ वक्ष्यमाणयुचोपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ।

**आतश्चोपसर्गे ॥३।३।१०६॥**

प्रादावुपपदे आदन्तेभ्योऽङ् स्यात् स्त्रियां भावादौ न क्तिन् ॥ उपदा । श्रद्धा । अन्तर्धा ।

**ण्यासश्रन्थो युच् ॥३।३।१०७॥**

ण्यन्तादास्श्रन्थिभ्यां च[7] युच् स्यात् स्त्रियां[8] भावादौ ॥ कारणा । आसना । श्रन्थना ॥ घट्टिवन्दिविदिभ्यश्च ॥*

---

मृत्सा । आरा । भिदा । छिदा । विदारणे । अन्या भित्तिः । छित्तिः । आरा शस्त्याम् । आर्तिरन्या । धारा प्रपाते । धृतिरन्या । गुहा गिर्योषध्योः । अन्या गूढिः ।

चिन्ति । चिति स्मृत्याम् । पूज पूजायाम् । कथ वाक्यप्रबन्धे । कुबि च्छादने । चर्च अध्ययने । चुरादयः ।

आतः । श्रद्धा । अन्तर्धेति । श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्या ।

ण्यास । 'अप्रत्ययात्' इत्यस्यापवादोयम् । कारणेति । हेतुमण्णिच् । श्रन्थनेति । श्रन्थ मोचनप्रतिहर्षयोरिति त्र्यादिः ।

---

१. भिदा । क्षिपा $B_2$. २. गोधा dropped $B_1, D_1, D_2, D_3, D_4$. ३. Dropped P, N. ४. Dropped $D_2$, N; आरा $D_4$. ५. After it—रेखा P, $D_1$. ६. After it—रेखा । आरा । इत्यादि $B_2$; भिदादिराकृतिगणः । इत्यादि N. ७. C and $D_2$, $B_2$ drop it. ८. Dropped N, $D_4$.

घट्टना । वन्दना । वेदना ॥ इषेरनिच्छार्थात् ॥* अन्वेषणा ॥ परेर्वा ॥* पर्येषणा । परीष्टिः । एषणा ग्रन्थनेत्यपि केचित् ॥

## रोगाख्यायां ण्वुल् बहुलम् ॥३।३।१०८॥

धातोर्ण्वुल् स्यात् स्त्रियां भावादौ रोगाख्यायाम् ॥ प्रच्छर्दिका । विचर्चिका । बहुलोक्तेः शिरोर्तिः । धात्वर्थनिर्देशे ण्वुल् वाच्यः । आसिका । शायिका ॥ इक्श्तिपौ धातुनिर्देशे ॥* पचिः । नन्दिः । अदिः । भवतिः । अर्तिः ।[4] जुहोतिः । दीव्यतिः ॥ वर्णनिर्देशे वर्णात्कारः ॥* अकारः । ककारः ॥ रादिफः ॥* रेफः । मत्वर्थाच्छो भत्वं च ॥* मत्वर्थीयः । इञजादिभ्यः ॥* आजिः । आतिः ।[8] इक् कृष्यादिभ्यः ॥* कृषिः । गिरिः । किरिः ।

---

घट्टीति । घट्ट चलने इति भ्वादिः । चुरादेर्ण्यन्तत्वादेव सिद्धेः । **इषेरनिच्छार्थादिति** । गत्याभीक्ष्ण्यार्थकात् ।

**रोगा** । क्तिन् युजादीनामपवादः । **इक्श्तिपौ** । धातुनिर्देशो धातुत्वकरणम् । बहुलात् क्वचिन्न 'गुप्तिज्किद्भ्यः सन्' इति । शकारः सार्वधातुकार्थः । शित्करणसामर्थ्यादकर्त्रर्थत्वेपि शबादिः । **वर्णेति** । कथमेवकारः । वर्णसमुदायो ह्ययम् करणं कारः । एवस्य कारः एवकार इति । बहुलात् 'अस्य च्वौ' इत्यादौ कारो न । **रादिफः** । कारस्यापवाद इफः । कथं रकारादीनि नामानि । वासरूपविधेः कारोपि स्यात् । कृदधिकारविधिसामर्थ्यादेव धातुविहितानामपि कृत्त्वात् प्रातिपदिकत्वम् । इण्वपादेरिति वक्तव्यम् ।

---

१. ईषणा C; इषणा D₃. २. D₁ drops it. ३. अर्चिः P. ४. Dropped N₁. ५. Before it—भसंज्ञा D₂, B₂; भत्वं भसंज्ञा D ६. °दिभ्यश्च B₂. ७. आदिः N. ८. After it—आलिः B₂, D₄. ९. °कत्वार्थ PC.

**विभाषाख्यानपरिप्रश्नयोरिञ् च ॥३।३।११०॥**

परिप्रश्ने आख्याने च गम्ये धातोरिञ् स्यात् स्त्रियां भावादौ चात् ण्वुल् ॥ वोक्तेर्यथास्वमन्येपि[1] । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षीः । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिमकार्षम् । एवं गणिं गणिकां गणनामित्यादि ।

**आक्रोशे नञ्यनिः ॥३।३।११२॥**

नञि उपपदे धातोरनिः स्यादाक्रोशे स्त्रियां भावादौ न क्तिन्नादि[2] । अजीवनिस्ते शठ भूयात् ।[3] अप्रयाणिः ।

---

वापिः । वासिः । 'संज्ञायाम्' ॥३।३।१०९॥ इति स्पष्टत्वादुपेक्षितम्[4] । धातोर्ण्वुल् संज्ञायाम् । उद्दालकपुष्पभञ्जिका ।[5]

**विभाषा** । सूत्रे आख्यानस्याल्पाच्तरत्वात् पूर्वनिपातः । **कारिमिति** । इञ् । **कारिकामिति** । ण्वुल् । 'प्रत्ययस्थात्—' इतीत्वम् । **क्रियामिति** । शः । **कृत्यामिति** । क्यप् । **कृतिमिति** । क्तिन् । **गणिमिति** । गण संख्याने ।[6] पर्यायार्हर्णोत्पत्तिषु ण्वुच् । ॥३।३।१११॥ एतदप्युपेक्षितम् । क्रमे अर्हे ऋणे उत्पत्तौ च धातोर्ण्वुच् । क्तिन्नादीनामपवादः । क्रमे । भवत आसिका । अर्हे । अर्हति भवानिक्षुभक्षिकाम् । ऋणे । इक्षुभक्षिकां मे धारयसि । उत्पत्तौ । इक्षुभक्षिकोत्पन्ना । वेत्येव । चिकीर्षोत्पद्यते । ण्वुलि सति प्रत्ययात् पूर्व उदात्तः स्यादित्यन्तोदात्तार्थं ण्वुच् ।

**आक्रोशे** । आक्रोशे किम् । अकृतिः कटस्य । नञीति किम् । मृतिस्ते वृषल भूयात् ।

---

१. वोक्तेर्ज्ञायते यथास्वं $D_1$. २. °न्नादिः $D_4$. ३. अप्राणनिः C; after it—अहरणिस्ते भूयात् $B_2$, $D_4$. ४. स्पष्टत्वादुपेक्षितं 'संज्ञायाम्' इति $Dc_3$. ५. After it शालभञ्जिका PC, $Dc_3$. ६. स्पष्टत्वात् न्त्यक्तम् 'प°' $Dc_3$.

ल्युट् च ॥३।३।११५॥

धातोर्ल्युट् स्याद्भावे तदन्तश्च [1]नपुंसकः ॥ [2]ज्ञानम् । मानम् । प्रमाणम् । [3]प्रयापणम् । [4]प्रयापनम् । [5]प्रकोपणम् । प्रकोपनम् । [6]प्रेषणम् । [7]प्रणिंसनम् । प्रनिंसनम् । [8]प्रपवनम् ।

---

ल्युट् च । 'युवोरनाकौ' । प्रमाणमिति । 'कृत्यचः' इति णत्वम् । प्रयापणमिति । 'णेर्विभाषा' इति वा णत्वम् । प्रकोपणमिति । 'हलश्चेजुपधात्' इति वा णः । प्रणिंसनमिति । 'वा निंसनिक्षनिन्दाम्' इति णः । प्रपवनमिति । 'न भाभूपूकमि—' इति णत्वनिषेधः । स्पष्टत्वात् त्यक्तम् 'कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ।' ॥३।३।११६॥ येन कर्मणा स्पृष्टस्य कर्तुः शरीरसुखं स्यात् तदुपपदाद्धातोर्ल्युट् स्यान्नपुंसके भावे । नित्यसमासाय सूत्रम् । पयःपानं सुखम् । कर्मणि किम् । तूलिकाया उत्थानं सुखम् । संस्पर्शात् किम् । अग्निकुण्डस्योपासनं सुखम् । कर्तुः किम् । गुरोः स्नापनं सुखम् । शरीरस्य किम् । पुत्रस्य परिष्वञ्जनं सुखम् । मानसं सुखमत्र । ननु सुखं शरीरव्यतिरिक्तस्यात्मनो धर्मः । सत्यम् । यस्मिन् सुखे उत्पन्ने शरीरेपि स्वास्थ्यं स्यात् तच्छरीरसुखम् । पुत्रपरिष्वङ्गे तु गाढे शरीरतोद एव स्यात् न स्वास्थ्यमतो मनःस्वास्थ्यमेव । अत्र प्रत्युदाहरणं सर्वत्रासमासस्य ।

---

१. नपुंसके $D_2$, P, N, $D_4$. २. प्रज्ञानम् N. ३. प्रयापनम् । प्रयापणम् ; Before it—प्रगापनम् $D_4$, N. ४. Dropped $D_4$. ५. प्रकोपनम् । प्रकोपणम् । $D_4$. ६. $D_1$ drops it—प्रेषणम् N. ७. प्रतपनम् $D_1$; Dropped $D_4$. ८. प्रयापनमिति Pc, Dc ३.

**करणाधिकरणयोश्च ॥३।३।११७॥**

करणेधिकरणे चं धातोर्ल्युट् स्यात् ॥ इध्मव्रश्चनः । रजनः । गोदोहनी स्थाली । शयनी ।

**वा यौ ॥२।४।५७॥**

ल्युटि परे अजेर्वीभावो वा स्यात् ॥ प्रवयणम् । प्राजनम् । दरिद्राणम् ॥ मिहपतदशेति न्लोपिनो निर्देशात् अकित्यपि न्लोपः । दशनः । ष्ठिवुषिवोर्ल्युट्युपधादीर्घो वा ॥ ष्ठीवनम् । सीवनम् । पक्षे । ष्ठेवनम् । सेवनम् । कुटादित्वान्न गुणः । स्फुरणम् । स्फुलनम् ॥ कृत्यल्युटो बहुलम् ॥ राजभोजनाः शालयः । राजाच्छादनं वासः ।

---

करण । **इध्मव्रश्चन** इति । इध्मानां व्रश्चन इति षष्ठीसमासः । **रजन** इति । असि अके अने घिनुणि च रञ्जेर्नलोपो वाच्य इति लोपः । **गोदोहनीति** । गौर्दुह्यतेस्याम् । ‘टिड्ढाणञ्—’ इति ङीप् ।

वा यौ । **प्रवयणम्** । ‘कृत्यचः’ इति णत्वम् । **दरिद्राणमिति** । दरिद्रा दुर्गतौ । दरिद्रातेरालोपो वाच्यः । सनिण्वुलि ल्युटि च नेति निषेधादालोपाभावः । **मिहपतदशेति** । ‘दाम्नीशसयुयुजस्तुतुदसिसिच-मिहपतदशनहः करणे’ इति सूत्रे न्लोपिनो निर्देशात् दंशेरकित्यपि न्लोप इत्यर्थः । **ष्ठिवुषिवोरिति** । ष्ठिवु निरसने । षिवु तन्तु-सन्ताने । **स्फुरणम्** । **स्फुलनमिति** । स्फुरस्फुल चलने । **कृत्येति** । पूर्वमेव व्याख्यातम् । **राजभोजनाः** । भुज्यन्त इति भोजनाः । राज्ञो भोजनाः ।

---

१. $D_1$ drops च ; चार्थे P, $N_1$. २. ल्युट् उपधाया वा दीर्घः C; ल्युंडुप-धाया दीर्घो वा $D_2$.

## पुंसि संज्ञायां घः प्रायेण ॥३।३।११८॥

पुंलिङ्गे करणेऽधिकरणे चार्थे धातोर्घः केचित्[1] संज्ञायाम् ॥ णिलोपः ।

## छादेर्घेऽद्व्युपसर्गस्य ॥६।४।९६॥

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद् घे परे ॥ उरश्छदः । प्रच्छदः । अद्वीति किम् । समुपच्छादः ।[2] आकुर्वन्त्यस्मिन्नित्याकरः ।[3]

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥३।३।११९॥

एते निपात्याः[4] । गावश्चरन्त्यत्र गोचरः ।[5] संचरन्ति तेन संचरः । इत्यादि ।

---

पुंसि किम् । प्रसाधनम् । संज्ञायां किम् । प्रहरणो दण्डः । घकारश्छादेर्घ इति विशेषणार्थः ।

छादेः । 'उपधायाः' इति वर्तते । उरश्छद इति । उरश्छाद्यतेऽनेन सः ।

गोचर । पूर्वेण सिद्धे 'हलश्च' इति वक्ष्यमाणस्य घञोपवादार्थम् । आदिशब्दात् वहत्यनेन वहः । व्रजत्यनेन व्रजः । व्यजन्त्यनेन व्यजः । एत्य एतस्मिन् पणायन्तीत्यापणः । निगच्छन्ति तस्मिन्निति निगमः । चकारात् कषः निकषः ।

---

१. काचित् स्यात् $D_2$. २. Before it—समुपच्छायः । N. ३. After it—समुपातिच्छादः । पुंसीतिकिम् । प्रसाधनम् । संज्ञायां किम् । प्रवपणो दण्डः । $D_2$; समुच्छादः । पुंसि किम् । प्रसाधनम् । संज्ञायां किम् । प्रवपणं तोदनम् $B_2$; P. has समुपातिच्छादः only. ४. After it—कुर्वन्त्यनेन करः । लीयन्तेऽस्मिन्निति लयः । शृणन्त्यनेनेति शरः । $B_2$, $D_4$. ५. निपात्यन्ते $D_1$. ६. संचरन्त्यनेन संचरः $B_2$, $N_1$.

## अवे तृस्त्रोर्घञ् ॥३।३।१२०॥

अवतारः। अवस्तारः।

## खनो घ च ॥३।३।१२५॥

अस्मात् घः स्याच्चात् घञ्। करणाधिकरणयोः पुंसि ॥ आखनः। आखानः।[1] आखनो डइकडरइकवका वाच्या उक्तेर्थे ॥ आखः। आखनिकः। आखरः। आखनिकवकः।

---

अवे। ओ वृद्ध्याद्युदात्तार्थः। घ उत्तरत्र कुत्वार्थः। स्पष्टत्वादुपेक्षितं सूत्रचतुष्टयम्—'हलश्च' ॥३।३।१२१॥ पुंसि संज्ञायां करणाधिकरणयोर्हलन्ताद् घञ् स्यात्। लेखः। वेदः। वेषः। मार्गः। 'अध्यायन्यायोद्यावसंहाराधारावायाश्च' ॥३।३।१२२॥ घे प्राप्ते घञन्ता निपात्यन्ते। अधीयतेस्मिन्नध्यायः। नीयते तेन न्यायः। उद्युवन्ति अस्मिन्नित्युद्यावः। संहियते तेन संहारः। आध्रियतेस्मिन्नाधारः। आवयति तस्मिन् आवायः। 'उदङ्कोनुदके' ॥३।३।१२३॥ उदञ्चतेः 'हलश्च' इति सिद्धौ उदकप्रतिषेधार्थम्। तैलोदङ्कः। अनुदके किम्। उदकोदञ्चः। 'जालमानायः' ॥३।३।१२४॥ आनायो मत्स्यानाम्।

खनो। आखन इति। डश्च इकश्च डरश्च इकवकश्च डइकडरइकवकाः। संहिताभावोसंदेहार्थः। आख इति डित्वसामर्थ्याट्टिलोपे। आखनिकः। इकः। आखरः। डरः। टिलोपः। आखनिकवकः। इकवकः।

---

१. After it—आखानः। आखनः C. २. डरङ् $D_1$.

### ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥३।३।१२६॥

[2]ऐष्वेसुखसुखार्थेषूपपदेषु धातोः खल् स्यात् । तयोरेवेति भावे कर्मणि चार्थे ॥ कृच्छ्रे । [3]दुष्करः कटो भवता । अकृच्छ्रे । ईषत्करः [4]सुकरो वा । निमिमीलियामात्वाभावात् । ईषन्निमयः । दुःप्रमयः । सुविलयः ।

### उपसर्गात् खल्घञोः ॥७।१।६७॥

ईषत्प्रलम्भः । दुःप्रलम्भः । [5]सुप्रलम्भः ।

### कर्तृकर्मणोश्च भूकृञोः ॥३।३।१२७॥

ईषदादिषूपपदेषु कर्तृपूर्वाद्भुवः कर्मपूर्वात् कृञश्च खल् [6]स्यात् । कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् ॥* खित्त्वान्मुम् । [7]कृच्छ्रे । अदुराढ्येन दुराढ्येन भूयते दुराढ्यंभवम्[8] । अकृच्छ्रे । ईषदाढ्यंभवम् । स्वाढ्यंभवम्[9] । [10]ईषदाढ्यंकरः । [11]दुराढ्यंकरः । स्वाढ्यंकरश्चैत्रो भवता ॥

---

ईषत् । कृच्छ्रं दुरो विशेषणम् । अकृच्छ्रं सु ईषत् अनयोर्विशेषणम् । संभवादित्यभिप्रायेणाह— **कृच्छ्रे दुष्करः कटो भवता । अकृच्छ्रे ईषत्करः सुकरो वा** । ईषदादिषु किम् । कृच्छ्रेण कार्यः । कृच्छ्राकृच्छ्रार्थेषु किम् । ईषत्कार्यः । लः प्रत्ययात्पूर्वस्योदात्तार्थः । खित्करणमुत्तरत्र मुमर्थम् । **निमिमीलीति** । 'निमिमीलियां खलचोरात्वनिषेधः' इति ।

**उपसर्गादिति** । लभेर्नुमित्यर्थः ।

**कर्तृकर्म** । **च्व्यर्थयोरिति** । अभूततद्भावे इत्यर्थः । च्व्यर्थयोः किम् । स्वाढ्येन भूयते ।

---

१. Before it—करणाधिकरणयोरिति निवृत्तम् $D_2$, $D_4$. २. एषु दुःखसुखार्थेषु $D_2$. ३. दुःकरः $D_1$, $N_1$. ४. सुखकरो वा P. ५. $D_2$ drops it. ६. C drops it. ७. Dropped N. ८. After it—भवता $D_2$, $D_4$, $D_1$, $B_2$, $N_1$. ९. After it—भवता $D_1$. १०. ईषदाढ्यः क्रियते ईषदाढ्यंकरः $D_2$; अनीषदाढ्यः ईषदाढ्यः क्रियते ईषदाढ्यंकरः $B_2$, $D_4$. ११. स्वाढ्यंकरो दुराढ्यंकर° N.

**आतो युच् ॥३।३।१२८॥**

ईषदादिष्वादन्ताद्युच् स्यान्न खल् ॥ ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । दरिद्रातेर्नेति केचित् । शासियुधिदृशिधृषिमृषिभ्यो युच् वाच्यः ॥* वेत्येके । दुःशासनः । दुःशासः । सुशासनः । सुशासः । युधेर्ण्यन्तात् । दुर्योधनः । सुयोधनः । दुर्योधः । सुयोधः । सुदर्शनः । सुदर्शः । सुधर्षणः । सुधर्षः । ईषन्मर्षणः । ईषन्मर्षः ।

**अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥३।४।१८॥**

प्रतिषेधार्थयोरलंखल्वोरुपपदयोर्धातोः क्त्वा वा स्यात् ॥ दोदद् घोः । अलं दत्त्वा। अलं दानेन । घुमास्था । पीत्वा खलु । पानेन खलु ।

---

आतः । कर्तृकर्मणोरिति न स्वर्यते । दुष्पान इति । 'षात्पदान्तात्' इति णत्वनिषेधः । स्पष्टत्वात्त्यक्तमेकं सूत्रं व्याख्यायते- 'आवश्यकाधमर्ण्ययोर्णिनिः' ॥३।३।१७०॥ अवश्यंभावविशिष्टे आधमर्ण्यविशिष्टे चार्थे वाच्ये धातोर्णिनिः स्यात् । अवश्यंकारी । शतंदायी ।

अलम् । तुमर्थ इत्यनुवर्तते । अलंखल्वोः किम् । न हातव्यं भवता । प्रतिषेधयोः किम् । अलंकारः । घुमास्थेति । ईत्वम् । स्पष्टत्वादुपेक्षितं सूत्रद्वयम्— 'उदीचां माङो व्यतीहारे ॥३।४।१९॥

---

१. Before it—कर्तृकर्मणोरिति निवृत्तम् $D_2$, $B_2$, $D_4$. २. सुपानः । दुःपानः । $D_2$ ; दुःपानः $D_1$, $D_4$ ; P drops सुपानः ३. After it—ईषद्दरिद्रं भवता $D_2$, $B_2$, $D_4$. ४. P drops the optional forms दुःशासः । सुशासः । &c., $D_4$ has दुःशासनः । सुशासनः । दुःशासः । सुशासः । $D_4$. ५. Dropped N. ६. Dropped N. ७. Dropped N. ८. $D_2$ drops दुर्योधः । सुयोधः । ९. Dropped N. १०. घुमास्थेतीत्वम् C.

## समानकर्तृकयोः पूर्वकाले ॥३।४।२१॥

एककर्तृकयोर्धात्वोः पूर्वकाले स्थिताद्धातोः क्त्वा स्यात् ॥ [1]अनुदात्तोपदेशेति मलोपः । विष्णुं नत्वा स्तौति । द्वित्वमतन्त्रम् । नत्वा स्तुत्वा व्रजति । स्वरत्यादेः श्र्युकः कितीति नित्यमि[2]ड्भावः पूर्वविप्रतिषेधेन । स्वृत्वा । [3]सूत्वा । धूत्वा ।

## [4]क्त्वि स्कन्दस्यन्दोः ॥६।४।३१॥

एतयोर्[5]लोपो न स्यात् क्त्वे परे ॥ स्कन्त्वा । स्यन्त्वा । ऊदित्त्वात् । स्यन्दित्वा ।

---

व्यतीहारे वर्तमानात् माङो धातोः क्त्वा वा स्यात् । 'मयतेरिदन्यतरस्याम्' इतीत्वं वा । अपमाय याचते । अपमित्य याचते । एतच्चाग्रे उदाहरिष्यति । अपूर्वकालत्वाद्विधिः । पक्षे याचित्वापमयते । मेङः कृतात्वस्योक्तिर्ज्ञापिका नानुबन्धकृतमनेजन्तत्वमिति तेन । दैपः संज्ञा न । 'परावरयोगे च' ॥३।४।२०॥ परावराभ्यां योगे गम्ये धातोः क्त्वा । परे योगे तावत् । अप्राप्य नदीं पर्वतः । अत्र परनदीयोगविशिष्टोद्रिः प्रतीयते । अवरयोगे । अतिक्रम्याद्रिं नदी । अवराद्रियोगविशिष्टात्र नदी ।

**समान** । समानकर्तृकयोः किम् । भुक्तवति ब्राह्मणे व्रजति देवदत्तः । पूर्वकाले किम् । वदति जल्पति च । **द्वित्वमिति** । बहुष्वपि धातुषु स्यात् क्त्वा । **स्वरत्यादेरिति** । **स्वृत्वेत्यादि** । 'स्वरति सूति सूयति—' इति वेट् प्राप्नोति । **श्र्युकः कितीति** इण्निषेधश्च प्राप्नोति । तत्र पूर्वविप्रतिषेधेन निषेध एव स्यादित्यर्थः ।

**क्त्वि स्कन्द** । स्कन्दिर् गतिशोषणयोः । स्यन्दू [6]स्रवणे । **ऊदित्वादिति** । 'स्वरतिसूति—' इति वेडित्यर्थः ।

---

१. अनुदात्तोपदेशेति $D_2$ ; अनुदात्तोपदेशवनतितनोत्यादीनामिति $D_1$. २. °मिड्भावः $N_1$. ३. C drops it. ४. न क्त्वि &c., $B_2$. ५. °न्लोपो $D_4$. ६. प्रस्रवणे $Dc_3$.

**न क्त्वा सेट् ॥१।२।१८॥**

सेट् क्त्वा किन्न स्यात् ॥ शयित्वा । सेट् किम् । कृत्वा ।

**मृडमृदगुधकुषक्लिशवदवसः क्त्वा॥१।२।७॥**

एभ्यः सेट् क्त्वा कित् स्यात् ॥ मृडित्वा । इत्यादि । क्लिशः क्त्वेति वेट् । क्लिशित्वा । क्लिष्ट्वा । उदित्वा । उषित्वा । रुद्विदेति कित्त्वम् । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ।

---

न क्त्वा । शयित्वेति । कित्त्वाभावाद् गुणः । क्त्वाग्रहणं किम् । निगृहीतिः ।

'न सेडिति कृतेकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥
इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतीदेशान्निगृहीतिः प्रयोजनम् ॥'

मृड । मृड सुखने । मृद क्षोदे । गुध रोषे । कुष निष्कर्षे । क्लिशू विबाधने । वद व्यक्तायां वाचि । वस निवासे । 'न क्त्वा सेट्' इत्यस्यापवादः । नन्वेतदेव नियमार्थं स्यात् । मृडादिभ्य एव क्त्वा कित् नान्येभ्य इति । तत् किं 'न क्त्वा सेट्' इत्यनेन । सत्यम् । विस्पष्टार्थं तत् । अन्यथा विपरीतोपि नियमः संभाव्यते । मृडादिभ्यः क्त्वा एव कित् नान्य इति । उषित्वेति । 'वसतिक्षुधोरिट्' । गृहीत्वेति । 'ग्रहोलिटि दीर्घः ।'

---

१. Before it—देवित्वा $B_2$, $D_4$. २. Before it—मृडी सुखने $D_2$, $D_4$, $B_2$. ३. Before it—मृदित्वा $D_1$.

**नोपधात्थफान्ताद्वा ॥१।२।२३॥**

नकारोपधात् थफान्तात् परः सेट् क्त्वा कित् स्याद्वा ॥ श्रथित्वा । श्रन्थित्वा[1] । गुफित्वा । गुम्फित्वा । नोपधात् किम् । कोथित्वा । रेफित्वा ।

**वञ्चिलुञ्च्यृतश्च ॥१।२।२४॥**

एभ्यः सेट् क्त्वा किद्वा स्यात् ॥ वचित्वा । वञ्चित्वा[2] । लुचित्वा । लुञ्चित्वा ।[3] ऋतित्वा[4] । अर्तित्वा ।

---

**नोपधा** । **श्रथित्वेति** । श्रन्थ ग्रन्थसंदर्भे । **गुम्फित्वेति** । गुफ गुम्फ ग्रन्थे । **कोथित्वेति** । कुथ क्लेशे । **रेफित्वेति** । रिफ कत्थनयुद्धनिन्दाहिंसानादरेषु । ननु नोपधग्रहणेऽत्र क्रियमाणेऽपि 'रलो व्युपधात्' इति कोथित्वेत्यादौ विकल्पः स्यादेवेति नोपधग्रहणं व्यर्थम् । ननु ऋकारोपधस्तस्य व्यावर्त्यः स्यात् । ऋफ रिफ हिंसायाम् । मैवम् । नोपधग्रहणभावेऽपि ऋफित्वा ऋम्फित्वेति रूपे स्तः । ऋफेः अर्फित्वेति रूपं स्यादिति त्रैरूप्यसिद्धिः । तस्मान्नोपधग्रहणसामर्थ्यात् 'रलो व्युपधात्—' इति विकल्पोऽत्र[5] न स्यादिति ज्ञायते ।

वञ्चि । वञ्चु प्रलम्भने । लुञ्च अपनयने । ऋत इति सौत्रो घृणार्थः । ऋतेरीयङार्धधातुके विकल्पितः । स यत्र पक्षे नास्ति तत्रेदमुदाहरणम् ।

---

१. After it—ग्रथित्वा । ग्रन्थित्वा । $D_4$. २. किन् स्याद्वा C. ३. After it—लुञ्च अपनयने $D_2$. ४. After it—ऋत गत्यैश्वर्यस्पर्धाघृणासु $B_2$, $D_4$. ५. विकल्पोऽप्यत्र PC, $Dc_3$.

**तृषिमृषिकृशेः काश्यपस्य ॥१।२।२५॥**

एभ्यः सेट् क्त्वा किद्वा स्यात् ॥ तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । रलो व्युपधादिति कित्त्वं वा । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा । व्युपधात् किम् । वर्तित्वा । रलः किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा । वसतिक्षुधोरिट् । क्षुधित्वा । क्षोधित्वा । अञ्चेः पूजायामितीट् । अञ्चित्वा । गतौ तु अक्त्वा । लुभित्वा । लोभित्वा । विमोहने तु लुब्ध्वा ।

**जॄव्रश्च्योः क्त्वि ॥७।२।५५॥**

आभ्यां परस्य क्त्व इण् नित्यं स्यात् ॥ जरीत्वा । जरित्वा । व्रश्चित्वा ।

---

तृषि । ञितृष पिपासायाम् । मृष तितिक्षायाम् । कृश तनूकरणे । काश्यपग्रहणं पूजार्थम् । वेत्येतत्त्वनुवर्तत एव । द्योतित्वेति । द्युत दीप्तौ । वर्तित्वेति । वृती हिंसायाम् । एषित्वेति । इषु इच्छायाम् । भुक्त्वेति । भुज पालनाभ्यवहारयोः । अञ्चित्वेति । 'नाञ्चेः पूजायाम्' इति नलोपाभावः । लुभित्वेति । 'लुभो-विमोहने' इतीट् ।

जॄ । जॄष् वयोहानौ । ओव्रश्चू छेदने । जरीत्वेति । 'वॄतो वा' इतीटो दीर्घः ।

---

१. कृषित्वा । कर्षित्वा $D_4$, $N_1$ २. वा कित्त्वम् $D_2$, $D_4$, $N_1$, ३. द्योतित्वा । द्युतित्वा । लेखित्वा । लिखित्वा । $D_4$. ४. C drops अञ्चः पूजायामितीट्; $D_4$ drops इतीट् । ५. Before it—लुभो विमोहने । $D_2$; लुभो विमोहने । इट् स्यान्मोहने तु लुब्ध्वा $B_2$, $D_4$. ६. नित्यमिट् स्यात् N. ७. जरित्वा । जरीत्वा N. ८. Dropped $B_2$ ९. न्लोपा° PC.

**उदितो वा ॥७।२।५६॥**

उदितो धातोः[1] क्त्व इड् वा स्यात् । शमित्वा । अनुनासिकस्य क्वीति दीर्घः । शान्त्वा । दूत्वा ।[2] देवित्वा ।

**[3]क्रमश्च क्त्वि ॥६।४।१८॥**

[4]क्रम उपधाया दीर्घो[5] वा स्यात् झलादौ क्त्विपरे ॥ क्रान्त्वा । क्रन्त्वा । झलि किम् । क्रमित्वा । पूङश्चेति वेट् । पवित्वा । पूत्वा ।

**जान्तनशां विभाषा ॥६।४।३२॥**

जकारान्तानां नशेश्च न्लोपो वा स्यात् क्त्वि परे ॥ भक्त्वा । भङ्क्त्वा । रक्त्वा रङ्क्त्वा । [6]नष्ट्वा । नंष्ट्वा । झलादौ वाच्यम् । नेह । अञ्जित्वा ।[7] जनसनेत्यात्वम् । खात्वा । खनित्वा । द्यतिस्यतीत्वम् । दित्वा । सित्वा ।[8] स्थित्वा । दधातेर्हिः । हित्वा ।

---

उदि । शमित्वेति । शमु उपशमे । दूत्वेति । दिवु क्रीडादौ । 'च्छ्वोः शूट्—' ।

क्रमः । क्रमु पादविक्षेपे ।

जान्त । भक्त्वेति । भञ्जो आमर्दने । रक्त्वा । रञ्ज रागे । खात्वेति । खनु अवदारणे । दित्वेत्यादि । दो अवखण्डने । षोन्तकर्मणि । मा माने । ष्ठा गतिनिवृत्तौ । हित्वेति । डुधाञ् धारणपोषणयोः ।

---

१. धातोः परस्य $D_1$. २. Dropped N. ३. The Sûtra and the Vritti dropped N. ४. क्रमेरुप° $D_1$. ५. वा दीर्घः P., $D_2$. ६. नंष्ट्वा । नष्ट्वा । $D_4$. ७. ऊदित्त्वाद्विट् । भक्त्वा $D_2$, $B_2$, $D_4$, ( भक्त्वा । भङ्क्त्वा $D_4$). ८. After it—मित्वा C. $N_1$, $D_4$, $B_2$.

## जहातेश्च क्त्वि ॥७।४।४३॥

अस्य हिः स्यात् क्त्वि[1]॥ हित्वा। हाङस्तु हात्वा। अदो जग्धिः। जग्ध्वा।

## समासेनञ्पूर्वे क्त्वो ल्यप् ॥७।१।३७॥

अनञ्पूर्वे समासे सति क्त्वो ल्यबादेशः स्यात्॥ तुक्। प्रकर्षेण कृत्वा प्रकृत्य। अनञिति[2] किम्। अकृत्वा।

---

जहातेः। ओहाक् त्यागे। जग्ध्वेति। अद भक्षणे।

**समासे**। समासे किम्। कृत्वा। हृत्वा। ननु च परमकृत्वा उत्तमकृत्वा अत्रापि ल्यप् प्राप्नोति। अत्रापि हि 'सन्महत्—' इत्यादिना समासोस्ति। उच्यते। अनञिति नायं प्रसज्यप्रतिषेधः। किं तु पर्युदासः। तेन नञोन्यदनञिति। तत्र नञिवयुक्तमन्यसदृशार्थे। तथा ह्यर्थगतिः नञ्युक्तमिव युक्तं चान्यस्मिन् सदृशेर्थे प्रतीतिमुत्पादयति। तथा हि। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशः क्षत्रियादिरानीयते न लोष्टादिः। तथा नञोन्यन्नञ्सदृशं यदव्ययं तत्पूर्वे समासे ल्यप् स्यात्। ततश्च परमोत्तमशब्दयोरनव्ययत्वात् ल्यबभावः। स्नात्वाकालकादिषु मयूरव्यंसकादौ निपातनात् ल्यबभावः। पूर्वग्रहणं किम्। अनञीति ह्युच्यमानेयं बहुव्रीहिः स्यात् न विद्यते नञ् यत्र सोनञ्। ततश्चेहापि न स्यात्। स्त्रैणीकृत्येति। स्त्रिया इदं स्त्रैणम्। 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्। तदन्तादभूततद्भावे इति च्विः। 'अस्य च्वौ'। 'कु गति—' इति समासः। पूर्वग्रहणे तु सति यत्र समासस्यादिभूतो नञवयवस्तत्रैव न स्यात्। तेनस्त्रैणीकृत्येत्यत्र स्यादेव। न ह्यत्र समासस्यादिभूतो नञ्। किं तर्हि। मध्यभूतः। लित्वं प्रतिचिकीर्ष्येत्यादौ प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यादित्येवमर्थम्। तुगिति। 'ह्रस्वस्य पिति—' इति।

---

१. क्त्वि परे $D_2$. २. अनञ् किम् $D_1$.

**षत्वतुकोरसिद्धः ॥६।१।८६॥**

षत्वे तुकि च कर्तव्ये एकादेशोसिद्धः स्यात् ॥ कोसिञ्चत् । कोसि । अत्र एङः पदान्तादिति एकादेशस्यासिद्धत्वान्न षत्वम् । अधीत्य । प्रेत्य । अत्र एकादेशस्यासिद्धत्वात् ह्रस्वस्येति तुक् ।

**वा ल्यपि ॥६।४।३८॥**

अनुदात्तोपदेशसूत्रोक्तानां ल्यपि परे वानुनासिकलोपः स्यात्[1] ॥ व्यवस्थितविकल्पत्वात्[2] मान्तानिटां वा नान्तानिटां वनतनादीनां[3] च नित्यम् । आगत्य । आगम्य । [4]प्रणत्य । प्रणम्य । प्रहत्य । प्रमत्य । [5]प्रवत्य । वितत्य । [6]अजेर्ल्यपि वीभावो नेति केचित् । उदज्य । अदो जग्धिर्ल्यप्तिकिति । प्रजग्ध्य । अन्तरङ्गत्वात् प्रागेव जग्धौ सिद्धेपि ल्यबुक्तेर्ज्ञायते हित्वदत्वआत्वइत्वदीर्घत्वशऊ[7]ट्इट्विधयो ल्यपि न स्युरिति ।

---

षत्व । संप्रसारणङीट्सु प्रतिषेधो वाच्यः । संप्रसारणे व्रश्चहूषु परिवीषु । ह्वेञ्व्येञोः क्विपि संप्रसारणे पूर्वरूपत्वे च षत्वं प्रत्यसिद्धत्वात् पूर्वस्य षत्वं न प्राप्नोति । तदर्थोयं निषेधः । ङौ । वृक्षे छत्रम् । वृक्षेच्छत्रम् । इटि । अपचे छत्रम् । अपचेच्छत्रम् । आद्गुणस्यासिद्धत्वाद् ह्रस्वलक्षणस्तुक् नित्यं प्राप्नोति । 'दीर्घात् पदान्ताद्वा' इतीष्यते विकल्पेन ।

**वा ल्यपि** । **आगत्येति** । गम्लृ गतौ । 'ह्रस्वस्य—' इति तुक् । **प्रणत्येति** । णमु प्रह्वत्वे शब्दे च । **प्रहत्य** । हन हिंसागत्योः । **प्रमत्येति** । मनु बोधे । **प्रवत्येति** । वनु याचने । **वितत्येति** । तनु विस्तारे । **अन्तरङ्गत्वादिति** । प्रजग्ध्येति अदेः क्त्वाप्रत्यये कृते ति कितीत्येतावतैव ल्यपः समासापेक्षत्वाद् बहिरङ्ग-

---

१. Dropped $B_2$, $D_4$. २. °विकल्पात् । $D_4$. ३. वनादीनां नित्यम् $D_2$. ४. प्रणत्म्य । प्रणत्य । $D_4$. ५. C drops it. ६. अजेर्वीभावो ल्यपि नेति $D_1$. ७. शूट् for शऊट् । $D_4$.

**न ल्यपि ॥६।४।६९॥**

ल्यपि परे घुमास्थादेरीत्वं न स्यात् ॥ विधाय । प्रदाय ।[२] प्रखन्य । प्रस्थाय । प्रक्रम्य ।[३] आपृच्छ्य । प्रदीव्य । प्रपठ्य ।[४] एषु हित्वाद्यभावः । प्रमाय । प्रगाय । प्रपाय[५] । प्रहाय । प्रसाय । दो[६] । प्रदाय[७] । प्रशाय । प्रच्छाय । मीनातिमिनोतीत्यात्वम् । प्रमाय । निर्माय[८] । उपदाय । विभाषा लीयतेः । विलाय । विलीय । णिलोपः । उत्तार्य । विचार्य ।

**ल्यपि लघुपूर्वात् ॥६।४।५६॥**

लघुपूर्वात् परस्य णेरयादेशः स्यात् ल्यपि । विगणय्य । प्रणमय्य ।[९] लघुपूर्वात् किम् । संप्रधार्य ।

---

त्वात् तस्मात् पूर्वमेवाल्पापेक्षत्वादन्तरङ्गत्वाज्जग्धे सिद्धेपि पुनर्यत् ल्यप्ग्रहणं करोति तज् ज्ञापयति बहिरङ्गोपि ल्यप् अन्तरङ्गान् विधीन् बाधते तेन हित्वादयो नेत्यर्थः । **विधायेति** । 'दधातेर्हिः' इति हित्वं न । **प्रदायेति** । दाञो 'दो दद् घोः' इति दत्वं न । **प्रखन्येति** । 'जनसन—' इत्यात्वं न । **प्रस्थायेति** । 'द्यतिस्यति—' इतीत्वं न । **प्रक्रम्येति** । 'क्रमश्च क्त्वि' इति दीर्घत्वं न । **आपृच्छ्य प्रदीव्येति** । 'च्छ्वोः शूठ्—' इति शूठौ न । **प्रपठ्येति** पठतेः 'आर्धधातुकस्येड्वलादेः' इतीट् न । **प्रमायेत्यादौ** । 'घुमास्थागापाजहातिसां हलि' इतीत्वं प्राप्नोति तस्याभावः । **प्रशाय प्रछायेति** । 'शाछोरन्यतरस्याम्' इति प्राप्तस्येत्वस्याभावः । **विभाषा लीयतेरिति** वा आत्वम् । **णिलोप इति** । 'णेरनिटि' इति ।

**ल्यपि** । ह्रस्वाल्लोपानामसिद्धत्वं नास्ति । समानाश्रयत्वाभावात् । ह्रस्वादयो हि णौ । ल्यपि णेरयादेशः ।

---

१. Before it—प्रस्थाय N. २. After it—प्रहाय । प्रसाय । दो । प्रदाय $D_1$. ३. After it—आक्रम्य $N_1$. ४. प्रपद्य । प्रपच्य $D_4$. ५. $D_1$ drops from प्रपाय to प्रस्थाय. ६. $D_2$ drops दो । प्रदाय. ७. प्रतिदाय C. ८. Dropped $B_2$. ९. After it—प्रबेभिद्य्य $D_2$, P, $B_3$, $N_1$, $D_4$.

**विभाषापः ॥६।४।५७॥**

आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि ॥ प्रापय्य । प्राप्य ।

**क्षियः ॥६।४।५९॥**

क्षियो ल्यपि दीर्घः स्यात् ॥ वेत्येके । प्रक्षीय । प्रक्षित्य ।

**मयतेरिदन्यतरस्याम् ॥६।४।७०॥**

मेङ ईकारोन्तादेशः स्याद्वा ल्यपि ॥ अपमित्य । अपमाय ।

**ल्यपि च ॥६।१।४१॥**

वेञो ल्यपि संप्रसारणं न स्यात् ॥ प्रवाय ।

**ज्यश्च ॥६।१।४२॥**

ज्या इत्यस्य तथा । प्रज्याय ।

**व्यश्च ॥६।१।४३॥**

व्येञो ल्यपि प्राग्वत् ॥ उपव्याय ।

**विभाषा परेः ॥६।१।४४॥**

परेः व्येञो वा संप्रसारणं स्याल्ल्यपि ॥ तुकं बाधित्वा परत्वाद्धल इति दीर्घः । परिवीय । परिव्याय ॥ समो वेत्येके ॥ संवीय । संव्याय । तत्कालेपि क्त्वा क्वचित् । आस्यं व्यादाय स्वपिति । नेत्रे संमील्य हसति ॥

---

**विभाषा** । इयङादेशस्य लाक्षणिकत्वात् न । अध्याप्य गतः ।

**मयतेरिति** । मेङ् प्रतीदाने । 'ह्रस्वस्य–' इति तुक् ।

**ज्यश्च** । ज्या वयोहानौ । तथेति । ल्यपि संप्रसारणं न स्यादित्यर्थः ।

**व्यश्च** । व्येञ् संवरणे ।

**परेः** । तुकं बाधित्वेति । यदा संप्रसारणं तदा तुक् प्राप्नोति । तुकं बाधित्वा परत्वात् 'हल—' इति दीर्घः ।

---

१. स्याद्वा ल्यपि $D_1$. २. प्राप्य । प्रापय्य N. ३. इकारान्ता° $D_4$. ४. लाक्षणिकत्वम् । $Dc_3$.

## आभीक्ष्ण्ये णमुल् च ॥३।४।२२॥

धातोः पूर्वकाले णमुल् स्यात् पौनःपुन्ये क्त्वा च ॥ नित्यवीप्सयोः । स्मारं स्मारं नमति शिवम् । स्मृत्वा स्मृत्वा वा । पायं पायम् । भोजं भोजम् । चिण्णमुलोर्दीर्घ इति णिचि वा दीर्घः । गामं गामम् । गमं गमम् । विभाषा चिण्णमुलोरिति नुम् वा । लम्भं लम्भम् । लाभं लाभम् । प्रादौ तु प्रलम्भं प्रलम्भम् । [1]ण्यन्तजा[2]गु[3]स्तु जा[4]गरं जागरम् । जागारं जागारम् ।[5] इत्यादि ज्ञेयम् ॥[6]

---

**आभीक्ष्ण्ये** । पौनःपुन्यविशिष्टेऽर्थे वर्तमानाद्धातोरित्यर्थः । **स्मारं स्मारमिति** । स्मृ आध्याने । 'अचो ञ्णिति' इति वृद्धिः । 'कृन्मेजन्तः—' इत्यव्ययत्वम् । **पायं पायमिति** । 'आतो युक् ।' **गामं गाममिति** । गमेर्हेतुमण्णिच् । णेर्लोपः । **प्रादौ त्विति** । व्यवस्थितवि[7]भाषाविज्ञानात् नित्यं नुमित्यर्थः । **ण्यन्तजागुरिति** । ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति केषांचिन्मते वा वृद्धिः । इत्यादीति आदिशब्देन सूचितं स्पष्टत्वात् त्यक्तं सूत्रद्वयं व्याख्यायते—'न यद्यनाकाङ्क्षे' ॥३।४।२३॥ अनाकाङ्क्षे वाक्ये यद्युपपदे न क्त्वाणमुलौ । यदयं भुङ्क्ते तदधीते । साकाङ्क्षे तु यदयं भुक्त्वा याति ततोऽधीते । 'विभाषाग्रेप्रथमपूर्वेषु' ॥३।४।२४॥ अप्राप्तविभाषा । आभीक्ष्ण्यं नानुवर्तते । अग्रे प्रथम पूर्व इत्येतेषूपपदेषु समानकर्तृकयोः पूर्वकाले वा क्त्वाणमुलौ स्तः । अग्रे भोजं व्रजति । अग्रे भुक्त्वा व्रजति । प्रथमं भोजं व्रजति । प्रथमं भुक्त्वा व्रजति ।

---

१. Before it—जागरं जागरम् $D_2$, $D_4$, $B_2$. २. जाग्रस्तु N. ३. स्तु वा गुणः $D_2$, $B_2$. ४. $D_2$ drops जागरं जागरम्. ५. इत्यादि after it $D_2$. ६. After this the Sûtra—'विभाषाग्रेप्रथमपूर्वेषु' ॥३।४।२४॥—एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ स्तः ॥ अग्रे भोजं व्रजति । इत्यादि । $D_2$, $D_3$, $B_1$. ७. °विभाषात्वान्नित्यं $Dc_3$.

## कर्मण्याक्रोशे कृञः खमुञ् ॥३।४।२५॥

कर्मण्युपपदे कृञः खमुञ् स्यात् आक्रोशे गम्ये । चौरं-[1] कारमाक्रोशति । चौरोसीत्याक्रोशतीत्यर्थः[2][3] ॥

## स्वादुमि णमुल् ॥३।४।२६॥

स्वाद्वर्थेषु कृञो णमुल् स्यात् एककर्तृकयोः पूर्वकाले ॥ स्वादुंकारं भुङ्क्ते । मान्तत्वमविकारार्थम्[4] ।[5] अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते । संपन्नंकारम् ।[6] लवणंकारम्[7] । वासरूपेण क्त्वापि । स्वादुं कृत्वा भुङ्क्ते ।

---

पूर्वं भोजं पूर्वं भुक्त्वा याति । विभाषाग्रहात् अग्रे भुङ्क्ते ततो यातीति लडादयोपि । ननु वासरूपेण विकल्पः स्यात् । न । क्त्वाणमुलौ सह यत्र विधीयेते तत्र वासरूपविधिर्नास्तीत्यनेन ज्ञाप्यते । तेनाभीक्ष्ण्ये लडादयो न ।

**कर्मणि** । **चौरंकारमाक्रोशतीति** । 'अरुर्द्विषद्—' इति मुम् । करोतिरत्रोच्चारक्रियः ।

**स्वादुमीति** । **मान्तत्वमित्यादि** । तेन च्वावीकारान्तत्वदीर्घत्वे न स्तः । तुमर्थाधिकारात् सर्वेमी प्रत्यया भावे स्युः । ननु च यदि भावे तर्हि स्वादुंकारं भुङ्क्ते चित्र इति णमुला कर्तुरनभिहितत्वात् कर्तरि तृतीया कस्मान्न भवति । उच्यते । भुजिप्रत्ययेन लटाभिहित-त्वात् । समानकर्तृकप्रकरणे शक्तीनां शक्तिमतो भेदो न विवक्ष्यते । तेन शक्तिमानेकः कर्ता सोभिहित इति न तृतीया ।

---

१. चोरंकार° $D_1$. २. चोरो° $D_1$. ३. °क्रोशयतीत्यर्थः $D_2$. ४. मान्त-त्वादव्ययत्वम् । $N_1$. ५. After it—च्व्यन्तस्य च मकारार्थम् $B_2$, $D_4$. ६. After it—भुङ्क्ते $D_1$. ७. After it—भुङ्क्ते. ८. स्यात् $Dc_3$.

अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥
॥३।४।२७॥

एष्ूपपदेषु कृञो णमुल् स्यात् सिद्धोप्रयोगो यस्य तथा स चेत् । कृञो व्यर्थत्वात् प्रयोगानर्ह इत्यर्थः ॥ अन्यथाकारं एवंकारं कथंकारं इत्थंकारं भुङ्क्ते । इत्थं भुङ्क्ते इत्यर्थः । सिद्धेति किम् । अन्यथा शिरः कृत्वा भुङ्क्ते । क्त्वापि ।एवं कृत्वाँत्ति ।

---

अन्यथा । व्यर्थत्वादिति । ननु व्यर्थस्य कथं प्रयोगः । द्वौ ब्राह्मणावित्यत्र द्विशब्दस्य लोके व्यर्थस्यापि प्रयोगोस्ति । अन्यथा कृत्वेति अत्रान्यथाशब्देन शिरःप्रकारः कथ्यते । स च करोतिना न गम्यते । ते नायं न सिद्धाप्रयोगः । स्पष्टत्वादुपेक्षितं सूत्रद्वयम् व्याख्यायते– ‘ यथातथयोरसूयाप्रतिवचने ’ ॥३।४।२८॥ यथातथयोरुपपदयोः करोतेर्णमुल् । यदि कश्चिदसूयन् पृच्छति तस्य प्रतिवचनम् । यथाकारं भोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन । असूयाप्रतिवचने किम् । यथा कृत्वा भोक्ष्ये तथा कृत्वा द्रक्ष्यसि । सिद्धाप्रयोगे इत्येव । यथा कृत्वा शिरो भोक्ष्ये तथा कृत्वा शिरो भोक्ष्ये किं तव । ‘ कर्मणि दृशिविदोः

---

१. Before this the Sûtras—

यथातथयोरसूयाप्रतिवचने ॥ ३।४।२८ ॥

अनयोरुपपदयोः कृञो णमुल् स्यात् ॥ यदि कश्चिदसूयया पृच्छाति तस्य प्रतिवचने । यथाकारं तथाकारं भोक्ष्ये किं तवानेन । $D_2$, $D_3$, $B_1$, N.

२. सिद्धश्चाप्रयोगश्चेत् । सिद्धस्य कृञ् ( ञ ?) अप्रयोगो निरर्थकत्वं चेत् । $D_1$.
३. स चेत् तथा C. ४. भुङ्क्ते after अन्यथाकारं, एवंकारं, &c. $D_1$.
५. Dropped N. ६. कृत्वा शिरः $D_1$, $D_4$, $B_2$, $N_1$. ७. P drops अत्ति
८. शिरसः $Dc_3$.

**यावति विन्दजीवोः ॥३।४।३०॥**

यावत्युपपदे आभ्यां णमुल् स्यात् ॥ विद्ल लाभे । यावद्वेदं भुङ्क्ते । यावज्जीवमधीते ।

**निमूलसमूलयोः कषः ॥३।४।३४॥**

एतयोः कर्मणोः कषो णमुल् स्यात् ॥

---

साकल्ये ।' ३।४।२९॥ कर्मणीत्यधिकार आप्रकरणात् । विदेरत्र सत्तार्थस्य ग्रहो न । अकर्मकत्वात् । साकल्यविशिष्टे कर्मण्युपपदे दृशिविदोर्णमुल् स्यात् । कन्यादर्शं वरयति । सर्वाः कन्या वरयतीत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं जानाति लभते विचारयति वा तं सर्वं भोजयति । साकल्ये किम् । द्विजं दृष्ट्वा भोजयति ।

यावति । स्पष्टत्वात् समुपेक्षितं सूत्रत्रयं व्याख्यायते—'चर्मोदरयोः पूरेः' ॥ ३।४।३१॥ चर्मोदरयोः कर्मणोः पूरेर्णमुल् । अण्यन्तस्याकर्मकत्वात् पूरिर्ण्यन्तोत्र गृह्यते । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' ॥ ३।४।३२॥ कर्मणि पूरेर्णमुल् । अस्य ऊलोपश्च स्याद् वर्षप्रमाणे गम्ये । सीतापूरं वृष्टः । सीताप्रं वृष्टः । वर्षप्रमाणे किम् । सीतां पूरयित्वा वृष्टः । अस्य किम् । उपपदे लोपो मा भूत् । मूषिकाविलपूरं प्रवृष्टः । 'चेले क्नोपेः' ॥३।४।३३॥ वस्त्रे कर्मणि क्नोपेर्णमुल् वर्षप्रमाणे । वस्त्रक्नोपं वृष्टः ।

निमूल । कष हिंसार्थः ।

---

१. Dropped D4. २. वा स्यात् Dc3, PC. ३. उपपदलोपो Dc3.

**कषादिषु यथाविध्यनुप्रयोगः ॥३।४।४६॥**

कषादिषु मध्ये यस्माण्णमुलुक्तः स एव अनुप्रयोज्यः ॥ धातुसंबन्धे सिद्धेपि नियमार्थमुक्तिः । निर्मूलकाषं कषति । समूलकाषं कषति । समूलं कषतीत्यर्थः ।

**शुष्कचूर्णरूक्षेषु पिषः ॥३।४।३५॥**

एषु कर्मसु पिषो[1] णमुल् स्यात् ॥ शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । इत्यादि ।

**[2]परिक्लिश्यमाने च ॥३।४।५५॥**

स्वाङ्गे द्वितीयान्ते । शिरःपेषं शुध्यते ।

**विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥३।४।५६॥**

द्वितीयान्ते । गेहानुप्रवेशमास्ते इत्यादि ।

**समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥३।४।३६॥**

एषु कर्मसु क्रमेण हन्त्यादे[3]र्णमुल् स्यात् ॥ समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवं गृह्णातीत्यर्थः ।

---

कषा । धातुसंबन्धेति । धातुसंबन्धे प्रत्यया इत्यनेन धातुसंबन्धे सिद्धेपीत्यर्थः ।

शुष्क । शुष्कपेषं पिनष्टि । इत्यादिशब्देन चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ।

समूला । जीवं गृह्णातीत्यर्थः इत्येतदुपल[4]क्षणम् समूलघातं हन्तीत्यादेरर्थस्य । स चायं समूलं हन्ति अकृतं करोतीति ।

---

१. पिषेर्णमुल् $D_2$. २. $D_1$, C,and P, $B_2$, $N_1$, $D_4$ drop this and the next Sûtra with their Vrittis. ३. हनादे° $D_2$, $D_4$. ४. °लक्षणार्थम् $Dc_3$, PC.

**करणे हनः ॥३।४।३७॥**

करणे उपपदे हन्तेर्णमुल् स्यात् ॥ पादघातं हन्ति । पादेन हन्तीत्यर्थः ।

**स्नेहने पिषः ॥ ३।४।३८॥**

[1]स्निह्यते येन तस्मिन् करणे पिषेर्णमुल् स्यात् ॥ तैलपेषं पिनष्टि । तैलेन पिनष्टीत्यर्थः ।

**हस्ते वर्तिग्रहोः ॥३।४।३९॥**

हस्तार्थे करणे आभ्यां णमुल् स्यात् ॥ हस्तवर्तं वर्तयति । करवर्तम् । हस्तग्राहं गृह्णाति । करग्राहम् । करेण गृह्णातीत्यर्थः ॥[2]

---

कर । 'हिंसार्थानां च समानकर्मकाणाम्' इति णमुलं वक्ष्यति । अहिंसार्थोयमारम्भः नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्च ।

स्नेहने ।

हस्ते । वर्तिर्ण्यन्तः ।

---

१. स्निह्यति $B_2$.

२. After it the Sûtras—

अधिकरणे बन्धः ॥ ३।४।४१ ॥—चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ॥

कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ३।४।४३ ॥—जीवनाशं नष्टः । जीवो नष्टः । पुरुषवाहं वहति । पुरुषो भूत्वा वहतीत्यर्थः ॥

हिंसार्थानां च समानकर्मकाणाम् ॥ ३।४।४८ ॥—दण्डोपघातं दण्डेनोपघातं वा गाः पाति । समानकर्मकाणां किम् । दण्डेन संताड्य चोरं गाः पाति । $D_2$, $D_3$, $B_1$.

सप्तम्यां चोपपीडरुधकर्षः ॥ ३।४।४९ ॥—

उपपूर्वेभ्य एभ्यः सप्तमीतृतीयान्ते चोपपदे णमुल् स्यात् ॥ पार्श्वोपपीडं पार्श्वयोरुपपीडं पार्श्वाभ्यामुपपीड्य शेते । व्रजोपरोधं गाः पाति ॥ $D_2$, $D_3$, $B_1$.

स्वे पुषः ॥३।४।४०॥

स्ववाचिनि[1] करणे पुषेर्णमुल् स्यात् ॥ स्वपोषं पुष्णाति । स्वेन पुष्णातीत्यर्थः । पर्यायाणां विशेषाणां चात्र ग्रहणमिष्यते[2] । धनपोषम् । गोपोषम् ।

वृक्षादौ तद्विशेषाणां स्वे पर्यायविशेषयोः ।
पर्यायस्यैव राजादौ मत्स्यादौ तद्विशेषयोः ॥

---

स्वे ।

वृक्षादाविति । 'वृक्षमृगतृण—' इत्यादिसूत्रे विशेषाणामेव[3] ग्रहणं न स्वरूपपर्याययोः । 'स्वे पुषः' इत्यत्र पर्यायस्य विशेषस्य ग्रहणम् । स्वरूपस्यापि ग्रहणमिष्यते । तथोदाहृतत्वात् । 'सभाराजामनुष्यपूर्वा' इत्यत्र पर्यायस्यैव ग्रहः । न स्वरूपविशेषयोः । पक्षिमत्स्यमृगान् हन्तीत्यत्र स्वरूपस्य विशेषस्य च ग्रहणम् । स्पष्टत्वात् समुपेक्षितं सूत्रचतुष्टयं व्याख्यायते— 'अधिकरणे बन्धः' ॥ ३।४।४१॥ णमुल् । चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः । 'संज्ञायाम्' ॥३।४।४२॥ बध्नातेर्णमुल् । क्रौञ्चबन्धं बद्धः । अट्टालिकाबन्धं[4] बद्धः । 'कर्त्रोर्जीवपुरुषयोर्नशिवहोः' ॥३।४।४३॥ क्रमेणोपपदयोर्णमुल् । जीवनाशं नष्टः । जीवो नष्ट इत्यर्थः । पुरुषवाहं वहति । पुरुषो भूत्वा वहतीत्यर्थः । 'ऊर्ध्वे शुषिपूरोः' ॥३।४।४४॥ ऊर्ध्वे कर्तर्यनयोर्णमुल् । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वं शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं पूर्यत इत्यर्थः ।

---

१. स्वे वाचिनि $B_2$. २. $D_2$ $B_2$, N drop इष्यते. ३. विशेषणार्थमेव $Dc_3$. ४. चण्डालिका° PC., $Dc_3$.

## उपमाने कर्मणि च ॥३।४।४५॥

येन कर्म कर्त्ता वोपमीयते[1] तत्रोपपदे णमुल् स्यात् ॥ रत्ननिधायं निधत्ते । रत्नमिव निधत्ते इत्यर्थः । अजनाशं नष्टः । अज इव नष्ट इत्यर्थः ।

## उपदंशस्तृतीयायाम् ॥३।४।४७॥

तृतीयान्तोपपदादुपदंशेर्णमुल् स्यात्॥ मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं भुङ्क्ते । तृतीयाप्रभृतीति[2] वा समासः ।

---

उप । रत्ननिधायमिति । 'आतो युक् ।'

उप । वास्तवरूपेण क्त्वापि । मूलकेनोपदंश्य भुङ्क्ते । स्पष्टत्वात् समुपेक्षितं सूत्रचतुष्टयं व्याख्यायते— 'हिंसार्थानां च समानकर्मकाणाम्' ॥३।४।४८॥ हिंसार्थादनुप्रयोगसमानकर्मणः करणोपपदे णमुल् । दण्डोपघातं दण्डेनोपघातं वा गाः कालयति । समानकर्मणां किम् । दण्डेन संताड्य चोरं गाः पाति । 'सप्तम्यां चोपपीडरुधकर्षः' ॥३।४।४९॥ उपपूर्वेभ्य एभ्यः सप्तम्यां तृतीयायां चोपपदे णमुल् । पार्श्वोपपीडम् पार्श्वयोरुपपीडम् पार्श्वाभ्यामुपपीडं शेते । व्रजोपरोधं गाः कालयति । व्रजे उपरोधं व्रजेनोपरोधं वा । पाण्युपकर्षं गृह्णाति । पाणावुपकर्षं पाणिनोपकर्षं वा । सगुणस्य निर्देशात् कर्षतेर्ग्रहो न कृषेः । 'समासत्तौ' ॥३।४।५०॥ सन्निकर्षे गम्ये तृतीयासप्तम्युपपदाण्णमुल् । केशग्राहं युध्यन्ते केशेषु ग्राहं केशैर्वा ग्राहम् । 'प्रमाणे च' ॥३।४।५१॥ आयामे गम्ये पूर्ववण्णमुल् । द्व्यङ्गुलोत्कर्षं खण्डिकाश्छिनत्ति द्व्यङ्गुले उत्कर्षं द्व्यङ्गुलेनोत्कर्षं वा ।

---

१ चोपमीयते $B_2$. २. Dropped $N_1$, $D_4$. ३. प्रभृत्यन्यतरस्यामिति C. ४. °पदंशमिति $Dc_3$. ५. °पदे णमुल् $Dc_3$.

## अपादाने परीप्सायाम् ॥३।४।५२॥

त्वरायामपादानोपपदाद्धातोर्णमुल् स्यात् ॥[1] कषादित्वाभावात् यथाविध्यनुप्रयोगो न। शय्योत्थायं धावति ।[2] शय्याया उत्थाय धावतीत्यर्थः।

## द्वितीयायां च ॥३।४।५३॥

द्वितीयान्ते उपपदे धातोर्णमुल् स्यात् त्वरायाम् ॥ यष्टिग्राहं युध्यन्ते। यष्टीर्गृहीत्वा युध्यन्ते इत्यर्थः ॥[3]

---

अपा । त्वरायां किम् । पीठादुच्छ्राय याति ।

द्वितीया । यष्टिग्राहं युध्यन्ते । एवं नाम त्वरन्ते यदायुधमपि नाद्रियन्ते । स्पष्टत्वादुपेक्षितं सूत्रपञ्चकं व्याख्यायते— 'स्वाङ्गेऽध्रुवे' ॥३।४।५४॥ यत्राङ्गे छिन्ने न मृतिस्तस्मिन् कर्मणि णमुल् । भ्रूविक्षेपं ब्रूते । अध्रुवे किम् । उत्क्षिप्य शिरो ब्रूते । 'परिक्लिश्यमाने च' ॥३।४।५५॥ स्वाङ्गे द्वितीयान्ते परिक्लिश्यमाने उपपदे णमुल् । शिरःपेषं युध्यते । ध्रुवार्थोक्तिः । 'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः' ॥३।४।५६॥ एभ्यो द्वितीयायां णमुल् व्याप्यमाने आसेव्यमाने चार्थे गम्ये । सुप्सु व्याप्तिः । तिङ्क्ष्वासेवा । समासेन व्याप्त्यासेवयोरुक्तेर्न द्वित्वम् । असमासे स्यादेव । व्याप्तौ । गेहानुप्रवेशमास्ते । [4]गेहमनुप्रवेशं वा ।

---

१. त्वरायां गम्यमानायामपा° $C_1$ P, $N_1$. २. After it—शय्याया उत्थायं धावति । C, P.

३. After it—अस्यतितृषोः क्रियान्तरे कालेषु ॥ ३।४।५७ ॥

क्रियामन्तरयति क्रियान्तरः । तत्र धात्वर्थे वर्तमानेषु कालवाचिषु द्वितीयान्तेषु णमुल् स्यात् ॥ द्व्यहात्यासं गाः पाययति । त्र्यहतर्षम् । अद्य पाययित्वा द्व्यहं त्र्यहं वातिक्रम्येत्यर्थः । तयोः किम् । द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तरे किम् । अहरत्यस्य गतः । अत्र गतेः प्रागेवात्यासः । न तन्मध्ये काले किं क्रोशमत्यस्य गाः पाययति ॥ $D_2$, $D_3$, $B_1$.

४. गेहं गहे° $Dc_3$.

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वा-णमुलौ ॥३।४।५९॥

अव्यये उपपदे कृञः एतौ स्तः । अप्रियस्योच्चैः[1] प्रियस्य नीचैः कथने उच्चैः कृत्य उच्चैः कृत्वा उच्चैःकारं वा अप्रियं ब्रूते ।

---

आसेवायाम् । गेहमनुप्रवेशमनुप्रवेशमास्ते । एवं गेहानुप्रपातम् । गेहानुप्रपादम् । गेहावस्कन्दम् । व्याप्त्यासेवयोरिति किम् । गेहमनुप्रविश्य भुङ्क्ते । आभीक्ष्ण्यमेवासेवा । पुनरुक्तिरूपपदार्थः । 'अस्यतितृषोः क्रियान्तरे कालेषु' ॥३।४।५७॥ क्रियामन्तरयतीति क्रियान्तरः । तत्र धात्वर्थे वर्तमानयोः कालवाचिषु द्वितीयान्तेषु णमुल् । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासं गाः पाययति । अद्य पाययित्वा द्व्यहं त्र्यहं चातिक्रम्येत्यर्थः । द्व्यहतर्षम् । द्व्यहंतर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते । अस्यतितृषोः किम् । द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तरे किम् । अहरत्यस्य गतः । अत्र गतेः प्रागेवात्यसनम् । मध्येकाले किम् । क्रोशमत्यस्य गाः पाययति । 'नाम्न्यादिशिग्रहोः' ॥३।४।५८॥ द्वितीयान्ते नामपद उपपदे आदिशिग्रहोर्णमुल् । नामादेशमाचष्टे । नामग्राहम् ।

अव्यये । वासरूपेण सिद्धे समासायोक्तिः । द्वयोस्तुल्यत्वेनानुवृत्तौ णमुलुक्तिः । अयथाभिप्रेताख्याने किम् । उच्चैः कृत्वाचष्टे पुत्रस्ते जात इति । स्पष्टत्वादुपेक्षितं सूत्रपञ्चकं व्याख्यायते । 'तिर्यच्यपवर्गे' ॥३।४।६०॥ समाप्तौ गम्यमानायां कृञः क्त्वाणमुलौ । तिर्यक् कृत्वा । तिर्यक्कारम् । अपवर्गे किम् । तिर्यक् कृत्वा काष्ठं गतः । 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' ॥३।४।६१॥ तस्प्रत्यये स्वाङ्गे कृभ्वोः क्त्वाणमुलौ । मुखतः कृत्य मुखतः कृत्वा मुखतः कारं गतः । मुखतो भूय मुखतो भूत्वा मुखतो भावं गतः । स्वाङ्गे किम् । सर्वतः कृत्वा । तसि किम् । मुखं कृत्वा ।

---

१. After it—कथने $D_2$, $D_4$. २. षर्क्क $Dc_3$

नीचैः कृत्य[1] प्रियं ब्रूते ॥ इत्यादयः[2] कृतो ज्ञेयाः ।

प्रत्यये किम् । मुखे तस्यतीति मुखतः कृत्वा । 'नाधार्थप्रत्यये च्व्यर्थे ।' ३।४।६२॥ । नाधार्थप्रत्ययान्ते च्व्यर्थे उपपदे कृभ्वोः क्त्वाणमुलौ । 'विनञ्भ्यां नानाञौ—' । विनाकृत्य विनाकृत्वा विनाकारं गतः । नानाभूय नानाभूत्वा नानाभावं गतः । एवं द्विधाकृत्य द्विधाकृत्वा द्विधाकारं द्विधाभूत्वा द्विधाभूय द्विधाभावं गतः । प्रत्यये किम् । पृथक् कृत्वा । च्व्यर्थे किम् । नाना कृत्वा काष्ठानि गतः । 'तूष्णीमि भुवः' ॥३।४।६३॥ तूष्णींभूय तूष्णींभूत्वा तूष्णींभावमास्ते । 'अन्वच्यानुलोम्ये' ॥३।४।६४॥ अन्वच्युपपदे आनुकूल्ये गम्ये भुवः क्त्वाणमुलौ । अन्वग्भूय अन्वग्भूत्वा अन्वग्भावमास्ते । आनुकूल्ये किम् । अन्वग्भूत्वास्ते । इत्यादयः कृतो ज्ञेयाः । आदिशब्देन स्पष्टत्वादुपेक्षिता ज्ञेयाः । ते चास्माभिर्य-

१. After it—नीचैः कृत्वा नीचैः कारं वा $D_1$, $B_2$. २. इत्यादयः- dropped $D_2$; इत्यादयः and the Sutras ३।४।५८॥, ३।४।६०॥, ३।४।६१॥, ३।४।६४॥, ३।४।६३ as under:—$D_2$, $D_3$, $B_1$.

नाम्न्यादिशिग्रहोः ॥ ३।४।५८ ॥
नामादेशमाचष्टे नामग्राहं वा ॥
तिर्यच्यपवर्गे ॥ ३।४।६० ॥
समाप्तौ गम्यायां कृञः क्त्वाणमुलौस्तः । तिर्यक्कारम् । अपवर्गे किम् । तिर्यक् कृत्वा काष्ठं गतः ॥
स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ३।४।६१ ॥
तस्प्रत्ययान्ते स्वाङ्गे क्त्वाणमुलौ स्तः ॥ मुखतः कारं गतः ॥
अन्वच्यानुलोम्ये ॥ ३।४।६४ ॥
अन्वच्युपपदे भुव एतौ स्तः ॥ अन्वग्भावमास्ते ।
तूष्णीमि भुवः ॥ ३।४।६३ ॥
तूष्णीभावमास्ते । इत्यादयः कृदन्ताः ज्ञेयाः । दिङ्मात्रमेतदुक्तम् ॥
इति कृदन्तप्रक्रिया ॥

दिङ्मात्रमेतदुक्तम् ॥

इति कृदन्तप्रक्रिया ॥

---

थामति कतिचिद् दर्शिताः । **दिङ्मात्रमेतदुक्तमिति** । एतदिति सुबन्ततिङन्तयोर्यदुक्तं तत् परामृश्यते । अत्रास्माभिर्दिङ्मात्रं दर्शितम् । अनया दिशान्येऽपि प्रयोगा ज्ञातव्या इत्यभिप्रायः । ते चास्माभिरुपेक्षितसूत्रव्याख्यानेनोभयत्र कियन्तो दर्शिताः । अन्ये प्रयोगवशात् ज्ञेयाः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादे निरगुरथ सदागाधबोधाः कृदन्ताः ॥

---

१. इदम् $D_1$. २. अन्येऽपि प्रयोगात् $Do_3$, PC.

## ॥ अथ वैदिकी प्रक्रिया ॥

वैदिकशब्दे[1]ष्वप्येषैव प्रक्रिया । य एव लौकिका[2]स्त एव वैदिका[3] इति न्यायात् । क्वचित् प्रयोगवशादन्यथात्वम् ।

**प्रकृत्यान्तःपादमव्यपरे ॥६।१।११५॥**

ऋक्पादमध्यस्थ एङ्[4] प्रकृत्या स्यात्[5] अति परे न तु वकारयकारपरे अति ॥ उप[6] प्रयन्तो अध्वरम् । सुजाते[7] अश्वसूनृते । अन्तःपादमिति[8] किम् । य एतेर्चयन्ति । अव्यपरे[9] किम् । तेऽवदन् । तेऽयस्मयम् ।

---

अथ वैदिकी प्रक्रिया ॥ **वैदिकशब्देष्विति** । पूर्वं सुबन्ते तिङन्ते च योक्ता प्रक्रिया सैव वैदिकेष्वपि शब्देषु ज्ञेया । तत्र हेतुमाह—**य एवेति** । कर्ममीमांसायां य एव लौकिकास्त एव वैदिकाः त एव च तेषामर्था इत्यादि मीमांसाभाष्यकारादिभि[10]र्निर्णीतान्न्यायादित्यर्थः । ननु वैदिकानां शब्दानामन्यथात्वं बहुषु स्थलेषु दृश्यते[11] इत्याह—**क्वचिदिति**[12] ।

**प्रकृत्या** । एङ इति यत् पञ्चम्यन्तं वर्तते तदिहार्थात् प्रथमान्तं संपद्यते । पादशब्देन च ऋक्पादस्यैव ग्रहणमित्येतच्चेतसि कृत्वाह—**ऋक्पादमध्यस्थ** इति । **प्रकृत्या स्यादिति** । स्वभावेन कारणात्मना वा स्यात् न विकारमापद्यत इत्यर्थः ।

---

१. शब्देष्येवं प्रक्रिया $D_1$. २. वैदिकाः $D_3$. ३. लौकिकाः $D_2$. ४. C ends with ऋक्पादमध्यस्थ एङ्प्र. ५. स्यात् dropped P, $D_1$, $D_2$, $D_3$. ६. उपप्रयन्तो अध्वरम् P; उपप्रयन्ताध्वरम् $B_2$. ७. सुजाते अश्वसूनृते P. ८. इति dropped $N_1$; पादेति किम् $D_4$. ९. अव्ययपरे $N_1$. १०. °रतिनिर्दिष्टान्न्या° $Dc_3$. ११. इत्याशङ्क्याह $Dc_3$. १२. क्वचिदिति । अपगुरो णमुलि । गुरी उद्यमने । अस्यापपूर्वस्योतः स्थानेत् स्यात् । अपगारान्त अपगारम् । D. c. 1.

**अव्याद्वद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥६।१।११६॥**

एषु सप्तसु व्यपरेष्यति एङ् प्रकृत्या[1] ॥ वसुभिर्नो अव्यात् । मित्रमहो[2] अवद्यात् । मा शिवासो अवक्रमुः[3] । ते नो अव्रत[4] । शतधारो अयं मणिः । ते नो अवन्तु ।[5] कुशिकासो अवस्यवः ।

**यजुष्युरः ॥६।१।११७॥**

उरःशब्द एङन्तोतिपरे प्रकृत्या[6] यजुषि ॥ उरो अन्तरिक्षम् ।

**आङोनुनासिकश्छन्दसि ॥६।१।१२६॥**

आँङोनुनासिकादेशोचि प्रकृत्या ॥ अभ्र आँ अपः ।

---

अव्याद् । नो अव्यात् । अस्मदो द्वितीयाबहुवचनान्तस्य नसादेशः । अव रक्षणे । आशीर्लिङ् । अवद्यादिति । पञ्चम्येकवचनान्तम् । अवक्रमुः । क्रमेर्लिट्युसि रूपम् । अव्रतेति । वृङो वृञो वा 'मन्त्रे घस—' इति च्लेर्लुकि झस्यादादेशो यण् । प्रथमबहुवचनान्तम् । अवस्यव इति । अवेरसुन् । ततः क्यच् । ततः 'क्याच्छन्दसि' इत्युः ।

आङः । ङिद्विशिष्टस्य ग्रहः । ईषदाद्यर्थस्य ग्रहो यथा स्यात् । तस्य च सन्धिः प्राप्नोत्यत उक्तं प्रकृत्येति ।

---

१. After it—स्यात् $D_2$. २. मित्रमहो $B_2$. ३. अवचक्रमुः $D_4$. ४. अव्रताः $D_2$. ५. After it—रथधूः $D_2$. ६. $D_2$ has स्यात् after it. ७. Before it—छन्दसि $B_2$, $D_4$. ८. After it—स्यात् $D_1$; प्रकृत्या च $B_2$, $D_4$. ९. रसुच् K.

**षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥८।३।५३॥**

षष्ठीविसर्गस्य सः[1] स्याद्बहुलं छन्दसि पत्यादौ परे ॥ वाचस्पतिः । दिवस्पुत्रः । इत्यादि[2] ।

**स्यश्छन्दसि बहुलम् ॥६।१।१३३॥**

स्य इत्यस्य सोर्लोपः स्याद्धलि बहुलम्[3] ॥ एष स्य वाजी । बहुलं[4] किम् । यत्र स्यो निपतेत्[5] ।

**अयस्मयादीनि छन्दसि ॥१।४।२०॥**

अयस्मयादीनि[6] छन्दसि भपदसंज्ञानि[7] स्युः[8] ॥ अयस्मयम् । भाषायां तु पदसंज्ञा । अयोमयम् ।

तन्वादीनां विकल्पेनेयङुवङौ[9] ॥ तन्वं[10] पुषेम । तनुवम् । विषुं विषुवं पश्ये[11] । स्वर्गो[12] लोकः । सुवर्गो वा[13] । त्र्यम्बकम् । त्रियम्बकम्[14] । वरेण्यम् । वरेणियम् ।

---

**षष्ठ्याः** । आदिना दिवस्पृष्ठे तमसस्पारम् इडस्पदे दिवस्पयः रायस्पोषम् ।

**स्यः** । एष स्य वाजीति । एतदस्त्यदस्त्यदाद्यत्वम् । सुलोपः । भाषायामिति । छन्दसि तु भसंज्ञा क्वचिदुभयमिति भावः । **अयोमयमिति** । अत्र पदत्वात् रुत्वम् ।

**तन्वादीनामिति** । वक्तव्यम् ।

---

१. बहुलं सः स्याच्छन्दासि $D_1$ N, $D_4$, $B_1$; सः स्याच्छन्दसि बहुलम् $D_2$. २. $D_2$ drops it. ३. $D_1$ drops it; $N_1$ has परे for it. ४. $D_2$ drops बहुलं किम्. ५. निपतेत $D_1$, $B_2$, $D_4$. ६. $N_1$, $D_1$ $B_2$ drop from अय°...to अयस्मयम्; P has शब्दरूपाणि after it. W P gives छन्दसि विषये after भपदसंज्ञानि स्युः ७. भसंज्ञानि $D_2$, $D_4$. ८. भवन्ति । वेदविषयेयादीनि छन्दसि । $D_4$. ९. After it—वक्तव्यौ $D_1$. १०. तनुं सुषेम $D_4$. ११. वा पश्य $D_2$. १२. स स्वर्गो $D_4$. १३. वा लोकः $D_2$. १४. After it वा $D_4$.

**छन्दस्युभयथा ॥६।४।८६॥**

भूसुधियोर्यण् स्यादियङुवङौ च ॥ वनेषु चित्रं विभ्वम् । विभुवं वा । सुध्यो नव्यमग्ने । सुधियो वा ।

**आज्जसेरसुक् ॥७।१।५०॥**

अकाराज्जसेरसुगागमः स्याच्छन्दसि ॥ ब्राह्मणासः ।

**बहुलं छन्दसि ॥७।१।१०॥**

अतो भिस ऐस् बहुलं स्याच्छन्दसि ॥ ऐत्वम् । देवेभिः । [4]कर्णेभिः ।

**मन्त्रेष्वाङ्यादेरात्मनः ॥६।४।१४१॥**

आङिति टा । तस्मिन् परे आत्मन्शब्दस्यादेर्लोपः [5]स्यात् मन्त्रेषु ॥ त्मना देवेभ्यः । अन्यत्रापि लोपः । त्मन्या-[6]समञ्जन् ।

---

आज्जसे । जसेरिति पूर्वाचार्यसूत्रनिर्देशः । ये पूर्वासो य उपरास ईयुरित्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानाच्छी प्राप्नोति । सत्यम् । सकृद्गतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेवेति न स्यात् ।

**मन्त्रेषु** । अन्यत्रापीति । एतच्च मन्त्रेष्विति बहुवचननिर्देशाल्लभ्यते । बहुवचनेन हि बहुविषयोऽयं विधिः सूचितः । त्मन्यासमञ्जन्निति सप्तम्येकवचने लोपः ।

---

१. रियङुवङ्यणः $D_4$. २. सुधियो नव्यमग्ने सुध्यो वा $D_2$; सुधियो नव्यमग्नेः सुध्यो वा $B_2$, $D_4$, $N_1$ (°मग्ने $N_1$.) ३. $D_2$ drops it. ४. $D_1$, $P_1$ $B_2$, $D_4$ drop it. ५. Dropped $B_2$. ६. समंजात (समञ्जन् इति वा पाठः) $B_2$; समञ्जत् $D_4$.

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥७।१।३९॥

सुपामेते आदेशाः स्युः । ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते जसः सुः । आर्द्रे चर्मन् । चर्मणीति प्राप्ते लुक् । न ङिसम्बुद्ध्योरिति न्लोपो न । मती । मत्या इति प्राप्ते पूर्वसवर्णः । सखाया । सखायौ इति प्राप्ते औकारस्य आ । न ताद्ब्राह्मणम् । तमिति प्राप्ते अम आत् । अस्मे इन्द्राबृहस्पती । न युष्मे वाजबन्धवः । वयं यूयमिति प्राप्ते जसः शे । यूयवयादेशाभावश्च छान्दसत्वात् । उरुया । उरुणेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । अनुष्ठ्या यजामसि । अनुष्टुभा इति प्राप्ते ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् । सुपां सुपो भवन्ति । धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते । तिङां तिङो भवन्ति । ये यूपाय तक्षति । तक्षन्तीति प्राप्ते । इयाच् डियाच् ईकारश्च । ऊर्विया । दार्विया । ऊरुणा दारुणेति प्राप्ते इयाच् ।

---

सुपाम् । चर्मन् इति सप्तम्येकवचनस्य लुक् । मतीति तृतीयैकवचनस्य पूर्वसवर्ण ईकारः । सवर्णदीर्घः । सखाया इति । 'सख्युरसम्बुद्धौ' इति णित्वं वृद्धिः । अस्मे युष्मे । जसः शे । शकारः सर्वादेशार्थः । ड्येति । डकारष्टिलोपार्थः । साध्विति प्राप्ते इति । सोर्लुकि प्राप्ते इति शेषः । धुरि दक्षिणाया इति । सप्तम्याः स्थाने षष्ठी । तक्षन्तीति । लोटः स्थाने लट् । इयाजिति । वक्तव्यम् ।

---

१. सुपामादेशा एते स्युः $D_1$. २. $D_2$ drops लुक् ; ङेर्लुक् P. ३. न तमिति $B_2$. ४. $D_1$ drops it. ५. After it—इति वक्तव्यम् $D_1$. ६. तिङः $D_1$. ७. उर्विया $B_2$. ८. दर्विया । उरुणा $B_1$, ९. Before it—दा in $D_2$.

सुक्षेत्रिया । सुक्षेत्रिणेति प्राप्ते डियाच् । सरसी शयानम् । सरासि इति प्राप्ते ईकारः । आङ्याचयारश्च[१] । प्रबाहवा[२] । प्रबाहुनेति प्राप्ते औङ् । स्वप्नया । स्वप्नेनेति प्राप्ते । नावया । नावा इति प्राप्ते ।

**प्रसमुपोदः पादपूरणे ॥८।१।६॥**

एषां द्वे स्तः पादपूरणे ॥ प्रप्रायमग्निः । संसमिद्युवसे[४] । उपोप मे परामृश । किं नोदुदु हर्षसे[५] ।[६]

**अमो मश् ॥७।१।४०॥**

मिपादेशस्यामो मश् स्यात्[७] ॥ वधीं[८] वृत्रम् । अवधिषमिति प्राप्ते ।

**ध्वमो ध्वात् ॥७।१।४२॥**

ध्वंस्थाने ध्वात् स्यात् ॥ धारयध्वात्[९] । धारयध्वमिति प्राप्ते ।

---

सुपामेते स्युरित्यर्थः । आङ्याच् । आङादयश्चेति वक्तव्यम् । सुपामेते स्युः । चकारः स्वरार्थः ।

**प्रस** । पादपूरणे किम् । प्रदेवं देव्या धिया । छन्दस्येतद्विधानम् । भाषायामनर्थकस्य प्रयोगाभावात् ।

**अमः** । वधीमिति । हन्तेर्लुङ् । च्लेः सिच् । मिपोम् । 'लुङि च' इति वधादेशः । 'बहुलं छन्दस्यमाङ् योगेपि' इत्यडभावः ।

---

१. आङ् अयान् आ° $B_2$; अवाङ् for आङ $D_4$. २. प्रवाहा $D_1$. . P and $D_2$, $D_4$ drop it. ४. सामिद्युवसे $B_2$; समध्युवसे $D_4$. ५. °द्धर्षसे $D_4$ ६. After it—पादपूरणे किम् । प्र देव देव्या धिया $B_2$. ७. Dropped $B_2$. ८. वधी वृत्रम् । $D_1$. ९. वारयध्वात् । वारयध्वामिति प्राप्ते $D_2$.

**यजध्वैनामिति च ॥७।१।४३॥**

एनमि ध्वमोन्तलोपः[1] वकारस्य[2] च यकारः[3] ॥ यजध्वैनं[4] प्रियमेधाः ।

**तस्य तात् ॥७।१।४४॥**

लोण्मध्यमबहुवचनस्य तस्य तात्[6] ॥ गमयतात् । गमयतेति प्राप्ते ।

**तप्तनप्तनथनाश्च ॥७।१।४५॥**

एते च तस्यादेशाः स्युः ॥[7] तप्–शृणोत ग्रावाणः । तनप्–दधातन । तन–जुहुतन । थन–[8]ये दिवि जुहुथन । शृणुत धत्त जुहुत[9] इति प्राप्ते ।

**इदन्तो मसि ॥७।१।४६॥**

मस्शब्दे अन्त इकारः स्यात् ॥ पुरस्तादीपयामासि । दीपयामः इति प्राप्ते ।

---

यज । यजध्वमेनमिति प्राप्ते ।

तस्य । लोडिति । अथ प्रथमपुरुषैकवचनग्रहः कस्मान्न । छन्दसि दृष्टानुविधानात् ।

तप्त । चकारस्तस्यानुकर्षणार्थः ।

इद । मसीति । उत्तमपुरुषबहुवचनस्य इकार आगमः स्यात् । आगमत्वमन्तग्रहणात् ।

---

१. नो $D_1$. २. After लोपः—वस्य यत्वं च स्यात् $D_2$. ३. वकार ...कारः dropped $D_4$. ४. यः $B_2$. ५. यजध्वैनं $B_2$. ६. After it—स्यात् $D_2$, $B_2$; तात् स्यात् for तस्य तात् $D_4$. ७. The Ms. P. ends here, at एते च तस्यादेशाः स्युः. ८. यदिष्ठन $D_2$, $D_4$. ९. After it इच्छत $D_2$, $D_4$; यार्इच्छत $B_2$.

स्नात्व्यादयश्च ॥७।१।४९॥

एते निपात्याः ॥ स्नात्वी मलादिव । स्नात्वेति प्राप्ते ॥ पीत्वी ।[१]

छन्दसि शायजपि ॥ ३।१।८४॥

हलः श्नः शायजपि स्यात् हौ छन्दसि ॥ हृग्रहोर्भश्छन्दसि ॥* एतयोर्हस्य भः स्यात् छन्दसि ॥ गृभाय । गृहाणेति प्राप्ते । जभार । जहारेत्यर्थः ।

व्यत्ययो बहुलम् ॥ ३।१।८५॥

शबादिविकरणानां छन्दसि बहुलं व्यत्ययः स्यात् ॥

भेदति । भिनत्तीति प्राप्ते । मरते । म्रियत इत्यर्थः । बहुलोक्तिः सर्वविधिव्यभिचारार्था ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।

व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन॥

उपग्रहः परस्मैपदात्मनेपदे । नरः प्रथमपुरुषादिः ।

---

स्नात्व्या । आदिशब्दः प्रकारार्थः ।

छन्दसि ।

व्यत्य । भेदतीति । श्नमि प्राप्ते शप् । मरत इति । शे प्राप्ते शप् । बहुलोक्तिरिति । अत्र वार्तिकमुदाहरति—सुप्तिङिति । शास्त्रकृत् पाणिनिः । एषां सुबादीनां व्यत्ययमिच्छति । सोपि च बाहुलकेन सिध्यति । चशब्दो हेतौ । यस्मात् प्रकृतानामप्रकृतानां च

---

१. After it—पीत्वेति प्राप्ते $B_2$. $D_4$. २. $D_2$ drops it. ३. बहुलं छन्दसि $D_1$.

## लिङ्याशिष्यङ् ॥३।१।८६॥

आशीर्लिङि धातोरङ्[1] स्याच्छन्दसि ॥ यासुटि कृते अतो येयः । स्थेयम् । गेयम् । गमेम । वच उम् । वोचेम । विदेयम् । शकेयम् । रुहेयम् । दृशेयम् ।

---

व्यत्ययः सिध्यति तस्माद्बाहुलकं बहुलग्रहणमित्यर्थः । सुपां व्यत्ययः । युक्तामासीद् धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते । तिङां च । चषालं ते अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । आत्मनेपदपरस्मैपदयोः । युध्यति । युध्यते इति प्राप्ते । लिङ्गस्य । मधोस्तृप्ताः । मधुन इति प्राप्ते । पुरुषाणाम् । विपूयाः । विपूयादिति प्राप्ते । कालस्य । श्वोग्नीनाधास्यमानेन । लुङ्विषये लट् । हलाम् । शुधितमुग्रवीरम् । भकारस्य धकारः । अचाम् । उपगायन्तु मा मातरो गर्भिणयः । गर्भिण्य इति प्राप्ते दीर्घे ह्रस्वः । स्वराणाम् । अश्वावतीः । अन्तोदात्तत्वे आद्युदात्तत्वम् । कर्तृग्रहणं कारकोपलक्षणम् । मादयाद्भिः । संप्रदानस्य करणत्वम् । यङामिति 'सार्वधातुके यक्' इत्यारभ्य 'लिङ्याशिष्यङ्' इत्यङ्पर्यन्तानां प्रत्याहारः । उदाहरणं तु भेदतीत्याद्युक्तं मूल एव ।

लिङि । स्थेयमिति । आशिषि लिङ् । मिप् । तस्याम् । यासुट् । सलोपः । गुणः । गेयमित्यादि । गै शब्दे । गम्लृ गतौ । वच परिभाषणे । विद ज्ञाने । शकॢ शक्तौ । रुह जन्मनि प्रादुर्भावे । दृशेयमिति । अत्रागवाच्यः । अन्यथा 'ऋदृशोङि—' इति गुणः स्यात् ।

---

१. °रङ्प्रत्ययः $D_2$, $B_2$.

**छन्दस्युभयथा ॥ ३।४।११७॥**

धात्वधिकारोक्तः सर्वोपि प्रत्ययः सार्वधातुकार्धधातुकसंज्ञः स्याच्छन्दसि ॥ वर्धन्तु[1] । वर्धयन्त्वित्यर्थः[2] । आर्धधातुकत्वाण्णिलोपः । विशृण्विरे । सुन्विरे ।

**लिङर्थे लेट् ॥३।४।७॥**

लिङर्थे विध्यादौ धातोर्लेट्प्रत्ययः स्याच्छन्दसि ॥

**सिब् बहुलं लेटि ॥३।१।३४॥**

धातोः [3]सिप्प्रत्ययो बहुलं स्याल्लेटि ॥

**इतश्च लोपः परस्मैपदेषु ॥३।४।९७॥**

लेटस्तिङामितो लोपः [4]स्याद्वा परस्मैपदेषु ॥

**लेटोडाटौ ॥३।४।९४॥**

लेटः अट् आट् [5]इत्येतावागमौ स्तः तौ च पितौ ॥ जोषिषत् ।[6]

---

छन्दसि । णिलोप इति । ‘णेरनिटि’ इति । विशृण्विरे इति । सार्वधातुकत्वात् ‘श्रुवः शृ च’ इति श्रुवः शृभावश्च । सुन्विरे । ‘स्वादिभ्यः श्नुः ।’

लिङ् । ‘विधिनिमन्त्रण—’ सूत्रोक्तो ‘हेतुहेतुमतोर्लिङ्’ इत्येवमादिश्च लिङर्थः । जोषिषदिति । जुषी प्रीतिसेवनयोः । लेट् । तिप् । सिप्प्रत्ययः । सिपि इकार उच्चारणार्थः । तिप इकारलोपः । अट् । ‘आर्धधातुकस्य’ इति सिप इट् । लघूपधगुणः ।

---

१. वर्धतु । वर्धयत्वित्यर्थः । $D_2$. २. °त्यर्थे $B_2$. ३. सिच्प्रत्ययो $D_1$. ४. वा स्यात् $D_2$. ५. $D_1$ drops इति. ६. After it $D_2$, $B_2$, $D_4$ have—पिद्बहुलं (सिब्बहुलं $B_2$, $D_4$) छन्दसि णिद्वक्तव्यः । इति णित्त्वाद्वृद्धिः ।

तारिषत् । मन्दिषत्[1] । पक्षे[2] पताति विद्युत्[3] । उदधि[4] व्यावयाति ।

**स उत्तमस्य ॥३।४।९८॥**

लेट उत्तमस्य सकारस्य[5] वा लोपः स्यात्[6] ॥ करवाव । पक्षे करवावः । टेरेत्वम् ।

**आत ऐ ॥३।४।९५॥**

लेट आकारस्य ऐ[7] स्यात् ॥ मन्त्रयैते । मन्त्रयैथे । विधिसामर्थ्यादाट ऐत्वं[8] न । मन्त्रयाते ।

---

'आदेशप्रत्यययोः' इति षत्वम् । तारिषदिति । तॄ प्लवनपूरणयोः । 'सार्वधातुकार्धधातुकयोः' इति गुणः । 'व्यत्ययो बहुलम्' इति वर्णव्यत्ययेन धात्वकारस्याकारः । शेषं पूर्ववत् । मन्दिषदिति । मदि· स्तुतिमोदस्वप्नकान्तिगतिषु । 'इदितो नुम् ।' पक्षे इति । सिप इकारलोपस्य चाभावे । पतातीति पाठे पत्लृ गतौ । पदातीति पद गतौ । व्यत्ययेन शप् तिप् च । अटा सह सवर्णदीर्घः । व्यावयातीति । व्युङ् गतौ । हेतुमण्णिच् । सिपः पित्वम् बोभूयिषातामित्यत्राद्युदात्ते प्राप्तेनुदात्तार्थम् ।

**स उत्तमस्य** । करवावेति । आट् ।

**आत ऐ** । मन्त्रयैते इति । मन्त्रि गुप्तभाषणे । चुरादिणिच् । अपि गुणायादेशौ । विधिसामर्थ्यादिति । आतश्चेदेत्वं स्यात् तद्विधि- रनर्थकः स्यात् । ऐडागममेव विदध्यात् । एवं प्रक्रिया लघुः स्यादिति भावः । प्रासङ्गिकसूत्रं व्याख्यायते । 'घोर्लोपो लेटि वा' ॥७।३।७०॥ घुसंज्ञानां लेटि परतो वा लोपः । सोमो ददद् गन्धर्वाय । दधद्रत्नानि दाशुषे । यदग्निरग्नये ददात् ।

---

१. मंदिषत् $D_2$ मेदिषत् P. २. पक्षे dropped P. ३. पक्षे पताति विद्युताति विद्युत् $B_2$; पक्षे पताति विद्युत् । उदार्धि च्यावयाति । $D_4$. ४. उदधिं $D_2$, $B_2$. ५. उत्तमसकारस्य $B_2$, $D_4$. ६. Dropped $B_2$. ७. ऐः $D_4$, $B_2$ ८. एत्वं $B_2$.

वैतोन्यत्र ॥३।४।९६॥

आत ऐ[1] विषयं विना लेट एकारस्य ऐ[2] स्याद्वा ॥ पशू-नामीशै[3] । गृह्यान्तै । पक्षे दधसे । एतोन्यत्र किम् । मन्त्रयैते ।

उपसंवादाशङ्कयोश्च ॥३।४।८॥

उपसंवादे[4] शङ्कायां च लेट् स्यात्[5] ॥ अहमेव पशूनामीशै । नेज्जिह्मायन्तो नरकं पताम[6] ।

कृमृदृरुहिभ्यश्छन्दसि ॥३।१।५९॥

एभ्यश्च्लेरङ् वा[7] स्याच्छन्दसि ॥ अकरत् । अमरत् । अदरत् । अरुहत् ।

---

वैतः । पशूनामीशै इति । ईश ऐश्वर्ये । उत्तमपुरुषैकवचन-मिट् । टेरेत्वम् । गृह्यान्तै इति । ग्रह उपादाने । कर्मणि 'सार्व-धातुके यक् ।' 'ग्रहिज्या—' इति संप्रसारणम् । अट् । झोन्तः ।

उप । पणबन्धो नाम यदि मे भवानिदं कुर्यात् अहमपि भवते इदं दास्यामीति कारणतः कार्यानुसरणम् । अहमेवेत्यादि । पणबन्धे त्वमेव पशुं जहीति देवैरुक्तो रुद्र आह—अहमेव पशूनामीशै । नेज्जिह्मायन्त इत्याशङ्कायाम् ।

कृमृ । डुकृञ् करणे । मृङ् प्राणत्यागे । दृ विदारणे । रुह बीजजन्मनि प्रादुर्भावे ।

---

१. ए $B_2$. २. ऐः $B_2$, $D_4$. ३. °मीशैर्गृह्यान्ते $D_1$, $D_4$ °मीशैर्जृह्यातै $B_2$. ४. पणबन्धे $D_2$, $D_4$, $B_2$. ५. After it छन्दसि $D_2$, $D_4$, $B_2$. ६. पताम: $D_2$ ७. स्याद्वा $D_1$.

**श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥६।४।१०२॥**

एभ्यो हेर्धिः स्याच्छन्दसि ॥ श्रुधी हवम् । शृणुधी गिरः । अन्येषामपि दृश्यत इति दीर्घः । पृधि[1] । पूर्धि । उरुणस्कृधि । अपावृधि ।

**वा छन्दसि ॥३।४।८८॥**

हिरपिद्वा स्यात् छन्दसि ॥

**अङितश्च ॥६।४।१०३॥**

पित्त्वेनाङितो हेर्धिः स्यात् ॥ रारन्धि । प्रयन्धि[2] । युयोधि ।[3] पित्वाभावे ।[4] प्रीणीहि ।

**आदृगमहनजनः किकिनौ लिट् च ॥३।२।१७१॥**

आदन्तादृवर्णान्ताद् गमादेश्च किकिनौ स्तः छन्दसि । तौ च लिड्वत् ॥ द्वित्वादि[5] । पपिः । कित्त्वम् ऋच्छत्यृताम्

---

श्रुशृ । श्रु श्रुतौ । पॄ पूर्तौ । डुकृञ् करणे । वृङ् वृञ् वा । दीर्घो धीत्यत्र । शृणुधीत्यत्रधिभावविधानसामर्थ्यात् ‘उतश्च प्रत्यया-दसंयोगपूर्वात्’ इति हेर्लुक् न । पृधीत्यादौ ‘व्यत्ययो बहुलम्’ इति शप् । तस्य ‘बहुलं छन्दसि’ इति लुक् वा ।

आङि । रारन्धीति । रमेः ‘व्यत्ययो बहुलम्’ इति परस्मै-पदम् । शपः श्लुः । द्वित्वमभ्यासदीर्घः छान्दसः । मलोपाभावो-ङित्त्वादेव । प्रयन्धीति । यमेः शपो लुक् । युयोधीति । योधतेः शपः श्लुः । प्रीणीहि । प्रीञ् तर्पणे ।

आदृ । द्वित्वादीति द्वित्वमभ्यासकार्यम् । ‘लिटि धातोः—’

---

१. पृधि D1; पूर्धि P. २. प्ररन्धि B2. ३. After it—युयुहि B2, D4. युयुहि D2. ४. पृणीहि. for प्रीणीहि B2, D4. ५. द्विस्वादिः D1.

इति गुणबाधार्थम् । बहुलं छन्दसीत्युत्वम् । जगुरिः । जग्मिः । जघ्निः । जज्ञिः ।

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥३।४।९॥**

धातोरेते प्रत्ययाः स्युः छन्दसि तुमुनोऽर्थे ॥ से-वक्षे रायः । सेन्-तां वामेषे[1] । असे-असेन्-जीवसे । क्से-प्रेषे । कसेन्-[2]श्रियसे । अध्यै-अध्यैन्-[3]आचरध्यै । कध्यै-कध्यैन्-आहुवध्यै । शध्यै-पिबध्यै । शध्यैन्-मादयध्यै । तवै-पातवै । तवेङ्-सूतवे । तवेन्-कर्तवे । कर्तुमित्यर्थः ।

---

इति द्वित्वम् । अभ्यासह्रस्वः । जगुरिः । गॄ निगरणे । जग्मिः । जघ्निः । गम्लृ गतौ । हन हिंसागत्योः । 'गमहन—' इत्युपधालोपः । 'हो हन्तेः—' इति हन्तेः कुत्वं च ।

तुमर्थे । तुमाद्यर्थो भावः । कुतः । कर्ता तावन्न । यदि कर्ता तुमर्थः स्यात् तुमर्थवचनमनर्थकं स्यात् । कृत्वादेव कर्तरि स्युः । कर्मादिश्च तुमुनो नादिश्यते । तस्मादनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे स्यात् । स्वार्थश्च धातूनां भावः । वक्षे इति । वचेः से । कुत्वम् । षत्वम् । एषे इति । इणः सेन् । गुणः षत्वम् । स्वरे भेदः । जीवसे । जीव प्राणधारणे । असेअसेनोरिदमेवोदाहरणम् । स्वरे भेदः । प्रेषे इति । इणः क्से । श्रियसे । श्रिञ् सेवायाम् । कसेन् । आचरध्यै । चर गत्यर्थः । अध्यैअध्यैनोरुदाहरणम् । स्वरे भेदः । आहुवध्यै । जुहोतिराङ्पूर्वः । कध्येकध्यैनोश्च । उवङ् । पिबध्यै । पा पाने । शध्यै । पिबादेशः शित्त्वात् । मादयध्यै इति । मदी हर्षे । णिच् । शध्यैन् । गुणायादेशौ । पातवै । पिबतेः । सूतवे । षूङ् प्राणिगर्भविमोचने । कर्तवे । डुकृञः ।

---

१. गवामेषे रथनां $D_4$. २. श्रियसे $D_4$. ३. आचरध्यै $D_4$ (in place of आचरध्यैन्.)

**प्रयै रोहिष्यै अव्यथिष्यै ॥३।४।१०॥**

एते निपात्याः । प्रयातुम् । रोढुम् । अव्यथितुमित्यर्थः ।

**दृशे विख्ये च ॥३।४।११॥**

एतौ निपात्यौ । द्रष्टुं[1] विख्यातुमित्यर्थः ।[2]

**ईश्वरे तोसुन्कसुनौ ॥३।४।१३॥**

ईश्वरे[3] उपपदे धातोरेतौ स्तस्तुमर्थे । ईश्वरो विचरितोः । ईश्वरो विलिखः ।

**कृत्यार्थे तवैकेन्केन्यत्वनः ॥३।४।१४॥**

धातोरेते स्युः कृत्यानामर्थे भावकर्मणोः ॥ तवै । अन्वेतवै । केन् । अवगाहे[4] । केन्यः । दिदृक्षेण्यः । त्वन् । कर्त्वम् ।

---

प्रयै । प्रपूर्वस्य यातेः कै निपात्यते । रुहेरिष्यै । नञ्पूर्वस्य व्यथेरिष्यै ।

दृशे । दृशे विश्वाय सूर्यम् । विख्ये त्वा हरामि ।

ईश्वरे । विचरितोः । चर गतौ । विलिखः । लिख लेखने ।

कृत्यार्थे । 'तयोरेव कृत्यक्तखलर्थाः' इति कृत्यानां भावकर्मणोरेव विधानात् । अन्वेतवै । अनुपूर्वादिणः । अवगाहे । गाह अवलोडने । दिदृक्षेण्यः । दृशेः सन्नन्तात् । कर्त्वम् । कृञः ।

---

१. $D_2$, $D_4$ drop it. २. द्रष्टुमित्यर्थः $D_2$. ३. ईश्वरेर्थे $D_2$. ४. अवगाहे महे $B_2$.

सृपितृदोः कसुन् ॥३।४।१७॥

आभ्यां कसुन् स्यात् भावलक्षणे तुमर्थे ॥ पुरा क्रूरस्य विसृपो विरप्शिन्[1] । पुरा जतृभ्य[2] आतृदः । कृञः सन्नन्तात् ण्वुल् । अतो लोपः । तस्य स्वरं प्रति स्थानिवत्त्वाभावात्

लिति ॥६।१।१९३॥

लिति परे पूर्वमुदात्तं स्यात् ॥ इति ईकारस्योदात्तता । चिकीर्षकः । अदेः क्तिनि कृते बहुलं छन्दसीति घस्लृ । घसि-भसोर्हलि चेति उपधालोपः । झलो झलीति सलोपः । धत्वम् । उपधालोपस्य[3] स्थानिवत्त्वाभावात् घस्य जश्त्वम् । समाना[4] ग्धिः । सग्धिः । इत्यादिप्रयोगमनुसृत्यान्वाख्यातव्यम्[5] ॥

इति वैदिकी प्रक्रिया समाप्ता ॥

---

सृपि । सृप्लृ गतौ । उतृदिर् हिंसानादरयोः । कृञ इति । चिकीर्ष अस्मात् । ण्वुल्तृचाविति । अकः । तस्येति । 'न पदान्त–' इति सूत्रेण स्वरविधिं प्रति अल्लोपस्य स्थानिवत्त्वाभावात् 'लिति' इत्यनेन चिकीर्षक इत्यत्र ईकारस्योदात्तत्वम् । स्वरविधिं प्रति व्यञ्जनस्याविद्यमानत्वात् रषयोरव्यवधायकत्वम् । अदेरिति । 'स्त्रियां क्तिन्' इति क्तिन् । उपधालोपस्य स्थानिवत्त्वाभावात् । 'न पदान्त—' इति सूत्रेण जश्विधिं प्रति स्थानिवत्त्वाभावादित्यर्थः । इत्यादि प्रयोगमनुसृत्यान्वाख्यातव्यमिति । आदिशब्देनान्येप्यष्टा-ध्याय्यां साधिता वैदिकाः प्रयोगा उच्यन्ते । स्वरप्रक्रिया

---

१. विरप्सिन् $D_4$. २. जर्तृभ्य $D_4$. ३. उपधालोपस्यास्थानिवत्त्वात् $D_2$, $D_4$. ४. समानाग्निः । साग्निः $D_1$. ५. व्याख्यातव्यम् $D_1$.

स्वरप्रक्रियासूत्रव्याख्या च 'लिति' इत्यस्य सूत्रस्य व्याख्यानेनोपलक्षिता । तत्र तावदष्टाध्यायीस्थितान्येव शिष्टानि छान्दसानि सूत्राणि व्याख्यायन्ते । पश्चात् स्वरसूत्राणि व्याख्यास्यामः । 'शे'॥ (१।१।१३) ॥ सुबादेशः शेशब्दः प्रगृह्यसंज्ञः स्यात् । अस्मे इन्द्राबृहस्पती । इति वैदिकमुदाहरणम् । युष्मे इति अस्मे इति त्वे इति मे इति । इत्यादिषु पदकारैः क्रियमाणेषु प्रगृह्यसंज्ञा भवति । 'ईदूतौ च सप्तम्यर्थे' ॥१।१।१९॥ ईदूदन्तं सप्तम्यर्थे वर्तमानं प्रगृह्यसंज्ञं भवति । मामकी इति । तनू इति । मामक्यां तन्वामिति प्राप्ते 'सुपां सुलुक्—' इति लुक् । सप्तमीति किम् । मती इति । मत्या इति प्राप्ते । अर्थे किम् । वाप्यामश्वो वाप्यश्वः । अर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य प्रगृह्यसंज्ञाधिकारे । तच्च भाष्यादवगन्तव्यं सम्यक् । 'छन्दसि पुनर्वस्वोरेकवचनम्' ॥१।२।६१॥ पुनर्वस्वोर्द्वित्वे एकवचनं वा स्यात् । पुनर्वसुर्नक्षत्रं पुनर्वसू वा । 'विशाखयोश्च' ॥१।२।६२॥ विशाखा नक्षत्रं विशाखे वा । 'षष्ठीयुक्तश्छन्दसि वा' ॥१।४।९॥ पतिर्घिसंज्ञो वा । कुलुञ्चानां पतये पत्ये वा । पुनश्चनसौ गतिसंज्ञौ स्याताम् । पुनरुत्स्यूतम् । 'गतिर्गतौ' इति निघातः स्यात् । चनोहितः । 'गतिरनन्तरः' इति स्वरः । 'छन्दसि परेऽपि' ॥१।४।८१॥ गत्युपसर्गसंज्ञाः । याति नि । 'व्यवहिताश्च' ॥१।४।८२॥ आ मन्द्रैरिन्द्र हरिभिर्याहि । 'तृतीया च होश्छन्दसि' ॥२।३।३॥ कर्मणि वा तृतीयापि । यवाग्वा जुहोति । यवागूं जुहोति । 'द्वितीया ब्राह्मणे' ॥२।३।६०॥ ब्राह्मणविषये प्रयोगे दिवो द्यूतार्थस्य कर्मणि द्वितीया स्यात् । ग्रामस्य तदहः सभायां दीव्येयुः । 'प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने' ॥२।३।६१॥ प्रेष्यब्रुवोर्हविषः कर्मणः[1] षष्ठी । अग्नये हविषः प्रेष्य अनुब्रूहि वा । देवतासंप्रदाने किम् । बटवे पुरोडाशान् प्रेष्य । अस्य प्रयोगस्य यज्ञविषयत्वात् वैदिकेषु लिखितमेतत् सूत्रम् ।

१. कर्माणि PC.

'चतुर्थ्यर्थे बहुलं छन्दसि' ॥२।३।६२॥ षष्ठी । पुरुषमृगश्चन्द्रमसे चन्द्रमसो वा । षष्ठ्यर्थे चतुर्थी । याश्चयङ्क्ते तस्यै दुश्चर्मा । 'यजेश्च करणे' ॥२।३।६३॥ षष्ठी वा । घृतस्य यजते । घृतेन यजते । 'हेमन्तशिशिरावहोरात्रे च च्छन्दसि' ॥२।४।२८॥ पूर्ववल्लिङ्गौ । हेमन्तशिशिरौ । अहोरात्रे । 'बहुलं छन्दसि'। २।४।७६॥ शपः श्लुः । श्लोरभावोत्र । दाति प्रियाणि । विवष्टि । 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' ॥२।४।८०॥ एभ्यो लेर्लुक् । लिलेः सामान्यग्रहणम् । घस । अक्षन् । ह्वर । माह्वः । नश । प्रणट् । वृ । आवः । दह । आधक् । आत् । आप्राः । वृच । परावर्क् । कृ । अक्रन् । गमि । अग्मन् । जनि । अज्ञत । 'अदो जग्धिः—' इत्यादय आदेशाः संज्ञाछन्दसोर्बहुलं वक्तव्याः । अन्नाद्यर्थम् । अन्नम् । वधकः । गात्रम् । विचक्षणः । अजिरम् । बहुलं छन्दसि । अदेर्घस्लृ । घस्ताम् । अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ॥३।१।४२॥ एते निपात्याः । अक इति चतुर्णां प्रत्येकमनुप्रयोगः । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजनदिति लोके । चिकयामकः । अचैषी-दिति लोके । रमयामकः । अरीरमदिति लोके । पावयांक्रियात् । पाव्यादिति लोके । विदामक्रन् । अवेदिषुरिति लोके । 'गुपेश्छन्दसि' ॥३।१।५०॥ च्लेश्चङ् वा । अजूगुपतम् । अगौप्तम् । अगोपिष्टम् । अगोपा-यिष्टम् । 'प्रत्यपिभ्यां ग्रहेश्छन्दसि' ॥३।१।११८॥ क्यप् । प्रतिगृह्यम् । अपिगृह्यम् । 'छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्या-ध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्य-पृडानि' ॥ ३।१।१२३॥ एते निपात्याः । कृती ण्यत् । निष्टर्क्यः । क्यप् । देवहूयः । णीञ् क्यप् । प्रणीयः । उन्नीयः । शिष्लृ क्यप् । उच्छिष्यः । मृङ् स्तृञ् ध्वृ खन् यत् । मर्यः । स्तर्या । ध्वर्यः । खन्यः । खनेर्ण्यदपि । खान्यः । यजेर्यत् । देवयज्या ।

प्रच्छेः क्यप् । आपृच्छ्यः । सिवः क्यप् । प्रतिषीव्यः । वदेर्ण्यत् । ब्रह्मवाद्यः । भू भाव्यः । स्तु स्ताव्यः । त्रिञ् उपचाय्यः । पृडे चोत्तरपदे । पिबतेश्छन्दसि बहुलं टक् । या ब्राह्मणी सुरापी भवति सुरापा वा । गिरौ शेते । छन्दसि डः । गिरौ शेते गिरिशः । छन्दसि क्षदेस्तच्छीलादौ तृच । क्षतृभ्यः । चित्त्वादन्तोदात्तः । दंशेश्छन्दसि क्स्नोरुपसंख्यानम् । दङ्क्ष्णवः पशवः । 'छन्दसि वनसनरक्षिमथाम्' ॥३।२।२७॥ इन् प्रत्ययः । ब्रह्मवनिः । गोसनिः । पापारक्षिः । हविर्मथिः । 'कव्यपुरीषपुरीष्येषु ञ्युट्' ॥३।२।६५॥ एषु वहेः ञ्युट् छन्दसि । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः । 'हव्येनन्तःपादम्' ॥३।२।६६॥ हव्ये वहेर्ञ्युट् छन्दसि अनन्तःपादं चेद्वहिः । अग्निश्च हव्यवाहनः । अनन्तःपादं किम् । हव्यवाडग्निरजरः पिता नः । 'विजुपे छन्दसि' ॥३।२।७३॥ उपपूर्वाद्यजो विच् स्यात् । उपयट् । 'बहुलं छन्दसि' ॥३।२।८८॥ धातोः क्विप् । मातृहा । 'छन्दसि लिट्' ॥३।२।१०५॥ भूते । अहं सूर्यमुभयतो ददर्श । 'णेश्छन्दसि' ॥३।२।१३७॥ ण्यन्तादिष्णुच् । दृषदं धारयिष्णुः । 'क्याच्छन्दसि' ॥३।२।१७०॥ क्यच्क्यङ्क्यषन्तात् उः स्यात् । मित्रयुः । 'एरजधिकारे जवसवौ छन्दसि वाच्यौ' । ऊर्वोरस्तु मे जवः । पञ्चौदनसवः । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' ॥३।३।९६॥ मन्त्रविषये क्तिन् स चोदात्तः । वृष्टिः । इष्टिः । पक्तिः । मतिः । वित्तिः । भूतिः । वीतिः । रातिः । उदात्तार्थं सूत्रम् । इषे विध्यर्थम् । इषेति निपातात् मन्त्रादन्यत्रादिरुदात्तः । 'छन्दसि गत्यर्थेभ्यः' ॥३।३।१२९॥ खल्विषये युच् । सूपसदनोग्निः । 'अन्येभ्योपि दृश्यते' ॥३।३।१३०॥ युच् । सुदोहनः । 'छन्दसि लुङ्लङ्लिटः' ॥३।४।६॥ धातुसंबन्धे कालमात्रे । लुङ् । शकलाङ्गुष्टकोकरत् । लङ् । होतारमवृणीत । लिट् । अद्या ममार । 'शकि

१. हव्य° $Dc_1$.

णमुलकमुलौ ॥' ३।४।१२॥ शक्नोतौ उपपदे तुमर्थे णमुलकमुलौ स्तः। विभाजं नाशक्नुवन्। अपलुपं नाशक्नुवन्। विभक्तुम-पलोप्तुमित्यर्थः। 'अवचक्षे च' ॥३।४।१५॥ कृत्यार्थे निपातः। 'भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्' ॥३।४।१६॥ भावलक्षणे वर्तमानेभ्य एभ्यस्तोसुन् स्यात्। आ संस्थातोर्वेद्यां सीदन्ति। उदेतोः। अपाकर्तोः। प्रवदितोः। प्रचरितोः। आहोतोः। आतमितोः। आजनितोः। उन्निपूर्वादपि ग्रहेश्छ-न्दसि। सृगुह्यमनिपातयोर्घञ्। उद्ग्राभं च निग्राभं च। 'नित्यं संज्ञा छन्दसोः' ॥४।१।२९॥ अन्नन्तादुपधालोपिनो बहुव्रीहेर्ङीप् संज्ञायाम्। सुराज्ञी। यां पञ्चनाम्नी। दासात् परस्य पत्युर्नान्तादेशः स्याच्छन्दसि। दासपत्नी। 'केवलमामकभाग-धेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च' ॥४।१।३०॥ केवलादिभ्यो ङीप् संज्ञाछन्दसोः। केवली। मामकी। भागधेयी। पापी। अपरी। समानी। आर्यी। कृती। सुमङ्गली। भेषजी। भाषायां तु केवला। संज्ञाछन्दसोः केवलीत्यादि। 'रात्रेश्चाजसौ' ॥४।१।३१॥ अजस्विषये ङीप् संज्ञाछन्दसोः। रात्री व्यख्यत्। जसौ ता रात्र्यः। अजसादिष्विति वाच्यम्। रात्रिं सहोषित्वा। रात्र्य इत्यप्यस्ति। तत्र 'कृदिकारादक्तिनः' इति ङीप्। अन्तर्वत्-पतिवतोश्छन्दसि वा नुक्। अन्तर्वत्नी देवानुपैत्। अन्तर्वती। पतिवत्नी तरुणवत्सा। पतिवती। 'नित्यं छन्दसि' ॥४।१।४६॥ बह्वादिभ्यश्छन्दसि नित्यं ङीष्। बह्वी नापिती। 'भुवश्च' ॥४।१।४७॥ सम्राड्विभ्वी। प्रभ्वी। उत इत्येव। स्वयंभूः। मुद्गलाच्छन्दसि लिच्च। आनुक् स्यात् स्त्रियाम्। स च लित्। ङीष् च। रथीरभून्मुद्गलानीति। 'दीर्घजिह्वी च च्छन्दसि' ॥४।१।५९॥ ङीषन्तस्य निपातः। दीर्घजिह्वी। 'कद्रुकमण्डल्वो-

---

१. नि° Dc₁.

ऋछन्दसि ' ॥४।१।७१॥ ऊङ् । कद्रूः । कमण्डलूः । गुग्गुलुमधुजतुपतयालूनां स इष्यते । गुग्गुलूः । आविःशब्दाच्छन्दसि त्यक्प्रत्ययो वाच्यः शैषिकः । आविष्ट्यः । तिलान्निष्फलात् पिञ्ज-ऋछन्दसि डिच्च । निष्फलस्तिलस्तिल्पिञ्जः । 'छन्दसि ठञ्' ॥४।३।१९॥ वर्षाशब्दात् ठञ् छन्दसि शैषिकः । ठकोपवादः । स्वरे भेदः । नभश्च-नभस्यश्च वार्षिकावृतू । बहिषष्टिलोप ईकन् च वाच्यः । बार्हीकः । नित्त्वादाद्युदात्तः । ण्यतौ[1] वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् । वाच्यम् । मात्यम् । पैतृमत्यम् । 'वसन्ताच्च' ॥४।३।२०॥ ऋत्वणोपवादः । छन्दसि । मधुश्च माधवश्च वासन्तिकावृतू । 'हेमन्ताच्च' ॥४।३।२१॥ ठञ् । सहश्च सहस्यश्च हैमन्तिकावृतू । 'द्व्यचश्छन्दसि' ॥४।३।१५०॥ मयट् विकारे । पर्णमयी जुहूः । 'नोत्त्वद्वर्ध्रबिल्वात्' ॥४।३।१५१॥ उकारवतो वर्ध्रबिल्वाभ्यां छन्दसि मयट् न स्यात् । मौञ्जं शिक्यम् । वार्ध्री । बैल्वः । 'ढश्छन्दसि' ॥४।४।१०६॥ सभाशब्दाच्छन्दसि तत्र साधुरत्रार्थे ढः । सभेयो युवा । 'भवे च्छन्दसि' ॥४।४।११०॥ सप्तम्यन्ताद् भवे यत् । मेध्याय नमो विद्युत्याय । 'पाथोनदीभ्यां ड्यण्' ॥४।४।१११॥ तत्र भवे । पाथसि भवः पाथ्यो वृषा । पाथो-न्तरिक्षम् । नाद्यो गिरो मे । 'वेशन्तहिमवद्भ्यामण्' ॥४।४।११२॥ भवे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा । 'स्रोतसो विभाषा ड्यड्ड्यौ' ॥४।४।११३॥ पक्षे यत् । स्रोत्यः । स्वरित-त्वान्तोदात्तत्वे । ड्यड्ड्यतोः स्रोतस्यः । 'सगर्भसयूथसनुताद्यत्' ॥४।४।११४॥ सगर्भ्यः । सयूथ्यः । सनुत्यः । समानो गर्भः । समानं यूथम् । समानं नुतम् । इति कर्मधारयः । बहुव्रीहिर्वा । सर्वत्र 'समानस्य छन्दसि' इति सः । 'तुग्राद् घन्' ॥४।४।११५॥ तुग्रियः । अन्नाकाशयज्ञवरिष्ठेषु तुग्रः । 'अग्राद्यत्' ॥४।४।११६॥ अग्र्यम् । 'घच्छौ च' ॥४।४।११७॥ तत्र भवः । अग्रियः । अग्रीयः ।

---

१. ण्यतौ PC.

त्रा तुर्यीयम् । छे सत्यन्तोदात्तत्वम् । घनि त्वाद्युदात्तत्वम् । 'समुद्राभ्राद् घः' ॥४।४।११८॥ समुद्रिया नदी । अभ्रियस्येव घोषः । 'बर्हिषि दत्तम्' ॥४।४।११९॥ यत् । बर्हिष्ये निधेहि । 'दूतस्य भागकर्मणी' ॥४।४।१२०॥ यत् । 'रक्षोयातूनां हननी' ॥४।४।१२१॥ यत् । रक्षस्या तनूः । यातव्या । 'रेवतीजगतीहविष्याभ्यः प्रशस्ये' ॥४।४।१२२॥ यत् । यद्वो रेवती रेवत्यम् । जगत्यम् । हविष्यम् । 'असुरस्य स्वम्' ॥४।४।१२३॥ यत् । असुर्यम् । 'मायायामण्' ॥४।४।१२४॥ आसुरी माया । 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः' ॥४।४।१२५॥ मतुबन्तात् प्रथमान्तात् उपधानमन्त्रवाचिनः षष्ठ्यर्थे इष्टकासु वाच्यासु यत् । मतुपो लुक् च । वर्चस्वानुपधानमन्त्रः आसामिष्टकानां वर्चस्याः । ऋतव्याः । 'अश्विमानण्' ॥४।४।१२६॥ अश्विमानुपधानो मन्त्र आसामिष्टकानामाश्विनीरुपदधाति । 'वयस्यासु मूर्ध्नो मतुप्' ॥४।४।१२७॥ वयस्वानुपधानो मन्त्रो यासां तासु इष्टकासु वाच्यासु । यत्र मूर्धवयःशब्दौ स्तः स वयस्वान् मूर्धन्वांश्च । स उपधानो यासां ता उपदधाति । 'मत्वर्थे मासतन्वोः' ॥४।४।१२८॥ यत् । नभांसि सन्त्यस्मिन् नभस्यो मासः । तन्वाम् । ओजोस्त्यस्या ओजस्या । रक्षस्या । अनन्तरार्थेपीष्टः । मधवस्मिन्ननन्तरं मधव्या । लुगकारेकाररेफाश्चेष्यन्ते । लुक् । तपश्च तपस्यश्च । अकारः । इषः । ऊर्जः । इकारः । शुचिः । रेफः । शुक्रः । 'मधोर्ञ च' ॥४।४।१२९॥ मत्वर्थे मासतन्वोर्वाच्ययोर्ञः चात् यच्च । उपसंख्यानाल्लुक् च । माधवो मधव्यो मधुर्मासः । माधवा मधव्या[2] मधुस्तनुः । 'ओजसोहनि यत्खौ' ॥४।४।१३०॥ दिने वाच्ये । ओजस्यमहः । ओजसीनम् । 'वेशोयशआदेर्भगाद्यल्' ॥४।४।१३१॥ वेशोभगयशोभगशब्दाभ्यां मत्वर्थे यल् । वेशोभगोस्यास्तीति वेशोभग्यः । वेशो बलम् । यशोभग्यः । श्रीकाममाहात्म्यप्रयत्नवीर्ययशांसि भगः । 'ख च' ॥४।४।१३२॥

१. बर्हिषि त्वं निधेहि PC. २ मधव्यः PC.

वेशोभगीनः । 'पूर्वैः कृतमिनयौ च' ॥४।४।१३३॥ पूर्वशब्दात् तृतीयान्तात् इनयौ ख च । पथिभिः पूर्विणैः पूर्व्यैः पूर्वीणैः । पूर्वैः कृताः पन्थान इति तेषां प्रशंसा । 'अद्भिः संस्कृतम्' ॥४।४।१३४॥ अप्-शब्दात् संस्कृतमित्यर्थे यत् । अप्यं हविः । 'सहस्रेण संमितौ घः' ॥४।४।१३५॥ सहस्रशब्दात् तृतीयान्तात् सदृशे वाच्ये घः । सहस्रियः । 'मतौ च' ॥४।४।१३६॥ मत्वर्थे च सहस्राद् घः । सहस्रियः । 'सोममर्हति यः' ॥४।४।१३७॥ सोममर्हन्ति सौम्या ब्राह्मणाः । 'मये च' ॥४।४।१३८॥ सोमशब्दान्मत्वर्थे आगतविकारावयवप्रकृतिषु यः । सोम्यं मधु । सोममयमित्यर्थः । 'मधोः' ॥४।४।१३९॥ यो निवृत्तः । मधोर्यत् । मधव्याः श्लोकाः । मधुमया इत्यर्थः । 'वसोः समूहे च' ॥४।४।१४०॥ समूहे मयडर्थे च यत् । वसव्यः । समूहो मयडर्थो वा । अकारोक्षरात् समूहे वाच्यः । आश्रावयेति चतु-रक्षरम् । अक्षरस्तोमवृत्तेः छन्दःशब्दात् स्वार्थे यत् । सप्तदशा-क्षरश्छन्दस्यः । वसुशब्दादपि स्वार्थे यदिष्टः । बहुभिर्वसव्यैः । वसुभिरित्यर्थः । 'नक्षत्राद् घः' ॥४।४।१४१॥ स्वार्थे । नक्षत्रियेभ्यः स्वाहा । 'सर्वदेवात्तातिल्' ॥४।४।१४२॥ स्वार्थे । सर्वतातिः । देवतातिः । 'शिवशमरिष्टस्य करे' ॥४।४।१४३॥ शिवादिभ्यः षष्ठ्यन्तेभ्यः कर इत्यर्थे तातिल् । शिवस्य करः शिवतातिः । शंतातिः । अरिष्टतातिः । 'भावे च' ॥४।४।१४४॥ शिवस्य भावः शिवतातिः । शंतातिः । अरिष्टतातिः । 'शन्शतोर्डिनिश्छन्दसि' । तदस्य परिमाणमित्यर्थे वाच्यः । पञ्चदशिनोर्धमासाः । त्रिंशिनो मासाः । 'विंशतेश्चेति वाच्यम्' । विंशिनोङ्गिरसः । 'छन्दसि सादृश्ये युष्मदस्मदोर्वतुब् वाच्यः' । त्वावतः पुरूवसो । यज्ञं विप्रस्य मावतः । 'सप्तनोञ् छन्दसि' ॥५।१।६१॥ सप्तन्शब्दात् वर्गेभिधेयेञ् स्यात् छन्दसि । सप्त साप्तान्यसृजन् । 'छन्दसि च' ॥५।१।६७॥

१. After it तृतीयान्तात् Dc3, PC.

प्रातिपदिकमात्रात् तदर्हतीति यः। ओदन्या व्रीहयः। यूप्याः पलाशाः। 'वत्सरान्ताच्छश्छन्दसि' ॥५।१।९१॥ वत्सरशब्दान्तात् छप्रत्ययश्छन्दसि निवृत्तादिषु। इद्वत्सरीयः। 'छन्दसि घस्' ॥५।१।१०६॥ ऋतुशब्दात् तदस्य प्राप्तमित्यर्थे घस्। सकारः पदत्वार्थः। ऋत्वियः। 'उपसर्गाच्छन्दसि धात्वर्थे' ॥५।१।११८॥. उपसर्गाद्धात्वर्थे वतिः स्यात्। य उद्वतो निवतो यासि। उद्गतो निगतश्चेत्यर्थः। 'थट् च च्छन्दसि' ॥५।२।५०॥ नान्तादसंख्यादेः परस्य डटः थट् मट् चागमः। पञ्चथानि। पञ्चमम्। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' ॥५।२।८९॥ पर्यवस्थातरि प्रतिपक्षे निपातावेतौ। मा त्वा परिपन्थिनो विदन्। मा त्वा परिपरिणो विदन्। 'बहुलं छन्दसि' ॥५।२।१२२॥ विनिः प्रत्ययो मत्वर्थे बहुलं स्याच्छन्दसि। अग्ने तेजस्विन्। सूर्यो वर्चस्वान्। अंष्ट्रावी। मेखलावी। द्वयावी। उभयावी। रुजावी। हृदयावी। मर्मावी। इत्यादि। 'छन्दसीवनिपौ वाच्यौ'। वंश्च मतुप् च। ई। रथीरभूत्। सुमङ्गलीरियं वधूः। वनिप्। मघवानमीमहे। वन् उद्वा च। मतुप्। उद्वती च। 'तयोर्दार्हिलौ च छन्दसि' ॥५।३।२०॥ इदंतदोर्यथासंख्यं दार्हिलौ स्तः। इदा। तर्हि। यथाप्राप्तं च। 'था हेतौ च च्छन्दसि' ॥५।३।२६॥ किमस्था स्यात् हेतौ प्रकारे च। कथा ग्रामं न पृच्छसि। कथा देवा आसन्। पुरा केन हेतुनेत्यर्थः। 'पश्च पश्चा च च्छन्दसि' ॥५।३।३३॥ अवरस्यास्तातेरर्थे निपातौ पश्चाच्च। पश्चसिंहः। पश्चासिंहः। पश्चाद्धसति। 'तुश्छन्दसि' ॥५।३।५९॥ तृजन्तात् तृन्नन्ताच्च इष्ठन्नीयसुनौ स्तः। आसुतिं करिष्ठः। दोहीयसी धेनुः। 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि'। ॥५।३।१११॥ एभ्य इवार्थे थाल्। प्रत्नथा। पूर्वथा। विश्वथा। इमथा। 'अमु च च्छन्दसि' ॥५।४।१२॥ किमेत्तिङव्ययघादमु आमु च स्यात्। प्रतरं न यामः। 'वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि' ॥५।४।४१॥ स्वार्थे। वृकतिः। ज्येष्ठतातिः। 'अन-

१. उद्व° PC. २. उष्ट्रावी $Dc_3$, PC.

सन्तान्नपुंसकाच्छन्दसि ' ॥५।४।१०३॥ अन्नन्तादसन्ताच्च क्लीबात् तत्पुरुषे टच् समासान्तः स्यात् । ऋषभचर्मेभिषिञ्चेते । देवच्छन्दसानि । वेति वाच्यम् । ब्रह्मचर्म । देवच्छन्दः । ' बहुप्रजाश्छन्दसि ' ॥५।४।१२३॥ बहुप्रजा इति निपात्यते । बहुप्रजा निर्ऋतिमाविवेश । ' छन्दसि च ' ॥५।४।१४२॥ दन्तशब्दस्य बहुव्रीहौ समासान्तो दतृ आदेशः स्यात् । उभयतोदतः प्रतिगृह्णाति । ' ऋतश्छन्दसि ' ॥५।४।१५८॥ ऋकारान्ताद्बहुव्रीहेः कप्प्रत्ययो न । हता मातास्य हतमाता । छन्दस्वस्अपस्ओकस्कविक्षेमवर्चस्निष्केवलउक्थजनपूर्वनवसूरमर्त्यायधिष्णेभ्यः स्वार्थे यत् । छन्दस्यः । वस्यः । अपस्यो वसाना । ओकस्यः । कव्योसि । क्षेम्यमध्यवस्यसि । वायुर्वर्चस्यः । निष्केवल्यं शंसति । उक्थ्यं शंसति । जन्यस्ताभिः । पूर्व्या[1] दिशः स्तोमं जनय । कुलालवरूढनिषादचण्डालमित्रामित्रेभ्यः छन्दसि स्वार्थे ण वाच्यः । कुलाल एव कौलालः । वारूढः । नैषादः । चाण्डालः । मैत्रः । आमित्रः । नेत्रन्ताद्बहुव्रीहेश्छन्दस्यब् वाच्यः । बृहस्पतिर्नेता येषां ते बृहस्पतिनेत्रा देवाः । सोमनेत्राः । ' लिटि धातोः—' इति द्वित्वम् । छन्दसि वेति वाच्यम् । यो जागार । दाति प्रियाणि । ' तुजादीनां दीर्घोभ्यासस्य ' ॥६।१।७॥ येषामभ्यासस्याविहितलक्षणं दीर्घत्वं दृश्यते तेषां तुजादीनामभ्यासदीर्घत्वं साधु स्याच्छन्दसि । तूतुजानः । मामहानः । स्वधां मीमाय । अनड्वान् दाधार । स तूताव । भाषायां न । तुतोज शबलान् हरीनिति । ' बहुलं छन्दसि ' ।६।१।३४॥ ह्वः संप्रसारणं स्यात् । इन्द्राग्नी हुवे । ह्वयामि । ऋक्शब्दे परे त्रः संप्रसारणमुत्तरपदादिलोपश्च । तिस्र ऋचोत्र तृचं सूक्तम् । ' रयेर्मतौ बहुलम् ।' संप्रसारणम् । रेवान् । रयिमान् । ' अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः ॥६।१।३६॥ एते छन्दसि निपात्यन्ते ।

१. पूर्वा $Do_3$, PC.

इन्द्रश्च विष्णो यदपस्पृधेथाम् । स्पर्धेर्लङ्याथाम् । अपपूर्वस्येत्यन्ये । य उग्रा अर्कमानृचुः । वसून्यानृहुः । अर्चेरहेर्लिट्युसि । विच्युषे । च्युङो लिटि थासि । तित्याज । त्यजेर्णलि । श्रातास्त इन्द्र सोमाः । श्रिता नो ग्रहाः । श्रीञ् पाके निष्ठायाम् । नाशीरं रुद्रे । आशीर्त ऊर्जम् । श्रीञ एव क्विपि निष्ठायां च । 'खिदेश्छन्दसि' ॥६।१।५२॥ खिद दैन्ये इत्यस्य धातोरेचः स्थाने वा आकारादेशः स्यात् । चित्तं चिखाद चिखेद । शीर्षंश्छन्दसि ॥६।१।६०॥ शिरःशब्देन समानार्थः शीर्षन् शब्दो निपात्यते । यत्ते शीर्ष्णो दौर्भाग्यम् । 'वा छन्दसि' ॥६।१।१०६॥ 'अमि पूर्वः' ॥६।१।१०७॥ अमि पूर्ववत्त्वं वा । शमीं च शम्यं च । 'संप्रसारणाच्च' ॥६।१।१०८॥ पूर्वरूपं वा । इज्यमानः । यजमानः । 'शेश्छन्दसि बहुलम्' ॥६।१।७०॥ लोपः स्यात् । या क्षेत्रा । या वना । यानि । एमन्नादिषु परेषु पूर्वपरयोः पररूपमेकादेशश्छन्दसि । अपां त्वेमन् । गोर्यूतौ छन्दसि । वान्तादेशो वाच्यः । गव्यूतिमाशास्ते । 'अङ्ग इत्यादौ च' ॥६।१।११९॥ अङ्गशब्दे य एङ् सोऽति परे प्रकृत्या अङ्गशब्दादौ योकारस्तस्मिन् परे च एङ् प्रकृत्या यजुषि । अङ्गे अङ्गे वृषा वृषा । प्राणो अङ्गे दिवो भवत् । 'अनुदात्ते च कुधपरे' ॥६।१।१२०॥ अनुदात्ते चाति कवर्गपरे धकारपरे च एङ् प्रकृत्या यजुषि । अयं सो अग्निः । अयं सो अध्वरः । 'अवपथासि च' ॥६।१।१२१॥ अवपथाःशब्दे अनुदात्ते अकारादौ परे एङ् प्रकृत्या यजुषि । त्री रुद्रेभ्यो अवपथाः । वपतेस्थासि लङि 'तिङ्ङतिङः' इति निघातः । 'भय्यप्रवय्ये च च्छन्दसि' ॥६।१।८३॥ बिभेतेः प्रपूर्वस्य वीत्यस्य च यति परतोयादेशो निपात्यते । भय्यः किलासीत् । वत्सतरी प्रवय्या । अयं स्त्रियामेव । हृदय्या आप इति च वाच्यम् । हृदय्या आपः । 'भवे छन्दसि' इति यत् । 'वा

छन्दसि' ॥६।१।१०६॥ दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो वा न स्यात् । मारुतीश्चतस्रः । मारुत्यश्चतस्रः । वाराही । वाराह्यौ । छन्दसि 'इकोसवर्णे—' इति प्राप्तस्य शाकल्यस्य सिति प्रत्यये परे निषेधो वाच्यः । 'छन्दसि घस्' इति ऋतुशब्दाद् घस् । ईषाअक्षादिषु छन्दसि प्रकृतिभावमात्रम् । ईषा अक्षा । का ईषिरे[1] । विलाप आं अगमत्[2] । विश्वजनादीनां छन्दसि छे वा तुगागमः । विश्वजनछत्रम् । विश्वजनच्छत्रम् । 'आपोजुषाणोवृष्णोवर्षिष्ठेम्बेम्बालेम्बिकेपूर्वे' ॥६।१।११८॥ यजुषि आपो इत्यादीनां चतुर्णामम्बेम्बाले एतयोश्चाम्बिकेपूर्वयोरेङ् अतिपरे प्रकृत्या । आपो अस्मान् । जुषाणो अप्सु राज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे अम्बाले अम्बिके । यजुषीदृगेव पठ्यते । 'ह्रस्वाचन्द्रोत्तरपदे मन्त्रे' ॥६।१।१९१॥ ह्रस्वात् परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यात् मन्त्रे । सुश्चन्द्रो युष्मान् । पुरुश्चन्द्रः । 'पितरामातरा च छन्दसि' ॥६।३।२३॥ द्वन्द्वे निपातः । आ मा गन्तां पितरामातरा च । मातापितरावित्यर्थः । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' ॥६।३।६३॥ ङ्यन्तस्याबन्तस्य च बहुलं ह्रस्वः संज्ञायाम् । रेवतिपुत्रः । न च । नान्दीघोषः । छन्दसि । कुमारिदारा । न च । फाल्गुनीपौर्णमासी । 'त्वे च' ॥६।३।६४॥ त्वप्रत्यये च बहुलं ह्रस्वः । अजत्वम् । रोहिणित्वम् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' ॥६।३।८४॥ समानस्य सः स्यात् मूर्धाद्यन्यस्मिन् उत्तरपदे परे । सगर्भ्यः । सयूथ्यः । 'सध मादस्थयोश्छन्दसि' ॥६।३।९६॥ मादस्थयोः परपदयोः सहस्य सधादेशः स्यात् । सधमादो द्युम्नीति । सधस्थः । 'पथि च छन्दसि' ॥६।३।१०८॥ पथिशब्दे परपदे कोः कवादेशः स्यात् का च वा । कवपथः । कापथः । कुपथः । 'साढ्यै साढ्वा साढेति निगमे' ॥६।३।११३॥ एते निपात्यन्ते । साढ्यै समन्तात् । साढ्वा शत्रून् । क्त्वान्तस्य निपातौ । साढेति तृजन्तस्य । 'छन्दसि च' ॥६।३।१२६॥ अष्टनः परपदे दीर्घः ।

१. इषिरे PC., $Dc_3$. २. आगमत् $Dc_1$.

अष्टाकपालः । अष्टापदी । भक्षस्य कारे मुम् छन्दसि । भक्षस्य कारः भक्षंकारः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' इति छन्दसि बहुलं वाच्यम् । विश्वाची च घृताची च कद्रीची । स्वरो रोहतौ छन्दस्युत्वं वा वाच्यम् । जाय एहि स्वो रोहाव । अन्येपि पृषोदरादिवत् ज्ञेयाः । 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' ॥६।३।१३१॥ एषां मतुपि परे दीर्घो मन्त्रे । सोमावती । अश्वावती । इन्द्रियावती । विश्वदेव्यावती । 'ओषधेश्च विभक्तावप्रथमायाम्' ॥६।३।१३२॥ दीर्घः स्यान्मन्त्रे । ओषधीभिः । ओषधीभ्यः । विभक्तौ किम् । ओषधिपते । अप्रथमायां किम् । ओषधिः । 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' ॥६।३।१३३॥ ऋग्विषये त्वादीनां दीर्घः । आ तू न इन्द्र । नू मर्तः । उत वा घा स्यालात् । मक्षू गोमन्तम् । तङ् प्रत्याहारः । भरता जातवेदसम् । तङो ङित्वो ग्रहस्तेनेह न । शृणोत ग्रावाणः । कूमनाः । अत्रा ते । उरुष्याणः । 'इकः सुञि' ॥६।३।१३४॥ सुञि परे ऋग्विषये दीर्घः । अभीषुणः सखीनाम् । 'सुञः' इति षः । 'नश्च धातुस्थोरुषुभ्यः' इति णः । 'द्व्यचोतस्तिङः' ॥६।३।१३५॥ द्व्यचस्तिङन्तस्यातो मन्त्रे दीर्घः स्यात् । विद्मा हि त्वा सत्पतिं शूर गोनाम् । द्व्यचः किम् । अश्वा भवत वाजिनः । अतः किम् । आ देवान् वक्षि यक्षि च । 'निपातस्य च' ॥६।३।१३६॥ मन्त्रे दीर्घः । एवा ते । 'छन्दस्युभयथा' ॥६।४।५॥ तिसृचतसृशब्दयोरङ्गस्य दीर्घो वा नामि । तिसृणाम् । तिसॄणाम् । चतसृणाम्, चतसॄणाम् । 'वा षपूर्वस्य निगमे' ॥६।४।९॥ असंबुद्धौ सर्वनामस्थाने परे षपूर्वस्योपधाया वा दीर्घः । तक्षाणं तिष्ठन्तम् । तक्षणं तिष्ठन्तम् । 'जनिता मन्त्रे' ॥६।४।५३॥ इडादौ तृचि णिलोपो निपात्यते मन्त्रे । यो नः पिता जनिता । 'शमिता यज्ञे' ॥६।४।५४॥ यज्ञविषये शमयितेर्णिलोपो निपात्यते । शृतं हविः शमिता । 'युप्लुवोर्दीर्घश्छन्दसि' ॥६।४।५८॥ युप्लुवोर्ल्यपि दीर्घः स्यात् । वियूय विप्लूय । 'छन्दस्यपि दृश्यते' ॥६।४।७३॥ अनजादीनामप्याट्

लुङादिषु । आवः । आयुनक् । वृयुजोर्लुङि 'मन्त्रे घस—' इति लेर्लुकि रूपे । 'बहुलं छन्दस्यमाङ्योगेपि' ॥६।४।७५॥ अडाटौ छन्दस्यमाङ्योगेपि न स्तः । माङ्योगेपि स्तो बहुलम् । जनिष्ठाः । मा वः क्षेत्रे परबीजान्यवाप्सुः । 'इरयो रे' ॥६।४।७६॥ झादेशस्य इरे इत्यस्य रे आदेशो बहुलं छन्दसि । गर्भं प्रथमं दध्र आपः । धात्त्वो- रेभावस्यासिद्धत्वादातो लोपः । न च स्यात् । अग्निकर्माणि चक्रिरे । 'तनिपत्योश्छन्दसि' ॥६।४।९९॥ एतयोरुपधालोपोजादौ क्ङिति । वितत्निरे कवयः । शकुना इव पप्तिम । 'घसिभसोर्हलि च' ॥६।४।१००॥ एतयोरुपधालोपो हलि । सग्धिश्च मे । बब्धां ते हरी धानाः । लोट् तसस्ताम् । 'विभाषर्जोश्छन्दसि' ॥६।४।१६२॥ ऋजु इत्यस्य ऋतः स्थाने रः स्यादिष्ठेमेयस्सु परतः । ऋजिष्ठमेति पन्थानम् । रजिष्ठं वा । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' ॥६।४।१७५॥ एतानि निपात्यन्ते । ऋतौ भवमृत्व्यम् । वास्तौ भवं वास्त्व्यम् । वस्तुनि भवो वास्त्वः । माध्वीर्नः सन्त्वोषधीः । हिरण्यस्य विकारो हिरण्ययः । छन्दस्यमिपचोरलिट्येत्वं वाच्यम् । व्येमानम् । अमो विपूर्वस्य चानशि मुक् न । लिङि । पेचिरन् । पेचिम । छान्दसो ह्रस्वः । यजिवप्योश्च । आयेजे । यजेर्वपेश्चानजादेरप्याडागमश्छान्दसत्वात् । 'बहुलं छन्दसि' ॥७।१।८॥ धातुमात्रात् परस्य रुट् स्यात् । देवा अदुह्र । 'नेतराच्छन्दसि' ॥७।१।२६॥ इतरात् स्वमोरद्डादेशो न । इतरमण्डमजायत । 'क्त्वापि छन्दसि' ॥७।१।३८॥ अनञ्पूर्वसमासे क्त्वो ल्यप् क्त्वापि स्याच्छन्दसि । यजमानं परिधापयित्वा । उद्धृत्य जुहोति । 'श्रीग्रामण्योश्छन्दसि' ॥७।१।५६॥ श्रीणामुदारो धरुणो रयीणाम् । सूत ग्रामणीनाम् । 'गोः पादान्ते' ॥७।१।५७॥ गोशब्दात् परस्यामो नुट् स्यात् ऋक्पादान्ते । विद्माहि त्वा सत्पतिं शूरगोनाम् । पादान्ते किम् । गवां गोत्रम् । सर्वे विधयश्छन्दसि विकल्प्यन्ते इति पादान्तेपि क्वचिन्न । गोपतिं गवाम् । 'लोपस्त आत्मनेपदेषु'

॥७।१।४१॥ तकारस्य लोपः स्यात् तङि । देवा अदुह । अदुहतेति प्राप्ते । 'क्त्वो यक्' ॥७।१।४७॥ क्त्वो यगागमः स्यात् । दत्त्वाय सविता धियः । दत्त्वेति प्राप्ते । 'इष्ट्वीनमिति च' ॥७।१।४८॥ यजेः क्त्वान्ते निपातोयम् । इष्ट्वीनं देवान् । 'छन्दस्यपि दृश्यते' ॥७।१।७६॥ अस्थिदधिसक्थ्यक्ष्णामनजादावपि तृतीयादिविभक्तेरन्यत्रापि च दृश्यते छन्दसि । इन्द्रो दधीचो अस्थभिः । अस्थान्युत्कृत्य । अक्षण्वता । 'ई च द्विवचने' ॥७।१।७७॥ अस्थ्यादीनां द्विवचने परत ई च स्यात् । अक्षीभ्यां ते । 'दृक्स्ववस्स्वतवसां छन्दसि' ॥७।१।८३॥ एषां सौ परे नुम्स्यात् । ईदृङ् । स्ववान् । स्वतवान् । 'बहुलं छन्दसि' ॥७।१।१०३॥ ऋकारान्तस्य धातोर्बहुलमुकारः स्यात् । अनोष्ठ्यपूर्वस्यापि स्यात् । मित्रावरुणौ ततुरिः । ओष्ठ्यपूर्वस्यापि न । पप्रितमम् । स्यादपि पपुरिः । त्रिशब्दस्यामि छन्दसि त्रयादेशो वा । त्रीणामपि यथा स्यात् । त्रीणामपि समुद्राणाम् । 'हु ह्वरेश्छन्दसि' ॥७।२।३१॥ ह्वरे[१] निष्ठायां हु आदेशः स्यात् । अहुतमसि । 'अपरिह्वृताश्च' ॥७।२।३२॥ हु इत्यस्याभावो ह्वरतेर्निपात्यते । अपरिह्वृताः सनुयाम वाजम् । 'सोमे ह्वरितः' ।७।२।३३॥ निपाताद् गुणः । सोमो ह्वरितो विह्वरितस्त्वम् ॥ 'ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च' ॥७।२।३४॥ अष्टादश निपाताः । ग्रसितं वा एतत्सोमस्य । विष्कभिते अजरे । येन स्वस्तभितम् । सत्येनोत्तभिता भूमिः । चत्ता वर्षेण विद्युत् । विकस्तमुत्तानाया हृदयम् । एते षट् क्तान्ताः । त्वष्टुरश्वस्य विशस्ता । शंस्ता विप्रा । शास्ता राजा । तरुतारं रथानाम् । तरूतारम् । वरुतारम् । वरूतारम् । वरूत्रीष्ट्वा देवीर्विश्वदेव्यावती । वरूत्रयः । एते अष्ट तृजन्ताः । ज्वलानां चतुर्णां शप इकारो निपात्यते । एते लडन्ताः । अभिरुज्ज्वलिति । स्तोकं क्षरिति । वमिति सोमम् । अभ्यमिति वरुणम् । भाषायां तु

१. ह्विरः PC.
९२ [ प्र. कौ. ]

ग्रस्तस्कभ्धस्तब्धोत्तब्धचत्तितविकसितविशसिताशंसितशासितातरीता-तरितावरीतावरिताउज्ज्वलति क्षरति वमति अमति । 'बभूथाततन्थ-जगृम्भववर्थेति निगमे' ॥७।२।६४॥ निपाताः। त्वं हि होता प्रथमो बभूथ। येनान्तरिक्षमुर्वाततन्थ । जगृम्भा ते दक्षिणमिन्द्र हस्तम । ववर्थ त्वं हि ज्योतिषा । क्रमेण बभूविथ आतेनिथ जगृहिम ववरिथेति प्राप्ते । 'सनिंससनिवांसम्' ॥७।२।६९॥ सनिपूर्वस्य सनोतेः सनतेर्वा पदानु-पूर्वी छन्दस्येव निपात्यते । अग्निस्वामे सनिंससनिवांसम् । पावकादीनां छन्दसि 'प्रत्ययस्थात् कात्पूर्वस्य' इति अत्वं वेति वक्तव्यम् । हिरण्यवर्णाः शुचयः पावकाः । अलोमकाः । 'बहुलं छन्दसि' ॥७।३।९७॥ अस्तेः सिचश्चापृक्तस्य ईडागमो बहुलं स्याच्छन्दसि। आप एवेदं सलिलं सर्वमाः । अहरेवासीत् । सिचः । गोभिरक्षाः। अभैषीर्मा पुत्रक । 'जसि च' इत्येतत् प्रकरणे जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधाया ह्रस्व इत्येतस्मात् । अम्बाद्यर्थम् । अम्बे । अम्ब । दर्वे । दर्वि । शतक्रत्वः । शतक्रतवः । पश्वे नृभ्यः । पशवे नृभ्यः । किकिदीव्या । किकिदीविना । तलो ह्रस्वत्वं ङि सम्बुद्धौ वेति वाच्यम् । देवते देवतायां हे देवत हे देवते । 'नाभ्यस्तस्याचि' इति निषेधो बहुलं छन्दसि इति वाच्यम् । जुजुषत् । जुजोषत् । 'नित्यं छन्दसि' ॥७।४।८॥ णौ चङ्युपधाया ऋवर्णस्य स्थाने नित्यमृकारादेशः स्यात् । इररा-रामपवादः। अवीवृधत् पुरोडाशेन। अवीवृधताम् । अवीवृधन् । 'न छन्दस्यपुत्रस्य' ॥७।४।३९॥ पुत्रवर्जितादन्तस्य[1] क्यचि ईत्वदीर्घौ न स्तः । मित्रयुः । 'क्याच्छन्दसि' इत्युः । अपुत्रस्य किम् । पुत्रीयन्तः सुदानवः । अपुत्रादीनां वाच्यम् । जनीयन्तो न्वग्रवः । 'दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति' ॥७।४।३६॥ एते क्यचि निपात्यन्ते । दुरस्युः । दुष्टीयतीति प्राप्ते । द्रविणस्युः । द्रविणी-यतीति प्राप्ते । वृषण्यति । वृषीयतीति प्राप्ते । रिषण्यति । रिष्टीयतीति

१. पुत्रवर्जितस्यादन्तस्य PC.

प्राप्ते । 'अश्वाघस्यात्' ॥७।४।३७॥ अश्व अघ एतयोः क्यचि आत् स्यात् छन्दसि । अश्वायन्तो मघवन् । मा त्वा वृका अघायवो विदन् । 'देवसुम्नयोर्यजुषि काठके' ॥७।४।३८॥ देव सुम्न इत्येतयोः क्यचि आत्स्याद्यजुषि काठके । देवायन्तो यजमानाय शर्म । सुम्नायन्तो हवामहे । 'कव्यध्वरपृतनस्यर्चि लोपः' ॥७।४।३९॥ इत्येतेषामन्तस्य क्यचि लोपः स्यादृचि । कवि । कव्यन्तः । अध्वर । अध्वर्यन्तः । पृतना । पृतन्यन्तः । 'विभाषा छन्दसि' ॥७।४।४४॥ जहातेश्छन्दसि वा हिरादेशः स्यात् क्त्वि परे । हित्वा शरीरं पातव्यम् । हात्वा शरीरं पातव्यम् । 'सुधितवसुधितनेमधितधिष्वधिषीय च' ॥७।४।४५॥ दधातेर्निपाताश्छन्दसि । गर्भं माता सुधितम् । सुहितमिति प्राप्ते । वसुधितमग्नौ जुहोति । वसुहितमिति प्राप्ते । नेमधिताः । नेमहिता इति प्राप्ते । लोण्मध्यमे धिष्व सोमम् । धत्स्वेति प्राप्ते । आशीर्लिङात्मनेपदोत्तमपुरुषैकवचने धिषीय । धासीयेति प्राप्ते । 'कृषेश्छन्दसि' ॥७।४।६४॥ कृषेर्धातोश्छन्दसि यङि परेऽभ्यासस्य चुत्वं न । करीकृष्यते । 'दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च' ॥७।४।६५॥ एतेऽष्टादश निपात्यन्ते । दाधर्ति दर्धर्ति दर्धर्षि धारेः श्लौ यङ्लुकि वा निपाताः । बोभूतु भोः यङ्लुगन्तस्य लोट् गुणाभावः । 'भूसुवोस्तिङि' इति गुणाभावे सिद्धेऽन्यत्र यङ्लुगन्तस्य गुणप्रतिपत्त्यर्थम् । तेतिक्ते इति तिजेर्यङ्लुगन्तस्य तङ् । अलर्षि इयर्तेर्लटि लत्वम् । अलर्ति इत्यपि स्यात् । आपनीफणत् । फणतेर्यङ्लुकि नीगागमः । संसनिष्यदत् स्यन्देर्निगागमः षत्वं च । करिक्रत् । करोतेः । कनिक्रदत् । क्रन्देः । भरिभ्रत् । बिभर्तेर्यङ्लुकि शतृ । दविध्वतः । ध्वरतेः । दविद्युतत् । द्युतेः । तरित्रतः । तरतेः । सरीसृपतम् । सृपेः श्लौ अम् । वरीवृजत् । वृजेः श्लौ । सर्वेभ्यः शतृ । मर्मृज्येति मृजेर्लिटि णल्

अभ्यासस्य रुक् । आगनीगन्ति । गमेर्लिटि श्लौ । इतिकरणं प्रकारप्रदर्शनार्थम् । 'बहुलं छन्दसि' ॥७।४।७८॥ अभ्यासस्य श्लौ बहुलमिकार आदेशः स्यात् छन्दसि । पूर्णां विवष्टि । वशेरेतद्रूपम् । तथा वचेः जनिमा विवक्ति । न च स्यात् । ददातीत्येवं ब्रूयात् । स्ववस्स्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि । स्ववद्भिः । स्वतवद्भिः । माद्भिष्ट इन्द्रो वृत्रहा समुषद्भिरजायथाः । 'छन्दसीरः' ॥८।२।१५॥ इवर्णान्ताद्रेफान्तात् परस्य मतोर्मस्य वः स्यात् । त्रिवती याज्यानुवाक्या भवति । अधिपतिवती जुहोति । मरुत्वदग्निवानिव । सरस्वतीवान् । दधिवान् । छन्दसि विधिविकल्पान्नेह । सप्तर्षिमन्तं पश्य । ऋषिमान् । सूर्यं ते द्यावापृथिवी मन्तम् । रेफान्तात् । गीर्वान् । धूर्वान् । 'अनो नुट्' ॥८।२।१६॥ अन्नन्तान्मतोर्नुट् स्याच्छन्दसि । अक्षण्वतः । 'नाद् घस्य' ॥८।२।१७॥ नान्तात् परस्य घस्य नुट् स्याच्छन्दसि । सुपथिन्तरः । दस्युहन्तमः । भूरिदाव्नस्तुड् वाच्यः । भूरिदावत्तरः । ईद्रथिनः । रथीतरः । 'नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि' ॥८।२।६१॥ नसत्तनिषत्तौ निपूर्वस्य सदेः । नसत्तमञ्जसा । नसन्नं निषण्णमिति प्राप्ते । अनुत्तमिति उन्देर्नञ्पूर्वस्य । प्रतूर्तमिति त्वरतेः तूर्वि इत्यस्य वा । सूर्तमिति सृ इत्यस्य । गूर्तमिति गूरी इत्यस्य । प्रतूर्णं सृतं गूर्णमिति प्राप्ते । 'अम्नरूधरवरित्युभयथा छन्दसि' ॥८।२।७०॥ एषां छन्दस्युभयथा स्यात् । रुर्वा रेफो वा । अम्न एव । अम्नरेव । ऊध एव । ऊधरेव । अव एव । अवरेव । 'भुवश्च महाव्याहृतेः' ॥८।२।७१॥ भुवस् इत्यस्य महाव्याहृतेश्छन्दसि रुर्वा रेफो वा । भुव इत्यन्तरिक्षम् । भुवरित्यन्तरिक्षम् । छन्दसि प्लुतविकाराविद्गुतौ वाच्यौ । अग्नाऽ३इ पत्नी वः । 'मतुवसो रु संबुद्धौ छन्दसि' ॥८।३।१॥ मत्वन्तस्य वस्वन्तस्य संबुद्धौ पदस्य नकारस्य रुः स्यात् छन्दसि । इन्द्र

मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । 'दाश्वान्साह्वान्मीढ्वांश्च' ॥६।१।१२॥ एते निपात्यन्ते । दाश्वांसो दाशुषः सुतम् । साह्वान् वलाहकः । मीढ्वस्तोकाय तनयाय । मरुत्वान् हरिवान् मीढ्वानिति प्रकृतिः । वन उपसंख्यानम् । यस्त्वायन्तं वसुना प्रातरित्वः । 'उभयथर्क्षु' ॥८।३।८॥ अम्परे छवि नकारस्य रुत्वं नत्वं च ऋक्षु । तस्मिंस्त्वा दधाति । तस्मिन् त्वा दधाति । तांस्त्वं खाद । तान् त्वं खाद । 'दीर्घादटि समानपादे' ॥८।३।९॥ दीर्घान्नकारस्य रुः स्यात् अटि परे स चेदट् नकारश्च ऋक्समानपादे स्यात् । ऋक्ष्विति प्रकृतत्वात् ऋक्पाद एव गृह्यते । देवां अच्छादीव्यत् । महां इन्द्रो य ओजसा । उभयथेत्येव । आदित्यान् याचिषामहे । 'आतोऽटि नित्यम्' ॥८।३।३॥ अटि पर रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः । महाँ इन्द्रः य ओजसा । केचिदनुस्वारमधीयते । तत्र छान्दसो व्यत्ययः । 'स्वतवान् पायौ' ॥८।३।११॥ स्वतवानित्यस्य रुः पायौ । स्वतवाः पायुः । स्वतवाँः पायुः । 'छन्दसि वाप्राम्रेडितयोः' ॥८।३।४९॥ विसर्जनीयस्य सकारो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा । अरुणः कारः । अरुणस्कारः । अयस्पात्रम् । अयःपात्रम् । अप्राम्रेडितयोः किम् । अग्निः प्रविद्वान् । परुषः परुषः । 'कःकरत्करतिकृधिकृतेष्वनदितेः' ॥८।३।५०॥ एषु परेषु अनदितेर्विसर्जनीयस्य सः स्याच्छन्दसि । कः । विश्वतस्कः । अपस्करत् । अपस्करति । उरुणस्कृधि । सदस्कृतम् । अनदितेः किम् । यथा नो अदितिः करत् । 'पञ्चम्याः परावध्यर्थे' ॥८।३।५१॥ पञ्चमीविसर्गस्य सः स्यात् परौ परे उपरिभावे छन्दसि । दिवस्परि प्रथमं जज्ञे । अग्निर्हिमवतस्परि । पञ्चम्याः किम् । अहिरिव भोगैः पर्येति बाहुम् । अध्यर्थे किम् । दिवः पृथिव्याः पर्योज उद्भृतम् । 'पातौ च बहुलम्' ॥८।३।५२॥ पातौ च परे पञ्चमीविसर्गस्य सः स्याद्बहुलं

छन्दसि । दिवस्पातु । राज्ञस्पातु । न च स्यात् । परिषदः पातु । 'इडाया वा' ॥८।३।५४॥ इडाया विसर्गस्य वा सकारः स्यात् षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । इडायास्पतिः । इडायाः पतिः । इत्यादि । 'यजुष्येकेषाम्' ॥८।३।१०४॥ युष्मत्तत्तक्षुषु परत एकेषामाचार्याणां मतेन सस्य मूर्धन्यादेशः स्याद् यजुषि । अर्चिभिष्ट्वम् । अर्चिभिस्त्वम् । अग्निष्टे अग्रम् । अग्निस्ते अग्रम् । अर्चिभिष्टतक्षुः । अर्चिभिस्ततक्षुः । 'स्तुतस्तोमयोश्छन्दसि' ॥८।३।१०५॥ एतयोः परतः सस्य मूर्धन्यो वा । त्रिभिष्टुतस्य । त्रिभिः स्तुतस्य । गोष्टोमम् । गोस्तोमम् । 'पूर्वपदात्' ॥८।३।१०६॥ पूर्वपदस्थान्निमित्तात् परस्य सस्य मूर्धन्य एकेषाम् । द्विषन्धिः । द्विसन्धिः । 'सुञः' ॥८।३।१०७॥ सुञो निपातस्य पूर्वपदस्थान्निमित्तात् परस्य सस्य मूर्धन्यः । अभीषु णः सखीनाम् । ऊर्ध्व ऊ षु णः । 'छन्दस्यृदवग्रहात्' ॥८।४।२६॥ अवग्रह उच्चारभेदः । ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णः स्यात् । नृमणाः । पितृयाणम् । इति ऋकारोवगृह्यते । 'नश्च धातुस्थोरुषुभ्यः' ॥८।४।२७॥ अस्मदादेशस्य नसो णत्वम् । धातुस्थात् तावत् । अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरु णस्कृधि । अभीषु णः सखीनाम् । ऊर्ध्व ऊ षु णः । उदः परस्य स्कन्देश्छन्दसि पूर्वसवर्णो वाच्यः । अग्नेः दूरमुत्कन्दनम् । 'सनोतेरनः' ॥८।३।१०८॥ सनोतेर्मूर्धन्यः । गोषाः । अनकारान्तात् किम् । गोसनि वाचमुदीरयन् । 'सहेः पृतनर्ताभ्यां च' ॥८।३।१०९॥ आभ्यां सहेः मूर्धन्यः । पृतनाषाहम् । ऋताषाहमित्यपि । 'न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्' । ८।३।११०॥ एषां मूर्धन्यो न स्यात् । रपर । विस्रंसिकायाः । सृपि । पुरा क्रूरस्य विसृपः । सृजि । वाचो विसर्जनात् । स्पृशि । दिवस्पृशः । स्पृहि । निस्पृहः । सवनादीनाम् । सवने सवने । सूते सूते । सोमे

सोमे । सवनमुखे सवनमुखे । किंसं किंसम् । अनुसवनम् । अनुसवनम् । गोसनिः । अश्वसनिः । अश्वसनिग्रहणमनिणोपि षत्वमस्तीति ज्ञापनार्थम् । तुराषाहं जलाषाहमित्येतत् सिद्धं भवति । क्वचिदेवं गणपाठः । सवने सवने । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । बृहस्पतिसवनः संज्ञायाम् । शकुनिसवनम् । सोमे सोमे । सूते सूते । संवत्सरे संवत्सरे । विसं विसम् । किंसं किंसम् । मुसलं मुसलम् । गोसनिः । अश्वसनिः । 'निव्यभिभ्योड्व्यवाये वा छन्दसि' ॥८।३।११९॥ एभ्योड्व्यवाये सस्य मूर्धन्यो वा । न्यसीदत् पिता नः । व्यसीदत् । अभ्यसीदत् । न्यस्तौत् । व्यस्तौत् । पक्षे मूर्धन्यः । न्यषीदत् । व्यषीदत् । अभ्यष्टौत् । एवं छान्दसानि शिष्टानि सूत्राणि व्याख्याय वैदिकाः कियन्तः प्रयोगा दर्शिताः । एवमन्येप्यूह्याः ।

श्री रामाचार्यसूनुर्हरिहरभजनैकाप्तधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला वैदिकी प्रक्रियेयम्* ।

---

* Here follows in $Dc_1$ :—

याद‍ृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
छ । छ । श्रीः । श्रीः । छ । छ ।

संवत् १६०९ वर्षे ज्येष्ठ वदि ९ शुक्रे अद्येह श्रीसूर्यपुरवास्तव्य आभ्यन्तरनागरज्ञातीयस्मार्तवासुदेवकेन लिखितमिदं पुस्तकम् । छ । छ । श्रीरस्तु । शुभं भवतु । कल्याणमस्तु ।

तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् ।
परहस्तगताद्रक्षेदेवं वदति पुस्तिका ॥ १ ॥ छ । छ । $Dc_1$.

अथ 'लिति' इत्यस्य सूत्रस्य व्याख्यानेनोपलक्षितव्याख्यानानि स्वरसूत्राणि व्याकुर्वद्भिरस्माभिः स्वरप्रक्रियोच्यते । उदात्तोनुदात्तः स्वरितश्चेति त्रयः स्वराः । तल्लक्षणानि पूर्वत्रैवोक्तानि । चतुर्थोपि प्रचयाख्यः स्वर इति पाठका यं लक्षणकारा एकश्रुतिरिति वदन्ति । तांश्च स्वरान् साधारणप्रकृतिप्रत्ययसमासतिङन्तस्वरप्रकरणेषु प्रदर्शयिष्यामः । ततो वैदिकवाक्येषु स्वरप्रदर्शनप्रकरणं षष्ठं भवति । तत्र सुबन्ततिङन्तयोः प्रसङ्गेनोक्ताः स्वरास्ततो ज्ञेयाः । इह त्वनुक्ता एवोच्यन्ते । तत्र तावत् साधारणस्वरप्रक्रियाप्रकरणम् ।

'अनुदात्तं पदमेकवर्जम्' ॥६।१।१५८॥ परिभाषेयं स्वरविधिविषया । यत्र पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं पदमनुदात्ताच्कं स्यात् । गोपायतीत्यत्रायप्रत्ययान्तस्य 'धातोः' इत्यन्तोदात्तत्वे कृते यकारात्परमकारमुदात्तं वर्जयित्वा शेषं पदमनुदात्ताच्कम् ।

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥

आगमस्य । 'चतुरनडुहोरामुदात्तः' । चत्वारः । 'चतेरुरन्' इत्युरन्प्रत्ययान्तत्वात् चतुर् आद्युदात्तः । असत्येतस्मिन् चतुरः प्रकृतेरागमस्य च पृथक् स्वरः स्यात् । सति त्वेतस्मिन्नेकवर्जस्वरे सति शिष्टत्वादागमस्वरः प्रकृतिस्वरं बाधते । विकारस्य । अस्थनि । दधनि । 'अस्थिदधि—' इत्यनङ् । विकार उदात्तः । दधिशब्दः किन्प्रत्ययान्तत्वादन्तोदात्तः । अत्राप्यसत्येकवर्जस्वरे दधिशब्दस्यानङश्च पृथगेवोदात्तत्वं स्यात् । अस्मिंस्तु सत्यनङेव सति शिष्टत्वात् । प्रकृतेः । गोपायति । गुपिः 'धातोः' इत्यन्तोदात्तः । आयप्रत्ययस्तु 'आद्युदात्तश्च' इत्याद्युदात्तः ।

१. Before it PC. has—ओं नमो गणेशाय । २. तु पूर्व° Dc3. ३. स्वरविस्तरप्रदर्शन° Dc3.

गोपायतीति तु 'सनाद्यन्ता धातवः' इति धातुत्वादन्तोदात्तः । एवं पृथक् स्वरे प्राप्ते यकारस्यैव धातुस्वरः स्यात् सति शिष्टत्वात् । प्रत्ययस्य । कर्तव्यम् । धातोरन्तोदात्तत्वे प्रत्ययस्याद्युदात्तत्वे प्राप्ते प्रत्ययाद्युदात्तत्वमेव । सति शिष्टत्वादेव । परनित्यान्तरङ्गापवादैः स्वरैर्व्यवस्था सति शिष्टेन च । सति शिष्टस्वरो बलीयानिति वक्तव्यमन्यत्र विकरणेभ्य इति वचनात् । यो हि यस्मिन् सति शिष्यते स तद्बाधकः स्यात् । तथानन्तरमेव प्रदर्शितम् । तथा च कृष्णोत्तरासङ्गपुत्र इत्यत्र समासस्वरापवादो बहुव्रीहिस्वरः सति शिष्टेन समासस्वरेणैव बाध्यते । विकरणस्वरस्तु सति शिष्टोपि सार्वधातुकस्वरं न बाधते । लुनीत इत्यत्र तस एव स्वरः स्यादाद्युदात्तत्वम् । 'तत्पुरुषे तुल्यार्थ—' इति प्रकृतिभावेन निपातस्य नञो यदाद्युदात्तत्वं तेन उत्तरपदस्वरो बाध्यते । विभक्तिनिमित्ताच्च स्वरान्नञ्स्वरो बलीयानिति वाच्यम् । अचत्वारः । यस्य विभक्तिर्निमित्तमामस्तस्य यदुदात्तत्वं तत् सति शिष्टमपि नञ्स्वरेण बाध्यते । यच्चोपपदं कृति नञ् तस्य स्वरो बलीयानिति वक्तव्यम् । अकरणिर्हं ते वृषल भूयात् । सहनिर्दिष्टस्य स्वरो बलीयानिति वाच्यम् । अध्यगीषि भाष्यम् । पदग्रहं वाक्ये पृथक्पदस्वरार्थम् । देवदत्त गामभ्याज शुक्लां दण्डेनेति । परिमाणार्थं चैतत्पदग्रहणम् । तेन यस्य पदसंज्ञा भविष्यति तत् पदमित्युच्यते न सुप्तिङन्तम् । तेनैव तत्पदाधिकारस्य निवृत्तिं करोतीति ततः प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं स्यात् । तथा च कुवल्या विकारः कौवलमित्यत्रानुदात्तलक्षणोञ् सिद्धः स्यात् । 'अनुदात्तस्य च यत्रोदात्तलोपः' ॥६।१।१६१॥ यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । कुमार ई कुमारी । कुमारशब्दोन्तोदात्तः । तस्य ङीप्यनुदात्ते उदात्तो लुप्यते । अनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम् । अन्त इति हि

प्रकृतत्वादन्तस्य स्यात् । मा हि धुक्षाताम् । यत्रेति किम् । भार्गवः । भार्गवौ । भृगवः । प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक् । उदात्तलोप इति किम् । वैदी । अत्र ह्यनुदात्तलोपः । 'चौ' ॥६।१।२२२॥ चावित्यञ्चतिर्लुप्तनकारः । तत्र परे पूर्वस्यान्त उदात्तः । दधीचः पश्य । मधूचः पश्य । उदात्तनिवृत्तिस्वरापवादः । अतद्धिते इति वाच्यम् । दाधीचः । प्रत्ययस्वरोऽत्र । 'आमन्त्रितस्य च' ॥६।१।१९८॥ आमन्त्रितविभक्त्यन्तस्यादिरुदात्तः स्यात् । विप्र । विप्रौ । विप्राः । लुमता लुप्ते प्रत्ययलक्षणमत्रेष्यते । सर्पिरागच्छ । सप्तागच्छेति । 'आमन्त्रितस्य च' ॥८।१।१९॥ इदं त्वष्टमाध्यायस्थम् । षाष्ठिकस्यानन्तरोक्तस्यापवादः । अत्र च पदस्य पदात् अनुदात्तं सर्वमपादादावित्यनुवर्तते । आमन्त्रितान्तस्य पदात्परस्यापादादौ वर्तमानस्य सर्वस्यानुदात्तः स्यात् । पचसि देवदत्त । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । नेह । यज्ञदत्त पचसि । देवदत्त आगच्छ । अयं दण्डो हरानेन ओदनं पच तव भविष्यति । 'आम एकान्तरमामन्त्रितमनन्तिके' ॥८।१।५५॥ आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके विषयेऽनुदात्तं न स्यात् । आम् पचसि देवदत्ता३ । आम् भो देवदत्ता३ । भो इत्यामन्त्रितान्तरेऽपि प्रतिषेध इष्यते । प्लुतोदात्तः पुनरसिद्धत्वान्न प्रतिषिध्यते । अन्ये त्वाहुः । अनन्तिक इत्यनेन यन्न दूरं न संनिकृष्टं तत् परिगृह्यते तेनात्रैकश्रुतेरप्राप्तिरेव । प्लुतोऽपि नोदाहार्य इति । 'आमन्त्रितं पूर्वमविद्यमानवत्' ॥८।१।७२॥ आमन्त्रितान्तं पूर्वमामन्त्रितकार्यस्य प्रयोजकं न स्यात् । देवदत्त यज्ञदत्त । आमन्त्रितस्य पदात् परस्येति निघातोऽत्र न भवति । हे देवदत्त पचसि इति 'तिङ्ङतिङः' इति निघातो न । देवदत्त तव ग्रामः स्वम् । अत्र युष्मदादेशो न । इत्युदाहार्यम् । 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' ॥८।१।७३॥ पर्यायेषु मा भूदिति । अघ्न्ये देवि सरस्वति । 'विभाषितं

विशेषवचने बहुवचनम् ' ॥८।१।७४॥ आमन्त्रितान्ते विशेषवचने परे पूर्वामन्त्रितान्तमविद्यमानवद्वा। देवाः शरण्याः। ब्राह्मणा वैयाकरणाः। बहुवचनं किम्। माणवक जटिलकाशे। नित्यं विद्यमानवदेव। ' सुबामन्त्रिते पराङ्गवत् स्वरे ' ॥२।१।२॥ सुबन्तमामन्त्रिते परे परस्याङ्गवत् स्यात् स्वरे कार्ये। तादात्म्यातिदेशोयम्। सुबन्तमामन्त्रितमनुप्रविशति। कुण्डेनाटन्। मद्राणां राजन्। इत्याद्युदाहर्तव्यम्। सुप् किम्। पीड्ये पीड्यमान। आमन्त्रिते किम्। गेहे गार्ग्यः। परेति किम्। पूर्वस्य मा भूत्। देवदत्त कुण्डेनाटन्। अङ्गग्रहणं किम्। उभयोराद्युदात्तत्वं मा भूत्। पिण्डीभूतस्य स्यादिति। वत्करणं स्वाश्रयमपि यथा स्यात्। आं कुण्डेनाटन्। एकान्तरता भवति। समानाधिकरणस्योपसंख्यानमनन्तरत्वात्। तीक्ष्णया सूच्या सीव्यन्। अव्ययानां निषेधः। उच्चैरधीयान। ' उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य ' ॥८।२।४॥ उदात्तस्थाने यो यणादेशस्तथा स्वरितस्य स्थाने यो यणादेशस्तस्मात्परस्यानुदात्तस्य स्वरित आदेशः स्यात्। उदात्तयणः। कुमार्यै। उदात्तनिवृत्तिस्वरेणायमीकार उदात्तस्तस्य यो यण् तस्मात्परस्यानुदात्तस्य विभक्त्यैकारस्य स्वरितो जातः। स्वरितयणः। सकलूव्याशा। कृत्स्वरेणान्तोदात्तः। तस्य यो यणादेशः स उदात्तयण्। ततः परस्य सप्तम्येकवचनस्य स्वरितस्य यो यण् तस्मात् स्वरितयणः परस्याशाशब्दाकारस्यानुदात्तस्य स्वरितो जातः। ननु चात्र यणादेशे कार्ये यदुदात्तयणः परस्य सप्तम्येकवचनस्य स्वरितत्वं तत् ' पूर्वत्रासिद्धम् ' इत्यसिद्धम्। तत् कथमयं स्वरितयण् स्यात्। अथोच्येत आश्रयात्सिद्धं स्यादिति तर्हि ' उदात्तादनुदात्तस्य स्वरितः ' इत्यस्याप्याश्रयात्सिद्धत्वं स्यात्। ततश्च दध्याशेत्यत्र दधिशब्द आद्युदात्तः शेषनिघातः ' उदात्तादनुदात्तस्य स्वरितः ' इति तस्य स्वरितत्वं तस्याप्याश्रयात् सिद्धत्वात् तत्स्थानिकादपि यणः परस्यानुदात्तस्य स्वरितः प्रसज्येत। अत्रोच्यते। अस्ति ह्यत्र वार्तिकम्। यण्स्वरो यणादेशे सिद्धो वक्तव्यः स्वरितयणः स्वरितार्थ इति।

तेनास्यैव स्वरितस्याश्रयात् सिद्धत्वं स्यात् नान्यस्य । ननु चात्र स्वरितयण्ग्रहणं न कार्यम् । यतः खलप्व्याशेत्येवमादावुदात्तयण इत्येव स्वरितः सिद्धः । न च वाच्यं न सिद्धः । स्वरितयणा व्यवधानादिति । स्वरविधौ व्यञ्जनमविद्यमानवदिति तस्याविद्यमानत्वेन व्यवधायकत्वाभावादिति चेदुच्यते । पूर्वस्मादपि हि विधौ 'अचः परस्मिन्—' इति स्थानिवत्त्वमाश्रितमिति व्यवधानमस्त्येव । न च वाच्यं स्वरविधौ स्थानिवत्त्वे 'न पदान्त' इति निषेध इति । यतः स्वरदीर्घयलोपेषु लोपाजादेशस्यैवास्थानिवत्त्वात् । उदात्तस्वरितयोः किम् । शार्ङ्गरव्याशा । अनुदात्तयणादेशोयम् । अनुदात्तस्येति किम् । कुमार्यत्र । अत्रेत्याद्युदात्तो लित्स्वरेण । 'एकादेश उदात्तेनोदात्तः' ॥८।२।५॥ उदात्तेन सहानुदात्तस्य एकादेशे स उदात्तः स्यात् । अग्नी । वायू । अग्निवायू प्रातिपदिकस्वरेणान्तोदात्तौ । विभक्तिरनुदात्ता । उदात्तेनेति किम् । पचन्ति । अन्तीत्यस्य लसार्वधातुकत्वानुदात्तत्वे कृते शबकारस्य च यदुदात्तादनुदात्तस्य स्वरित इति तस्यासिद्धत्वाद्द्वयोरनुदात्तयोरेकादेशः । 'स्वरितो वानुदात्ते पदादौ' ॥८।२।६॥ अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितः स्यादुदात्तो वा । सु उत्थितः । सूत्थितः । सुशब्दस्य 'सुः पूजायाम्' इति कर्मप्रवचनीयस्यापि स्वती पूजायामिति प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वम् । शेषमनुदात्तम् । तेनानुदात्ते पदादावेकादेशो भवति । वि ईक्षते । वीक्षते । तिङन्तनिघाते कृते एकादेशः । स्वरितग्रहणं विस्पष्टार्थम् । उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यतः स्वरित एव स्यात् । अनुदात्ते किम् । देवदत्तोत्र । पदादौ किम् । वृक्षौ । वृक्षाः । एकादेशस्वरोन्तरङ्गः सिद्धो वाच्यः । किमर्थम् । अयाद्यावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् । अय् । वृक्ष इदमित्यत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः । स 'एकादेश—' इत्युदात्तः । तस्य सिद्धत्वं वाच्यम् ।

आन्तर्यतोऽयादेश उदात्तो यथा स्यादिति । आयू । कुमार्या इदम् । यदि 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वे कृते विभक्तेराटश्चैकादेशस्तदा स्यादिदं प्रयोजनम् । अथ कृते एकादेशे 'उदात्तयणो हल्पूर्वात्' इति स्वरस्तदा नैतदस्य प्रयोजनं भवति । आव् । वृक्षाविदम् । एकादेशस्वरः । गाङ्गेऽनूप इति । गाङ्गेशब्दे य एकारः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः तस्य सिद्धत्वात् यः पुनः 'एङः पदान्तादति' इत्येकादेशः स उदात्तेन सह भवति । ततश्च 'स्वरितो वानुदात्ते पदादौ' इति पक्षे स्वरितः स्यात् पक्षे उदात्तो भवति । शतृस्वरः । तुदती । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे कृते एकादेश उदात्तस्तस्य सिद्धत्वात् 'शतुरनुमो नद्यजादी' इत्येष स्वरो भवति । एकाननुदात्तः । तुदन्ति । एकादेशस्वरस्य सिद्धत्वात् 'अनुदात्तं पदमेकवर्जम्' इति वर्ज्यमानता स्यात् । सर्वानुदात्तः । ब्राह्मणास्तुदन्ति । एकादेशस्वरस्य सिद्धत्वात् कृते तस्मिन् 'तिङ्ङतिङः' इति निघातः स्यात् । अन्तरङ्ग इति वचनाद्बहिरङ्गस्यासिद्धत्वमेव । पचतीति । इतिशब्दो निपातत्वादाद्युदात्तः । अत्र बाह्यपदापेक्षत्वादेकादेशस्य बहिरङ्गत्वान्न तत्स्वरो बहिरङ्गस्यासिद्धत्वाद्वर्ज्यमानता न । 'उदात्तादनुदात्तस्य स्वरितः' ॥८।४।६६॥ उदात्तात् परस्यानुदात्तस्य स्वरित आदेशः स्यात् । गार्ग्यः । अस्य स्वरितस्यासिद्धत्वात् 'अनुदात्तं पदमेकवर्जम्' इत्येतन्न प्रवर्तते । तेनोदात्तः स्वरितश्चेति द्वावपि श्रूयेते । 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' ॥८।४।६७॥ उदात्तपरोनुदात्तः स्वरितो न भवति । गार्ग्यस्तत्र । तत्रेत्याद्युदात्ते परे गार्ग्यन्तो न स्वरितः । गार्ग्यादीनां तु मते स्वरित एव । 'तस्यादित उदात्तमर्धह्रस्वम्' ॥१।२।३२॥ उदात्तानुदात्तसमाहारः स्वरित इत्युक्तम् । तस्यादावर्धह्रस्वमुदात्तं स्यात् शेषमनुदात्तम् । अर्धह्रस्वमित्यर्धमात्रा लक्ष्यते । शिक्यमित्यत्रादितोर्धमात्रा उदात्ता

१. दीर्घत्वा or एकादेशत्वा.

अर्धमात्रा अनुदात्ता । कन्या इत्यत्रार्धमात्रादित उदात्ता अध्यर्ध-मात्रा अनुदात्ता । माणवका३ इत्यत्रादितोर्धमात्रोदात्ता अर्धतृतीय-मात्रानुदात्ता । इत आरभ्य नवसूत्राण्यसिद्धकाण्डे उदात्तस्ये-त्यस्मात्पराणि पठितव्यानि । एतद्विभागाख्यानमाष्टमिकस्यापि यथा स्यात् । उत्तरत्रापि प्रयोजनं तत्र तत्र वक्ष्यामः । 'एकश्रुति दूरात् संबुद्धौ' ॥१।२।३३॥ त्रैस्वर्ये पदानां प्राप्ते आरम्भः । एका श्रुतिर्यस्य तदिदमेकश्रुति । संबोधयति येन तदिदं संबोधनं संबुद्धि रेकवचनम् । दूरात्संबोधने एकश्रुति वाक्यं स्यात् । स्वराणामुदात्ता-दीनां भेदतिरोधानमेकश्रुतिः । आगच्छ भो माणवक देवदत्ता ३। दूरात् किम् । आगच्छ भो माणवक देवदत्त । 'यज्ञकर्मण्यजप-न्यूङ्खसामसु' ॥१।२।३४॥ यज्ञकर्मणि मन्त्राणां वैकश्रुत्यं स्यात् जपन्यूङ्खसामानि वर्जयित्वा । अपां रेतांसि जिन्वतो३म् । यज्ञकर्मणीति किम् । स्वाध्यायकाले मा भूत् । अजपादिष्विति किम् । ममाग्ने वर्चो विहवेष्वस्तु । न्यूङ्खाः षोडश ओंकाराः । तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्राः । इतरे त्रयोदश अनुदात्ता अर्धाकाराः । एतच्च आश्वलायनेनोक्तमुदाहृतं च । सामानि वाक्यविशेषस्था गीतयः । ए३विश्वं समत्रिणं दहा३ । 'उच्चैस्तरां वा वषट्कारः' ॥१।२।३५॥ यज्ञकर्मणि वषटार उच्चैस्तरां वा स्यात् एकश्रुतिर्वा । वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते । वौषड्ग्रहणं तु वैचित्र्यार्थं न कृतम् । सोमस्याग्ने वीही३वौ३षट् । 'विभाषा छन्दसि' ॥१।२।३६॥ छन्दसि विषये विभाषा एकश्रुतिः स्यात् । पक्षे त्रैस्वर्य-मेव । वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थम् । अग्निमीळे पुरोहितम् । अ॒ग्निमी॑ळे पु॒रोहि॑तम् । केचित्त्वियं व्यवस्थित-विभाषेत्याहुः । ततश्च ऋग्वेदब्राह्मणादिविषया एकश्रुतिः । त्रैस्वर्य-विज्ञानं तु ऋग्वेदसंहिताविषयमिति । 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' ॥१।२।३७॥ अत्र 'यज्ञकर्मणि' 'विभाषा छन्दसि'

इति च प्राप्तैकश्रुतिर्निषिध्यते । सुब्रह्मण्यो ३ मिन्द्र आगच्छ हरिव आगच्छ । मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन् । अत्र सुब्रह्मण्योमित्योकारः स्वरितः । उदात्तस्वरितयोरेकादेशत्वात् । तस्योदात्तोऽनेन विधीयते । इन्द्र इति 'आमन्त्रितस्य च' इत्याद्युदात्तम् । आष्टमिकस्तु निघातोऽसमानवाक्यत्वान्न तस्य । द्वितीयो वर्णः 'उदात्तादनुदात्तस्य—' इति स्वरितः प्रसक्तः तस्यानेनोदात्तः । आगच्छेत्याकार उदात्तः । ततः परोऽनुदात्तः स्वरितः । तस्यानेनोदात्तः । छेत्यनुदात्तः । हरिव आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ताः । द्वावनुदात्तौ । मेधातिथेरिति षष्ठ्यन्तं परमामन्त्रितमनुप्रविशति । पराङ्गवद्भावात् । ततः सकलस्यामन्त्रितस्याद्युदात्तत्वे कृते द्वितीयाक्षरमनुदात्तं स्वरितस्योदात्तः शेषमनुदात्तम् । वृषणश्वस्य मेने इति गौरावस्कन्दिन्निति अहल्यायै जार इति पूर्वेण समानानि । कौशिकब्राह्मणेति गौतमब्रुवाणेति चेन्द्रेत्यनेन समानम् । श्वः सुत्यामागच्छ मघवन्निति आमन्त्रितं निहन्यते । 'देवब्रह्मणोरनुदात्तः' ॥ १।२।३८॥ सुब्रह्मण्यायामेव देवब्रह्मण इति पठ्यते । तत्र पूर्वेण स्वरितस्योदात्तः प्राप्तोऽनेनानुदात्तो विधीयते । देवा ब्रह्माण आगच्छत । द्वयोरपि पदयोरामन्त्रितत्वादाद्युदात्तत्वे शेषनिघाते उदात्तादनुदात्तस्य स्वरितत्वे कृते तस्यानुदात्तः स्यात् । 'स्वरितात् संहितायामनुदात्तानाम्' ॥ १।२।३९॥ संहितायां विषये स्वरितात् परेषामनुदात्तानामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति । इममित्यन्तोदात्तं म इत्यनुदात्तम् । विधानकाल एव निघातविधेः । तत्पुनर् 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितं संपद्यते । ततः परेषां गङ्गेप्रभृतीनामनुदात्तानामेकश्रुतिर्भवति । सर्व एते आमन्त्रितनिघातेनानुदात्ताः । संहितायां किम् । अवग्रहे मा भूत् । इमं मे गङ्गे यमुने सरस्वति । 'उदात्तस्वरितपरस्य

सन्नतरः' ॥१।२।४०॥ उदात्तात् पूर्वस्य स्वरितात् पूर्वस्यानुदात्तस्यानुदात्ततरः आदेशः स्यात् । पृश्निमातरोऽपः । मातर इत्यनुदात्तः । अपइत्यन्तोदात्तः । तत्रानुदात्तस्वरितयोर्य एकादेश ओकारः सोऽनुदात्तः । तस्योदात्ते परेऽनुदात्ततर आदेशः स्यात् । अध्यापक क्व गन्ता । अध्यापकेत्याद्युदात्तः । क्वेति स्वरितः । तस्मिन् परे क्वेत्यनुदात्तस्य सन्नतर आदेशः । 'अनुदात्तं च' ॥ ८।१।३॥ द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । भुङ्क्ते भुङ्क्ते ॥

इति साधारणप्रक्रिया ॥

अथ प्रकृतिस्वरप्रकरणमुच्यते । प्रकृतिस्तु द्विधा धातुः प्रातिपदिकं च । तत्र तावद्धातुस्वर उच्यते । 'धातोः' ६।१।१६२॥ धातोरन्त उदात्तः स्यात् । क्विबन्ता धातवः सर्वे उदाहरणम् । गोपायतं नः । अभिजित् विश्वजिदित्यादौ गतिकारकोपपदात् कृदिति कृदुत्तरपदप्रकृतिस्वरत्वे धातुस्वर एव । यत्र प्रत्ययः तथा धातुस्वरं न बाधते तदप्युदाहरणम् । पचति । पठति । तत्र शप्तिपौ पित्त्वादनुदात्तौ । तेन धातुस्वर एवावतिष्ठते । 'स्वपादिहिंसामच्यनिटि' ॥ ६।१।१८८॥ स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपन्ति । श्वसन्ति । हिंसन्ति । पक्षे प्रत्ययस्वरेण मध्योदात्तता । स्वपन्ति । श्वसन्ति । हिंसन्ति । स्वपादिरदाद्यन्तर्गणो वृत्करणावधिः । अचि किम् । स्वप्यात् । अनिटि किम् । स्वपिताः । ङित्यजादावयं विधिरिष्यते । इह न । स्वपानि । 'अभ्यस्तानामादिः' ॥६।१।१८९॥ अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः स्यात् । ददति । दधति । जक्षति । आदिरिति वर्तमाने पुनरादिग्रहो नित्यार्थः । अचीत्येव । दद्यात् । अनिटीत्येव । जक्षिव । 'अनुदात्ते च' ॥६।१।१९०॥ अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः । ददाति । दधाति । अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ।

ततश्च मा हि स्म दधादित्यत्रेकारस्यानुदात्तस्य लोपेप्याद्युदात्तता स्यात् । दधात्यत्रेत्यत्रेकारस्य यणादेशे कृतेपि स्यात् । 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति' ॥६।१।१९२॥ भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं स्यात् । बिभेति । जिह्रेति । बिभर्ति । जुहोति । ममत्तु नः । जजनदिन्द्रम् । दधनत् । दरिद्राति । जागर्ति । पिति किम् । दरिद्रति । 'आदिर्णमुल्यन्यतरस्याम्' ॥६।१।१९४॥ णमुलि परेभ्यस्तानामादिर्वोदात्तः स्यात् । लोलूयं लोलूयम् । आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयशब्दः पक्षे आद्युदात्तः । अपरोत्र लित्स्वरेण मध्योदात्तः । 'अचः कर्तृयकि' ॥६।१।१९५॥ उपदेशेजन्तानां धातूनां कर्तृयकि परे आदिरुदात्तो वा । लूयते केदारः स्वयमेव । २ । यदाद्युदात्तत्वं न तदा सार्वधातुकनिघाते यक एव स्वरः स्यात् । जनादीनामुपदेश एवात्वं द्रष्टव्यम् । तत्राप्यस्य स्वरस्येष्टिः । जायते स्वयमेव । सायते । खायते । अचि किम् । भिद्यते स्वयमेव । कर्तृयकि किम् । लूयते केदारो देवदत्तेन । 'चङ्यन्यतरस्याम्' ॥६।१।२१८॥ चङन्ते धातावुपोत्तममुदात्तं वा । मा हि चीकरताम् । 'न माङ्योगे' इत्यटि निषिद्धे 'हि च' इति निघाते 'अदुपदेशात्' इति लसार्वधातुकत्वानुदात्तत्वे च कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः स्यात् ।

इति धातुस्वरः ।

अथ प्रातिपदिकस्वरः । स चाष्टाध्याय्यां केषांचित् प्रातिपदिकानां साक्षात् सूत्रैरुक्तः । अनुक्तस्य तु कृदन्तस्य तद्धितान्तस्य च प्रातिपदिकस्य कृत्तद्धितप्रत्यययोर्ज्ञेयः । शेषस्य तु प्रातिपदिकस्य उणादिव्युत्पत्तिपक्षे उणादिप्रत्यये ज्ञेयः । अव्युत्पत्तिपक्षे फिट्सूत्रे ज्ञेयः । एतच्च पक्षद्वयं **महाभाष्य** एवोक्तम् । उणादयो व्युत्पन्नानि प्रातिपदिकानि उणादयोऽव्युत्पन्नानि प्रातिपदिकानीत्युक्तेः । **यास्केनाप्युक्तं** मतद्वयम् । **नामान्याख्यातजानीति शाकटायनो** नैरुक्तसमयश्च न **सर्वाणीति**

गार्ग्यौ वैयाकरणानां चैके इति । फिट्सूत्राण्यग्रे व्याख्यास्यामः । यथावसरं चाष्टाध्याय्युक्तान्येव समाससूत्राणि व्याख्यास्यामः । 'कर्षात्वतो घञोन्त उदात्तः' ॥६।१।१५९॥ कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् । कर्षः । पाकः । दायः । 'ञ्नित्यादिर्नित्यम्' इत्यस्यापवादः । 'उञ्छादीनां च' ॥६।१।१६०॥ अन्त उदात्तः । यथायोगं प्राप्तस्य स्वरस्यापवादः । उञ्छः । म्लेच्छः । जल्पः । एते घञन्ताः । जप व्यध इत्यबन्तौ । केचित् वध इत्याहुः । युग इति घञन्तः । निपातनादगुणत्वं कालविशेषे रथाद्यवयवे च प्रयोगः । अन्यत्र योग इत्येव । गरशब्दोबन्तो दूष्य एवान्तोदात्तः । गरो विषम् । वेगवेदचेष्टबन्धाः करणे घञन्ताः । भावे त्वाद्युदात्ता एव । स्तुयुद्रुवश्छन्दसि । परिष्टुत् । सुयुत् । परिद्रुत् । वर्तनिशब्दः सामस्थोन्तोदात्तः । श्वभ्रे दरः । श्वभ्रे दरशब्दोन्तोदात्तः । साम्बतापौ गर्हायाम् । उत्तमशश्वत्तमौ सर्वत्र । केचिद्भावगर्हायामित्यनुवर्तयन्ति । भक्षमन्थभोगदेहा घञन्ताः । 'चतुरः शसि' ॥६।१।१६७॥ चतुरोन्त उदात्तः शसि परे । चतुरः पश्य । इह न स्यात् । चतस्रः पश्य । 'झल्युपोत्तमम्' ॥६।१।१८०॥ षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् । पञ्चभिः । तिसृभिः । चतुर्भिः । मध्योदात्ताः संपन्नाः । झलि किम् । पञ्चानाम् । उपोत्तमं किम् । षड्भिः । 'विभाषा भाषायाम्' ॥६।१।१८१॥ अनन्तरे विधौ विकल्पोयम् । पञ्चभिः । २ । तिसृभिः । २ । चतसृभिः । २ । 'सर्वस्य सुपि' ॥६।१।१९१॥ सुपि परे सर्वशब्दस्यादिरुदात्तः । सर्वः । सर्वौ । सुपि किम् । सर्वतरः । प्रत्ययलक्षणेनाप्ययमिष्यते । सर्वस्वरोनकच्कस्य वाच्यः । सर्वकः । अन्तोदात्तः । 'ञ्नित्यादिर्नित्यम्' ॥६।१।१९७॥ ञिति निति च परे नित्यमादिरुदात्तः स्यात् । 'गर्गादिभ्यो यञ्' । गार्ग्यः । 'वासुदेवार्जुनाभ्यां वुन्' । वासुदेवकः । आद्युदात्तानि स्वपदानि संपन्नानि ।

प्रत्ययलक्षणमत्र नेष्यते । गर्गाः चञ्चा इत्यत्र यञि कनि च लुप्ते न । प्रत्ययस्वरापवादः । 'पथिमथोः सर्वनामस्थाने' ॥६।१।१९९॥ आदिरुदात्तः । पन्थाः । पन्थानौ । मन्थाः । मन्थानौ । सर्वनामस्थाने किम् । पथः पश्य । मथः पश्य । उणादिकेन्प्रत्ययान्तत्वादन्तोदात्तौ । उदात्तनिवृत्तिस्वरेणान्तोदात्ते संपन्ने । प्रत्ययलक्षणमत्रापि नेष्यते । ततः पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः । 'अन्तश्च तवै युगपत्' ॥६।१।२००॥ तवैप्रत्ययान्तस्यादिश्चान्तश्च युगपदुदात्तौ स्तः । युगपद्ग्रहणं पर्यायेण मा भूदिति । अन्यथैकवर्जमिति वचनाद्यौगपद्यं न स्यात् । 'क्षयो निवासे' ॥६।१।२०१॥ आद्युदात्तः । क्षये जागृहि । निवासादन्यत्र एरजन्तोदात्तः । क्षयो वृषलानाम् । 'जयः करणम्' ॥६।१।२०२॥ करणवाची जय आद्युदात्तः । जयत्यनेनेति जयोऽश्वः । करणं किम् । जयो ब्राह्मणानाम् । भावे एरजन्तोदात्तः । 'वृषादीनां च' ॥६।१।२०३॥ आदिरुदात्तः । वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । नयः । तयः । आमः । वेदः । बन्धः । अजन्ताः । गय इति गायतेर्निपातनात्वादेत्वम् । सूदः । इगुपधलक्षणः कः । गुहा । भिदाद्यङ् । शमरणौ संज्ञायां संमतौ भावकर्मणोः । शमो भावे रणः कर्मणि निपातनादजन्तौ । मन्त्रः अजन्तः । शान्तिः क्तिजन्तः । कामः । यामः । घञन्तौ । आराधाराकारा अङन्ताः । वहः घान्तः । कल्पः अजन्तः । पादो घञन्तः । तत्र क्वचित् 'कर्षात्वतः—' अनेनान्तोदात्ते प्राप्ते आद्युदात्तः । वृषादिराकृतिगणः । अविहितमाद्युदात्तत्वं वृषादिषु । 'संज्ञायामुपमानम्' ॥६।१।२०४॥ आद्युदात्तः । चञ्चेव चञ्चा । कनोऽत्र लुप् । किमर्थमुच्यते प्रत्ययलक्षणत्वादाद्युदात्तत्वं सिद्धम् । एवं तर्ह्येतत् ज्ञापयति स्वरविधौ क्वचित् प्रत्ययलक्षणं नेति । तथैवोदाहारि । संज्ञायां किम् । अग्निर्माणवकः । उपमानं किम् । देवदत्तः । 'निष्ठा च द्व्यजनात्' ॥६।१।२०५॥ निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तः

स चेदादिराकारो न। दत्तः। गुप्तः। प्रत्ययस्वरापवादः। निष्ठा किम्। देवः। द्व्यच् किम्। रक्षितः। अनात् किम्। त्रातः। 'शुष्कधृष्टौ' ॥६।१।२०६॥ एतावाद्युदात्तौ। शुष्कः। धृष्टः। असंज्ञार्थम्। 'आशितः कर्ता' ॥६।१।२०७॥ कर्तृवाच्याशितः आद्युदात्तः। आशितो देवदत्तः। 'रिक्ते विभाषा' ॥६।१।२०८॥ आदिरुदात्तो वा। रिक्तम्। २। 'जुष्टार्पिते च छन्दसि' ॥६।१।२०९॥ छन्दस्येतावाद्युदात्तौ। जुष्टः। २। अर्पितः। २। भाषायां प्रत्ययस्वरेणान्तोदात्तौ। 'नित्यं मन्त्रे' ॥६।१।२१०॥ पूर्वोक्तं मन्त्रे नित्यम्। जुष्टो देवानाम्। अर्पितः पितॄणाम्। केचिदत्रार्पितशब्दं नानुवर्तयन्ति। अन्तोदात्तो हि मन्त्रे पठ्यते। त्रिशता न शङ्कवोऽर्पिता इति। 'युष्मदस्मदोर्ङसि' ॥६।१।२११॥ एतौ मदिक्प्रत्ययान्तावन्तोदात्तौ ङसि आद्युदात्तौ स्तः। तव स्वम्। मम स्वम्। 'ङयि च' ॥६।१।२१२॥ ङयि च परे पूर्वोक्तम्। तुभ्यम्। मह्यम्। 'यतो नावः ॥६।१।२१३॥ द्व्यजिति वर्तते। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तः। न च नौशब्दात् परो यत्। चेयम्। जेयम्। कण्ठ्यम्। अनावः किम्। यदि नाव्यं तरेत्। द्व्यच इत्येव। चिकीर्ष्यम्। 'ईडवन्दवृशंसदुहां ण्यतः ॥६।१।२१४॥ एषां ण्यदन्तानामादिरुदात्तः। ईड्यम्। वन्द्यम्। वार्यम्। शस्यम्। दोह्यम्। 'विभाषा वेण्विन्धानयोः' ॥६।१।२१५॥ अनयोरादिरुदात्तो वा। वेणुः। २। इन्धानः। २। वेणुरित्युपमानं यदा तदा 'संज्ञायामुपमानम्' इति नित्यमाद्युदात्तत्वमिष्यते। 'त्यागरागहासकुहश्वठक्रथानाम्' ॥६।१।२१६॥ आदिरुदात्तो वा। त्यागः। २। रागः। २। हासः। २। एते घञन्ताः। पक्षे कर्षात्वत इत्यन्तोदात्ताः। कुहः। २। श्वठः। २। क्रथः। २। एते जन्ताः। 'मतोः पूर्वमात् संज्ञायां स्त्रियाम्' ॥६।१।२१९॥ मतोः पूर्व आकार उदात्तः स्यात् स्त्रीनाम्नि। उदुम्बरावती। शरावती। 'शरादीनां च' इति दीर्घः। आदिति किम्। इक्षुमती। संज्ञायां किम्। खट्वावती। स्त्रियां किम्। शरावान्। मतोः किम्। गवादिनी। 'अन्तोवत्याः' ॥६।१।२२०॥ अवती-

शब्दस्यान्त उदात्तः संज्ञायाम् । अजिरवती । खदिरवती । वेत्रवती । हंसवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् । 'ईवत्याः' ॥६।१।२२१॥ ईवत्यन्तस्यान्त उदात्तः संज्ञायाम् । अहीवती कृपीवती ॥

फिट्सूत्राणि ।

अथ फिट्सूत्राणि व्याख्यास्यामः । 'फिषः' ॥ फिषः प्रातिपदिकस्येत्यधिक्रियते । 'अन्त उदात्तः' ॥ प्रातिपदिकस्य । उच्चैः । नीचैः । दधत् । 'गेहार्थानामस्त्रियाम्' ॥ अन्त उदात्तः । गेहम् । गृहम् । स्त्रियां तु शाला । 'गुदस्य च' ॥ अन्त उदात्तः । 'नब्विषयस्य—' इत्यस्यापवादः । 'ध्यपूर्वस्य स्त्रीविषयस्य' ॥ अन्तापेक्षया धपूर्वस्य यपूर्वस्य चान्त उदात्तः । अन्तर्धा । जाया । माया । खान्तस्याश्मादेः' ॥ खशब्दान्तस्यान्त उदात्तः । सुखम् । दुःखम् । शकारमकारादेस्तु न । शाखा । मखः । 'बंहिष्ठवत्सरतिशत्थान्तानाम्' ॥ अन्त उदात्तः । बंहिष्ठः । संवत्सरः । त्रिंशतिः । त्रिंशत् । निशीथः । 'दक्षिणस्य साधौ' ॥ अन्त उदात्तः । दक्षिणः साधुः । अन्यत्र दक्षिणो देशः । 'स्वाङ्गाख्यायामादिर्वा' ॥ दक्षिणस्येनन्प्रत्ययान्तत्वान्नित्यमाद्युदात्तत्वे प्राप्ते स्वाङ्गाख्यायां पाक्षिकोदात्तत्वार्थे विधिः । दक्षिणो बाहुः । 'छन्दसि च' ॥ आदिरन्तोदात्तो वा । अस्वाङ्गार्थमसाध्वर्थं च । दक्षिणः । 'कृष्णस्यामृगाख्या चेत्' ॥ 'वर्णानां—' इत्याद्युदात्तत्वे प्राप्ते अन्त उदात्तः । कृष्णः । मृगाख्यायां तु कृष्णः रात्र्यै । 'वा नामधेयस्य' ॥ कृष्णस्य । अयं वां कृष्णः । कृष्णः ऋषिः । 'शुक्लगौरयोरादिः' ॥ नित्यमुदात्तः । शुक्लस्य फिषोन्तोदात्तत्वे गौरस्य च प्रज्ञाद्यणन्तस्यान्तोदात्तत्वे प्राप्ते । शुक्लः । गौरः । 'अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः' ॥ उदात्तः । अङ्गुष्ठः । उदकम् । बकः । वशा । 'पृष्ठस्य च' ॥ छन्दस्यन्त उदात्तः । पृष्ठमुपदधाति । 'वा

भाषायाम् ' ॥ पृष्ठं पृष्ठम् । 'अर्जुनस्य तृणाख्या चेत्' ॥ अन्त उदात्तः । अर्जुनानि तृणानि । 'अर्यस्य स्वाम्याख्या चेत्' ॥ अर्यः स्वामी । 'आशाया अदिगाख्या चेत्' ॥ अन्त उदात्तः । आशा । 'नक्षत्राणामाब्विषयाणाम्' । अन्त उदात्तः । आर्द्रा । आश्लेषा । 'न कुपूर्वः कृत्तिकाख्या चेत्' ॥ अन्त उदात्तः । कृत्तिका नक्षत्रम् । 'घृतादीनाम्' ॥ अन्त उदात्तः । आदिशब्दः प्रकारे । घृतम् । 'ज्येष्ठकनिष्ठयोर्वयसि' ॥ ज्येष्ठो वर्षिष्ठः । कनिष्ठो यविष्ठः । अन्यत्र ज्येष्ठः श्रेष्ठः । कनिष्ठोऽल्पिष्ठः । 'बिल्वतिष्ययोः स्वरितो वा' ॥ अन्त उदात्तो वा । बिल्वः । तिष्यः ।

'अथादिः प्राक् शकटेः' ॥ 'शकटिशकट्योः' इत्यतः प्राक् आदिरुदात्त इत्यधिकारः । 'ह्रस्वान्तस्य स्त्रीविषयस्य' ॥ आदिरुदात्तः । बलिः । नाभिः । तनुः । 'नब्विषयस्यानिसन्तस्य' ॥ क्लीबविषयस्येसन्तवर्जितस्यादिरुदात्तः । कुण्डम् । धनम् । इसन्तस्य तु सर्पिः । 'तृणधान्यानां च द्व्यषाम्' ॥ आदिरुदात्तः । कुशाः व्रीहयः । बह्वचां तु गोधूमः । 'न्नः संख्यायाः' ॥ आदिरुदात्तः । पञ्च चत्वारः । द्व्यष एव । एकादश । 'स्वाङ्गशिटामदन्तानाम्' ॥ शिट् सर्वनाम । अदन्तानामेषामादिरुदात्तः । कर्णः । तुष्टः । सर्वः । विश्वः । 'प्राणिनां कुपूर्वः' ॥ कवर्गात्पूर्व आदिरुदात्तः । काकः । शुकः । 'खय्युवर्णं कृत्रिमाख्या चेत्' ॥ खयि परे पूर्वमुवर्णमुदात्तम् । कन्दुकः । कृत्रिमाख्या चेत् किम् । बन्धूकः । 'उनर्वन्नन्तानाम्' ॥ आदिरुदात्तः । उन । वरुणः । ऋ । स्वसा । वन् । सेवा । 'वर्णानां तणतिनितान्तानाम्' ॥ आदिरुदात्तः । एतः । हरिणः । शितिः । पृश्निः । हरित् । 'ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये' ॥ ऋद्वर्जं ह्रस्वान्तमाद्युदात्तम् । मुनिः । 'अक्षस्यादेवनस्य' ॥ आदिरुदात्तः । अक्षः । देवने तु अक्षैर्दीव्यति । 'अर्धस्यासमद्योतने' ॥ अर्धो ग्रामस्य । समेंशके

तु अर्धं पिप्पल्याः । 'पीतद्र्वर्थानाम्' ॥ आदिरुदात्तः । पीतद्रुः सरलः । 'ग्रामादीनां च' । आदिरुदात्तः । ग्रामः । सोमः । यामः । 'लुबन्तस्योपमेयनामधेयस्य' ॥ आदिरुदात्तः । चञ्चेव चञ्चा वर्धिका । 'न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्' ॥ उपमेयनाम्नां नादिरुदात्तः । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः । महिषः । 'राजविशेषस्य यमन्वाख्या चेत्' ॥ आदिरुदात्तः । पञ्चालाः विषयः । एवं वङ्गाः । 'लघावन्ते द्वयोश्च बह्वषो गुरुः । अन्ते लघौ द्वयोश्चान्ते लघ्वोः परतो बह्वषो गुरुरादिरुदात्तः । कल्याणः । कोलाहलः । 'स्त्रीविषयवर्णाक्षुपूर्वाणाम्' ॥ स्त्री-विषयवर्णानामक्षुपूर्वाणामादिरुदात्तः । श्येनी । हरिणी । 'शकुनीनां च लघु पूर्वम्' ॥ पूर्वं लघूदात्तम् । कुक्कुटः । तित्तिरिः । 'नर्तुप्राण्याख्यायाम्' ॥ यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः । कृकलासः । 'धान्यानां च वृद्धक्षान्तानाम्' ॥ आदिरुदात्तः । कान्ताः श्यामाकाः । षान्ता माषाः । 'जनपदशब्दानामषान्ता-नाम्' ॥ केकयः । 'हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा' ॥ हलादीनामसंयुक्तलशब्दान्तानामन्त उदात्तः स्यात् पूर्वं वा । पललम् । शललम् । अन्यत्र मल्लः । 'इगन्तानां च द्व्यषाम्' ॥ आदिरुदात्तः । कृषिः । रषिः ।

'अथ द्वितीयं प्राग्रीषात्' ॥ 'ईषान्तस्य हयादेः' इत्यतः प्राक् द्वितीयाधिकारः । 'त्र्यचां प्राङ्मकरात्' ॥ 'मकरवरूढ' इत्यतः प्राक् त्र्यचां द्वितीयमुदात्तं ज्ञेयम् । 'स्वाङ्गानामकुर्वा-दीनाम्' ॥ कवर्गरेफवकारादीन् वर्जयित्वा स्वाङ्गानां द्वितीय-मुदात्तम् । ललाटम् । कुर्वादीनां तु कपोलः । रसना । वदनम् । 'मादीनाम्' ॥ त्र्यचां द्वितीयमुदात्तम् । मलयः । मकरः । 'शादीनां शाकानाम्' ॥ अचां द्वितीयमुदात्तम् । शीतन्या । शतपुष्पा । 'पान्तानां गुर्वादीनाम्' ॥ पादपः । आतपः ।

लघ्वादीनां तु अनूपम् । द्व्यचां तु नीपम् । 'युतान्यण्यन्तानाम्' ॥ युते अयुतम् । अनि धमनिः । अणि विपणिः । 'मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा' ॥ आदिर्द्वितीयो वोदात्तः । मकरः २ । वरूढः २ । इत्यादि । 'छन्दसि च' ॥ अमकराद्यर्थ आरम्भः । लक्ष्यानुसारात् आदिर्द्वितीयं वोदात्तं ज्ञेयम् । 'कर्दमादीनां च' ॥ आदिर्द्वितीयं वोदात्तम् । कर्दमः २ । आदिशब्दः प्रकारार्थः । 'सुगन्धितेजनस्य ते वा' ॥ आदिर्द्वितीयं च ते च उदात्ते वा स्तः । सुगन्धितेजनः । 'नपः फलान्तानाम्' ॥ क्लीबानां फलान्तानामादि द्वितीयं वोदात्तम् । राजादनफलम् । 'यान्तस्यान्त्यात् पूर्वम्' ॥ उदात्तम् । शालयः । 'थान्तस्य च नालघुनी' ॥ थान्तस्य शब्दस्य नाशब्दो लघुश्चोदात्तौ स्तः । सनाथा सभा । 'शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च' ॥ अन्त्यात् पूर्वमुदात्तं द्वितीयं वा । शिशुमार इत्यादि । 'साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम्' ॥ द्वितीयमुदात्तं वा । साङ्काश्यमित्यादि । 'ईषान्तस्य हलादेरादिर्वा' । हलीषा । लाङ्गलीषा । 'उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयाहिरण्यारण्यापत्यदेवराणाम्' ॥ आदिरुदात्तः । उशीर इत्यादि । 'महिष्यषाढयोर्जायेष्टकाख्या चेत्' ॥ आदिरुदात्तः । महिषी जाया चेत् । अषाढा इष्टका चेत् ।

'शकटिशकट्योरक्षरमक्षरं पर्यायेण' ॥ उदात्तम् । शकटिः ३ । शकटी ३ । 'गोष्ठजस्य ब्राह्मणनामधेयस्य' ॥ अक्षरमक्षरं क्रमेणोदात्तम् । गोष्ठजो ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । 'पारावतस्योपोत्तमवर्जम्' ॥ शेषमक्षरं क्रमेणोदात्तम् । पारावतः । 'धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम्' ॥ एषां धूजलस्थानि वर्जयित्वा शेषाक्षराणि क्रमेणोदात्तानि । धूम्रजानुरित्यादि । 'कपिकेशहरिकेशयोश्छन्दसि' ॥ प्रत्य-

क्षरं क्रमेणोदात्तम् । कपिकेशः । हरिकेशः । 'न्यङ्स्वरौ स्वरितौ' ॥ इतो न्यक् अधोन्यश्च । 'न्यर्बुदव्यल्कशयोरादिः' ॥ स्वरितः । न्यर्बुदाय स्वाहा । पाकदूर्वाव्यल्कशाः । 'तिल्याशिक्य-काश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' ॥ स्वरितः । तिल्य-मित्यादि । 'बिल्वभक्ष्यवीर्याणि छन्दसि' ॥ अन्तस्वरितानि । बिल्व इत्यादि । 'त्वत्त्वसमसिमेत्यनुच्चानि' ॥ एतान्यनुदात्तानि स्युः । स्तरीरुत्वत् इत्यादि । 'सिमस्याथर्वणेन्त उदात्तः' । सिमः । 'निपाता आद्युदात्ताः' ॥ स्वाहा अह इत्यादि । 'उपसर्गाश्चाभिवर्जम्' ॥ प्रादय आद्युदात्ता अभिं वर्जयित्वा । अभिः प्रातिपदिकत्वादन्तोदात्तः । 'एवादीनामन्तः' ॥ उदात्तः । एव । एवम् । इत्यादयः । सह । 'वावादीनामुभावुदात्तौ' ॥ वात्र इत्यादि । उभौ ग्रहणम् 'अनुदात्तं पदमेकवर्जम्' इत्यस्य बाधाय । 'चादयोनुदात्ताः' ॥ च वा ह इत्यादि । 'यथेति पादान्ते' ॥ अनुदात्तम् । तन्नेमिमृभवो यथा । पादान्ते किम् । यथा नो अदितिः करत् । 'प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः' ॥ पटुपटुः । 'शेषं सर्व-मनुदात्तम्' ॥ शेषं द्विरुक्तं सर्वमनुदात्तम् । ग्रामे ग्रामे रमणीये । प्रप्रायमग्निः ।

इति प्रकृतिस्वरप्रकरणं समाप्तम् ॥

अथ प्रत्ययस्वर उच्यते । 'आद्युदात्तश्च' ॥३।१।३॥ प्रत्यय आद्युदात्तः स्यात् । अनियतस्वरप्रसङ्गे अनेकाक्षु च देशस्यानियमे प्राप्ते वचनम् । कर्तव्यम् । तैत्तिरीयम् । 'अनुदात्तौ सुप्पितौ' ॥३।१।४॥ पूर्वस्यापवादः । सुपः पितश्च प्रत्यया अनुदात्ताः स्युः । दृषदौ । 'चितः' ॥६।१।१६३॥ चितोन्तोदात्तं स्यात् । घुरच् । भङ्गुरम् । 'आगस्त्य—' इति कुण्डिनच् । कुण्डिनः । चिति प्रत्यये सप्रकृतिकस्य समुदायस्यान्तोदात्त इष्यते । बह्वकजर्थम् । बहुपटवः । उच्चकैः । एतत् सूत्रं बाहुल्येन प्रत्ययस्वरप्रतिपादक-

मित्यत्र प्रकरणे पठितम् । कुण्डिना इत्याद्यर्थं पूर्वप्रकरणे ज्ञेयम् । तथा 'ञ्नित्या—' इति सूत्रं प्रत्ययानुबन्धेनापि प्रकृतिस्वरप्रतिपादकमिति पूर्वत्र व्याख्यातम् । 'लिति' इति तु वैदिकप्रक्रियान्ते मूल एव व्याख्यातम् । 'तद्धितस्य' ॥६।१।१६४॥ परमपि ञित्स्वरं बाधित्वान्तोदात्तत्वमेव यथा स्यादित्येवमर्थं चितस्तद्धितस्यान्तोदात्तो विधीयते । 'गोत्रे कुञ्जादिभ्यश्च्फञ्' । कौञ्जायनः । 'कितः' ॥६।१।१६५॥ कितस्तद्धितस्यान्त उदात्तः स्यात् । 'नडादिभ्यः फक्' । नाडायनः । 'तिसृभ्यो जसः' ॥६।१।१६६॥ अन्त उदात्तः । 'उदात्तस्वरितयोः—' इत्यस्यापवादः । तिस्रस्तिष्ठन्ति । 'सावेकाचस्तृतीयादिर्विभक्तिः' ॥६।१।१६८॥ साविति सप्तमीबहुवचनग्रहः । तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । वाचा । वाग्भ्याम् । सौ किम् । राज्ञा । एकाचः किम् । राजसु । तृतीयादिः किम् । वाचौ । विभक्तिः किम् । वाक्तरा । 'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' ॥६।१।१६९॥ नित्यसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिविभक्तिरन्तोदात्ता वा स्यात् । परमवाचा । पक्षे समासान्तोदात्ततैव । अन्तोदात्तात् किम् । अवाचा । मयूरव्यंसकादित्वात् समासे 'तत्पुरुषे तुल्यार्थ—' इत्यव्ययपूर्वपदप्रकृतिस्वर इत्याद्युदात्तमेतत् । उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुमन्यथा समासविशेषणं स्यात् । ततः शुन ऊर्क् श्वोर्ज्जेत्यत्रायं विधिः स्यात् । अनित्यसमास इति नित्याधिकारविहितः समासः पर्युदस्यते अग्निचिता । 'उपपदम्—' इति नित्याधिकारसमासः । तत्र 'गतिकारकोपपदात्—' इति प्रकृतिस्वरेण चित् शब्द उदात्तः । यस्तु विग्रहाभावे नित्यसमासः तत्र स्यादेव विकल्पः । अवाचा सुवाचा ब्राह्मणेन इति 'नञ्सुभ्याम्—' इति उत्तरपदान्तोदात्तत्वम् । 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' ॥६।१।१७०॥ अञ्चेः पराऽसुट्विभक्तिरुदात्ता स्यात् । प्रतीचो बाहून् । 'चौ' इति पूर्व-

पदान्तोदात्तत्वं प्राप्तम् । तृतीयादिरिति वर्तमाने असर्वनामस्थानग्रहणं शस्परिग्रहार्थम् । 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ॥६।१।१७१॥ एभ्यो-सुट्विभक्तिरुदात्ता स्यात् । ऊठ् । प्रष्ठौहः । ऊठ्युपधाग्रहणं कर्तव्य-मिह मा भूत् । अक्षद्यूः । अक्षद्युवे । इदम् । आभ्याम् । अन्वादेशे न । अथो आभ्यां निपुणमधीतम् । पदादयः 'पद्दन्नोमास्हृन्निश्—' इति षडेव । निपदश्चतुरो जहि । या दतो धावति । अपः पश्य । 'अष्टनो दीर्घात्' ॥६।१।१७२॥ शसादिविभक्तिरुदात्ता भवति । अष्टाभिः । नेह । अष्टसु । 'शतुरनुमो नद्यजादी' ॥६।१।१७३॥ अनुम् शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्ति-रुदात्ता स्यात् । तुदती । तुदता । अजादिः किम् । तुदद्भ्याम् । अन्तोदात्तादित्येव । जक्षती । 'अभ्यस्तानामादिः' इत्युदात्तः । बृहन्महतोरुपसंख्यानम् । बृहती । बृहता । महती । महता । 'उदात्तयणो हल्पूर्वात्' ॥६।१।१७४॥ उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिविभक्तयश्चोदात्ताः स्युः । कर्त्री । कर्त्रा । तृजन्तोदात्तः । उदात्तयणः किम् । कर्त्रा । तृन्नन्तोय-माद्युदात्तः । हल्पूर्वात् किम् । बहति नावा ब्राह्मण्या । नकारग्रहणं च कार्यम् । वाक्पत्नीयं कन्या । 'नोङ्धात्वोः' ॥६।१।१७५॥ अनयोर्यणः परे शसादय उदात्ता न स्युः । ऊङ् । ब्रह्मबन्ध्वा । खलप्वा । 'ह्रस्वनुड्भ्यां मतुप्' ॥६।१।१७६॥ ह्रस्वान्तादन्तो-दात्तान्नुटश्च परो मतुबुदात्तः स्यात् । अग्निमान् । वायुमान् । अक्षण्वान् । अन्तोदात्तादित्येव । वसुमान् । स्वरविधौ व्यञ्जन-मविद्यमानवदितीह नाश्रीयते । तेन मरुत्वानित्यत्र न स्यात् । रैशब्दाच्च । आरैवान् । त्रेः परस्य निषेधः । त्रिवती । 'नाम-न्यतरस्याम्' ॥६।१।१७७॥ मतुपि यो ह्रस्वस्तदन्तात् परो नामुदात्तो वा । अग्नीनाम् । सनुट्कस्य ग्रहणं किम् । धेन्वाम् । 'उदात्तयणः—' इत्यन्तोदात्तः । ह्रस्वादित्येव । कुमारीणाम् । अन्तोदात्तादित्येव ।

त्रपूणाम् । 'ङ्याश्छन्दसि बहुलम्' ॥६।१।१७८॥ ङीपरो नामुदात्तः । देवसेनानामभिभञ्जतीनाम् । न च स्यात् । जयन्तीनां मरुतो यन्तु । 'षट्त्रिचतुर्भ्यो हलादिः' ॥६।१।१७९॥ एभ्यो हलादिर्विभक्तिरुदात्ता । षड्भिः । षण्णाम् । पञ्चानाम् । त्रयाणाम् । चतुर्णाम् । 'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥' ६।१।१८२ ॥ एभ्यो यदुक्तं तन्न । 'सावेकाचः—' इति 'अन्तोदात्तादुत्तर—' इति च प्राप्तः स्वरो निषिध्यते । गो–गवा । श्वन्–शुना । सौ प्रथमैकवचने अवर्णान्तात् । केभ्यः । राट्–राजा । अङ्–क्विन्नन्तः सनकारः । प्राञ्चा । प्राङ्भ्याम् । नलोपविषये तु स्यादेव विभक्तेरुदात्तत्वम् । प्राचा । क्रुङ् क्विन्नन्तः । क्रुञ्चा । परमक्रुञ्चा । कृत्–करोतिः कृतिर्वा । कृता । परमकृता । 'दिवो झल् ॥' ६।१।१८३॥ दिवः परा झलादिर्विभक्तिर्नोदात्ता । द्युभ्याम् । 'सावेकाचः—' इति 'ऊडिदम्—' इति वा प्राप्तस्वरनिषेधः । झलि किम् । दिवा । 'नृ चान्यतरस्याम्' ॥६।१।१८४ ॥ नुः परा झलादिर्नोदात्ता वा । नृभ्याम् । झलीत्येव । न्रा । 'तित् स्वरितम् ॥' ६।१।१८५॥ 'अचो यत् ।' चिकीर्ष्यः । ण्यत्–कार्यम् । प्रत्ययाद्युदात्तस्य बाधा । 'तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः' ॥६।१।१८६॥ अस्माच्चतुष्टयात् परं लसार्वधातुकमनुदात्तम् । तासेः–कर्ता । कर्तारौ । प्रत्ययस्वरापवादः । अनुदात्तेतः–आस्ते । ङितः–शेते । अदुपदेशात्–तुदतः । पचतः । अनुबन्धस्यानेकान्तत्वादकारान्तोपदेश एव शप् । पचमानादौ चित्स्वरोऽप्यनेन बाध्यते । तास्यादिभ्यः किम् । चिनुतः । ङिदयं श्नुः पूर्वस्य कार्यं प्रति न परस्य । उपदेशग्रहः किम् । इह च यथा स्यात् । पचावः । इह च मा भूत् । हतः । हथः । सार्वधातुकं किम् । शिश्ये । अन्ह्विङोः किम् ।

१. Dropped Dc3. २. आम्रेडितः । शेते । Dc3. ३. परत्वाद्बाध्यते Dc3.

हुते । यदधीते । 'आदिः सिचोऽन्यतरस्याम्' ॥६।१।१८७॥ सिजन्तस्यादिरुदात्तो वा । मा हि लाविष्टम् ॥ २ ॥ एक आद्युदात्तः अपरो मध्योदात्तः । सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते । मा हि कार्ष्टाम् २ । एक आद्युदात्तः अपरो-न्तोदात्तः । सिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यम् । मा हि कार्षम् । २ । अनिटः किम् । मा हि लाविषम् २ । 'थलि च सेटीडन्तो वा' ॥६।१।१९६॥ सेटि थलन्ते पदे इडुदात्तः अन्तो वादिर्वा । लुलविथ । यदा नैते स्वरास्तदा लिति प्रत्ययात् पूर्वमुदात्तं स्यात् । तेनैते चत्वारो धातोः क्रमेण स्युः । सेटि किम् । ययाथ । 'लिति प्रत्ययात् पूर्वमित्येव स्वरः । 'उपोत्तमं रिति' ॥६।१।२१७॥ रित्प्रत्यया-न्तस्योपोत्तममुदात्तं स्यात् । करणीयम् । पटुजातीयः । प्रत्यय-स्वरापवादः ।

इति प्रत्ययस्वराः ।

अथ समासस्वर उच्यते । 'समासस्य' ॥६।१।२२३॥ अन्त उदात्तः । नानापदस्वरापवादः । राजपुरुषः । ब्राह्मणकम्बलः । स्वरविधौ व्यञ्जनमविद्यमानवदिति हलन्तेऽप्यन्तोदात्तत्वं स्यात् । ब्राह्मणसमित् । 'पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः' ॥८।१।६७॥ पूजनेभ्यः काष्ठादिभ्यः उत्तरपदं पूजितमनुदात्तं स्यात् । समासे चैतदनुदात्तत्वं समासान्तोदात्तत्वापवाद इष्यते । काष्ठाध्यापकः । दारुणाध्यापकः । मयूरव्यंसकादित्वात् समासः । काष्ठा । दारुण । अमातापुत्र । वेश । अनाज्ञात । अयुत । अद्भुत । भृश । घोर । परम । सु । अति । 'चौ' ॥६।१।२२२॥ चावित्यञ्चतिर्लुप्तनकारो गृह्यते । तस्मिन् परे पूर्वस्यान्त उदात्तः स्यात् । दधीचः पश्य । दधीचे । उदात्तनिवृत्तिस्वरापवादः । अतद्धिते इति वाच्यम् । दाधीचः । प्रत्ययस्वर एव स्यात् । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ॥६।२।१॥

बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः उदात्तः स्वरितो वा स प्रकृत्या स्यात् । न विकारमनुदात्तत्वमापद्यते । समासस्वरापवादो योगः । कार्ष्णोत्तरासङ्गः । कृष्णो मृगस्तस्य विकारः । 'प्राणिरजतादिभ्योऽञ्' । कार्ष्णः । अञन्तत्वादाद्युदात्तः । अध्यापकपुत्रः । अध्यापकशब्दो ण्वुलन्तो 'लिति' इति मध्योदात्तः । मनुष्यनाथः । मनुष्यशब्दो 'मनोर्जातौ' इति यदन्तत्वात् स्वरितान्तः । उदात्तग्रहणं स्वरितग्रहणं चेहानुवर्तते । तेन सर्वानुदात्ते पदे नायं विधिः । किं तु समासान्तोदात्तत्वमेव । समभाग इति । समशब्दो हि सर्वानुदात्तः । 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' ॥ सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या । तुल्यार्थे । तुल्यश्वेतः । सदृक्च्छ्वेतः । 'कृत्यतुल्याख्या—' इति तत्पुरुषः । तुल्यशब्दो 'नौवयोधर्म—' इति यदन्तो 'यतोनावः' इत्याद्युदात्तः । तृतीया शङ्कुलया खण्डः शङ्कुलाखण्डः । सप्तमी । अक्षशौण्डः । अशेर्देवन इति सप्रत्ययान्तोऽक्षशब्दोऽन्तोदात्तः । उपमानम् । शस्त्रीश्यामा । शस्त्री ङीप्प्रत्ययान्तोऽन्तोदात्तः । अव्ययम् । अब्राह्मणः । नञाद्युदात्तः । अव्यये नञ्कुनिपातानामिति वाच्यम् । नेह स्नात्वाकालकः । द्वितीया । मुहूर्तसुखम् । मुहूर्तशब्दः पृषोदरादित्वादन्तोदात्तः । कृत्य । भोज्योष्णम् । भोज्येति ण्यदन्तोऽन्तस्वरितः । 'वर्णो वर्णेष्वनेते' ॥६।२।३॥ एतवर्जिते वर्णवाचिन्युत्तरपदे वर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । 'कृषेर्वर्णे' इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः । वर्णः किम् । परमकृष्णः । वर्णेषु किम् । कृष्णतिलाः । अनेते किम् । कृष्णैतः । 'गाधलवणयोः प्रमाणे' ॥६।२।४॥ इयत्तावाचिनि तत्पुरुषे अनयोः परयोः पूर्वपदं प्रकृत्या । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः । गोलवणम् । यावद् गवे दीयते तावदित्यर्थः । षष्ठीसमासः । अरित्रशब्दः 'अर्तिलूधू—' इतीत्रप्रत्ययान्तो मध्योदात्तः । गोशब्दो डोप्रत्ययान्तोऽन्तोदात्तः । स्वरव्यङ्ग्यं प्रमाणविषयत्वमेषाम् । प्रमाणे किम् ।

परमगाधम् । परमलवणम् । 'दायाद्यं दायादे' ॥ ६।२।५॥ दायाद्यवाचि पूर्वं दायादे परे प्रकृत्या । विद्यादायादाः । विद्येति 'संज्ञायां समजनिषद—' इत्युदात्तः क्यप् । 'प्रतिबन्धि चिरकृच्छ्रयोः' ॥६।२।६॥ कार्यसिद्धिं प्रतिबध्नाति विहन्तीति प्रतिबन्धि । ताच्छील्ये आवश्यके वा णिनिः । प्रतिबन्धिवाचि पूर्वं चिरकृच्छ्रयोस्तत्पुरुषे प्रकृत्या स्यात् । गमनचिरम् । गमनकृच्छ्रम् । गमनं ल्युडन्तं लित्स्वरेणाद्युदात्तम् । गमनं च तच्चिरं चेति विशेषणसमासो मयूरव्यंसकादिर्वा । कारणवैकल्याच्चिरभावि कृच्छ्रयोगि वा यद् गमनं तत् कार्यसिद्धेः प्रतिबन्धि जायते । प्रतिबन्धि किम् । मूत्रकृच्छ्रः । 'पदेऽपदेशे' ॥६।२।७॥ व्याजवाचिनि पदशब्दे पूर्वं तत्पुरुषे प्रकृत्या । मूत्रपदेनप्रस्थितः । मूत्रशब्दो मुचेः ष्ट्रन्प्रत्ययान्तो मूत्रयतेर्वा घञन्त आद्युदात्तः । विशेषणसमासो मयूरव्यंसकादिर्वा । अपदेशे किम् । विष्णुपदम् । 'निवाते वातत्राणे' ॥६।२।८॥ निवाते परे पूर्वं प्रकृत्या तत्पुरुषे । कुटीनिवातम् । वातस्याभावो निवातं निरुद्धो वातोऽत्र वा निवातम् । कुटीशब्दो गौरादिङीषन्तोऽन्तोदात्तः । वातत्राणे किम् । राजनिवाते वसति । निवातशब्दोऽयं पार्श्ववाची । षष्ठीसमासः । 'शारदेऽनार्तवे' ॥६।२।९॥ प्रत्यग्रवाचिनि शारदे परे पूर्वं प्रकृत्या । रज्जुशारदमुदकम् । सद्यो रज्जूद्धृतम् । प्रत्यग्रमित्यर्थः । अत्र च नित्यसमासोऽस्वपदविग्रह इष्यते । तृतीयातत्पुरुषः । रज्जुशब्दः 'सृजेरसुम् च' इत्युप्रत्ययान्तो 'धान्येनित्' इत्यनुवृत्तेराद्युदात्तः । अनार्तवे किम् । परमशारदम् । शरदि ऋतौ भवं यत्तदिह शारदम् । 'अध्वर्युकषाययोर्जातौ' ॥ ६।२।१०॥ अनयोः पूर्वं प्रकृत्या जातिवाचिनि तत्पुरुषे । प्राच्याध्वर्युः । अयं जातिवाची कर्मधारयः । तत्र प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः । जातौ किम् । परमाध्वर्युः । 'सदृशप्रतिरूपयोः सादृश्ये' ॥ ६।२।११॥ अनयोः पूर्वं प्रकृत्या सादृश्यं चेत् तत्पुरुषार्थः । पितृसदृशः । पितृशब्दोऽन्तोदात्तो निपा-

तितः । सादृश्ये किम् । परमसदृशः । समासार्थोऽत्र पूज्यमानता न सादृश्यम् । 'द्विगौ प्रमाणे' ॥६।२।१२॥ द्विगावुत्तरपदे सर्वं प्रकृत्या प्रमाणवाचिनि तत्पुरुषे । गान्धारिसप्तसमः । सप्त समाः प्रमाणमस्येति मात्रच् । 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् । गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वा । द्विगौ किम् । व्रीहिप्रस्थः । प्रमाणे किम् । परमसप्तसमः । 'गन्तव्यपण्यं वाणिजे' ॥६।२।१३॥ गन्तव्यं वा पण्यवाचि प्रकृत्या वाणिजे परे तत्पुरुषे । मद्रवाणिजः । मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः । गन्तव्यपण्यं किम् । परमवाणिजाः । 'मात्रोपज्ञोपक्रमच्छाये नपुंसके' ॥ ६।२।१४॥ एषु क्लीबतत्पुरुषान्तेषु पूर्वं प्रकृत्या । समुद्रमात्रं पाणिनीयम् । अत्र समुद्रस्य तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीसमासः । समुद्रशब्दः 'पाटलापालङ्काम्बासागरार्थानाम्' इत्यन्तोदात्तः । व्याड्युपज्ञं दुष्करणम् । व्याडिरितीञन्तत्वादाद्युदात्तः । आढ्योपक्रमम् । एत्यैनं ध्यायतीत्याढ्यः । घञर्थे कः । पृषोदरादित्वात् ढत्वम् । थाथादिस्वरेणान्तोदात्तः । इषुच्छायम् । इषुशब्दः 'इषेः किच्च' इत्युप्रत्ययान्तो 'धान्ये नित्' इत्यनुवृत्तेराद्युदात्तः । नपुंसके किम् । कुड्यच्छाया । 'सुखप्रिययोर्हिते' ॥ ६।२।१५॥ अनयोः परयोः पूर्वं प्रकृत्या हितवाचिनि तत्पुरुषे । वत्रनसुखम् । व्याहरणप्रियम् । समानाधिकरणसमासौ । वत्रनव्याहरणे लित्स्वरः । हितं किम् । परमसुखम् । 'प्रीतौ च' ॥६।२।१६॥ प्रीत्यर्थे गम्ये तथा । ब्राह्मणसुखं पायसम् । कन्याप्रियो मृदङ्गः । ब्राह्मणः प्रत्ययस्वरेणान्तोदात्तः । कन्याशब्दः स्वरितान्तः । प्रीतौ किम् । राजसुखम् । 'स्वं स्वामिनि' ॥६।२।१७॥ स्वामिनि परे स्ववाचि प्रकृत्या । गोस्वामी । स्वं किम् । परमस्वामी । 'पत्यावैश्वर्ये' ॥६।२।१८॥ पत्यौ परे ऐश्वर्यार्थे तत्पुरुषे पूर्वं प्रकृत्या । गृहपतिः । गृहशब्दोऽयं 'गेहे कः' इति कप्रत्ययान्तोऽन्तोदात्तः । ऐश्वर्ये किम् । ब्राह्मणो वृषलीपतिः ।

वृषल्या भर्तेत्यर्थः । 'न भूवाक्चिद्दिधिषु' ॥६।२।१९॥ पत्यौ परे ऐश्वर्यार्थे तत्पुरुषे भ्वादीनि प्रकृत्या न स्युः । भूपतिः । दिधिषूपतिः इत्यादि । समासान्तोदात्तत्वमेव । 'वा भुवनम्' ॥६।२।२०॥ पत्यौ परे प्रकृत्या वा । भुवनपतिः । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युन्नन्तोन्तोदात्तः । 'आशङ्काबाधनेदीयस्सु संभावने' ॥६।२।२१॥ एषु परेषु पूर्वं प्रकृत्या संभावनार्थे तत्पुरुषे । अस्तित्वाध्यवसायः संभावना । गमनाशङ्कम् । गमनमाशङ्क्यत इति संभाव्यते । गमनाबाध्यम् । गमनमाबाध्यत इति संभाव्यते । गमननेदीयः । गमनमन्तिकमिति संभाव्यते । षष्ठीसमासा एते । क्लीबता क्रियाविशेषणत्वात् 'अव्ययीभावश्च' इति चकाराद्वा लिङ्गस्य लोकाश्रयत्वाद्वा । 'पूर्वे भूतपूर्वे' ॥६।२।२२॥ पूर्वशब्दे परे पूर्वं प्रकृत्या भूतपूर्वार्थे तत्पुरुषे । आढ्यो भूतपूर्वः आढ्यपूर्वः । पूर्वशब्दो वृत्तिविषयो भूतपूर्वे वर्तते । तत्र विशेषणसमासो मयूरव्यंसकादिर्वा । भूतपूर्वे किम् । परमपूर्वः । 'सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये' ॥६।२।२३॥ एषु परेषु पूर्वपदं प्रकृत्या सामीप्यार्थे तत्पुरुषे । मद्रसविधम् । मद्रसनीडम् । मद्रसमर्यादम् । मद्रसवेशम् । मद्रसदेशम् । 'विस्पष्टादीनि गुणवचनेषु' ॥६।२।२४॥ एतानि प्रकृत्या गुणवाचिषु परेषु । विस्पष्टकटुकम् । विस्पष्टं कटुकमिति विगृह्य 'सुप् सुपा' इति समासः । एवं सर्वत्र । विस्पष्टादयोत्र प्रवृत्तिनिमित्तस्य विशेषणानि । कटुकादयस्तु गुणवद् द्रव्यं वदन्ति । अतो वैयधिकरण्यान्न कर्मधारयः । विस्पष्टो 'गतिरनन्तरः' इत्याद्युदात्तः । विचित्रलवणम् । अव्ययस्वरेणाद्युदात्तो विचित्रशब्दः । व्यक्तलवणम् । व्यक्तशब्द 'उदात्तस्वरितयोर्यणः—' इत्यादिना स्वरितः । ये चात्रापरे पठ्यन्ते तत्र संपन्ननिपुणौ 'थाथ—' इत्यन्तोदात्तौ । पटुपण्डितौ उप्रत्ययकप्रत्ययान्तावन्तोदात्तौ । कुशलः कृत्स्वरेणान्तो-

१. न वैयधिकरण्यात् कर्म° PC. २. विस्पष्टशब्दो Dc3.

दात्तः । चपलशब्दः ‘ चुपेरच्चोपधायाः ’ इत्यन्तोदात्तः । चिदिति हि तत्र वर्तते । तत्पुरुष इति निवृत्तम् । ‘ अज्यावमकन्यापापवत्सु भावे कर्मधारये ’ ॥६।२।२५॥ एषूत्तरपदेषु पूर्वं प्रकृत्या भावार्थे कर्मधारये । गमनश्रेष्ठम् । गमनश्रेयः । वचनज्येष्ठम् । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । गमनपापीयः । भावे किम् । गम्यतेनेनेति गमनम् । तच्छ्रेयो गमनश्रेयः । कर्मधारये किम् । गमनस्य श्रेयो गमनश्रेयः । ‘ कुमारश्च ’ ॥६।२।२६॥ पूर्वपदं कर्मधारये प्रकृत्या । कुमारश्रमणा । कुमारोन्तोदात्तः । ‘ आदिः प्रत्येनसि ’ ॥६।२।२७॥ कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्मधारये । कुमारप्रत्येनाः । प्रतिगतमेनोस्य[1] प्रत्येनाः । ‘ पूगेष्वन्यतरस्याम् ’ ॥६।२।२८॥ गणवाचिन्युत्तरपदे कुमारस्यादिर्वोदात्तः । कुमारचातकाः । कुमारबालकाः । चातकादौ ‘ पूगाञ्ञ्योऽग्रामणीपूर्वात् ’ इति ञ्यः । तस्य ‘ तद्राजस्य बहुषु ’ इति लुक् । ‘ इगन्तकालकपालभगालशरावेषु द्विगौ ’ ॥६।२।२९॥ एषु परेषु पूर्वं प्रकृत्या द्विगौ । पञ्चारत्नयः प्रमाणं यस्य सः । मात्रचो द्विगौ लुक् । पञ्चमास्यः । पञ्चमासान् भृतो भूतो भावी वा । द्विगोर्यप् । पञ्चवर्षः । ‘ वर्षाल्लुक् च ’ इति ठञो लुक् । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः । अत्र त्रिषु ‘ संस्कृतं भक्षाः ’ इति कृताणो ‘ द्विगोर्लुगनपत्ये ’ इति लुक् । ‘ त्रः संख्यायाः ’ इति पञ्चशब्द आद्युदात्तः । ‘ बह्वन्यतरस्याम् ’ ॥६।२।३०॥ इगन्तादिषूत्तरपदेषु बहुशब्दः प्रकृत्या । बह्वरत्निः । बहुरन्तोदात्तः । तस्य प्रकृतिस्वरे कृते यत्र यणादेशस्तत्र ‘ उदात्तस्वरितयोः— ’ इत्येष स्वरः । बहुमास्यः । बहुकपालः । बहुभगालः । बहुशरावः । ‘ दिष्टिवितस्त्योश्च ’ ॥६।२।३१॥ अनयोरिगन्तत्वेपि पूर्वं प्रकृत्या वा । पञ्चदिष्टिः । दशवितस्तिः । ‘ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ’ ॥६।२।३२॥ सप्तमीस्वरः कृत्स्वरेण बाधितः पुनः प्रसूयते[2] ।

१. प्रतिगुप्त° PC. २. प्रतिप्रसूयते $Dc_3$.

एषु परेषु सप्तम्यन्तं प्रकृत्या सा चेत् सप्तमी कालान्न । साङ्काश्यसिद्धः । निधनशुष्कः । कुम्भीपक्वः । चक्रबन्धः । 'साङ्काश्य-काम्पिल्य—' इत्यन्तोदात्तो मध्योदात्तश्च । निधनेति क्युप्रत्ययान्तो मध्योदात्तः । कुम्भीति ङीषन्तोन्तोदात्तः । चक्रेत्यन्तोदात्तः । 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' ॥६।२।३३॥ पर्यादयः प्रकृत्या वर्ज्यमानादिषूत्तरपदेषु । अव्ययीभावार्थोयमारम्भः । बहुव्रीहितत्पुरुषयोः सिद्धत्वात् । वर्ज्यमाने परित्रिगर्तं वृष्टो देवः । परिपूर्वाह्णम् । परिपूर्वरात्रम् । एवं प्रतिपूर्वाह्णादि । 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तानि पूर्वपदानि । 'राजन्यबहुवचनद्वन्द्वेन्धकवृष्णिषु' ॥६।२।३४॥ अभिषिक्तवंश्यक्षत्रियवाचिनोत्र राजन्यास्तेषां बहुवचनान्तानां यो द्वन्द्वोन्धकवृष्णिषु वर्तते तत्र पूर्वपदं प्रकृत्या । शिनिवासुदेवाः । शिनिराद्युदात्तः । तदपत्येष्वभेदेन वर्तते । राजन्येति किम् । द्वैप्यवैमायनाः । द्वीपे भवा द्वैप्याः । वैमेरपत्यानि युवानः वैमायनाः । अन्धकवृष्णय एते नाभिषिक्ता न च क्षत्रियाः । बहुवचने किम् । संकर्षणवासुदेवौ । द्वन्द्वे किम् । वृष्णीनां कुमारा वृष्णिकुमाराः । अन्धकवृष्णिषु किम् । कुरुपञ्चालाः ॥ 'संख्या' ॥६।२।३५॥ संख्यावाचि पूर्वपदं प्रकृत्या । एकादश । 'इणभीका—' इति कन्नन्तत्वादाद्युदात्तः । 'आचार्योपसर्जनश्चान्तेवासी' ॥६।२।३६॥ आचार्यपालनछात्रद्वन्द्वे पूर्वं प्रकृत्या । आपिशलपाणिनीयाः । अपिशलस्यापत्यमापिशलिस्तेन प्रोक्तमापिशलम् । 'इञश्च' इत्यण् । तदधीयतेये तेप्यापिशलाः । प्रोक्ताल्लुक् । आपिशलेर्वा छात्रा आपिशलाः । आचार्योपसर्जनः किम् । छान्दसवैयाकरणाः । अन्तेवासीति किम् । आपिशलपाणिनीये शास्त्रे । 'कार्तकौजपादयश्च' ॥६।२।३७॥ एषां द्वन्द्वे पूर्वपदं प्रकृत्या । कार्तकौजपौ । कृतस्यायं कार्तः । कुजपस्यायं कौजपः । अणन्तौ । सावर्णिमाण्डूकेयौ । सावर्णिरिञन्तः । आवन्त्यश्मकाः । अवन्तेरपत्यानि बहूनि तन्निवासो जनपदः । तथा

अश्मकाः । पैलश्यापर्णेयाः । पीलाया अपत्यं पैलस्तस्यापत्यं युवा । 'अणो—' इति कृतस्य फिञः 'पैलादिभ्यश्च' इति लुक् । श्यापर्णी विदादिः । तस्यापत्यं स्त्री श्यापर्णी । तस्यापत्यं युवा श्यापर्णेयः । कपिश्यापर्णेयः । कपिरन्तोदात्तः । तस्यापत्यं बहुत्वे कपिबोधादाङ्गिरस इत्युत्पन्नस्य यञो लुक् । शैतिकाक्षपाञ्चालेयाः । शितिकक्षस्यापत्यम् । ऋष्यण् । तदपत्ये यूनि य इण् तस्य 'ण्यक्षत्रियार्ष—' इति लुक् । पाञ्चालस्यापत्यं स्त्री पाञ्चाली । तदपत्यं युवा पाञ्चालेयः । शैतिकाक्षपाञ्चालेयौ । कटुकवाधूलयाः । कटेरौणादिकोकप्रत्यये संज्ञा । कटुकस्यापत्यम् । इञ् । तस्य 'बह्वच इञः—' इति लुक् । वधूलयस्यापत्यं वाधूलयः । शाकलशुनकाः । शाकलसणका इति केचित् । शकलस्यापत्यं शाकल्यस्तस्य छात्राः । कण्वादित्वादण् । शुनकस्यापत्यम् । विदादिभ्योञ् तस्य बहुषु लुक् । सणकशब्दादुत्पन्नस्येञः 'बह्वच इञः—' इति लुक् । शणकबाभ्रवाः । आर्चाभिमौद्गलाः । ऋचाभेन प्रोक्तमधीयते आर्चाभिनः । 'वैशम्पायनान्ते—' इति णिनिः । मुद्गलः कण्वादिस्तदपत्यस्य छात्राः । कुन्तिसुराष्ट्राः । चिन्तिसुराष्ट्राः । कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वः । तण्डवतण्डाः । पचाद्यजन्तौ । गर्गादित्वाद्यञ् । तत्रापत्यबहुत्वे यञो लुक् । अविमत्तकामविद्धाः । अविमत्तो नञ्स्वरेणाद्युदात्तः । द्वयोरप्यपत्यबहुत्वे 'बह्वचः—' इति यञो लुक् । कठकालापाः । कठकौथुमाः । कौथुमलौकाक्षाः । कठेन प्रोक्तमधीयते । 'वैशम्पायनान्तेवासि—' इति णिनिः । कठचरकाल्लुक् । कलापिना प्रोक्तमधीयते कालापाः । 'कलापिनोण्' । 'सब्रह्मचारी—' इति टिलोपः । कुथुमिना प्रोक्तमधीयते । प्राग्दीव्यतोण् । पूर्ववट्टिलोपः । लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः । लौकाक्षस्य वापत्यं लौकाक्षिः । स्त्रीकुमारम् । स्त्री अन्तोदात्तः । मौदपैप्पलादाः । मौदपैप्पलादाः । मुदस्यापत्यं मौदिस्तच्छात्राः । तथा पैप्पलादाः ।

द्विपाठप्रयोजनं पक्षे समासान्तः । वत्सजरत् । वत्सोन्तोदात्तः । सौश्रुतपार्थिवाः । सुश्रुतस्य पृथोश्छात्राः । जरामृत्यु । याज्यानुवाक्ये । यजेर्ण्यत् । 'यजयाच—' इति कुत्वाभावः । वचेर्ण्यत् । तस्य कुत्वम् । 'तित् स्वरितम्' इत्यन्तस्वरितः । इहाचार्योपसर्जनान्तेवासिनां पाठः प्रपञ्चार्थः । 'महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु' ॥६।२।३८॥ द्वन्द्व इति निवृत्तम् । व्रीह्यादिषु दशसु उत्तरपदेषु महानिति पूर्वपदं प्रकृत्या । महाव्रीहिः । महापराह्णः इत्यादि । महानन्तोदात्तः । तस्य यः प्रतिपदोक्तः 'सन्महत्—' इति समासः तत्रैव स्वरः । अन्यत्र षष्ठीसमासे समासान्तोदात्तत्वमेव । 'क्षुल्लकश्च वैश्वदेवे' ॥६।२।३९॥ क्षुल्लको महांश्च वैश्वदेवे उत्तरपदे प्रकृत्या । क्षुल्लकवैश्वदेवम् । क्षुधं लातीति क्षुल्लः । ततोऽज्ञातादिषु 'प्रागिवात् कः' इत्ययमन्तोदात्तः । 'उष्ट्रः सादिवाम्योः' ॥६।२।४०॥ एतयोरुत्तरपदयोरुष्ट्रः पूर्वपदं प्रकृत्या । उष्ट्रसादि । उष्ट्रवामि । उष्ट्रः ष्ट्रन्प्रत्ययान्त आद्युदात्तः । कर्मधारयः । षष्ठीसमासो वा । 'गौः सादसादिसारथिषु' ॥६।२।४१॥ एषु परेषु गोशब्दः पूर्वपदं प्रकृत्या । गोसादः । गोः सादः । गां सादयतीति वा । गोः सादिः गोसादिः । गोसारथिः । 'कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च' ॥६।२।४२॥ एषामष्टानां समासानां पूर्वं प्रकृत्या दासीभारादेश्चाकृतिगणस्य पूर्वपदम् । कुरुगार्हपतम् । 'कृग्रोरुच्च' इति कुरुः कुप्रत्ययान्तोन्तोदात्तः । 'कुरुवृज्योर्गार्हपत इति वाच्यम् ।' वृजिगार्हपतम् । वृजिशब्द आद्युदात्तः । रिक्तो गुरुः रिक्तगुरुः । 'रिक्ते विभाषा' इति रिक्त आद्युदात्तोन्तोदात्तो वा । असूता जरती असूतजरती । अश्लीला दृढरूपा अश्लीलदृढरूपा । लावण्यहीनेत्यर्थः । असूताश्लीलौ नञ्समासत्वादाद्युदात्तौ । पारे वडवेव पारेवडवा । निपातनादेवायमिवार्थे समासो विभक्त्यलोपश्च ।

पारशब्दो घृतादित्वादन्तोदात्तः । तैतिलानां कद्रूस्तैतिलकद्रूः । तितिलिनोपत्यं छात्रो वा तैतिलोऽणन्तः । पण्यकम्बलः । पण्यो यदन्तत्वादाद्युदात्तः । पण्यकम्बलः । संज्ञायामिति वाच्यम् । अन्यत्र समासान्तोदात्तत्वमेव । दासीभारः । देवहूतिः । देवभूतिः । देवनीतिः । पूर्वपदान्तोदात्तानि । वसुनीतिः । पूर्वमाद्युदात्तम् । ओषधिः ओषो धीयतेस्यां किप्रत्ययान्तः । ओषो घञन्त आद्युदात्तः । चन्द्रमाः । 'चन्द्रे मोसिः' इत्यसिप्रत्ययान्तः । चन्द्रो रक्प्रत्ययान्तोन्तोदात्तः।यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न च विहितं स सर्वो दासीभारादिषु द्रष्टव्यः । 'चतुर्थी तदर्थे' ॥६।२।४३॥ चतुर्थ्यन्ताभिधेयार्थे उत्तरपदे चतुर्थ्यन्तं प्रकृत्या । यूपदारु । यूप आद्युदात्तः । 'कुयुभ्यां च' इति पप्रत्ययान्तः । तत्र निदित्यनुवर्तते । तदर्थे किम् । कुबेरबलिः । प्रकृतिविकारभावे इष्यते । इह न । अश्वघासः । 'अर्थे' ॥६।२।४४॥ अर्थे परे चतुर्थ्यन्तं प्रकृत्या । मात्रर्थम् । पित्रर्थम् । मातृपितृशब्दावन्तोदात्तौ । 'क्ते च' ॥६।२।४५॥ क्तान्ते परे पूर्वं प्रकृत्या । गोहितम् । गोरक्षितम् । 'कर्मधारयेऽनिष्ठा' ॥६।२।४६॥ कर्मधारये क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या । श्रेणिकृताः । श्रेणिराद्युदात्तः । कर्मधारये किम् । श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठा किम् । कृताकृतम् । 'अहीने द्वितीया' ॥६।२।४७॥ क्तान्ते परे द्वितीयान्तं प्रकृत्या अहीनवाचिनि समासे । कष्टश्रितः । कष्टशब्दोन्तोदात्तः । अहीने किम् । कान्तारातीतः । हीनं त्यक्तं विभक्तमिति यावत । द्वितीयानुपसर्गे इति वाच्यम् । इह न । सुखप्राप्तः । दुःखापन्नः । 'तृतीया कर्मणि' ॥६।२।४८॥ कर्मार्थकक्तान्ते परे तृतीयान्तं प्रकृत्या । अहिहतः । रुद्रहतः । 'आङि श्रिहनिभ्याम्—' इत्यन्तोदात्तोऽहिर्व्युत्पादितः । केचिदाद्युदात्तमिच्छन्ति । रुद्रो रैक्प्रत्ययान्तोन्तोदात्तः । कर्मणि किम् । रथेन यातो रथयातः ।

१. त्यस्यन्तोयम् PC. २. श्रेणिशब्द आ PC. ३. रुक° PC.

गत्यर्थत्वात् कर्तरि क्तः । ' गतिरनन्तरः ' ॥६।२।४९॥ कर्मार्थक्तान्ते परे गतिसंज्ञः प्रकृत्या । प्रकृतः । संहृतः । अनन्तरे किम् । अभ्युद्धृतः । व्यवहितगतेर्न । अनन्तरस्य स्यादेव । कर्मणीत्येव । प्रकृतः कटं देवदत्तः । कारकपूर्वस्य तु सतिशिष्टत्वात् थाथादिस्वर एव । दूरादागत इति । ' तादौ च निति कृत्यतौ ' ॥६।२।५०॥ तकारादौ निति तुशब्दवर्जिते कृति परे गतिरनन्तरः प्रकृत्या । कृत्स्वरापवादः । प्रकर्ता । तृन् । प्रकर्तुम् । प्रकृतिः । तादौ किम् । प्रजल्पाकः । निति किम् । प्रकर्ता । कृद्ग्रह उपदेशे तादर्थः । इहापि स्यात् । प्रलपिता । अतौ किम् । आगन्तुः । ' तवै चान्तश्च युगपत् ' ॥६।२।५१॥ तवैप्रत्ययस्यान्त उदात्तः गतिश्च प्रकृत्या युगपदुभयं स्यात् । अन्वेतवै । कृत्स्वरापवादः । ' अनिगन्तोऽञ्चतौ वप्रत्यये ' ॥६।२।५२॥ अनिगन्तो गतिर्वप्रत्ययेऽञ्चतौ परे प्रकृत्या । प्राङ् । प्राञ्चौ । प्राञ्चः । एकादेश उदात्तः स्वरितो वा । अनिगन्त इति किम् । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । कृदुत्तरपदप्रकृतिस्वर इह स्यात् । वप्रत्यये किम् । उदञ्चनः । त्रौः 'अनिगन्तोऽञ्चतौ वप्रत्यये' इत्येष स्वरः परत्वात् स्यात् । पराचः । ' न्यधी च ' ॥६।२।५३॥ वप्रत्ययान्तेऽञ्चतौ परे इगन्तावपि न्यधी प्रकृत्या । न्यङ् । न्यञ्चौ । न्यञ्चः । अध्यङ् । अध्यञ्चौ । अध्यञ्चः । 'उदात्तस्वरितयोः—' इत्यञ्चतेरकारः स्वरितः । ' ईषदन्यतरस्याम् ' ॥६।२।५४॥ उत्तरपदे प्रकृत्या । ईषत्कडारः । ईषदित्ययमन्तोदात्तः । ईषद्भेद इत्यादौ कृत्स्वर एव । ' हिरण्यपरिमाणं धने ' ॥६।२।५५॥ हिरण्यपरिमाणवाचि पूर्वपदं धने परे प्रकृत्या वा । द्विसुवर्णधनम् । द्वौ सुवर्णौ परिमाणमस्येति द्विसुवर्णं तदेव धनमिति कर्मधारयः । बहुव्रीहावपि परत्वाद्विकल्प एव । द्विसुवर्णधनः । हिरण्यग्रहः किम् । प्रस्थधनम् । परिमाणं किम् । काञ्चनधनम् । धने किम् । निष्कमाला । ' प्रथमोऽचिरोपसंपत्तौ ' ॥

१. °हितस्याभेर्न PC. २. पश्चैतद्द्वयं PC. ३. एवेह PC.

॥६।२।५६॥ अभिनवार्थे प्रथमशब्दः पूर्वपदं प्रकृत्या । प्रथमवैयाकरणः । संप्रत्यध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दोन्तोदात्तः । अचिरोपसंपत्तौ किम् । प्रथमवैयाकरणः । आद्यो वैयाकरणानामित्यर्थः । 'कतरकतमौ कर्मधारये' ॥६।२।५७॥ प्रकृत्या वा । कतरकलापः । कतमकठः 'आर्यो ब्राह्मणकुमारयोः' ॥६।२।५८॥ आर्यः प्रकृत्या वा । आर्यब्राह्मणः । आर्यकुमारः । ण्यदन्तत्वात् स्वरितः । कर्मधारय इत्येव । आर्यस्य ब्राह्मण आर्यब्राह्मणः[1] । 'राजा च' ६।२।५९ ॥ ब्राह्मणकुमारयोः प्रकृत्या वा । राजब्राह्मणः । कर्मधारय इत्येव । राज्ञो ब्राह्मणो राजब्राह्मणः । 'षष्ठी प्रत्येनसि' ॥६।२।६०॥ राजशब्दः प्रत्येनसि परे प्रकृत्या वा । राज्ञः प्रत्येनाः राजप्रत्येनाः । षष्ठी किम् । राजा चासौ प्रत्येनाश्च राजप्रत्येनाः । 'क्ते नित्यार्थे' ॥६।२।६१॥ क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदं प्रकृत्या वा । नित्यप्रहसितः । सततप्रहसितः । 'कालाः' इति द्वितीयासमासः । नित्यशब्दस्त्यबन्तत्वादाद्युदात्तः । सततशब्दो भावक्तान्तो थाथादि स्वरेणान्तोदात्तः । कर्मक्तान्तस्तु गतिस्वरेणाद्युदात्तः । नित्यार्थे किम् । मुहूर्तप्रहसितः । 'ग्रामः शिल्पिनि' ॥६।२।६२॥ ग्रामः प्रकृत्या शिल्पवाचिनि परे । ग्रामनापितः । ग्राम आद्युदात्तः । शिल्पिनि किम् । ग्रामरथ्या । 'राजा च प्रशंसायाम्' ॥६।२।६३॥ राजा प्रकृत्या वा शिल्पवाचिनि परे प्रशंसा चेत् समासार्थः । राजनापितः । शिल्पिनीत्येव । राजहस्ती । 'आदिरुदात्तः' ॥६।२।६४॥ इत उत्तरं पूर्वपदस्यादिरुदात्त इत्येतदधिकृतम् । 'सप्तमीहारिणौ धर्म्येऽहरणे' ॥६।२।६५॥ सप्तम्यन्तं हारिवाचि च पूर्वपदमाद्युदात्तं हरणादन्यस्मिन् धर्म्यवाचिनि उत्तरपदे । हारीति देयं यः स्वीकरोति सः । धर्म्यमित्याचारनियतं देयम् । स्तूपेशाणः । मुकुटेकार्षापणम् । हलेद्विपदिका । 'संज्ञायाम्' इति समासः । 'कारनाम्नि च' इति

1. PC. has after it प्रत्ययान्तोदात्तं परम् । 2. भावक्तप्रत्ययान्तोदात्तः PC. 3. क्रियते PC. 4. °पणः । PC.

विभक्तेरलुक् । हारी याज्ञिकाश्वः । वैयाकरणहस्ती । क्वचिदयमाचारः स्तूपादिषु शागादि देयं याज्ञिकादीनामश्वादीति । धर्म्ये किम् । स्तम्बेरमः । अहरणे किम् । वाडवहरणम् । वाडवस्य बीजनिषेकात् पश्चात् पुष्ट्यर्थं यद्दीयते तद्धरणमुच्यते । परोपि कृत्स्वरो हारिस्वरेण बाध्यते इति हरणनिषेधो ज्ञापयति । तेन वाडवहार्यमिति हारिस्वरः सिध्येत् । 'युक्ते च' ॥६।२।६६॥ तत्परार्थे समासे पूर्वस्यादिरुदात्तः । गोबल्लवः । अश्वबल्लवः । 'विभाषाध्यक्षे' ॥६।२।६७॥ अध्यक्षे उत्तरपदे पूर्वपदमाद्युदात्तं वा । गवाध्यक्षः । 'पापं च शिल्पिनि' ॥६।२।६८॥ शिल्पिवाचिन्युत्तरपदे पापमाद्युदात्तम् । पापनापितः । पापाणके कुत्सितैः' इति प्रतिपदोक्ते समासे स्यात् । इह न । पापस्य नापितः पापनापितः । 'गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे' ॥६।२।६९॥ भार्यासौश्रुतः । कुमारीदाक्षाः । भिक्षामाणवः । श्राद्धब्राह्मणः । ओदनवात्स्यः । कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते ते एवं क्षिप्यन्ते । 'अङ्गानि मैरेये' ॥६।२।७०॥ मैरेये परे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि । गुडमैरेयः । 'भक्ताख्यास्तदर्थेषु' ॥६।२।७१॥ अन्नवाचिनस्तदर्थे परे आद्युदात्ताः । भाजीकंसः । भिक्षाकंसः । तदर्थेषु किम् । भिक्षाप्रियः । 'गोबिडालसिंहसैन्धवेषूपमाने' ॥६।२।७२॥ एषूपमानवाचिषूत्तरपदेषु पूर्वस्यादिरुदात्तः । धान्यं गौरिव धान्यगवः । गवाकृत्या संनिवेशितमुच्यते । एवं गोबिडालः । तृणसिंहः । सक्तुसैन्धवः । उपमाने किम् । परमसिंहः । 'अके जीविकार्थे' ॥६।२।७३॥ अकप्रत्ययान्ते परे पूर्वमाद्युदात्तं जीविका चेत् समासार्थः ।

१. वडवाश्वाय PC. २. °दात्तं वा PC. ३. एषु परेषु पूर्वस्यादिरुदात्तः क्षेपश्चेत् समासार्थः । गोत्रे-ओदनवात्स्यः । अन्तेवासिनि-ओदनपाणिनीयाः । माणवे-भिक्षामाणवः । ब्राह्मणे-श्राद्धब्राह्मणः । ओदनलाभार्थं ये वात्स्यगोत्रत्व-पाणिनीयशिष्यत्व-माणवब्राह्मणत्वानि प्रतिपद्यन्ते त एवं क्षिप्यन्ते । PC. ४. अकान्ते PC.

दन्तलेखकः । 'प्राचां क्रीडायाम्' ॥६।२।७४॥ प्राच्यक्रीडायां समासार्थे अके परे पूर्वस्यादिरुदात्तः । उद्दालकपुष्पभञ्जिका । प्राचां किम् । जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । 'अणि नियुक्ते' ॥६।२।७५॥ अणन्ते परे पूर्वमाद्युदात्तं नियुक्ते । छत्रधारः । नियुक्ते किम् । काण्डलावः । 'शिल्पिनि चाकृञः' ॥६।२।७६॥ शिल्पिन्यणन्ते परे पूर्वमाद्युदात्तम् । तन्तुवायः । अकृञः किम् । कुम्भकारः । 'संज्ञायां च' ॥६।२।७७॥ पूर्ववत् । तन्तुवायो नाम कीटः । अकृञ इत्येव । रथकारो नाम ब्राह्मणः । 'गोतन्तियवं पाले' ॥६।२।७८॥ पाले परे एतान्याद्युदात्तानि । गोपालः । तन्तिपालः । यवपालः । 'णिनि' ॥६।२।७९॥ णिनन्ते परे पूर्वमाद्युदात्तम् । पुष्पहारी । 'उपमानं शब्दार्थप्रकृतावेव' ॥६।२।८०॥ उपमानवाचि पूर्वं शब्दार्थप्रकृतावेव णिनन्ते परे । पुष्पहारी । उपमानं नियम्यते । उष्ट्रकोशी । शब्दार्थप्रकृतौ किम् । वृकप्रेक्षी । उपसर्गव्रति मा भूत् । खरोद्वारी । एवेति अनुपमानेपि यथा स्यात् । पुष्कलजल्पी । 'युक्तारोह्यादयश्च' ॥६।२।८१॥ एते समासा आद्युदात्ताः । युक्तारोही । आगतरोही । आगतयोधी । आगतनर्दी । आगतप्रहारी । एते णिन्नन्ताः । णिनीत्यस्यैवोदाहरणार्थः पाठः पूर्वोत्तरपदनियमार्थो वा । इह न । वृक्षारोही । युक्ताध्यायीति । आगतमत्स्या । क्षीरहोता । भगिनीभर्ता । ग्रामगोधुक् । अश्वत्रिरात्रः । गर्गत्रिरात्रः । व्युष्टत्रिरात्रः । शणपादः । एते षष्ठीसमासाः । एकशितिपात् । एकः शितिः पादोस्येति त्रिपदो बहुव्रीहिः । तत्रैकशितिः 'तद्धितार्थोत्तरपद—' इति तत्पुरुषस्तस्य निमित्तिस्वरबलीयस्त्वादन्तोदात्तता प्राप्तेत्यत्र पाठः । तेन द्विशितिपादित्यत्र शितिरुदात्तः । निमित्तस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव

१. अण्यन्ते Dc3. २. ब्राह्मणः omitted PC. ३. पूर्वं तथा PC. ४. परे तथा । उष्ट्रकोशी । PC. ५. °नन्दी । PC. ६. तेनेह न । PC. ७. इति निमित्तस्वरबलीयस्त्वा.

ज्ञापकम् । पात्रेसमितादयश्च युक्तारोह्यादयस्ततस्तेभ्याद्युदात्ताः । 'दीर्घकाशतुषभ्राष्ट्रवटं जे' ॥६।२।८२॥ दीर्घान्ताः काश तुष भ्राष्ट्र वट एते जपरे आद्युदात्ताः। कुटीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः। 'अन्त्यात् पूर्वं बह्वचः' ॥६।२।८३॥ जे परे बह्वचोन्त्यात् पूर्वमुदात्तम्। उपसरजः। मन्दुरजः। वडवाजः। बह्वचः किम् । दग्धजानि तृणानि । 'ग्रामे निवसन्तः' ॥६।२।८४॥ अनिवसद्वाचि पूर्वमाद्युदात्तं ग्रामे परे। मल्लग्रामः। वणिग्ग्रामः। समूह इत्यर्थः। अनिवसन्तः किम् । दाक्षिग्रामः ।'घोषादिषु च' ॥६।२।८५॥ एषु पूर्वं तथा। दाक्षिघोषः। घोष । पल्लव । बदरी । पिङ्गल । पिशङ्ग । माला । रक्षा। कटा । शाल्मली । अश्वत्थ । तृण । दाक्षिशाल्मली । शाल्मलिमुनिः । दाक्षिकूटः । 'छात्र्यादयः शालायाम्' ॥६।२।८६॥ शालायामुत्तरपदे तथा । छात्रिशाला । छात्रि । ऐलि । भाण्डि । व्याडि । आखण्डि । आघडि । गोमि । यदा शालान्तः समासः क्लीबस्तदापि 'तत्पुरुषे शालायाम्—' इत्येतस्माद्विप्रतिषेधेनायमेव स्यात् । छात्रिशालम् । 'प्रस्थेवृद्धमकर्क्यादीनाम्' ॥६।२।८७॥ प्रस्थे परे कर्क्यादिवर्जितमवृद्धमाद्युदात्तम् । इन्द्रप्रस्थः । अवृद्धं किम् । दाक्षिप्रस्थः । अकर्क्यादीनां किम् । कर्कीप्रस्थः। कर्की। मघी । मकरी । कर्कन्धू । शमी । करीर । कैरट[1]। कवल। खदिर । 'मालादीनां च' ॥६।२।८८॥ प्रस्थे परे एषामादिरुदात्तः । मालाप्रस्थः। माला। शाला। द्राक्षा। क्षामा। काञ्ची। एक। शोण। काम । एकशोणयोः 'एङ् प्राचां देशे' इति वृद्धत्वम् । 'अमहन्नवं नगरेनुदीचाम्' ॥६।२।८९॥ नगरे परे महन्नववर्जितं पूर्वमाद्युदात्तं तच्चेदुदीचां न । सुह्मनगरम् । अमहन्नवं किम् । महानगरम् । नवनगरम्। अनुदीचां किम् । कान्तीनगरम्। 'अर्मे चावर्णं द्व्यच् त्र्यच्' ॥६।२।९०॥ अर्मे परे द्व्यच् त्र्यच् अवर्णान्तं पूर्वमाद्युदात्तम् । गुप्तार्मम् । कुक्कुटार्मम्। अवर्णं किम्।

१. कटुक PC.

बृहदर्मम् । द्व्यच् त्र्यच् किम् । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् । 'न भूताधिकसंजीवमद्राश्मकज्जलम्' ॥६।२।९१॥ अर्मे परे एतान्याद्युदात्तानि न स्युः । भूतार्मम् । अधिकार्ममित्यादि । दिवोदासादयश्छन्दस्याद्युदात्ताः । दिवोदासाय गायत । वध्र्यश्वाय दाशुषे । 'अन्तः' ॥६।२।९२॥ अधिकारोयं प्रागुत्तरपदादिरित्यस्मात् । 'सर्वं गुणकार्त्स्न्ये' ॥६।२।९३॥ पूर्वपदसर्वस्यान्त उदात्तो गुणकार्त्स्न्यं चेदर्थः । सर्वश्वेतः । सर्वं किम् । परमश्वेतः । आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये वर्तते । गुणे किम् । सर्वसौवर्णः । कार्त्स्न्ये किम् । सर्वेषां श्वेततरः सर्वश्वेतः । 'संज्ञायां गिरिनिकाययोः' ॥६।२।९४॥ गिरौ निकाये च पूर्वमन्तोदात्तं संज्ञायाम् । अञ्जनागिरिः । शाण्डिलिनिकायः । संज्ञायां किम् । ब्राह्मणनिकायः । 'कुमार्यां वयसि' ॥६।२।९५॥ कुमार्यां परे पदे पूर्वमन्तोदात्तं वयसि गम्ये । वृद्धकुमारी । वयसि किम् । परमकुमारी । 'उदकेऽकेवले' ॥६।२।९६॥ मिश्रार्थे समासे सति उदके परे पूर्वं तथा । गुडोदकम् । 'स्वरितो वा—' इति पक्षे स्वरितः । अकेवले किम् । शीतोदकम् । 'द्विगौ क्रतौ' ॥६।२।९७॥ द्विगौ परे क्रतौ वाच्ये पूर्वं तथा । गर्गत्रिरात्रः । द्विगौ किम् । अतिरात्रः । 'सभायां नपुंसके' ॥६।२।९८॥ सभाशब्दे उत्तरपदे क्लीबे पूर्वमन्तोदात्तम् । गोपालसभम् । सभायां किम् । विप्रसेनम् । नपुंसके किम् । राजसभा । 'पुरे प्राचाम्' ॥६।२।९९॥ पूर्वमन्तोदात्तम् । शिवदत्तपुरम् । प्राचां किम् । शिवपुरम् । 'अरिष्टगौडपूर्वे च' ॥६।२।१००॥ एतत्पूर्वसमासे पुरे परे तथा । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणादिहापि । अरिष्टश्रितपुरम् । गौडभृत्यपुरम् । 'न हास्तिनफलकमार्देयाः' ॥६।२।१०१॥ पुरे परे एतानि नान्तोदात्तानि । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् ।

१. प्राच्ये पुरे PC. २. एते पुरे परे नान्तोदात्ताः । PC.

'कुसूलकूपकुम्भशालं बिले' ॥६।२।१०२॥ बिले परे एतान्यन्तोदात्तानि । कुसूलबिलम् । 'दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु' ॥६।२।१०३॥ एषु परेषु दिक्शब्दा अन्तोदात्ताः । पूर्वेषुकामशमी । जनपद–पूर्वपञ्चालाः । आख्यान–पूर्वयायातम् । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् । चानराट—पूर्वचानराटम् । 'आचार्योपसर्जनश्चान्तेवासिनि' ॥६।२।१०४॥ आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ताः । पूर्वपाणिनीयाः । 'उत्तरपदवृद्धौ सर्वं च' ॥६।२।१०५॥ उत्तरपदस्येत्यधिकृत्य या वृद्धिरुक्त तद्वति परे सर्वशब्दः दिक्शब्दश्चान्तोदात्तः । सर्वपाञ्चालकः । अपरपाञ्चालकः । अधिकारलक्षणादिह न । सर्वकारकः । 'बहुव्रीहौ विश्वं संज्ञायाम्' ॥६।२।१०६॥ अत्र विश्वं पूर्वपदमन्तोदात्तम् ॥ विश्वदेवः । विश्वमहान् । पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्राप्तम् । बहुव्रीहौ किम् । विश्वे च ते देवा विश्वेदेवाः । संज्ञायां किम् । विश्वे देवा अस्य विश्वदेवः । विश्वामित्रो विश्वाजिन इत्यत्र 'संज्ञायां मित्राजिनयोः' इति परत्वात्स्यात् । प्रागव्ययीभावाद् बहुव्रीह्यधिकारः 'उदराश्वेषुषु' ॥६।२।१०७॥ पूर्वमन्तोदात्तं बहुव्रीहौ संज्ञायाम् । वृकोदरः । कुवलयाश्वः । महेषुः । 'क्षेपे' ॥६।२।१०८॥ क्षेपे गम्ये उदरादिषु परेषु बहुव्रीहौ संज्ञायां पूर्वं तथा । कुण्डोदरः । कटुकाश्वः । चलाचलेषुः । 'नदी बन्धुनि' ॥६।२।१०९॥ बन्धुनि परे नद्यन्तमन्तोदात्तं बहुव्रीहौ । गार्गीबन्धुः । नदी किम् । ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । 'निष्ठोपसर्गपूर्वमन्यतरस्याम्' ॥६।२।११०॥ उपसर्गपूर्वं निष्ठान्तं पूर्वपदमन्तोदात्तं वा । प्रक्षालितपादः । निष्ठा किम् । प्रसेचकमुखः । उपसर्गपूर्वं किम् । शुष्कमुखः । 'उत्तरपदादिः' ॥६।२।१११॥ अधिकारः । आपादान्तम् । 'कर्णो वर्णलक्षणात्' ॥६।२।

१. एत अन्तोदात्ताः PC. २. अपरयायातम् PC. ३. यायातमधिकृत्य कृतो ग्रन्थ यायातम् PC. ४. उत्तरपदाधिकारः आपादान्तः । आद्यधिकारः प्रकृत्या भगालमित्यवधिकः । Pc.

११२॥ आभ्यां परः कर्णशब्दः आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । दात्राकर्णः । 'कर्णे लक्षणस्य' इति दीर्घः । लक्षणमिति पशूनां विभागज्ञापनार्थं कर्णादिषु दात्रादिप्रतिरूपकं यत् क्रियते तदिह गृह्यते । तेनेह न । स्थूलकर्णः । 'संज्ञौपम्ययोश्च' ॥६।२।११३॥ अत्र यो बहुव्रीहिस्तत्र कर्ण उत्तरपदमाद्युदात्तं संज्ञायाम् । कुम्भकर्णः । औपम्ये-गोकर्णः । 'कण्ठपृष्ठग्रीवाजङ्घं च' ॥६।२।११४॥ संज्ञौपम्ययोरेते आद्युदात्ताः संज्ञायाम् । शितिकण्ठः । काण्डपृष्ठः । दशग्रीवः । गोजङ्घः । औपम्ये । उष्ट्रकण्ठः । गोपृष्ठः । उष्ट्रग्रीवः । नाडीजङ्घः । 'शृङ्गमवस्थायां च' ॥६।२।११५॥ अवस्थायां संज्ञौपम्ययोश्च शृङ्गमुत्तरपदमाद्युदात्तम् । उद्गतशृङ्गः । ऋष्यशृङ्गः । मेषशृङ्गः । 'नञो जरमरमित्रमृताः' ॥६।२।११६॥ नञः परे एते आद्युदात्ता बहुव्रीहौ । अजरानित्यादि । 'सोर्मनसी अलोमोषसी' ॥६।२।११७॥ सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तम् । सुकर्मा । सुयशाः । सोः किम् । कृतकर्मा । अलोमोषसी किम् । सुलोमा सूषा । 'क्रत्वादयश्च' ॥६।२।११८॥ आद्युदात्ता बहुव्रीहौ । सुक्रतुः । क्रतु । दृशीक । प्रतीक । प्रपूर्ति । हव्य । भव्य । भग । 'आद्युदात्तं द्व्यच्छन्दसि' ॥६।२।११९॥ यदाद्युदात्तं द्व्यच् तत् सोरुत्तरं बहुव्रीहावाद्युदात्तम् । स्वश्वाः । सुरथाः । नित्स्वरेणाश्वरथावाद्युदात्तौ । आद्युदात्तं किम् । सुबाहुः । अन्तोदात्तोयम् । द्व्यच् किम् । सुगुरसत् । 'वीरवीर्यौ च' ॥६।२।१२०॥ सोरुत्तरावेव तौ छन्दस्याद्युदात्तौ बहुव्रीहौ । सुवीरेण । सुवीर्यस्य । बहुव्रीह्यधिकारो निवृत्तः । 'कूलतीरतूलमूलशालाक्षसममव्ययीभावे' ॥६।२।१२१॥ एतान्युत्तरपदान्यव्ययीभावे आद्युदात्तानि । उपकूलम् । उपतीरम् । उपतूलम् । उपमूलम् । परिशालम् । पर्यक्षम् । सुषमम् । कूलादिग्रहः किम् । उपकुम्भम् । अव्ययीभावे किम् । परमकूलम् । 'कंसमन्थशूर्पपाय्यकाण्डं द्विगौ' ॥६।२।१२२॥

१ °कर्णम् PC. २. अवस्थावगमे PC. ३. सोरुत्तरं &c. PC.

उत्तरपदान्येतानि द्विगौ आद्युदात्तानि । द्विकंसमित्यादि । 'तत्पुरुषे शालायां नपुंसके' ॥६।२।१२३॥ क्लीबे तत्पुरुषे शालान्ते तथा । ब्राह्मणशालम् । 'कन्था च' ॥६।२।१२४॥ पूर्ववत् । सौशमिकन्थम् । नपुंसक इत्येव । दाक्षिकन्था । 'आदिश्चिहणादीनाम्' ॥६।२।१२५॥ कन्थान्ते तत्पुरुषे चिहणादीनामादिरुदात्तः । चिहणकन्थम् । चिहण । मदुर । वैतुल । पटत्क । वैडालिकर्णि । कुक्कुट । चित्कण । चिक्कण । आद्यधिकारे आदिग्रहः पूर्वपदाद्युदात्तार्थः । 'चेलखेटकटुककाण्डं गर्हायाम्' ॥६।२।१२६॥ गर्हार्थे चेलादीन्युत्तरपदान्याद्युदात्तानि । पुत्रचेलम् । पुत्रः चेलमिव । 'उपमितं व्याघ्रा—' इति समासः । उपानत्खेटम् । दधिकटुकम् । भूतकाण्डम् । 'चीरमुपमानम्' ॥६।२।१२७॥ उपमानार्थे तत्पुरुषे चीरमुत्तरमाद्युदात्तम् । वस्त्रचीरम् । कम्बलचीरम् । 'पललसूपशाकं मिश्रे' ॥६।२।१२८॥ मिश्रार्थे तत्पुरुषे एतान्याद्युदात्तानि । गुडपललम् । घृतसूपः । घृतशाकम् । 'कूलसूदस्थलकर्षाः संज्ञायाम्' ॥६।२।१२९॥ एते तथा । दाक्षिकूलम् । देवसूदम् । भाण्डस्थली । स्थलेग्रहे लिङ्गविशिष्टस्यापि ग्रहात् । दाक्षिकर्षः । ग्रामनामधेयान्येतानि । 'अकर्मधारये राज्यम्' ॥६।२।१३०॥ कर्मधारयान्यतत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । अकर्मधारये किम् । परमराज्यम् । चेलराज्यादिस्वरादव्ययस्वरः स्यात् पूर्वविप्रतिषेधेन । कुचेलम् । कुराज्यम् । 'वर्ग्यादयश्च' ॥६।२।१३१॥ एते पूर्ववत् । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । वर्ग्यादयो गणे न पठ्यन्ते । वर्ग पूग इत्येवमादयो ये पठितास्त एव यत्प्रत्ययान्ता इह गृह्यन्ते । 'पुत्रः पुम्भ्यः' ॥६।२।१३२॥ पुंशब्देभ्यः परः पुत्र आद्युदात्तः । कौनाटिपुत्रः । पुम्भ्यः किम् । गार्गीपुत्रः । 'नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः' ॥६।२।१३३॥ आचार्यादिभ्यः परः पुत्रो नाद्युदात्तः । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः ।

राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतृपुत्रः । संयुक्तपुत्रः । श्यालपुत्रः । ज्ञातिपुत्रः । भ्रातुष्पुत्रः । 'ऋतो विद्यायोनिसंबन्धेभ्यः' इति षष्ठ्या अलुक् । समासान्तोदात्तत्वमेव । 'चूर्णादीन्यप्राणिषष्ठ्याः' ॥६।२।१३४॥ एतान्यप्राणिषष्ठ्यन्तात् पराण्याद्युदात्तानि । मुद्गचूर्णम् । अप्राणिषष्ठ्याः किम् । मत्स्यचूर्णम् । चूर्ण । करिष । कपिल । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप । चमसी । चक्कन । चौल । 'षट् च काण्डादीनि' ॥६।२।१३५॥ काण्ड चीर पलल सूप शाक कूल इत्येतानि षट् अप्राणिषष्ठ्या गर्होपमानमिश्रसंज्ञासु आद्युदात्तानि। दर्भकाण्डम् । दर्भचीरम् । तिलपललम् । मुद्गसूपः । मूलकशाकम् । नदीकूलम् । षट् किम् । राजसूदः । 'कुण्डं वनम्' ॥६।२।१३६॥ तत्पुरुषार्थे उत्तरपदं कुण्डमाद्युदात्तम् । शरकुण्डम् । वनं किम् । मृत्कुण्डम् । आद्यधिकारो निवृत्तः । 'प्रकृत्या भगालम्' ॥६।२।१३७॥ भगालवाच्युत्तरपदं प्रकृत्या । कुम्भीभगालम् । कुम्भीकपालम् । भगालादयो मध्योदात्ताः । 'प्रकृत्या' इत्येतदधिक्रियते अन्त इति यावत् । 'शितेर्नित्याबह्वज् बहुव्रीहावभसत्' ॥६।२।१३८॥ शितेः परं नित्याबह्वच्कं बहुव्रीहौ प्रकृत्या । शितिपादः । शित्यंसः । शित्योष्ठः । पादशब्दो वृषादित्वादाद्युदात्तः । अंसौष्ठौ प्रत्ययस्य नित्त्वात् । शितेः किम् । दर्शनीयपादः । अबह्वच् किम् । शितिललाटः । नित्याबह्वच् किम् । शितिककुत् । ककुदस्यावस्थायां टिलोपः । अन्यत्र शितिककुदः । अभसत् किम् । शितिभसत् । 'गतिकारकोपपदात् कृत्' ॥६।२।१३९॥ एभ्यः परं कृदन्तं प्रकृतिस्वरं तत्पुरुषे । प्रकारकः । कारकात् । इध्मव्रश्चनः । उपपदात् । ईषत्करः । एभ्यः किम् । षष्ठीतत्पुरुषे मा भूत् । देवदत्तकारकः । 'उभे वनस्पत्यादिषु

१ °षष्ठ्याः PC. २. शरकाण्डम् । PC. ३. शितेरुत्तरं नित्यं यदबह्वच् तच्छब्दवर्जितं तत् प्रकृतिस्वरं स्यात् बहुव्रीहौ । PC. ४. प्रकृत्या PC.

युगपत्' ॥६।२।१४०॥ एषु पूर्वोत्तरपदे युगपत् प्रकृत्या । वनस्पतिः । वनपतिशब्दावाद्युदात्तौ । बृहस्पतिः । बृहदन्तोदात्तः । केचिदाद्युदात्तत्वमत्र निपातयन्ति । शचीपतिः । 'कृदिकारादक्तिनः' इत्यन्तोदात्तः । केचिच्छार्ङ्गरवादिपाठेनाद्युदात्त इत्याहुः । तनूनपात् । तनूरन्तोदात्तः ⁴ । 'देवताद्वन्द्वे च' ॥६।२।१४१॥ उभे युगपत् प्रकृत्या । इन्द्रावरुणौ । इन्द्राबृहस्पती । इन्द्र आद्युदात्तो निपातितः । वरुण उनन्नन्त आद्युदात्तः । देवता किम् । प्लक्षन्यग्रोधौ । द्वन्द्वे किम् । अग्निष्टोमः । 'नोत्तरपदेनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' ॥६।२।१४२॥ पृथिव्यादिवर्जितेनुदात्तादावुत्तरपदे देवताद्वन्द्वे उभे प्रकृत्या न । इन्द्राग्नी । अग्निरन्तोदात्तः । अपृथिव्यादौ किम् । द्यावापृथिव्यौ । सोमारुद्रौ । इन्द्रापूषणौ । शुक्रामन्थिनौ । द्यावाशब्द आद्युदात्तो निपातितः । पृथिवी ङीषन्तत्वादन्तोदात्तः । सोमो मन्नन्त आद्युदात्तः । रुद्रो रगन्तत्वादन्तोदात्तः । 'श्वन्नुक्षन्—' इति पूषान्तोदात्तो निपातितः । मथिन् इन्नन्तत्वादन्तोदात्तः । 'अन्तः' ॥६।२।१४३॥ समासस्योत्तरपदस्यान्त उदात्त इत्यापादसमाप्तेरधिकारः । 'थाथघञ्क्ताजबित्रकाणाम्' ॥६।२।१४४॥ एतत्प्रत्ययान्तानां गतिकारकोपपदात् परेषामन्त उदात्तः । थ सुनीथः । अवभृथः । 'अवे भृञः' इति क्थन् । अथ आवसथः । 'उपसर्गे वसेः' इत्यथः । घञ् प्रभेदः । काष्ठभेदः । क्त दूरादागतः विशुष्कः । अच्—प्रक्षयः । अप्—प्रलवः । इत्र—प्रलवित्रम् । क—गोवृषः ।

१. पदेषु PC. २. वनपती आद्यु° PC. ३. इति ङीषन्तोन्तोदात्तः PC. ४. नपादिति 'नभ्राण्नपात्—' इत्याद्युदात्तो निपातितः । नराशंसः । नरेत्यबन्त आद्युदात्तः । शंसो घञन्तः । दीर्घो निपातनात् । शुनःशेपः । उभावाद्युदात्तौ । शण्डामर्कौ । घञन्तौ । 'अन्येषामपि—'इति दीर्घः । तृष्णावरुत्री । तृष्ण आद्युदात्तः । वरुत्रीत्यन्तोदात्तो निपातितः । पूर्ववद्दीर्घः । बम्बाविश्ववयसौ । बम्बोन्तोदात्तः । विश्ववयो बहुव्रीहौ विश्वमित्यन्तोदात्तं दीर्घः पूर्ववत् । मर्मृत्युः । मृङोपि च । मृत्युरन्तोदात्तः । ५. द्यावेति 'दिवो द्यावा' इति दिवा द्यावेत्यन्तोदात्तो निपातितः । PC.

मूलविभुजादित्वात् कः । गतिकारकोपपदादित्येव । सुस्तुतं भवता । कर्मप्रवचनीयेऽव्ययस्वर एव । 'सूपमानात् क्तः' ॥६।२।१४५॥ सोऽपमानाच्च परं क्तान्तमन्तोदात्तम् । सुकृतम् । शशप्लुतम् । 'गतिरनन्तरः' इति प्राप्ते उपमानादपि 'तृतीया कर्मणि' इत्ययमारम्भः । गतिकारकोपपदादित्येव । सुस्तुतं भवता । 'संज्ञायामनाचितादीनाम्' ॥६।२।१४६॥ संज्ञायां गतिकारकोपपदात् परं क्तान्तमन्तोदात्तमाचितादीन् विना । संभूतो गार्ग्यायणः । उपहूतः शाकल्यः । 'गतिरनन्तरः' इत्येतस्यापवादः । धनुष्खाता नदी । 'तृतीया कर्मणि' इत्यस्यात्र बाधः । अनाचितादीनां किम् । आचितम् । पर्याचितम् । आस्थापितम् । परिगृहीतम् । निरुक्तम् । प्रतिपन्नम् । प्रश्लिष्टम् । उपहतम् । उपस्थितम् । संहिता गवि । संहिताशब्दो यदि गोरन्यस्य संज्ञा तदान्तोदात्तो न । यदा गोः संज्ञा तदान्तोदात्त एव । 'प्रवृद्धादीनां च' ॥६।२।१४७॥ एषां क्तान्त-मुत्तरपदमन्तोदात्तम् । प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुक्ताः सक्तवः । आकर्षेवहितः । अवहितो भोगेषु । खट्वारूढः । कवि-शस्तः । पुनरुत्स्यूतं वासोदेयं पुनर्निष्कृतो रथः । आकृतिगणोयम् । यानादीनामत्र गणे पाठः प्रयोगप्रवृत्तिप्रदर्शनाय न विषयनियमार्थः । तेन यानादिभ्योन्यत्राप्यन्तोदात्तता स्यात् । विषयनियमार्थ एवे-त्येके । 'कारकाद्दत्तश्रुतयोरेवाशिषि' ॥६।२।१४८॥ संज्ञायामाशिषि विषये कारकात्परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः । देवा एनं देयासुर्देवदत्तः । विष्णुरेनं श्रूयात् विष्णुश्रुतः । कारकात् किम् । अकारकान्नियमो मा भूत् । संभूतो गार्ग्यायणः । दत्तश्रुतयोः किम् । देवपालितः । आशिषीति किम् । अनाशिषि नियमो मा भूत् । देवैः खाता देवखाता । कारकाद्दत्तश्रुतयोराशिष्येवेत्ययमपि नियमोत्रेष्यते । तेनानाहतो नदति देवदत्तः इत्यत्र न । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर एव ।

१. कर्मप्रवचनीये नाभिः चाव्यय° PC. २. अवशिष्टम् । उपहूतम् । PC. ३. संहित PC. ४. भोगेषु PC. ५. वृत्ति° PC.

अत्रत्यो देवदत्तशब्दः कस्यचित् शङ्खस्य नाम । 'इत्थंभूतेन कृतमिति च' ॥६।२।१४९॥ विकारोपात्तेन कृतमित्येतस्मिन्नर्थे समासस्योत्तरपदमन्तोदात्तम् । उन्मत्तप्रलपितम् । उन्मत्तत्वप्रकारमापन्नेन कृतमित्यर्थः । 'तृतीया कर्मणि' इत्यस्यापवादः । 'अनो भावकर्मवचनः' ॥६।२।१५०॥ कारकात् परमनप्रत्ययान्तं भाववचनं कर्मवचनं चान्तोदात्तम् । ओदनभोजनं सुखम् । राजभोजनाः शालयः । भावकर्मेति किम् । दन्तधावनं काष्ठम् । करणे ल्युट् । कृत्स्वरः । प्रकृतिस्वरः प्रत्युदाहरणेषु सर्वत्र । 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' ॥६।२।१५१॥ एतान्युत्तरपदान्यन्तोदात्तानि । मन्-रथवर्त्म । क्तिन्-पाणिनिकृतिः । व्याख्यान-ऋगयनव्याख्यानम् । शयन-राजशयनम् । आसन-राजासनम् । स्थान-गोस्थानम् । याजकादि-ब्राह्मणयाजकः । 'याजकादिभिश्च' इत्यत्रैते गणिताः । क्रीत-गोक्रीतः । कारकादित्येव । प्रकृतिः । कृत्स्वरापवादो योगः । 'सप्तम्याः पुण्यम्' ॥६।२।१५२॥ सप्तम्यन्तात् परं पुण्यमन्तोदात्तम् । वेदे पुण्यं वेदपुण्यम् । कृत्स्वरेणाद्युदात्तत्वं मा भूत् इति विधिः । 'ऊनार्थकलहं तृतीयायाः' ॥६।२।१५३॥ तृतीयान्तात्पराण्यन्तोदात्तानि । कार्षापणविकलम् । असिकलहः । 'मिश्रं चानुपसर्गमसन्धौ' ॥६।२।१५४॥ तृतीयान्तात् परं मिश्रमन्तोदात्तम् । गुडमिश्राः । अनुपसर्गं किम् । गुडसंमिश्राः । असंधौ किम् । ब्राह्मणमिश्रो राजा । ब्राह्मणैः सहैक्यं गत इत्यर्थः । इह पणबन्धेनैकार्थ्यं संधिः । पणबन्धो यदि मे भवानिदं कुर्यादहमपि तर्हि इदं ते करिष्यामि इति परिभाषणम् । केचित् पुनर्गृह्यमाणे विशेषाप्रत्यासत्तिः संधिरित्याहुः । 'नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः' ॥६।२।१५५॥ संपाद्यर्हहितालंवाचिनो ये तद्धितास्तदन्तान्युत्तरपदानि नञः पराणि गुणप्रतिषेधवाचीन्यन्तोदात्तानि । कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकम् । न कार्णवेष्टकि-

१. विकारापन्ने कृत° PC. २. एते उत्तरपदेऽन्तोदात्ताः । PC.

कमकार्णवेष्टकिकम् । छेदमर्हति छैदिकः । न छैदिकः अच्छैदिकः । वत्सेभ्यो हितो वत्सीयः । न वत्सीयः अवत्सीयः । संतापाय प्रभवति सांतापिकः । न सांतापिकोऽसांतापिकः । गुणप्रतिषेधे किम् । अगार्दभरथिकः । अन्यार्थोऽयं नञ् । संपदाद्यर्थाः किम् । अपाणिनीयः । 'ययतोश्चातदर्थे' ॥६।२।१५६॥ ययतौ यावतदर्थे तदन्तस्योत्तरपदस्य नञः परस्यान्त उदात्तः । पाशानां समूहः पाश्या । न पाश्या अपाश्या । 'पाशादिभ्यो यः' । अन्यार्थेयं नञ् । दन्त्यम् । 'शरीरावयवाद्यत्' । न दन्त्यमदन्त्यम् । अतदर्थे किम् । पादार्थमुदकं पाद्यम् । गुणप्रतिषेधे एव । दन्त्यादन्यददन्त्यम् । 'अच्कावशक्तौ' ॥६।२।१५७॥ नञः परमजन्तं कान्तं वाशक्तौ गम्यायामन्तोदात्तौ । अपचः पक्तुमशक्तः । अविक्षिपः । 'आक्रोशे च' ॥६।२।१५८॥ आक्रोशार्थे अजकान्तं नञः परं तथा । अपचोऽयं जाल्मः । अविलिखः । 'संज्ञायाम्' ॥६।२।१५९॥ आक्रोशे नञः परमेव संज्ञायां वर्तमानमन्तोदात्तम् । अदेवदत्तः । 'कृत्योकेष्णुच्चार्वादयश्च' ॥६।२।१६०॥ नञः परे एते तथा । कृत्य–अकर्तव्यम् । उक–अगामुकम् । इष्णुच्–अनलंकरिष्णुः । चार्वादि–अचारुः । असाधुः । अयौधिकः । अवदान्यः । चारु । साधु । यौधिक । अनङ्गमेजय । अत्र द्वितीये नञ्समासेन्तोदात्तत्वम्[3] । अननङ्गमेजयः । वदान्यः । अकस्मात् । अत्रापि[4] द्वितीये नञ्समासेन्तोदात्तत्वम् । वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायामेते ज्ञेयाः । विकारसदृशे व्यस्तसमस्ते । अविकारः । असदृशः । गृहपतिः । राजाह्नोश्छन्दसि । भाषायां नञ्स्वर एव । 'विभाषा तृन्नन्नतीक्ष्णशुचिषु' ॥६।२।१६१॥ एतेषु नञ उत्तरेषु अन्त उदात्तो वा ।

१. अन्या...नञ् dropped PC. २. शापार्थे PC. ३. नञ्यन्तोदात्तः। PC. ४. अत्रापि नञ्यन्तरम् । अनकस्मात् । PC.

तृन् अकर्ता । अन्न–अनन्नम् । तीक्ष्ण–अतीक्ष्णम् । शुचि–अशुचिः । पक्षे अव्ययस्वर एव । 'बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने' ॥६।२।१६२॥ एभ्यः परयोरनयोरन्त उदात्तः । इदं प्रथममस्य इदंप्रथमः । इदंद्वितीयः । एतद्द्वितीयः । तद्द्वितीयः । अत्र सर्वत्र गमनादिक्रियागणनमेव । बहुव्रीहौ किम् । अनेन प्रथमः इदंप्रथमः । 'तृतीया' इति योगविभागात्समासः । क्रियागणने किम् । अयं प्रथम एषां ते इदंप्रथमाः । द्रव्यगणनमेतत् । 'बहुव्रीहौ' इत्येतत् 'वनं समासे' इत्येतस्मात् प्रागनुवर्तते । 'संख्यायाः स्तनः' ॥६।२।१६३॥ अन्तोदात्तः । द्विस्तना । संख्यायां किम् । दर्शनीयस्तना । 'विभाषाच्छन्दसि' ॥६।२।१६४॥ संख्यायाः स्तनोन्तोदात्तो वा छन्दसि । द्विस्तनां कुर्याद्वामदेवः । 'संज्ञायां मित्राजिनयोः' ॥६।२।१६५॥ मित्राजिनोत्तरपदे बहुव्रीहावन्तोदात्ते । देवमित्रः । वृकाजिनः । संज्ञायां किम् । प्रियमित्रः । ऋषिप्रतिषेधो मित्रे । विश्वामित्र ऋषिः । 'व्यवायिनोन्तरम्' ॥६।२।१६६॥ व्यवधायकवाचिनः परमन्तरमन्तोदात्तम् । कुड्यान्तरम् । 'मुखं स्वाङ्गम्' ॥६।२।१६७॥ स्वाङ्गवाच्युत्तरपदं मुखं बहुव्रीहावन्तोदात्तम् । गौरमुखः । स्वाङ्गं किम् । दीर्घमुखा शाला । 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' ॥६।२।१६८॥ एभ्यः परं मुखं नान्तोदात्तम् । अव्यय—उच्चैर्मुखः । दिक्शब्द-प्राङ्मुखः । गो–गोमुखः । महत्–महामुखः । स्थूल–स्थूलमुखः । मुष्टि–मुष्टिमुखः । पृथु–पृथुमुखः । वत्स–वत्समुखः । 'निष्ठोपमानादन्यतरस्याम्' ॥६।२।१६९॥ आभ्यां परं मुखमन्तोदात्तं वा । प्रक्षालितमुखः । यदैतदुत्तरपदान्तोदात्तत्वं नास्ति तदा 'निष्ठोपसर्गपूर्व—' इति पक्षे पूर्वपदान्तोदात्तत्वं तस्याप्यभावे पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरः । उपमानात्–सिंहमुखः । 'जातिकालसुखादिभ्योनाच्छादनात् क्तोकृतमित-

१. अनयोः dropped PC. २. मुखं वा तथा । PC.

प्रतिपन्नाः ' ॥६।२।१७०॥ आच्छादनवर्जितात् जात्यादित्रयात् परं कृतमितप्रतिपन्नान् वर्जयित्वा क्तान्तमन्तोदात्तम् । जातिवाचिनः—सारङ्गो जग्धो येन सारङ्गजग्धः । काल—मासो जातो यस्य मासजातः । सुखादि- सुखजातः । दुःखजातः । तृप्रजातः । अनाच्छादनात् किम् । वस्त्रच्छन्नः । अकृतादयः किम् । कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । ' वा जाते ' ॥६।२।१७१॥ जात्यादिपूर्वो जातान्तो बहुव्रीहिस्तथा वा । दन्तजातः । २ । मासजातः । २ । सुखजातः । २ । ' नञ्सुभ्याम् ' ॥६।२।१७२॥ आभ्यां परं बहुव्रीहौ अन्तोदात्तम् । अयवो देशः । अव्रीहिः । सुयवः । सुव्रीहिः । ' कपि पूर्वम् ' ॥६।२।१७३॥ नञ्सुभ्यां परं पदं कपः पूर्वभूतमन्तोदात्तं कपि परे । अकुमारीको देशः । सुकुमारीकः । ' ह्रस्वान्तेन्त्यात् पूर्वम् ' ॥६।२।१७४॥ नञ्सुभ्यां परं यत् पदं ह्रस्वान्तं तत्रान्त्यात् पूर्वमुदात्तं स्यात् कपि परे । अयवकः । सुयवकः । पूर्वमित्यनुवर्तमाने पुनः पूर्वसंग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थं ह्रस्वान्तेन्त्यादेव पूर्वमुदात्तं न कपि पूर्वम् । तेन अज्ञकः सुज्ञकः इत्यत्र कबन्तस्यैवान्तोदात्तत्वम् । ' बहोर्नञ्वदुत्तरपदभूम्नि ' ॥६।२।१७५॥ उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य नञः परस्येव स्वरः । ' नञ्सुभ्याम् ' ' कपि पूर्वम् ' ' ह्रस्वान्तेन्त्यात्पूर्वम् ' ' नञो जरमरमित्रमृताः ' इति सूत्रैरुक्तः स्वरः स्यात् । बहुमाषो देशः । बहुव्रीहिकः । बहुकुमारीकः । उत्तरपदभूम्नि किम् । बहुमनाः । न गुणादयोवयवाः ' ॥६।२।१७६॥ बहोः परे एते नान्तोदात्ताः । बहुगुणा रज्जुः । बह्वक्षरं पदम् । एवं बहुच्छन्दः । बहुसूक्तः । बह्वध्यायः । गुणादिराकृतिगणः । अवयवाः किम् । बहुगुणो ब्राह्मणः । ' उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ' ॥६।२।१७७॥ उपसर्गात् परं पर्शुव्यतिरिक्तं ध्रुवं स्वाङ्गमन्तोदात्तम् । प्रपृष्ठः । प्रललाटः । ध्रुवमेकरूपम् । उपसर्गात् किम् । दर्शनीयपृष्ठः । स्वाङ्गं किम् ।

१. °पन्नवर्जितं PC. २. अमाषो देशः । PC. ३. आकृतिगणोयम् । PC.

प्रशाखो वृक्षः । ध्रुवं किम् । उद्बाहुः । अपर्शु किम् । उत्पर्शुः । विपर्शुः । बहुव्रीह्यविकारो निवृत्तः । 'वनं समासे' ॥६।२।१७८॥ समासमात्रे वनमुपसर्गात् परमन्तोदात्तम् । प्रवणे यष्टव्यम् । निर्वणे प्रणिधीयते । 'अन्तः' ॥६।२।१७९॥ अन्तःशब्दात् परं वनमन्तोदात्तम् । अन्तर्वणो देशः । 'अन्तश्च' ॥६।२।१८०॥ उपसर्गात् परोन्तःशब्दोन्तोदात्तः । प्रान्तः । पर्यन्तः । 'ननिविभ्याम्' ॥६।२।१८१॥ आभ्यां परोन्तः शब्दो नान्तोदात्तः । न्यन्तः । व्यन्तः । अनेनान्तोदात्ते निषिद्धे पूर्वपदप्रकृतिस्वरे कृते यणादेशः । तत्र 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य' इति स्वरितः । 'परेरभितोभावि मण्डलम्' ॥६।२।१८२॥ परेः परमभितोभाविवचनं मण्डलं चान्तोदात्तम् । परिकूलम् । अभितो भावो भवनमस्यास्तीत्यभितोभावि । परिमण्डलम् । 'प्रादस्वाङ्गं संज्ञायाम्' ॥६।२।१८३॥ अन्तोदात्तम् । प्रगृहम् । प्रकोष्ठम् । अस्वाङ्गं किम् । प्रपदम् । 'निरुदकादीनि च' ॥६।२।१८४॥ अन्तोदात्तानि । निरुदकम् । निरुपलम् । निर्मक्षिकम् । निर्मशकम् । निष्कालकम् । निष्कालिकम् । निष्टालिका । निष्पेषः । निस्तरीपः । निस्तरीकः । दुस्तरीपः । तरीनीः । तां पातीति तरीपः । निरजिनम् । प्राजिनम् । परिपादः । परिकेशः । परिकर्षः । आकृतिगणोयम् । 'अभेर्मुखम्' ॥६।२।१८५॥ अन्तोदात्तम् । अभिमुखम् । 'अपाच्च' ॥६।२।१८६॥ अपमुखः । 'स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनाम च' ॥६।२।१८७॥ अपात् पराणि स्फिगादीनि षट् सीरनामानि नाम चान्तोदात्तानि स्युः । अपस्फिगम् । अपपूतम् । अपवीणम् । अपाञ्जः । अपाध्वा । अपकुक्षि । अपसीरम् । अपहलम् । अपनाम । बहुव्रीहिरव्ययीभावो वा । 'अधेरुपरिस्थम्' ॥६।२।१८८॥ अधेः परमुपरिस्थवाच्यन्तोदात्तम् । अधिदन्तः । दन्तस्योपरि स्थितो दन्त उच्यते । उपरिस्थं किम् ।

१. स्वरत्वे यणा° PC. २. °वाञ्चि PC.

अधिकरणम् । 'अनोरप्रधानकनीयसी' ॥६।२।१८९॥ अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो ज्येष्ठमनुज्येष्ठः । पूर्वपदप्रधानः समासः । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानोयम् । 'पुरुषश्चान्वादिष्टः' ॥६।२।१९०॥ अनोः परः पुरुषोन्तोदात्तः । अन्वादिष्टः पुरुषः अनुपुरुषः । अन्वादिष्टः किम् । अनुगतः पुरुषोनुपुरुषः । 'अतेरकृत्पदे' ॥६।२।१९१॥ अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिकशोश्वः । अतिपदा शक्करी । अकृत्पदे किम् । अतिकारकः । अतेर्धातुलोप इति वाच्यम् । इह मा भूत् । शोभनो गार्ग्योतिगार्ग्यः । इह च यथा स्यात् । अतिक्रान्तः कारकादतिकारकः । 'नेरनिधाने' ॥६।२।१९२॥ नेः परमुत्तरपदमन्तोदात्तं प्रकाशनेर्थे । निमूलम् । बहुव्रीहिस्तत्पुरुषो वा । अव्ययीभावे समासान्तोदात्तत्वेनैव सिद्धम् । अनिधाने किम् । निवाक् । निहितवागित्यर्थः । 'प्रतेरंश्वादयस्तत्पुरुषे' ॥६।२।१९३॥ प्रतेः परे एतेन्तोदात्ताः । प्रतिगतोंशुः प्रत्यंशुः । अंशु । जन । राजन् । उष्ट्र । खेटक । अजिर । आर्द्रा । श्रवण । कृत्तिका । तत्पुरुषे किम् । प्रतिगता अंशवोस्य प्रत्यंशुरयमुष्ट्रः । 'उपाद्द्व्यजजिनमगौरादयः' ॥६।२।१९४॥ उपात् परं द्व्यच्कमजिनं चान्तोदात्तम् । उपदेवः । उपाजिनम् । अगौरादयः किम् । उपगौरः । गौर । तैष । तैल । लेट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्प । पाद । तत्पुरुष इत्येव । उपगतः सोमः यस्य स उपसोमः । 'सोरवक्षेपणे' ॥६।२।१९५॥ निन्दायां सोरुत्तरमन्तोदात्तं तत्पुरुषे । इह खल्विदानीं सुस्थण्डिले सुस्फिताभ्यां सुप्रत्यवसितः । सुरत्र पूजायामेव । वाक्यार्थस्त्ववक्षेपणमसूयया तथाभिधानात् । सोः किम् । कुब्राह्मणः । अवक्षेपणे किम् । सुतृणेषु । 'विभाषोत्पुच्छे' ॥६।२।१९६॥

१. After it अनुगतश्चेत् PC. २. उत्तरपदं पदशब्दश्च PC. ३. गायत्री PC. ४. कारकमति° PC. ५. उपाजिनः PC. ६. उपगौरम् PC.

उत्पुच्छशब्दोन्तोदात्तः । उत्क्रान्तः पुच्छादुत्पुच्छः । यदा तु पुच्छमुदस्यति उत्पुच्छयति उत्पुच्छयतेरच् उत्पुच्छस्तदा थाथादिना नित्यमन्तोदात्तत्वे प्राप्ते विकल्पः । सेयमुभयत्र विभाषा । तत्पुरुष इत्येव । उदस्तं पुच्छमस्य उत्पुच्छः । 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' ॥६।२।१९७॥ आभ्यां परेष्वेष्वन्त उदात्तो वा बहुव्रीहौ । द्विपात् । त्रिपात् । द्विदन् । त्रिदन् । द्विमूर्धा । त्रिमूर्धा । पादशब्दः कृताल्लोपः स्यात् । कृतददादेशो दन्तो दत् । मूर्धनित्यकृतसमासान्त एव । तस्य प्रयोजनमसत्यपि समासान्ते स्यादिति । एतज् ज्ञापकं वानित्यः समासान्तः स्यादिति । बहुव्रीहौ किम् । द्वयोर्मूर्धा द्विमूर्धा । 'सक्थं चाक्रान्तात्' ॥६।२।१९८॥ क्रान्तादन्यस्मात्परं सक्थमन्तोदात्तम् । गौरसक्थः । अक्रान्तात् किम् । चक्रसक्थः । 'परादिश्छन्दसि बहुलम्' ॥६।२।१९९॥ छन्दसि परस्यादिरुदात्तो बहुलम् । अञ्जिसक्थमालभेत । वाक्पतिः । चित्पतिः । अत्यल्पमिदमुच्यते ।

परादिश्च[1] परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥

इति समासस्वरप्रकरणम् । अथ तिङन्तस्वरप्रकरणम् ।

'तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः' ॥८।१।२७॥ तिङः पराणि गोत्रादीन्यनुदात्तानि कुत्सनाभीक्ष्ण्ययोः । कुत्सने । पचति गोत्रम् । आभीक्ष्ण्ये । पचति पचति गोत्रम् । गोत्र । ब्रुव । प्रवचन प्रसहन । प्रकथन । न्याय । प्राय । प्रचक्षण । स्वाध्याय । भूयिष्ठ । नाम वा । अनुदात्तमाद्युदात्तं वा । पचतिनाम । '[2]तिङ्ङतिङः' ॥८।१।२८॥ अतिङन्तात् पदात् परं तिङन्तं पदं सर्वमनुदात्तम् । देवदत्तः पचति । 'न लुट्' ॥८।१।२९॥ लुडन्तं नानुदात्तम् ।

१. परादिश्च परान्तश्च PC. २. This Sûtra is dropped PC.

श्वः कर्ता। 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्' ॥८।१।३०॥ निपातैरेतैर्युक्तं तिङन्तमनुदात्तं न स्यात् । यत्करोति । यदि पठति । हन्त पचति । कुवित् करोति । नेज्जिह्मायन्तो नरकं पताम । स चेदधीते । अयं च करिष्यते । अत्र चेदर्थ एव चो गृह्यते । कच्चिद् भुङ्क्ते । यत्राधीते । 'नह प्रत्यारम्भे' ॥८।१।३१॥ अवधीरणे गम्ये नहयुक्तं तिङन्तं नानुदात्तम् । नह भोक्ष्यसे । 'सत्यं प्रश्ने' ॥८।१।३२॥ सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने गम्ये । सत्यं भोक्ष्यते । 'अङ्गाप्रातिलोम्ये' ॥८।१।३३॥ अङ्गयुक्तं तिङन्तं नानुदात्तमानुकूल्ये गम्ये । अङ्ग कुरु । अप्रातिलोम्ये किम् । अङ्ग कूज वृषल इदानीं ज्ञास्यसि । 'हि च' ॥८।१।३४॥ हियुक्तं तिङन्तं नानुदात्तम् । स हि कुरु । अप्रातिलोम्ये इत्येव । स हि कूज वृषल इदानीं ज्ञास्यसि । 'छन्दस्यनेकमपि साकाङ्क्षम्' ॥८।१।३५॥ छन्दसि हियुक्तं तिङन्तं क्वचिदेकं क्वचिदनेकमपि साकाङ्क्षं नानुदात्तम् । अनृतं हि मत्तो वदति । पाप्मा एनं विपुनाति । अत्रानेकमप्यनुदात्तं न स्यादित्यर्थः । अजा ह्यग्नेरजनिष्ट गर्भम् । सा वापश्यज्जनितारमग्रे । इहाजनिष्टेत्याद्युदात्तम् । अपश्यदित्येकमनुदात्तम् । 'यावद्यथाभ्याम्' ॥८।१।३६॥ आभ्यां योगे तिङन्तं नानुदात्तम् । यावद् भुङ्क्ते । यथाधीते । परेणापि योगे स्यात् । देवदत्तः पचति यावत् । भुङ्क्ते यथा । 'पूजायां नानन्तरम्' ॥८।१।३७॥ यावद्यथाभ्यामनन्तरं तिङन्तमननुदात्तं न स्यात् पूजायामर्थे । यावत् पचति शोभनम् । यथाधीते चारु । इदं तिङन्तमनुदात्तमेव । 'उपसर्गव्यपेतं च' ॥८।१।३८॥ यावद्यथाभ्यां युक्तं प्रादिव्यवहितं तिङ् पूजायामनुदात्तमेव । यावत् प्रपचामि शोभनम् । यथा प्रकरोति चारु । 'तुपश्यपश्यताहैः पूजायाम्' ॥८।१।३९॥ एभिर्युक्तं तिङ् न निहन्यते । माणवकस्तु भुङ्क्ते । पश्य माणवको भुङ्क्ते । पश्यत माणवको भुङ्क्ते । अह माणवको

१. तिङन्तं Dc3. २. तिङन्तं Dc3.

भुङ्क्ते । पूजायामिति वर्तमाने पुनः पूजावचनं निघातनिषेधार्थम् । तद्धि निघातनिषेधस्य निषेधेन संबद्धम् । 'अहो च' ॥८।१।४०॥ अहोयुक्तं तिङ् नानुदात्तम् । अहो भुङ्क्ते । 'शेषे विभाषा' ॥८।१।४१॥ अपूजायामहोयोगे तिङ् वानुदात्तम् । कटमहो करिष्यति । असूयावचनमेतत् । 'पुरा च परीप्सायाम्' ॥८।१।४२॥ पुरायोगे तिङ् नानुदात्तं त्वरा चेदर्थः । अधीष्व माणवक । पुरा स्तनयति स्तनयित्नुः । पुराशब्दोयं भविष्यदासत्तिद्योतकः । 'नन्वित्यनुज्ञैषणायाम्' ॥८।१।४३॥ अनुज्ञेच्छावाची यो ननुस्तद्योगे तिङ् नानुदात्तम् । ननु करोमि भोः । अनुजानीष्व मां गमनं प्रतीत्यर्थः । अनुज्ञैषणायां किम् । अकार्षीः कटं देवदत्त । ननु करोमि भोः । पृष्टप्रतिवचनमेतत् । 'किं क्रियाप्रश्नेनुपसर्गमप्रतिषिद्धम्' ॥८।१।४४॥ क्रियाप्रश्नार्थे किंयोगे तिङन्तं नानुदात्तम् । किं देवदत्तः पचति आहोस्विद् भुङ्क्ते । आख्यातद्वयस्यापि संशयविषयत्वेन किंयोगान्निघातनिषेध इत्येके । अन्ये तु पूर्वस्यैवेत्याहुः । क्रियाप्रश्ने किम् । साधनप्रश्ने मा भूत् । किं शाकं पचति आहोस्वित् अपूपान् । अनुपसर्गे किम् । किं प्रपचति आहोस्वित् प्रकरोति । अप्रतिषिद्धं किम् । किं न पचसि । 'लोपे विभाषा' ॥८।१।४५॥ यत्र किंशब्दो न प्रयुज्यते गम्यते च तदर्थस्तत्र तिङन्तं नानुदात्तम् । देवदत्तः पचति आहोस्वित् पठति । 'एहि मन्ये प्रहासे लृट्' ॥८।१।४६॥ एहिमन्येयुक्तं लृडन्तं नानुदात्तमुपहासे गम्ये । एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोतिथिना । प्रहासे किम् । एहि मन्ये ओदनं भोक्ष्यसे सुष्ठु मन्यसे । 'जात्वपूर्वम्' ॥८।१।४७॥ पूर्वपदशून्येन जातुना युक्तं लृडन्तं नानुदात्तम् । जातु भोक्ष्यसे । अपूर्वं किम् । कटं जातु करिष्यति । 'किंवृत्तं च चिदुत्तरम्' ॥८।१।४८॥ चित्परं यत् किंवृत्तं तद्युक्तं तिङन्तं नानुदात्तम् । कश्चिद् भुङ्क्ते । कश्चिद् भोजयति । कतर-

१. तिङन्तं Dc3. २. तिङन्तं Dc3.

श्चिद् भोजयति । कतमश्चिद्वा । चिदुत्तरं किम् । को भुङ्क्ते । अपूर्वमित्येव । छात्रं कश्चिद् भोजयति । 'आहो उताहो चानन्तरम्' ॥८।१।४९॥ आभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङ् नानुदात्तम् । आहो भुङ्क्ते उताहो पचति । 'शेषे विभाषा' ॥८।१।५०॥ आहोउताहोभ्यां सान्तराभ्यां योगे नानुदात्तं वा । आहो मैत्रः पचति । २ । उताहो मैत्रः पचति । 'गत्यर्थलोटा लृण् न चेत् कारकं सर्वान्यत्' ॥८।१।५१॥ गत्यर्थधातौ परेण लोटा युक्तं लट् नानुदात्तं यत्रैव कारके लोट् तत्रैव चेत् लट् स्यात् । गच्छ मैत्र ओदनं भोक्ष्यसे । उह्यन्तां देवदत्तेन शालयस्तेनैव भोक्ष्यन्ते । न चेत् कारकमन्यत् किम् । गच्छ चैत्र मैत्रो भोक्ष्यते । उह्यन्तां शालयो माषा भोक्ष्यन्ते । सर्वग्रहणं किम् । आगच्छ चैत्र ग्रामं त्वं चाहं च द्रक्ष्यावः । इह तु लोडन्तस्य कारकं तच्चान्यच्च लडन्तेनोच्यते । 'लोट् च' ॥८।१।५२॥ गत्यर्थलोटा युक्तं लोडन्तं नानुदात्तं न चेत् कारकं सर्वान्यत् । गच्छ चैत्र ग्रामं पश्य । गम्यतां देवदत्तेन ग्रामो दृश्यताम् । 'विभाषितं सोपसर्गमनुत्तमम्' ॥८।१।५३॥ सोपसर्गं लोडन्तं पूर्ववद्वा । आगच्छ मैत्र ग्रामं प्रविश ॥२॥ अनुत्तमं किम् । आगच्छानि देवदत्त ग्रामं प्रविशानि । 'हन्त च' ॥८।१।५४॥ हन्तयुक्तं लोडन्तं सोपसर्गं वा नानुदात्तम् । हन्त प्रविश । २ । अनुत्तममित्येव । हन्त प्रभुनजावहै । 'यद्धितुपरं छन्दसि' ॥८।१।५६॥ तिङन्तं नानुदात्तम् । यत्परम्—गवां गोत्रमुदसृजो यमङ्गिराः । हिपरम्—इन्दवो वामुशन्ति हि । तुपरम्—व्याख्यास्यामि तु ते । 'निपातैः—' इत्यादिभिः सिद्धे नियमार्थं वचनं एभिरेव परभूतैर्योगे निषेधो नान्यैरिति । जाये स्वारोहावैहि । एहीत्यनेन गत्यर्थलोटा युक्तस्य रोहावेति लोडन्तस्य निघातनिषेधो न । 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः' ॥८।१।५७॥ एषु षट्सु परेष्वगतेरुत्तरं तिङन्तं नानुदात्तम् । पचति चन । पचतिचित् । पचतीव । गोत्रादि—पचति गोत्रम् । एवं ब्रुवादि । तद्धितः—पचतिकल्पम् । अनुदात्तं तद्धि-

तान्तमुदाहार्यम् । अन्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यते । अगतेः किम् । प्रपचति चन । उपसर्गगतिरिहेष्यते । इह मा भूत् । शुक्लीकरोति चन । 'चादिषु च' ॥८।१।५८॥ अगतेः परं तिङन्तं नानुदात्तं चवाहाहैवेषु परेषु । पचति च । पचति वा । पचति ह । पचत्यह । पचत्येव । अगतिरित्येव । प्रपचति च । 'चवायोगे प्रथमा' ॥८।१।५९॥ चवायोगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । गर्दभांश्च कालयति । वीणां च वादयति । वीणां वा वादयति । गदर्भं वा कालयति । 'हेति क्षियायाम्' ॥८।१।६०॥ क्षिया धर्मव्यतिक्रमस्तत्र प्रथमा तिङ् हयोगे नानुदात्ता । स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति । 'क्षियाशीः—' इति प्लुतः । 'अहेति विनियोगे च' ॥८।१।६१॥ अहयुक्ता प्रथमा तिङ् विभक्तिर्नानुदात्ता । नानाप्रयोजने नियोगे धर्मव्यतिक्रमे च । त्वमह ग्रामं गच्छ । त्वमहारण्यं गच्छ । स्वयमह रथेन याति ३ उपाध्यायं पदातिं गमयति । 'चाहलोप एवेत्यवधारणम्' ॥८।१।६२॥ चाहशब्दो न प्रयुज्यते तदर्थश्च गम्यते तत्र प्रथमा तिङ् विभक्तिर्नानुदात्ता एवेत्येतच्चेदवधारणे प्रयुज्यते । चलोपे—देवदत्त एव ग्रामं गच्छतु देवदत्त एवारण्यं गच्छतु । ग्रामं चारण्यं चेत्यर्थः । अहलोपे—मैत्र एव ग्रामं गच्छतु मैत्र एवारण्यं गच्छतु । केवलं ग्रामं केवलमरण्यमित्यर्थः । 'चादिलोपे विभाषा' ॥८।१।६३॥ चवाहाहैवलोपे प्रथमा तिङ् विभक्तिर्नानुदात्ता । चलोपे—शुक्ला व्रीहयो भवन्ति २ श्वेता गा आज्याय दुहन्ति । भवन्तीति विकल्पेन निहन्यते । एवं वालोपादिषूदाहार्यम् । 'वैवावेति च च्छन्दसि' ॥८।१।६४॥ आभ्यां युक्ता प्रथमा तिङ् विभक्तिर्वा नानुदात्ता । अहर्वै देवानामासीत् २ रात्रिरसुराणाम् । अयं वाव हस्त आसीत् २ । नेतर आसीत् । 'एकान्याभ्यां समर्थाभ्याम्' ॥८।१।६५॥ आभ्यां योगे प्रथमा तिङ् विभक्तिर्वा नानुदात्ता छन्दसि । प्रजामेका जिन्वति । तयोरन्यः पिप्पलं स्वाद्वत्ति । अनश्नन्नन्यो अभिचाकशीति । जिन्वति अत्ति इति वा निहन्यते । 'यद्वृत्तान्नित्यम्' ॥८।१।६६॥

इह विभक्त्यन्तं यद्वृत्तम् । प्रथमा च्छन्दसीति निवृत्ते । यद्वृत्तात् परं व्यवहितमव्यवहितं च तिङन्तं नानुदात्तम् । यो भुङ्क्ते । यं भोजयति रे । यत्कामास्ते जुहुमः । 'सगतिरपि तिङ्' ॥८।१।६८॥ 'पूजनात् पूजितमनुदात्तम्—' इति वर्तते । सगतिरगतिरपि तिङ् पूजनेभ्यः परः पूजितोनुदात्तः । 'निपातैर्यद्यदि—' इति निषेधे प्राप्ते पुनर्विधिः । यत् काष्ठं पचति । यत्काष्ठं प्रपचति । 'पदात्' इति निवृत्तम् । 'कुत्सने च सुप्यगोत्रादौ' ॥८।१।६९॥ निन्दार्थे च गोत्रादिवर्जिते सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । अगोत्रादौ किम् । पचति गोत्रम् । क्रियाकुत्सने इति वाच्यम् । कर्तृकर्मकुत्सने मा भूत् । पचति पूतिः । पचतिपूतिरनुदात्तः । विभाषितं बह्वर्थमनुदात्तं वक्तव्यम् । पचन्ति पूति । 'गतिर्गतौ' ॥८।१।७०॥ गतौ परे गतिरनुदात्तः । अभ्युद्धरति । समुदानयति । अभिसंपर्याहरति । 'तिङि चोदात्तवति' ॥८।१।७१॥ उदात्तवति तिङि परे गतिरनुदात्तः । यत् प्रकरोति । उदात्तवति किम् । प्रकरोति ।

इति तिङन्तस्वरप्रकरणम् ।

अथ वैदिकवाक्येषु स्वरविस्तरकथनप्रकारप्रदर्शनप्रकरणम् ।

स च स्वरविस्तरः पूर्वप्रकरणेषु ज्ञातेषु प्राज्ञैः सुवचोपि दिङ्मात्रप्रदर्शनार्थं कथ्यते । तथोक्तम् ।

'तदेवं साधुविज्ञाने प्रकृतिप्रत्ययाश्रये ।
समासोत्थस्वरे प्राज्ञैः सुवचः स्वरविस्तरः' ॥ इति ।

तत्र ऋग्वेदस्थः प्रथमो वर्गः अग्निमीळे इत्यादिक उदाह्रियते । तत्राद्या ऋक् अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातममिति । तत्राग्निमिति गत्यर्थादगिधातोः 'अङ्गेर्नलोपश्च' इत्युणादिसूत्रेण निप्रत्ययः । इदित्वान्नुमागमेन प्राप्तस्य नस्य लोपः । अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः । तत्र 'धातोः' इत्यकार उदात्तः । स्वरविधौ व्यञ्जनमविद्यमानवदिति गकारस्याविद्यमानत्वात् । एवं

सर्वत्र । 'आद्युदात्तश्च' इति प्रत्ययेकारोऽप्युदात्तः । तत्र 'अनुदात्तं पदमेकवर्जम्' इति द्वयोरन्यतरमुदात्तमवशिष्यते । इतरस्यानुदात्तत्वं प्राप्तम् । तत्र धातुस्वरे प्रथममवस्थिते पश्चाच्छिष्यमाणः प्रत्ययस्वरोऽवशिष्यते । सतिशिष्टस्वरो बलीयानिति न्यायात् । ततोऽग्निप्रातिपदिकमाद्यनुदात्तमन्तोदात्तम् । ततोऽम् द्वितीयैकवचनम् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तम् । तस्य 'अमि पूर्वः' इति यत् पूर्वरूपं तदुदात्तम् 'एकादेश उदात्तेनोदात्तः' इति । ईळ इति ईड स्तुतावित्यस्य लट्युत्तमपुरुषैकवचनम् । डकारस्य च ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः । 'तिङ्ङतिङः' इत्यतिङन्तादग्निशब्दात् परस्य तिङन्तस्य निघातविधानात् ईळे इति पदं सर्वानुदात्तम् । पदद्वयसंहिताकाले तु धातुगतस्य ईकारस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वम् । तत ऊर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात् संहितायामनुदात्तानाम्' इत्यैकश्रुत्यं प्रचयाख्यं स्यात् । पुरःशब्दः 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इति पूर्वशब्दादस्प्रत्यये पूर्वस्य च पुरादेशे प्रत्ययस्वरेणान्तोदात्तः । हितशब्देऽपि धाञो निष्ठायां 'दधातेर्हिः' इत्यादेशे सति प्रत्ययस्वरेणान्तोदात्तः । तयोः समासे सति समासान्तोदात्तत्वे प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ—' इत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा 'पुरोऽव्ययम्' इति गतिसंज्ञायां 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । ओकार उदात्तः । अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववत् । आद्यक्षरस्य संहितायां प्रचये प्राप्ते 'उदात्तस्वरितपरस्य सन्नतरः' इति नीचोऽनुदात्तः । यज्ञशब्दो 'यजयाच—' इति नङ्प्रत्ययान्तोऽन्तोदात्तः । सुप्स्वरेणानुदात्तत्वे स्वरितत्वम् । आद्यक्षरः सन्नतरः । देवशब्दः पचाद्यजन्तः । स च फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः । पूर्वाक्षरं सन्नतरम् । ऋत्विक्शब्दः 'ऋत्विग्दधृक्—' इति निपातितः कृदुत्तरस्वरेणान्तोदात्तः । विभक्तिस्वरः पूर्ववत् । होतृशब्दस्तृन्-

प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । स्वरितप्रचयौ पूर्ववत् । रत्नशब्दो 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । रत्नानि दधातीति विग्रहः । समासत्वादन्तोदात्तो रत्नधाशब्दः । यद्वा कृदुत्तरपदप्रकृतिस्वरेण । तमप्प्रत्ययस्य पित्स्वरेणानुदात्तत्वे सति स्वरितप्रचयौ । संहितायां रेत्याद्यक्षरस्य प्रचयः । द्वितीयाक्षरस्य त्नेत्यस्य सन्नतरत्वम् । द्वितीया ऋक् । अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत स देवाँ एह वक्षति इति । पुर्व पर्व पूरण इत्यस्मादौणादिके अनि पूर्वशब्द आद्युदात्तः । 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । ऋषिशब्दोऽप्युणादिः किनन्तत्वादाद्युदात्तः । ईड्यशब्दो ण्यदन्तत्वात् 'तित् स्वरितम्' इति स्वरिते शेषानुदात्तत्वे च तदपवादत्वेन 'ईडवन्द—' इत्याद्युदात्तत्वम् । नवशब्दस्य नू आदेशस्तनन्प्रत्ययश्च वक्तव्यौ । तेन नूतनशब्द आद्युदात्तः । अवशिष्टाः स्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववत् ज्ञेयाः । उतशब्दस्यान्तोदात्तत्वस्यैव स्वरादिषु पाठो द्रष्टव्यः । अथवा 'एवादीनाम्—' इत्यन्तोदात्तत्वम् । स इत्यत्र 'फिषः—' इत्यन्तोदात्तः । दिव उक्तस्वरः । देवानित्यस्य 'दीर्घादटि—' इति रुः । 'आतोऽटि नित्यम्' इत्याकारोऽनुनासिकः । यत्वलोपौ । आङो निपातत्वादाद्युदात्तत्वम् । इदमो हप्रत्यये इहशब्दः प्रत्ययस्वरेणान्तोदात्तः । वक्षतीति वहो लोडर्थे छान्दसो लट् । स्यप्रत्ययस्य छान्दसो लोपः । यद्वा लेटि 'सिब्बहुलम्' इति सिप् । 'लेटोऽडाटौ' इत्यट् । तस्य 'तिङ्ङतिङः' इति निघातः । संहितास्वराः पूर्ववत् ज्ञेयाः । तृतीया ऋक । अग्निना रयिमश्नवत् पोषमेव दिवे दिवे यशसं वीरवत्तममिति । रयिशब्दः फिट्स्वरेणान्तोदात्तः । अश्नवदित्यश्नोतेर्लेटीकारलोपे अडागमे च रूपम् । तस्य निघातः । पोषशब्दो घञन्तत्वादाद्युदात्तः । एवशब्दस्य निपातत्वेऽप्येवमादित्वादन्तोदात्तत्वम् । वकारान्ताद्दिव्शब्दात् परस्या विभक्तेः 'सुपाम्—' इत्यादिना शेभावे 'सावेकाचः—' इति

